संस्कृतवर्षस्मृतिग्रन्थमाला
अप्रकाशितपाण्डुलिपिग्रन्थप्रकाशनम् - 11
प्रधानसम्पादकः - वेम्पटि कुटुम्बशास्त्री

पण्डितमधुसूदन ओझा-विरचितः

# व्याकरणविनोदः

सम्पादकः
महेन्द्रकुमारशर्मा






राष्ट्रियसंस्कृतसंस्थानम्
मानितविश्वविद्यालयः
नवदेहली

संस्कृतवर्षसंस्मृतिग्रन्थमाला

अप्रकाशितपाण्डुलिपिग्रन्थप्रकाशनम्-१९

प्रधानसम्पादकः - वेम्पटि कुटुम्बशास्त्री

पण्डितमधुसूदन ओझा-विरचितः

# व्याकरणविनोदः

सम्पादकः

महेन्द्रकुमारशर्मा



राष्ट्रियसंस्कृतसंस्थानम्

नवदेहली

संस्कृतवर्षस्मृतिग्रन्थमाला

अप्रकाशितपाण्डुलिपिग्रन्थप्रकाशनम्-११

प्रधानसम्पादकः - वेम्पटि कुटुम्बशास्त्री

पण्डितमधुसूदन ओझा-विरचितः

# व्याकरणविनोदः



सम्पादकः

महेन्द्रकुमारशर्मा




राष्ट्रियसंस्कृतसंस्थानम्

नवदेहली

प्रकाशकः

**डा. सी. गिरिः**

कुलसचिवः

**राष्ट्रियसंस्कृतसंस्थानम्**

(मानितविश्वविद्यालयः)

५६-५७, इन्स्टीट्यूशनल एरिया,

जनकपुरी, नवदेहली - ११० ०५८

☎ : २८५२१९९४



संस्करणम् : २००७

*ISBN : 81-86111-46-8*

मूल्यम् : रु. ३३०/-

मुद्रक :

**प्रतिभा प्रकाशन**

29/5, शक्तिनगर,

दिल्ली - 110 007

☎ : 23848485

Samskrita Varsha Smriti Grantha Mala
Unpublished Manuscript Publication - 11
General Editor - Vempaty Kutumba Sastry

# VYĀKARAṆAVINODAḤ

OF

PAṆDITA MADHUSŪDANA OJHĀ

Edited by
MAHENDRA KUMAR SHARMA



Rashtriya Sanskrit Sansthan
New Delhi

अर्जुन सिंह
ARJUN SINGH



मानव संसाधन विकास मंत्री
भारत
नई दिल्ली-११० ००१
MINISTER OF
HUMAN RESOURCE DEVELOPMENT
INDIA
NEW DELHI-110 001

२० June, 2005

## शुभ सन्देश

भारत सरकार ने युगाब्द 5101 (1999-2000 ई०) को संस्कृत वर्ष के रूप में मनाने की घोषणा की थी। उस वर्ष भारत सरकार के अनुदान से अनेक प्रकार के प्रकल्प चलाए गए थे। राष्ट्रिय संस्कृत संस्थान ने इसी अवसर पर संस्कृतवर्ष की स्मृति को चिरस्थायी बनाने के लिए एक योजना अंगीकृत की थी। इस योजना के अन्तर्गत तीन सौ ग्रंथ प्रकाशित होंगे। इन प्रकाशनों को संस्थान ने तीन भागों में विभाजित करके प्रकाशन का निर्णय लिया है :

i) अभी तक अप्रकाशित संस्कृत की एक सौ पाण्डुलिपियों का प्रकाशन।

ii) अन्य भाषाओं में संस्कृत के विषय पर रचित एक सौ ग्रंथों का संस्कृत में अनुवाद एवं प्रकाशन।

iii) अन्य भाषाओं के एक सौ मौलिक/साहित्यिक ग्रंथों का संस्कृत में अनुवाद एवं प्रकाशन।

मैं इस योजना की सफलता की शुभकामना करता हूँ एवं आशा करता हूँ कि इसके माध्यम से संस्कृत का अपेक्षित विकास करने में सहायता मिलेगी।

(अर्जुन सिंह)

# आमुखम्

अथ विदितचरमेवैतत् समेषां यत् युगाब्दः ५१०१ (१९९९–२०००) तमो वर्षः संस्कृतवर्षः इति भारतशासनेन समुद्घोषितः आसीत्। तदनुसारं भारतशासनेन मानसंसाधनविकासमन्त्रालयेन, राष्ट्रियसंस्कृतसंस्थानेन अन्याभिश्च विविधाभिः संस्थाभिः राष्ट्रेऽस्मिन् कोणे कोणे बहवः बहुविधाश्च कार्यक्रमाः आयोजिताः अनुष्ठिता आसन्। ऐतिहासिकेन एतेन संस्कृतवर्षसमुद्घोषणेन संस्कृतज्ञानां संस्कृतप्रेमिणां संस्कृतबन्धूनां सामान्यजनानां च हृदयेषु यथोचितं संस्कृतविषयकं पुनर्जागरणं समुदभूत्। समग्रोऽपि राष्ट्रपरिवारः संस्कृतविषयकैः भावनाप्रचयैः सम्पूरितः समुत्तेजितश्च आसीत्।

ऐतिहासिकीम् आनन्दसन्दोहदां तामिमां संस्कृतवर्षस्मृतिं चिरस्मरणीयां विधातुं संस्कृतवर्षस्मृतिग्रन्थमाला इति नाम्ना त्रिशतस्य ग्रन्थानां प्रकाशनपर्यवसाना काचित् महत्त्वशालिनी योजना राष्ट्रियसंस्कृतसंस्थानेन स्वीकृता। योजनायामस्याम् अद्य यावत् अप्रकाशितानां शतस्य पाण्डुलिपिग्रन्थानां प्रकाशनम्, विविधासु भाषासु विरचितानां नैकशास्त्रसम्बद्धानाम् अभिनवानां शतस्य ग्रन्थानां संस्कृते अनूद्य प्रकाशनम्, प्रान्तभाषासु प्रसिद्धानां विविधवाङ्मयप्रक्रियारूपाणां शतस्य ग्रन्थानां संस्कृते अनूद्य प्रकाशनं च सङ्कल्पितं वर्तते।

तेष्वाद्यम् अप्रकाशित-हस्तलिखितग्रन्थप्रकाशनात्मकं सङ्कल्पं पुरस्कृत्य सम्प्रति **व्याकरणविनोदः** इत्येष ग्रन्थः विद्वल्लोके समर्प्यते।

प्रकृतोऽयं ग्रन्थः पण्डितवरेण्येन श्रीमता मधुसूदनओझामहोदयेन नवीनया कयाचित् शैल्या व्याकरणबोधनोद्देशेन प्रणीतः। ग्रन्थेऽस्मिन् समास-तद्धित-नामधातु-प्रक्रिया-कृदन्ताव्ययभेदेन परिच्छेदषट्कमवलोक्यते। समासादि-तद्धितादि-प्रकरणानि यद्यपि कौमुद्यादिग्रन्थेषु विलसन्ति तथापि विवेचनपुरस्सरं विषयोपस्थापनशैलीविशेषेण जिज्ञासुजनसुलभावबोधनरीत्या च रचितोऽयं ग्रन्थः किमप्यपूर्वं वैशिष्ट्यं वहति।

केषाञ्चिद् विहितानां निषिद्धानां च रूपविशेषाणां प्रयोगे अप्रयोगे वा यदस्त्यतिविशिष्टम् आन्तरं कारणं, तत् प्रसिद्धान्यव्याकरणग्रन्थापेक्ष्या विलक्षणया रीत्या अत्र प्रस्तुतं दृश्यते। "पूरणगुण............" इत्यादि सूत्रसन्दर्भे एतद्ग्रन्थप्रणेत्रा ओझामहोदयेन कृतं 'गुणवचनस्य' विशदतरं व्याख्यानं विद्वांस इह ग्रन्थे द्रष्टुमर्हन्ति। पूर्ववर्तिषु आचार्येषु आदरवानपि एतस्य ग्रन्थस्य रचयिता ओझा-महोदयः क्वचित्क्वचित् पूर्वाचार्यमतं निराकरोत्। यथा 'हरदत्तस्तु'

ज्ञातुमिच्छायामेवात्र सनमिच्छति, तद्भ्रान्तम्....." इत्यादि। समासादि-षट् परिच्छेदेषु तत्तपरिच्छेदान्तर्गतं शास्त्रीयमाधुर्यं सूक्ष्ममतयः शास्त्रविदः ग्रन्थं परिशील्य आस्वादयेयुः।

ग्रन्थस्यैतस्य रचयिता संस्कृताङ्ग्लफारसीभाषासु प्राप्तविद्यः विंशशताब्दोयः श्रीमान् ओझामहोदयः विलक्षणप्रतिभया तत्कालिक-राजमहाराजानाम् आदरपात्र आसीत्। स्वजीवितकाले एव देशविदेशेषु प्रसृतकीर्तिरयं वि.सं. 1958 तमे वर्षे राज्ञः एड्वर्ड-सप्तमस्य राज्याभिषेकावसरे महाराजमाधवसिंहेन सह इङ्ग्लेण्डदेशं गत्वा स्वीय-वैदिकविचारधारया मेक्डोनल्-प्रभृतीन् चकितानकरोदिति श्रूयते। शताधिकग्रन्थकर्त्रा प्रणीतः एष व्याकरणविनोदनामा व्याकरणसिद्धान्तानां प्रक्रियाणां च सङ्ग्रहात्मकः ग्रन्थः विदुषां मोदाय, छात्राणाम् अनुसन्धातृणां चोपकाराय कल्पेत इत्याशासे। अद्य यावदप्रकाशितमेनं ग्रन्थं विविध-हस्तलेखमातृकानां परिशीलनपुरस्सरं श्रीमतः हिन्दकेसरिमहोदयस्य मार्गदर्शने सम्पाद्य, राष्ट्रियसंस्कृतसंस्थाने समर्प्य श्रीमता महेन्द्रकुमारशर्मणा विद्यावारिधित्युपाधिरधिमत आसीत्। सम्प्रति प्रकाशनमुद्दिश्य पुनः परिश्रम्य ग्रन्थं प्रस्तुतवते सवाईमाधोपुरे सुकारस्थ-राजकीय-वरिष्ठ-उपाध्याय-संस्कृतविद्यालये प्राचार्यत्वेन कार्यरताय श्रीमते महेन्द्रकुमारशर्मणे अभिनन्दनानि समर्प्यन्ते।

सन्दर्भेऽस्मिन् स्वीयशुभसन्देशप्रदानेन प्रकृतग्रन्थमालायाः शोभातिशयं वर्धितवद्भ्यः राष्ट्रियसंस्कृतसंस्थानस्य कुलाध्यक्षेभ्यः मानवसंसाधनविकासमन्त्रिवर्येभ्यः श्री अर्जुनसिंहमहोदयेभ्यः धन्यवादमर्पयामि। ग्रन्थमालां साकारीकर्तुं प्रयासरताय संस्कृतवर्षस्मृतिग्रन्थमालायाम् अप्रकाशितपाण्डुलिपिग्रन्थप्रकाशनकार्यं संयोजयते आयुष्मते वेङ्कटेशमूर्तये शुभाशिषः। तत्सहकृद्भ्यां तङ्गल्लपल्लि महेन्द्र-प्रफुल्लगड़पालाभ्यां साधुवादाः। यथाकालं योग्यं मुद्रणं कृतवते श्रीमते राधेश्यामशुक्लाय धन्यवादं व्याहरामि।

श्रीकृष्णजन्माष्टमी
04.09.2007
नवदेहली

संस्कृतसेवकः
**वेम्पटि कुटुम्बशास्त्री**

# भूमिका

वेदविद्योद्धारकः वेदरहस्यप्रकाशकः, समीक्षाचक्रवर्ती, विद्यावाचस्पतिः स्वर्गीय–पण्डित श्री मधुसूदन ओझा महोदयः वैदिकग्रन्थानां सम्यक् परिशीलनं विधाय सहस्राब्देभ्यः विलुप्तं वैदिकविज्ञानं प्रकाशयितुं यावज्जीवनमयतत। तेन हि महानुभावेन 1. ब्रह्मविज्ञानम्, 2. यज्ञविज्ञानम्, 3. पुराणसमीक्षा, 4. वेदाङ्गसमीक्षा-इत्येतेषु चतुर्षु प्रधानविषयविभागेषु बहवो ग्रन्थाः विरचिताः। प्रकृतोऽयं व्याकरणविनोदनामकः विशिष्टः ग्रन्थः वेदाङ्गसमीक्षाविभागे अन्तर्भाव्यते। शताधिकग्रन्थकर्तुः ओझा महोदयस्य देशकालादिविषये किञ्चित् परिचयः प्रस्तूयते। यानि वैदिकतत्वानि अस्माभिः विस्मृतानि, येषां च जीवनतत्त्वानामभावे भारतीयं साहित्यं सर्वथा निष्प्रभमभवत्, यस्मिन् वेदज्ञाने विलुप्ते भारतं स्वस्य सर्वोच–जगद्गुरुप्रतिष्ठासनात् च्युतम् भवेत् तस्यैव वेदतत्त्वस्य पुनरुद्धाराय विहारप्रान्तस्य मुजफ्फरपुरमण्डलान्तर्गतमिथिलाक्षेत्रे 'गाढ़ा' ग्रामवास्तव्यस्य वैद्यनाथ झा महानुभावस्य गृहे 1923 वैक्रमाब्दे श्रीकृष्णजन्माष्टमीतिथौ एकस्याः दिव्यप्रतिभायाः प्रादुर्भावोऽभवत् या मधुसूदन इति नाम्ना सम्बोधिता। 'गाढ़ा' ग्रामः सीतामढ़ी रेल्वेस्टेशनतः दक्षिणस्यां वर्तते।

बालस्य मधुसूदनस्य प्रारम्भिकशिक्षा पितुः मार्गदर्शने सम्पन्ना। बाल्यकालस्य अष्टवर्षाणि मधुसूदनेन स्वपित्रा सहैव ग्रामे नीतानि। बालस्य पितामहः 'पण्डितदेवनाथ झा' मझोलिया राज्यस्य प्रधानपण्डितः आसीत्। अस्य पितृव्यः 'पण्डितराजीवलोचनः' अन्यशास्त्रैः सह मीमांसाशास्त्रस्यापि विख्यातः पण्डित आसीत्। अयं जयपुरनरेशस्य रामसिंहद्वितीयस्य सभापण्डितः आसीत् येन 'धर्मचन्द्रोदय' नाम्ना ग्रन्थस्य एकस्य रचना कृता।

सन्ततिसुखेन रहितः पण्डितः राजीवलोचनः स्वस्य अनुजस्य सुपुत्रं मधुसूदनं दत्तकपुत्ररूपेणस्वीकृत्य तं जयपुरमानयत्। योग्यविदुषां मार्गदर्शने संस्कृताङ्गलफारसीभाषासु बालकस्य मधुसूदनस्य शिक्षा प्रारब्धा। आङ्गलभाषायाः फारसीभाषायाश्च सामान्यज्ञानान्तरं तस्य शास्त्रशिक्षाया आरम्भः सुप्रसिद्धवैयाकरणः श्रीविश्वनाथ झा महोदयस्य रामभजनशास्त्रिमहोदयस्य च सान्निध्येऽभूत्।

बाल्यादेव विलक्षणमेधाविनः कुशाग्रबुद्धेरस्य बालकस्य प्रत्युत्पन्नमत्या विस्मितो महाराजः रामसिंहः एकदा तस्य पितृव्यमकथयत्–'बालकोऽयं महोन्नतं स्थानमलङ्करिष्यतीति।'

बालकस्य अस्य एका घटना अपि उल्लेखनीया वर्तते। एकदा एकः तेजस्वी साधुरस्य गृहमागच्छत्। बालकोऽयं तस्मिन् समये गृहे एकाकी एव आसीत्। साधुः बालकाय एकां चूर्णपूटिकामयच्छत् निगरितुं चाकथयत्। भयात् किंक र्त्तव्यविमूढो बालकः पुटिकां स्वकीयगलबिले अवातारयत् अन्यमनस्कश्च सञ्जातः। तदैव तस्य पितृव्यस्तत्रागच्छत्। पृष्टः सन् साधुः विनम्रभावेन उक्तवान्–मया अस्मै बालकाय ब्राह्मीचूर्णं दत्तम्। अस्याः घटनायाः पश्चात् बालकस्य जीवने परिवर्तनं परिलक्षितम् तस्य प्रतिभा च वृद्धिं गता।

जन्मनः पञ्चदशे वर्षे अस्य पितुः निधनमभवत्। इतः किञ्चित् कालानन्तरं महाराज रामसिंहस्यापि निधनं सञ्जातम्। राज्याश्रयसमाप्तेरन्तरं संवत् 1939 विक्रमाब्देऽसौ स्वकीय–जन्मभूमिं पुनः प्रतिनिवृत्तः।

मिथिलायामध्ययनस्य समुचितायाः व्यवस्थाया अभावात् तेन शास्त्रेषु प्रौढिमधिगन्तुं वाराणस्यामध्ययनस्य निश्चयः कृतः। येन केन प्रकारेण परिवारजनेभ्यः स्वीकृतिं प्राप्य सः तत्र अगच्छत् । वाराणस्यां दरभङ्गा–संस्कृत– पाठशालायां प्रविश्य सर्वशास्त्रपारङ्गतानां जगत्प्रसिद्धानां विद्वच्छिरोमणि–पण्डितशिवकुमारशास्त्रि महोदयानां शिष्यत्वं प्राप्तम्। शास्त्रिचरणयोरुपविश्य अष्टवर्षाणि तेन निष्ठया परिश्रमेण च व्याकरणन्यायमीमांसासाहित्यवेदान्तादि–विषयाणां गहनम् अध्ययनं विधाय तेषु विषयेषु पूर्णाधिकारः प्राप्तः। स्वयं शास्त्रि–महोदयोऽपि तस्य प्रतिभया निरूपणपद्धत्या च अत्यन्तं प्रभावित आसीत्। स एव मधुसूदनाय वेदानां सिद्धान्तस्य प्रचारार्थं आशीर्वादमयच्छत्। इमम् आशीर्वादं तत्रैवाज्ञारूपेण स्वीकृत्य वैदिकसिद्धान्तानां प्रचारार्थमात्मनो जीवनं भविष्यतीति तेन प्रतिज्ञातम्।

सप्तदशवर्षीयस्य अस्य विवाहः तत्कालिकस्य अलवरनरेशस्य राजगुरोः 'चञ्चलनाथ झा' महोदस्य सुपुत्र्या अभवत्।

वाराणस्यामध्ययनं परिसमाप्य ओझा–महोदयः बून्दी, कोटा, झालावाड़, नीमच रतलामादि–स्थलानां यात्रां कुर्वन् जयपुरम् आगतवान्। मध्येऽपि स्वस्य

राज्याश्रयसम्बन्धिते विषये अत्र आगतवान्। वाराणस्यामध्ययनसमये यात्रा प्रसङ्गेषु एव ओझा महानुभावस्य वैदुष्यस्य ख्यातिः प्रसृता। विशेषतः बून्दीनगरस्य प्रधानामात्यः पण्डितः गङ्गासहायः तस्य विशेषयोग्यतया प्रभावितः सन् तस्य राजसम्मानमकरोत् । तद्दिनात् तु तस्य नाम सर्वत्र सम्मानपूर्वकं गृह्णन्ति स्म। रतलामप्रवासकाले ओझामहोदयः जगद्गुरुशङ्कराचार्यद्वारकापीठाधीश्वरश्री-माधवतीर्थस्य 'पर्यटनमीमांसा' नामकस्य ग्रन्थस्य लेखने अतीव साहाय्यमकरोत्। एतस्मात् कारणादपि पण्डितसमाजे तस्य इतोऽप्यधिक आदरः समजायत।

सम्वत् 1946 तमे वैक्रमे वर्षे वङ्गदेशीयो हरिदासशास्त्री जयपुरे शिक्षाविभागस्य अध्यक्ष आसीत्। स पण्डितमधुसूदनस्य विषये-बहुशोऽश्रृणोत्। यदा ओझामहोदयः जयपुरमागतवान् तदानीं हरिदासशास्त्री स्वर्गीये-राजीवलोचनस्योत्तराधिकारिणं सम्मानितं विद्वांसं ज्ञात्वा महाराजामहाविद्यालये संस्कृतप्रधानाध्यापकपदं स्वीकृर्तुं ओझामहोदयं प्रार्थयामास। तदियानुरोधेन तेन अत्र अध्यापनमारब्धम्। तेषु एव दिवसेषु हरिदासस्य समीपे सिंहली-लिप्याम् लिखितस्य कुमारदासकृतस्य 'जानकीहरणस्य' एका प्रतिलिपि आसीत्। तस्याः सम्पादनकार्यं सः ओझा–महोदयाय अयच्छत्। तेनात्यधिकपरिश्रमेण इदं कार्यं कृतम् किन्तु कार्य समाप्तेः पूर्वमेव श्री हरिदासमहोदयस्य निधनमभवत्। अन्ततो गत्वा ग्रन्थोऽयं सन् 1893 तमे वर्षे कलकत्तानगरात् प्रकाशितः, किन्तु प्रकाशनेऽस्मिन् सम्पादकरूपेण हरिदासस्योल्लेखः जातः। ओझा–महोदयो भूमिकायां प्रदत्ताभ्यां धन्यवादस्य द्वाभ्यां शब्दाभ्यामेव सन्तोषमकरोत्।

जयपुरस्य तात्कालिकज्योतिर्विदः श्री केवलराम-श्रीमाली-महोदयस्य परामर्शेण वृन्दावने निर्मितस्य मन्दिरस्य प्रतिष्ठाया अवसरे भवता श्रीमाली-महोदयस्य निर्णये चत्वारिंशद् दोषाः प्रदर्शिताः। तस्माद् दिनात् महाराजः माधवसिंहोऽपि अस्य वैदुष्येन प्रभावितो जातः। महाराजः वि. सं. 1951 तमे वर्षे एनम् राजकीयसंग्रहालयस्य 'पोथीखानाभिधस्य' अध्यक्षं नियोज्य स्वकीयं प्रधानपण्डितम् 'मौजमन्दिर' नाम्ना विख्यात-धर्मसभायाश्च अध्यक्षं नियुक्तवान्। महाराजमाधवसिंहः प्रतिदिनं भवद्भिः काञ्चित् शास्त्रीयचर्चामकरोत्। महाराजस्य

सर्वाणि धार्मिकानुष्ठानानि ओझा महोदयस्यानुमत्या एव भवन्ति स्म। आखेटक्रीडादिषु च ओझा–महोदयेन सहैवोपस्थितिरासीत्।

वि. सं.1958 तमे वर्षे सम्राजः एडवर्ड सप्तमस्य राज्याभिषेकावसरे महाराजमाधवसिंहेन सह भवन्तोऽपि इङ्ग्लैण्ड देशमगच्छन्। तत्कालिक-रूढ़िवादि समाजस्य दृष्ट्या विदेशयात्रा सर्वथा वर्जिता आसीत्, किन्तु भवान् 'प्रत्यन्तप्रस्थानमीमांसा' नामकं नवीनग्रन्थं विरचय्य एतादृशीनां यात्राणां औचित्यं साधितवान्। ब्रिटेन आक्सफोर्डविश्वविद्यालयस्य संस्कृतप्राध्यापकः मेक्डोनल, कैम्ब्रिजविश्वविद्यालयस्य प्राध्यापकः बैंडाल, इण्डिया ऑफिस पुस्तकालयस्य श्रीयुत् टोनीमहोदयः, यूरोपदेशीयः प्रख्यातः विद्वान् टामस प्रभृतयः सर्वे तत्रभवतः नवीनवैदिकविवेचनया आश्चर्यचकिता सञ्जाताः।

तेष्वेव दिवसेषु लन्दनस्थे इण्डिया आफिस सभाग्रहे ओझा–महोदयः वेदधर्मविषयकमेकं विस्तृतं संस्कृतव्याख्यानमयच्छत्। तस्य धाराप्रवाहरूपेण संस्कृतप्रवचनेन नवीनशैल्या विषयनिरूपणेन च उपस्थिताः श्रोतारः स्तब्धा जाता। तत्रत्य समाचारपत्रे ('वेस्टमिनिस्टर' 'दि सन्' पत्रे च अयं विद्वान् वैदिकविज्ञानस्य दर्शनानां निधिः, भारतस्य उज्जवलम् एकं देदीप्यमानं नक्षत्रमित्यादिभिः शब्दैः प्रशंसितः।

एडवर्ड सप्तमस्य राज्याभिषेके ओझा महोदयः कानिचित् पद्यानि सम्राजेऽयच्छत् येषां प्रत्युत्तरे सम्राजा सधन्यवादं तस्मै 'कोरोनेशन' पदकं प्रदत्तम्।

विदेशयात्रानन्तरं ओझा महोदयः स्वस्य गुरोः आज्ञानुसारं वेदार्थ-परिशीलनं पूर्ववत् प्रारभत्। तथा अस्या वास्तविकमर्थं प्रकटयितुं समस्त संहितानां, ब्राह्मणग्रन्थानां, सूत्रसाहित्यस्य पुराणानां रामायणादिग्रन्थानां गहनमध्ययनं कृत्वा शतशो ग्रन्थानां रचनामकरोत्। अस्मिन् कष्टसाध्ये कार्ये ओझा महोदयेन स्वस्य जीवनस्य पञ्चाशद्वर्षाणि यापितानि।

ख्रिष्टाब्दे 1905 तमे वर्षे प्रयागे 'भारतधर्ममहामण्डलस्य' महाधिवेशने जयपुरत ओझा महोदयः भागं गृहीतवान्। तस्मिन् समये भवतो व्याख्यानेन सर्वे उपस्थिताः विद्वांसो मुग्धा अभवन्। दीर्घकालपर्यन्तं भवतां व्याख्यानस्य चर्चा विभिन्नसमाचारपत्रेषु सञ्जाता। ख्रिष्टाब्दे 1906 तमे वर्षे वाराणस्यां कांग्रेस

अधिवेशने भवत एकमन्यद् व्याख्यानमपि चर्चाया विषयोऽभवत्। विक्रमाब्दे 1993 वर्षे 'अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य' पक्षतः भवतः हीरकजयन्ती महोत्सवोऽपि आयोजितः। एष महोत्सवो जयपुरस्थ रामनिवासोद्यानस्य अलबर्ट संग्रहालये आयोजितः। अस्मिन् अवसरे बहवो विद्वांसः आमन्त्रिताः। तस्मिन् अवसरे पं. गोकुलनाथस्य सभापतित्वे एकमभिनन्दनपत्रम् संस्कृतरत्नाकरस्य विशेषाङ्कश्च 'वेदाङ्कः' भवते समर्पितः।

वैदिकवस्तुविज्ञानस्य अद्भुतशाखायाः ज्ञानार्जनं कृत्वा अस्य वाङ्मयस्य प्रचार-प्रसारे ओझामहोदयः महान्तं योगदानमकरोत्।

विलुप्त-वैदिकविज्ञानस्य यद् बीजारोपणं पण्डित-मधुसूदन ओझा महानुभावा अकुर्वन्, तस्य प्रकाशकेषु तस्य पुत्रः श्री प्रद्युम्नशर्मा, गिरधरशर्मा चतुर्वेदी, नवलकिशोरशर्मा, आद्यादत्तठाकुर इत्यादीनां नामानि सदैव उल्लेखनीयानि सन्ति। अस्मिन् क्षेत्रे प्रतिदिनं अष्टादशतः विंशति होरापर्यन्तं परिश्रम्य षष्टिसहस्रपृष्ठानां साहित्यस्य स्रष्टुः पण्डितमोतीलालशास्त्रिणः किमपि अपूर्वं वैशिष्ट्यम्।

विद्यावाचस्पतेः शिष्येषु श्रद्धेयानां श्री सुरजनदासस्वामिनां नाम अतीव आदरेण स्मर्यते। ते चतुर्वर्षपर्यन्तं ओझा महोदयानां सान्निध्ये वेदविद्यायाः गहनमध्ययनमकुर्वन्। तेषां द्वादशग्रन्थानां सम्पादनमपि तैः कृतम्। विविधपत्र-पत्रिकासु च शोधपूर्णान् लेखान् अलिखन्।

विक्रमसम्वत् 1996 तमे वर्षे भाद्रपद-शुक्लपूर्णिमायां दिवसत्रयस्य सामान्यव्याधेऽनन्तरं पण्डित ओझा महानुभावः इदमसारं संसारमत्यजत्। चिकित्सकपरीक्षणेन प्राप्तं यद् अत्यधिकमानसिकश्रमेण तेषां निधनमभवत्।

**व्यक्तित्वम् –**

**नित्यैकान्तसदो निवासनिरतो शान्तिप्रियः सुस्थिरः**
**शीघ्रक्रोधमहोदयः कृशतनुर्मित्या त्र्यशीत्यङ्गुलः।**
**अन्यस्वार्थविधानबाधविमुखो निद्रोह निष्प्रेमधी**
**निर्मानो मधुसूदनोऽभिमनुते सर्वातिगं तन्मतः॥** इत्यलम्।

## श्री ओझा महोदयस्य ग्रन्थराशिः

श्री ओझा महोदयः बहुषु विषयेषु द्विशताधिकग्रन्थानां निर्माणं अकरोत् इत्येषा प्रसिद्धिः। तत्र अर्धाधिको भागोऽनुपलब्ध एव। मानवाश्रममुद्रणालयात् यत्सूचीपत्रं प्रकाशितं तत्र अष्टषष्टि (६८)– ग्रन्थानामेव उल्लेखो वर्तते। विद्यावाचस्पतिः पण्डित–मधुसूदन ओझा विरचितानाम् अष्टषष्टिकृतीनां काचिदुपलब्धा सूची परिशिष्टे प्रदत्ता वर्तते।

## व्याकरणविनोदः

अस्मिन् ग्रन्थे व्याकरणशास्त्रविषयाणां नवीनशैल्या निरूपणमस्ति। 'व्याकरणविनोदे षट्प्रकरणानि सन्ति। तद्यथा-

| | | |
|---|---|---|
| 1- | समासपरिच्छेदः | प्रथमः |
| 2- | तद्धितपरिच्छेदः | द्वितीयः |
| 3- | नामधातुपरिच्छेदः | तृतीयः |
| 4- | प्रक्रियापरिच्छेदः | चतुर्थः |
| 5- | कृदन्तपरिच्छेदः | पञ्चमः |
| 6- | अव्ययपरिच्छेदः | षष्ठः |

'व्याकरणविनोदस्य' सर्वाण्यपि प्रकरणानि समुपलब्धानि सन्ति।

ओझामहाशयेन द्विरुक्तप्रकरणं समासपरिच्छेदे स्वीकृत्य समासरूपेणैव 'द्विरुक्तसमास' इति नाम्ना तस्य व्याख्यानं कृतम्, पश्चात् द्वन्द्वाव्ययीभावतत्पुरुषबहुब्रीह्यादिसमासस्य भेदोपभेदानां विस्तरेण सम्यकतया च व्याख्यानं कृतम्। द्विरुक्तस्य समासत्वस्वीकारे कश्चित् फलविशेषस्तु न दृश्यते।

द्वितीये तद्धितप्रकरणे तद्धिते पठितः विभक्तिप्रत्ययः परिच्छिन्नप्रत्ययः, भावकर्मप्रत्ययः स्त्रीप्रत्यय इत्येतेषां सम्यग् विवेचनमस्ति। तद्धिते अन्येषां प्रत्ययानामदर्शनात् प्रकरणस्य अस्य अपूर्णत्वमेव सिद्ध्यति।

तृतीये नामधातुप्रकरणे तदिच्छा/तद्विचार-तदभूतभाव, तत्क्रियाख्यान, स्वार्थिकादिष्वर्थेषु विधीयमानानां क्यच, क्यङ्, काम्यच् णिङ् णिजादि प्रत्ययानां

तत्सम्बन्धिनियमानाञ्च सम्यग् विवेचनमस्ति। अत्रैव कण्ड्वादि धातूनां सम्यक् सङ्कलनमपि विद्यते।

चतुर्थे प्रक्रियाप्रकरणे विशेषतः सन्नन्तणिजन्तयोरेव विवेचनमस्ति। यङन्त यङ्लुगन्तादि प्रकरणानां तु उल्लेखोऽपि न दृश्यते। एतेनास्य प्रकरणस्य अपूर्णत्वं सूच्यते।

पञ्चमे कृदन्तप्रकरणे केवलं कृत्यप्रत्ययानामेव व्याख्यानमुपलभ्यते। अन्येषां कृत्यप्रत्ययानामदर्शनात् इदं प्रकरणमपि अपूर्णमेव प्रतीयते। तत्र च कृत्यप्रत्ययाः, तेषां प्रदेशानामेव विवेचनमस्ति। सहैव प्रत्ययैः सेड्वेडनिटां धातूनां परिगणनमप्यस्ति। इदं प्रकरणमपि अपूर्णमेव वर्तते।

अन्तिमे अव्ययप्रकरणे प्रतिज्ञावीता, निपाता, व्युत्पन्नाश्चेति त्रिधा विभज्य अव्ययानां सम्यग् विवेचनं विहितम्।

यद्यपि एतानि प्रकरणानि सिद्धान्तकौमुद्यादिग्रन्थेषु पठितानि सन्ति, तथापि ओझामहाशयेन तत्र पठितानां व्याकरणनियमानां स्वमतपुरस्सरं नवीनव्याकरण शैल्या प्रतिपादनं कृतम्।

## व्याकरणविनोदस्य वैशिष्ट्यम् –

अत्र ग्रन्थे व्याकरणसम्बन्धि-संज्ञाशब्दानां निरूपणं व्याकरणानुगतं प्राचीनार्थपूर्वकं च कृतम्, न तु पाणिन्यादिवत्। यथा पाणिनिना 'तत्पुरूषः' इति अधिकारसूत्रमुक्त्वा तत्र तत्पुरूषसम्बन्धिनियमाः पठिताः किन्तु ओझामहाशयेन तत्पुरूषशब्दस्य तथा व्याख्यानं कृतं येन तद्घटिता एव नियमाः तत्पुरूषसमासनियामकाः।

अन्यत्र व्याकरणेषु सूत्रैरेव प्रयोगनियमः दृश्यते। सूत्रेणात्र विधानं कृतमिति प्रयोगस्य साधुत्वं सिद्ध्यति। तादृशरूपस्य प्रयोगे अप्रयोगे वा किमपि आन्तरं कारणं तत्र न निर्दिश्यते। श्री ओझामहानुभावः प्रायः सर्वत्रैव कारणं निर्दिशति। व्याकरणदर्शनमूलकं कारणं तत्रोपस्थापयति। यथा – रामो जामदग्नयः इत्यत्र 'विशेषणं

विशेष्येण बहुलम्' इत्यस्मिन् सूत्रे बहुलग्रहणात् समासो न भवति। अत्र तु तत्कारणं निर्दिष्टं येन अत्र समासो न प्रवर्तते। तथा हि -

विशेषणं द्वेधा - उद्देश्यकोटिप्रविष्टं विधेयं च। सुन्दरं पुस्तकं मदीयमित्यत्र मदीयमिति विधेयम्। सुन्दरमुद्देश्यकोटिकम्। सुन्दरमुद्दिश्य सुन्दरत्वविशिष्टे मदीयत्वविधानात्। मदीयं पुस्तकं सुन्दरमित्यत्र तु सुन्दरं विधेयं मदीयं पुनरूद्देश्यकोटिकम्। मदीयमुद्दिश्य मदीयत्वविशिष्टे सुन्दरत्वविधानात्। तत्रोद्देश्यकोटिकविशेषणमेवोत्तरस्मिन् विशेष्ये विकल्पेनोपसर्जनं भवति। तत्रावश्यं किंचिदन्यद्विशेषणं विधेयं भवति। यथा नीलघटो द्रष्टव्यः, नीलघटोऽस्तीति। अथ यद्विधेयविशेषणं तस्य विशेष्यपदेन समासो नास्ति, सामर्थ्यालाभात्। विधानात् प्राक् विशेषणत्वं वक्तुमशक्यम्। विधानोत्तरं विधेयाभावाद्वाक्यप्रयोग एव कर्तुमशक्यः। सर्वं हि वाक्यं किंचित् विधातुं प्रवर्तते। न त्वविधायकं वाक्यं भवति। तस्माद् वाक्ये विधेय-विशेषणेन समासो नास्ति। रामो जामदग्न्यः उद्देश्यकोटिकत्वे पुनर्भवत्येव जामदग्न्यरामो निर्दिश्यते इति।

'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' इति सूत्रे गुणशब्दस्य हरदत्तेन एवं व्याख्यानं कृतम् तत्र गुणस्य गुण्यपेक्षत्वात् केवलगुणवचनैर्गुणेन समासनिषेधः कण्टकस्य तैक्ष्ण्यमिति'। गुणवचनैस्तु तत्सम्बन्धिनो निषेधः। ब्राह्मणस्य शुक्ला दन्ता इति। किन्तु विषयोऽयं अस्पष्टो वर्तते ओझा महाशयेन तु गुणवचनस्य विशदं सुस्पष्टं च विवेचनं कृतम्, तथाहि -

द्विविधा हि गुणा भवन्ति - स्वरूपगुणाः उपरञ्जकगुणाश्च। येषां गुणानामेकैको विशेषस्तद् द्रव्यं न व्यभिचरन्ति द्रव्यं च तं विशेषं ते द्रव्यस्यासाधारणत्वात् स्वरूपगुणा उच्यन्ते। इमे च तद् द्रव्यान्निकृष्टा एव शब्देन प्रत्यायन्ते। चन्दनस्य गन्धः। इक्षो रसः। ब्राह्मणस्य वर्णः। पटहस्य शब्दः। नद्या घोषः। अथेतरे गुणा उपरञ्जका उच्यन्ते ये व्यभिचरित विशेषा भवन्ति। व्यभिचारादसाधारणत्वं निवर्तते। तस्मादेषां स्वरूपगुणत्वं नास्ति। एषां च शब्दाः कदाचित् गुणोपसर्जनद्रव्यं ब्रुवते कदाचित् गुणमात्रम्। अत एवैते गुणास्तदद्रव्येणैकत्वमापन्ना वा तद् द्रव्यान्निकृष्टा वा यथेच्छं शब्देनोपनीयन्ते शुक्लः पटः, कृष्णः पटः, इति वा। पटस्य शुक्लः, पटस्य कृष्ण इति वा तेषामेषां

समानाधिकरणप्रयोगयोग्यानां वैयधिकरण्येन प्रयोगे नेष्यते षष्ठीसमासः। समानाधिकरण्यं च न सामानार्थवृत्तित्वमात्रं किन्तु समानविभक्ति लिङ्गवचनत्वं चेह विवक्षितम्। तेन संख्याशब्दानां संख्येय–संख्या–परत्वाभ्यां विंशतिर्गावो गवां विंशतिरित्येवं प्रयोगद्वैविध्यादुपरञ्जकत्वेऽपि न प्रतिषेधः। लिङ्गवचनभेदात्।

पाणिनेः 'समासान्ताः' इत्यस्मिन् सूत्रे पक्षद्वयं समासान्तः समासस्यावयवो भवति उत्तरपदस्य वा अवयवो भवतीति सिद्धान्तः। समासस्यावयवत्वेन उपशरदमित्यत्र अव्यीभावस्यादन्तत्वात् - 'नाव्ययीभावाद- तोऽम्त्वपपञ्चम्या' इति सोरमादेशः सिद्धयति, उत्तरपदस्यावयवत्वे तु द्विपुरीत्यादौ 'ऋक्पूरब्धूः' इत्यप् प्रत्ययस्य उत्तरपदावयवत्वेन 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट' इति स्त्रीत्वात् 'द्विगोः इत्यनेन ङीप् सिद्धयति। ओझा महोदयस्तु एतद् मतद्वयमप्युपस्थाप्य 'सर्वं एव समासान्ता उत्तरपदावयववद् उह्यन्ते। केवल क प्रत्ययोऽवयववद् भवति। अत एव अज्ञकः, अश्वकः इत्यत्र ह्रस्वान्तस्य ज्ञपदस्य श्वपदस्य वा अन्त्यात् पूर्वंः कश्चिदुदात्तभावी स्वरो न दृश्यते। इत्यगत्या कप्रत्ययविशिष्टस्योत्तरपदस्यान्त उदात्तौ विधीयते। तेन तावन्तौदात्तौ।' इति ननीवनमेव किञ्चिद् उपस्थापितवान्।

यद्यपि मातापितरौ इत्यादौ अभ्यर्हितत्वात् मातृशब्दस्य पूर्वप्रयोगः 'अभ्यर्हितं च पूर्व निपतति' इति वार्तिकेन साध्यते। तथापि रामापेक्षया सीतायाः अभ्यर्हितत्वसाधने न काप्युक्तिः अतः ओझा महोदयेन सामान्यो नियमः कल्पितः 'स्त्रीपुंसयोः स्त्रीपूर्वम् न तिरश्चां न भिन्नशब्दानाम् इति तेन सीतारामौ राधाकृष्णौ इति सिद्धयति। अश्ववडवौ हंसवरटे इत्यत्र च न भवति।

अत्रैव प्रकरणे केशश्मश्र्वादि-गणोऽपि वर्तते यः पाणिनीयतन्त्रे न दृश्यते। अत्र हि पूर्वपरनियतप्रयोगाः शब्दा पठिताः सन्ति।

'यथा हरिस्तथा हरः' इत्यत्र सादृश्यार्थत्वेन यथार्थत्वेन वा प्राप्तः अव्ययीभावसमासः 'यथासादृश्ये' इति नियमात् वार्यते।अस्मिन् व्याकरण- विनोदे तु सम्पत्यादिगणे यथा शब्द एव न पठ्यते। 'यथा' शब्देन समासवारणाय यथा-शब्दस्तु सादृश्यार्थो नाव्ययीभावे प्रयुज्यते स्वभावात् इत्युक्त्वा सादृश्यार्थे प्राप्तोऽव्ययीभावो निषिध्यते।

सन्धिना आङो उपहारे ल्यब् न भवतीति ग्रन्थकारस्य स्वकीया कल्पना। सति उपसर्गे ल्यब् न स्यात् इत्येतन्निषेधवाक्यं नावलोक्यते भाष्यवृत्त्यादिषु। तद् यथा- 'यत्र त्वाङुपसर्गः स्वरसन्धिनापहृतात्मरूपः प्रयुज्यते तत्र तद्विशिष्टस्यैव धातुत्वमिष्यते। तेन आङ्ः प्रागडागमः अव्ययपूर्वत्वाभावाच्च न ल्यप्। आ ऊढः ओढः। तमैच्छत्-औढीयत्। समयित्वा-ओढीयित्वा इति।

व्याकरणस्य आकरग्रन्थेषु ये सिद्धान्ताः विस्तरेण निरूपिता येषां च अवबोधः महता परिश्रमेण जायते तेषामेव सिद्धान्तानां परिचयः ओझा महोदयस्य ग्रन्थेन सरलरीत्यैव सम्भवति । सनन्तप्रक्रियायां भाष्यकारस्य सर्वोऽप्यभिप्रायः स्वल्पैरेव शब्दैः ग्रन्थकारेण प्रकाशितः। कूलादिषु अचेतनेषु इच्छाया अभावात् सनोऽप्राप्त्य 'आशङ्कायामचेतनेषूपसंख्यानम्' इति वार्तिकव्याख्यानभूतं भाष्यं 'ओझा महानुभावस्य शब्दैरेवमवगन्तुं शक्यम् -

'इच्छा च द्विविधापि निमित्तं भवति- अवधारिता चाध्यारोपिता च। तत्क्रिया कर्तृनिष्ठा सेयं तत्क्रिया कारणेच्छा यदि वक्त्रा निश्चितं विज्ञायते आहोस्वित् तत्राध्यारोप्य नीयते उभयथाऽपि सन् प्रययः शक्यते प्रयोक्तुं तत्रावधारणमुभयथापि संभवति प्रमया च भ्रमेण च। अध्यारोपनिमित्तं तु द्वयं भवति - आशंका च संभावना चेति। यत्रेदमित्थं भविष्यतीत्याशंक्यते संभाव्यते वा तत्र तत्क्रिया स्वतन्त्रनिष्ठां तत्क्रियाकरणेच्छामभिनात्य तत्प्रकारेणैव तामाशंकां संभावनां वा व्यंजयितुमिच्छतीति प्रयोक्तृ समयो दृश्यते। इच्छा च सन्प्रत्ययेन विविक्षिता निमित्तं न वस्तुसती। तस्मादविशेषेणोभयत्रापि सन्नादिश्यते अवधारितायां चाध्यारोपितायां च। अत एव चाविशेषादुभयत्रापि चिकीर्षितक प्रयोग इष्यते चेतने चाऽचेतने च। चेतनेऽपीच्छाया वस्तुतः सत्त्वे चासत्त्वे च।'

अत्र प्रकरणे 'धातोः कर्मणः' इति सूत्रस्थं भाष्यं स्वकीयसरलया भाषया सुस्पष्टरीत्या च निवेशिता। पूर्वाचार्याणामादरेण सहैव केषाञ्चित् पूर्ववर्तिनां मतमपि निराकृतम् । ओझा महोदयेन 'मानेर्जिज्ञासायामिति वार्तिकव्याख्यावसरे पदमञ्जरीकारस्य हरदत्तस्य मतं निराचष्टं -'हरदत्तस्तु ज्ञातुमिच्छायामेवात्र सनमिच्छति, तद् भ्रान्तम्। तर्काद्यप्रयोगदशायामिच्छामात्रसत्त्वेऽपि मीमांसादि शब्दव्यवहारात्।

पाणिनिव्याकरणे धातुभ्यः इटो व्यवस्थार्थं धातुपाठे पठिता केचन धातवः अनुदात्ताः पठिताः। एतेषां निर्णयः व्याघ्रभूत्याद्याचार्याणां कारिकाभिः भाष्यकारादीनां व्यवहारात् जायते। अनुदात्तधातुभ्योऽवशिष्टा धातवः उदात्ताः सन्तीति पारिशेष्यात् कल्प्यते। ओझा महोदयस्तु अनिटां सेटां च व्यवस्थामेननामेवं रीत्या निर्वहति किन्तु येभ्यो विकल्पेनेट चिकीर्षितः ते धातवः स्वरिताः सन्तीति व्यवस्थापयति। द्वाभ्यां कारिकाभ्यां अजन्तानां द्वाभ्यां च हलन्तानां वेटां धातूनामपि परिगणनं करोति। तत्र स्वरान्ता यथा -

**दरिद्रा श्रि यूर्णु सूति सूयती धूञ प्रकम्पने।**

**वृङ, कृञौ स्वृभरौ तद्वद् ऋदन्ताः स्वरिता मताः ॥**

**कृ गृ जृ झृ तथा तृ दृ धृ नृ पृ वृ च भृ च मृ।**

**वृ भृ स्तृ ॠ इमे वेटः किरतिं गिरतिं विना।**

इट् प्रकरणे प्रतिज्ञातं अनुदात्तत्वं, उदात्तत्वं वा स्वरप्रक्रियायां नैवोपयुजयते तत्र तु सर्वेषामेव धातूनां धातुरित्यनेन अन्तोदात्ततैव।

कारिका प्रक्रियायां विंशत्यधिकशतं धातवः मित्संज्ञाका नवषु श्लोकेषु पठिता। ते च चतुर्धा वर्गीकृता -

1- नित्यमितः

2- अर्थमितः

3- विकल्पमितः

4- प्रदेशमितः इति।

यथा कख् हसने अयं नित्यमित्। घट चेष्टायां अयमर्थमित्। संघातार्थे तु नायं मित् तेन उद्घाटयतीत्यादि प्रयोगणां सिद्धिः। श्रम तपसि खेदे च अयमपि तादृशः एव। खेदापनोदार्थस्य मित्वं नास्ति तेन विश्रामयतीत्यादि प्रयोगाणां सिद्धिर्भवति। पाणिनि तन्त्रे एतादृश प्रयोगाणां सिद्ध्यर्थं क्लिष्टा कल्पना कर्त्तव्या भवति। भट्टोजीदीक्षितादिभिः विश्रामादि शब्दानामपाणिनीयत्वमेवोक्तम्। फण गतौ

अयं विकल्पमित् तेन फणयति फाणयति इति रूपद्वयम्। रह त्यागे रहयति। कारित-प्रयोगादन्यत्र क्वचित्मित्त्वं नास्ति। इत्येवं रीत्या निदर्शनमात्रमेतत् किंचित्। विभिन्नहस्तलिखितमातृकानामाधारेण सम्पादितस्य मधुसूदन-ओझा-विरचितस्य व्याकरणविनोदस्य पाण्डुलिपीनां परिचयस्तावत् अधो निर्दिश्यते-

## पाण्डुलिपीनां परिचयः -

प्रथमतयास्माभिः जयपुरस्थे प्राच्यविद्यापीठसंग्रहालये श्रीरामचरण-व्याकुलमहोदयानामनुग्रहेण मधुसूदनशर्मणः 'व्याकरणविनोद' इत्यस्य द्वौ हस्तलिखितग्रन्थौ समासादितौ। तौ च (1) प्रक्रियापरिच्छेदः, (2) कृदन्तपरिच्छेदः इति नाम्ना द्वौ भागौ स्तः। अनयोः उभयोः एकैकं छायाचित्रम् श्री व्याकुलमहोदयेन, मह्यं शोधकार्यार्थम् दत्तम्। एतौ उभावपि सुपाठ्यैरक्षरैः लिखितौ शुद्धौ च वर्तेते। एतौ हस्तलेखौ व्याकरणप्रक्रियापरिच्छेदेन कृदन्तपरिच्छेदेन च सम्बद्धौ। प्रक्रिया परिच्छेदभागे धातुभ्यः धातुसिद्धिः कथं भवतीति विषयः प्रक्रियासम्बन्धिप्रत्ययानां माध्यमेन विविधोदाहरणानि दत्त्वा स्पष्टीकृतो वर्तते। कृदन्तपरिच्छेदे धातुतः नामसिद्धिः कथं भवतीति विषयः। कृदन्तप्रत्ययानां माध्यमेन अनेकानि उदाहरणानि सङ्गृहीतानि सन्ति। अनेन प्रकारेण उभे अपि पाण्डुलिपी महत्वपूर्णे स्तः। इमे च द्वेऽपि अपूर्णे एव स्तः।

प्रक्रियापरिच्छेदस्य प्रारम्भे 'व्याकरणविनोदस्य' अन्येषां प्रकरणानामपि परिचयः वर्तते। अतः अस्माभिः तस्य अन्यप्रकरणानि अपि अन्वेष्टुं प्रयत्नः प्रारब्धः। परं बहुभिः प्रयासैरपि शीघ्रं साफल्यं नालम्भि। कालान्तरे राजस्थान- पत्रिकायाः संस्थापकसम्पादकानां 'श्रीकर्पूरचन्दकुलिश' महोदयानां पण्डित श्री मधुसूदन ओझा महानुभावमधिकृत्य सम्पादितेन कार्येण अस्माकं परिचयोऽभवत्। कुलिशमहोदयस्य श्री ओझा महानुभावानां मूलग्रन्थानां संरक्षणे सम्पादने तेषां प्रकाशने च कियती रूचिः वर्तते इति तु तेषां राजस्थानपत्रिकायां ओझा महानुभावस्य वेदविज्ञानसम्बन्धिलेखानां प्रकाशनेनैव अनुमातुं शक्यते।

तैः सह परिचयानन्तरं तेषां संग्रहे श्री ओझा सम्बन्धिसङ्गृहीत- हस्तलिपीनां सूचिपत्रे व्याकरणविनोदस्य समासप्रकरणम्' अव्ययप्रकरणं च इत्यनयोः नाम्नी तत्र

दृष्टे। ततः श्री कुलिशमहोदयानां सौजन्येन अस्माभिः उभयोरपि एकैकं छायाचित्रम् प्राप्तम्। उभे एव प्रतिलिपी सुपाठ्याक्षरैः लिखिते सम्पूर्णे च विद्येते। समासपरिच्छेदे व्याकरणसम्बन्धिसमासनियमानां विस्तृतं विवेचनं वर्तते। अव्ययप्रकरणे अव्ययानां संग्रहः तेषामर्थाः तत्सम्बन्धिनि उदाहरणानि च दत्तानि सन्ति।

कालानन्तरं सञ्जय इन्स्टीट्यूट संस्थया अस्माभिः व्याकरणविनोदस्य नामधातु प्रकरणमपि तेषां सौजन्येन समुपलब्धम्। इदं इन्स्टीट्यूट जयपुरे 'चौडा रास्ता' परिसरे विद्यते। नामधातुप्रकरणमपि सम्पूर्णं वर्तते। इदमपि सुपाठ्याक्षरैः लिखितमस्ति।

अन्ते च बहुभिः प्रयासैः पुनः अस्माभिः जयपुरस्थे प्राच्यविद्यापीठ-संग्रहालये श्रीरामचरणव्याकुलमहोदयानामनुग्रहेण तद्धितप्रकरणस्यापि प्रतिलिपिः तत्रैवोपविश्य विहिता यद्यपि तद्धितप्रकरणमिदम् अपूर्णमेव प्रतीयते तथापि 'व्याकरणविनोदस्य' सर्वाण्यपि प्रकरणानि समुपलब्धानि इति वर्तते मम सन्तोष-विषयः।

## कृतज्ञताज्ञापनम् –

मया डा. श्री हिन्दकेसरिमहोदयानां निर्देशने मम शोधकार्यं सम्पादितम्। श्री हिन्दकेसरिमहाभागाः न केवलं मत्कृते विद्यापीठे एव स्वकीयममूल्यं समयं दत्तवन्तः अपि तु अवकाशदिवसेष्वपि स्वकीये गृहे मम मार्गनिदर्शनं काठिन्यनिवारणं गूढस्थलानामध्यापनमपि च कृतवन्तः। एतेषां महाभागानां प्रयासैरेव एतत् कार्यम् सम्पन्नम्। न केवलं कार्यमेव सम्पन्नं अपितु अस्य कार्यस्य प्रेरका अपि तत्रभवन्तः एव। तत्रभवतां पुनः पुनः प्रबोधननैव मयि एतादृशी जिज्ञासा समुत्पन्ना मया एतत्शोधकार्यं समारब्धम्। पाण्डुलिपीनां प्राप्तिरपि मम भवतां प्रयासैरेव जाता। अतोऽहं डा. हिन्दकेसरिमहाभागानां हृदयेन कृतज्ञोऽस्मि।

अनन्तरं जयपुरस्थ प्राच्यविद्यापीठसंस्थानस्य श्रीरामचरणव्याकुल-महोदयानां, राजस्थानपत्रिकायाः प्रमुखसम्पादकानां श्रीकर्पूरचन्दकुलिश-महाभागानां 'चौड़ा रास्ता' इत्यत्र स्थित- 'सञ्जय इन्स्टीटयूटस्य' इत्यस्याः संस्थाया अध्यक्षानां श्रीरामकृपालुमहोदयानां च कृते हृदयेन कृतज्ञतां प्रकटयामि। यैः

स्वकीयेभ्यैः प्राच्यग्रन्थकोषागारेभ्यो मत्कृते श्रीमधुसूदनशर्मणः 'व्याकरणविनोदः' इति हस्तलिखितग्रन्थस्य विभिन्नाध्यायानां एकैकम् छायाचित्रं दत्तम्।

राष्ट्रियसंस्कृतसंस्थानस्य जयपुरपरिसरस्य (तदानीन्तन-केन्द्रियसंस्कृत-विद्यापीठस्य) तदानीन्तन-प्राचार्याणां डा. श्रीरामकिशोरशुक्लमहाभागानां कृते विद्यापीठस्य समस्तगुरुजनानां कृते अन्येभ्यः सुहृद्भ्यश्च हृदयेन कृतज्ञतां प्रकटयामि यैः शोधकार्यसम्पादने मम सहाय्यं कृतम् आसीत्।

सम्प्रति ग्रन्थमिमं प्रकाशनाय स्वीकृत्य तदर्थं सर्वविधव्यवस्थां कृतवद्भ्यः संस्थानकुलपतिभ्यः आचार्येभ्यः वेम्पटि कुटुम्बशास्त्रिमहोदयेभ्यः तदनुयायिकार्यकर्तृभ्यः च धन्यवादं समर्पयामि।

**महेन्द्र कुमार शर्मा**
प्राचार्यः
राजकीयवरिष्ठ उपाध्यायसंस्कृतविद्यालयः,
सुकार (सवाईमाधोपुर)

चैत्रशुक्ल प्रतिपदा गुरुवासरः
सम्वत् 2063
दिनाङ्कः 30. 03. 2006

# विषयानुक्रमणिका

# समासपरिच्छेदः

## अथ द्विरुक्तसमासः

यत्रैकमेव पदं प्रकारवीप्साद्यर्थविशेषबुबोधयिषया द्विः प्रयुज्यते तत्र तयोः पदयोरैकपद्यसिद्ध्यर्थमनुज्ञायमानः समासो द्विरु क्तसमासः।

एवं हि दृश्यते लोके – वाक्यं वा समस्तपदं वा तद्धितपदं वा आख्यातपदं वा धातुर्वा नामपदं वा प्रातिपदिकं वा वर्णो वा सर्वस्य द्वे नित्यवीप्सयोर्भवतः। यस्य वा गुणवचनादेः प्रकाराद्यर्थविशेषानुरोधेन द्विरुक्तमग्रे लक्षणोक्त्या प्रतिपदोक्त्या वा विशिष्योक्तं, यस्य वा द्विरुक्तं न विशिष्य नामग्राहमुक्तं तस्यापि सर्वस्य द्वे नित्यवीप्सयोर्भवत इति[1]। यदि तावद्वाक्यं वीप्सायुक्तं तत्तर्हि वाक्यं द्विरुच्यते, अबाधाद्वा, संभ्रमाद्वा, द्विर्ब्रूते[2] 'मह्यं ग्रहीष्यति मह्यं ग्रहीष्यति।' 'मामभिव्याहरिष्यति, मामभिव्याहरिष्यति।' 'मा धाव मा धाव' इति। यदि समासपदं तत्तर्हि द्विः क्रियते। घटपटौ घटपटौ गृह्णाति, गृह्णाति। यदि तद्धितपदं तत्तर्हि द्विर्भवति। 'ऐतदात्म्यमैतदात्म्यं सर्वत्र पश्यति, द्वयं द्वयं नयति।' यद्याख्यातपदमाभीक्ष्ण्ययुक्तं तत्तर्हि द्विरु च्यते – 'पश्य पश्य प्रहरति प्रहरति, व्याहरति व्याहरतीतिं'। यदि धातुः, स तर्हि द्विरु च्यते[3] – पापच्यते, पापठ्यते, चङ्क्रम्यते दरीदृश्यते, इति। यदि नामपदं वीप्सार्थयुक्तं तत्तर्हि द्विरुच्यते – कृष्ण कृष्ण, गृहं गृहं, गत्वा भाण्डाद् भाण्डान्नवनीतं त्वया नीतम्, शिव शिव, हरे हरे, पूर्वः पूर्वः, परः परः इति। अथ यदि प्रातिपदिकं तत्तर्हि तथा द्विः क्रियते – पूर्वपूर्वम्, परपरम्, उत्तरोत्तरम् इतरेतरः, अन्यान्या, एकैकं, कृतकृतं, गतगतं, पटपटायति,घटघटायति, शरशरायतीति। यद्यव्ययपदं, तत्तर्हि द्विरु च्यते – परा परा नाभ्याः, अन्तरन्तः प्रासादस्य, न हि न हि, न न, पृथक् पृथक् इत्यादि। अथ हर्षशोकादौ गानरोदनादौ सुरापीतीनां च वल्गितके वर्णानामेव द्विरुक्तिर्दृश्यते अरर, मममामिति। अथैवं गुणवचनादिनामपि सति वीप्सार्थयोगे वीप्सार्थैव द्विरुक्तिर्भवति[4]। नवं नवम्, मन्दं मन्दम्, यथा यथा, द्वौ द्वौ इत्यादि। तेषु वाक्ये चाख्यातपदे च द्विः प्रयोगमात्रं न तु तयोः समासादैकपद्यं भवति। तत्साधर्म्यात्

---

1 प्रकारे गुणवचनस्य (8-1-12) सर्वस्य द्वे (8-1-1) नित्यवीप्सयोः (8-1-4)

2 आबाधे च (8-1-10) संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः (वा.5056)

3 संन्यडो (6-1-9)

4 प्रकारे गुणवचनस्य (8-1-12)

पदेऽपि सर्वत्र द्विः प्रयोगमात्रं विज्ञायेत। न तथा विज्ञातव्यमित्येतदर्थमिदं प्रकरणमारभ्यते। तत्रेदं प्रतिबोधयिष्यामः- यत्र चापले द्विरुक्तिस्त्रिरुक्तिरधिकोक्तिर्वा क्रियते यत्र वा नित्यवीप्सयोर्द्विरुक्तिः क्रियते तत्र वाक्याद्यविशेषाद् द्विः प्रयोगरूपं द्विर्वचनं न समासः- अहिरहिर्बुध्यस्व बुध्यस्वेति। विरूपयोः प्रयोगवदर्थानुरोधेन सरूपयोर्द्वयोः पदयोः प्राप्ते प्रयोगेऽकारणमैकपद्यस्वीकारस्यानावश्यकत्वादित्येकः पक्षः। अथान्यः पक्षः। एकार्थकशब्दस्यैकधैव प्रयोगे प्राप्तेऽनेकधा प्रयुज्यतेऽर्थान्तर-गर्भितार्थप्रतिपिपादयिषया शब्दान्तरवदिति दृश्यते। तस्मात् स्थाने द्विर्वचनमिवैतदेक-पदस्थाने द्वे पदे उच्येते इति मन्तव्यम्। स्थानिन एकत्वादादेशेनाप्येकपदेन भवितव्यम्। न चान्तरेण समासं तत्साध्यम्। समस्तस्यैव तथाभूतस्यैकपदस्यादेशेन तथा वक्तव्यत्वात्। वाक्येऽप्यस्तु द्वयोरेकवाक्यत्वम्। फलतस्तु विशेषो नास्तीति नानुशिष्यते। इह तु समासफलं वक्ष्यामीत्यवश्य-मेतान्येकपदानि। पुनः पुनः। वारं वारम्। परम्परा, इत्यादीनि। अन्यत्र तु सर्वत्र पदद्विरुक्तौ तयोः समासादैकपद्यमिष्यते। शुक्लशुक्लम्। यथायथम्। द्वन्द्वम्। अन्योन्यमित्यादि।

तत्रैतत्समासस्यैकपद्यमेवार्थः ऐकपद्येन तु भूयांसोऽर्था अनुगृह्यन्ते--विभक्तिलोपश्च, पुंवद्भावश्च समासान्तं च, तद्धितप्रकृतित्वं चेत्येवमादयः। एकैकं पटुपटुरिति विभक्तिलोपः। एकैकया पटुपटीति पुंवद्भावः। अन्योन्याश्रयः, परस्परतपः संपत् फलायितपरस्परौ। पुनः पुनः कृते इति समासः। पौनः पुनिकम्। पौनः पुन्यम्। कौतस्कुतः। पारंपर्य्यम्। इति तद्धितप्रकृतिता।

अथ कस्मिंश्चिदर्थे द्विरुक्तं समस्यते कस्मिंश्चित्तु द्विरुच्यमानं नेत्येवं विशेषोपलब्धेर्द्विरुक्तिनिमित्तभूता एवार्था द्विरुक्तसमासेऽपि निमित्तानि भवन्तीत्यतस्तेऽर्था इह समासप्रकरणेऽपि दर्शयितव्या भवन्ति। ततो द्विर्वचनहेतुभूता-नर्थानेव निमित्तीकृत्येदं समासप्रकरणमारभ्यते।

यद्यर्थस्याभीक्ष्ण्यं वीप्सा वा विवक्ष्यते तद् द्विरुक्तं समस्यते [1]। संख्या सर्वनामादिकमेव तु तत्प्रयोगे, तत्रोपसर्जनं प्रकृत्यैकादीनां तु विकल्पेन। आभीक्ष्ण्यं क्रियासमभिहारः। तत् त्रेधा प्रतिपद्यते नित्यार्थेन, पौनः पुन्येन, भृशार्थेन च। यां क्रियां कर्त्ता प्राधान्येनानुपरमन् करोति तन्नित्यम्। पुनः पुनः क्रियाया विच्छेदेनोत्पत्तिः पौनः पुन्यं द्विरुक्तनिमित्तम्। अनुपरमन् चिरेणासौ भृशं भुक्त्वा व्रजन्नपि नोच्यते--भुक्त्वा भुक्त्वा व्रजतीति नित्यविद्यमानोऽप्यं समुद्रो हिमवान् वा नोच्यते-- विद्यते विद्यते इति।

---

1 नित्यवीप्सयोः (8-1-4)

व्याप्तुमिच्छा वीप्सा। व्यापिप्रतिपादयिषा वीप्सा। अनवयवेन द्रव्याणामभिधानं वीप्सा। कात्स्न्र्येन द्रव्याणां क्रियागुणसम्बन्धप्रतिपादनाभिप्रायो वीप्सा। कात्स्न्र्यं चेहाधिकारिकमेव स्यात्। विवक्षितेष्वेव बुद्धेः संचारात्। तेन वृक्षं वृक्षं सिञ्चतीति वाटिकाधिकारात् कात्स्न्र्यसंकोच इति तद्बहिर्भूतेष्वबुद्धिः। जातं जातं निधनमुपैतीत्यत्र तु जन्माधिकारादसंकोच इति सर्वत्र सा बुद्धिः। अथवैतदित्थं व्याख्यास्यामः। एक एवार्थो वीप्सा आभीक्ष्ण्यं च। विषयभेदात् प्रवृत्तिभेदाच्च तयोर्भेदं मन्यामहे। प्रत्यस्तमितावयवभेदत्वविवक्षणादेकस्यां क्रियायां सजातीयानेकद्रव्यं क्रमान्वयविवक्षणात् प्रत्येकपरिसमाप्तं प्रत्युद्बुद्धान्योन्यभेदं पृथक् संख्यादियुक्तं च कृत्वा यत्र पृथगिवान्वेतुमिष्यते तत्र वीप्सा। अर्थमर्थं पश्यति। अक्षरमक्षरं ब्रूते इति। यत्र तु प्रत्यस्तमितावयवभेदत्वविवक्षणादेकस्मिन् कारके क्रियान्तरे वा सजातीयानेकक्रियाः क्रमान्वयविवक्षणात् प्रत्येकपरिसमाप्ताः प्रत्युद्बुद्धान्योन्यभेदाः पृथक् क्षणयुक्ताश्च कृत्वाऽन्वेतुमिष्यन्ते तत्राभीक्ष्ण्यम्। भुक्त्वा भुक्त्वा ब्रूते, पश्य पश्य, धावति धावति, आभीक्ष्ण्यं क्रियानिष्ठं, वीप्सा तु द्रव्यनिष्ठा भवतीत्यत एव तयोः पृथगभिधानम्।

यत्राभीक्ष्ण्यं वीप्सा वा विवक्ष्यते तत्र यावन्तस्तेऽर्थास्तावतां शब्दानां प्रयोगः प्राप्नोति तत्रायं नियमः क्रियते – द्वे एव शब्दरूपे प्रयोक्तव्ये नातिबहुशब्दाभ्यासः कर्त्तव्य इति। द्विरुक्तयोः समासो वीप्सादिगर्भित पदार्थो भवतीति समासेन गतार्थत्वाच्छब्दाधिक्यस्यानावश्यकता सिद्धेः।

आभीक्ष्ण्ये तावत्[1] – पचति पचति। पठ पठ। गत्वा गत्वा निवर्तते। दृष्ट्वा दृष्ट्वा हृष्यति। सगतिकस्यापि पदस्यायं द्विरुक्तसमासः-अनुभवत्यनुभवति। प्रपठति प्रपठति। व्याहर व्याहर। अथ वीप्सायां-ग्रामो ग्रामो रमणीयः। पर्वणि पर्वणि सप्तपर्णान्यस्य। पङ्क्तो अष्टपदान्यस्य विभक्त्यलोपो वक्ष्यते। समासस्यैकपदत्त्वादेशेऽपि पूर्वोत्तरपदयोः पदत्वं न निराक्रियते। तेनेह पूर्वपदे पदकार्यं नलोपादिकं स्यादेव। राजा राजा, वाग् वाक्। अपचन्नपचन्। वृक्षान् वृक्षान्। अग्रेऽग्रे। इत्यादि। नन-- इत्यत्र नलोपः, धूर्धूः, पन्थाः पन्था इत्यादिषु समासान्तश्च नास्ति। द्विरुक्तसमासे तदविधानात्।

---

1 नित्यवीप्सयोः (8-1-4)

अथोपसर्जनं प्रकृत्येत्युच्यते। प्रथमतो निर्दिष्टं समास उपसर्जनं भवति[1]। तस्य प्रकृतिभावविधानात् समासनिमित्तकविभक्तिलोपः पुंवद्भावश्च निराक्रियते। यां यां पश्यामि सा सा सन्निधत्ते। अत्र सर्वनाम्नो वृतिमात्रे पुंवद्भावो भवतीति नियमात् पुंवद्भावः प्राप्तः। स प्रकृतिभावात् प्रत्याख्यातः। सन्धिविकारप्रतिषेधस्तु न प्रकृतिभावार्थः। सन्धिविकारेऽपि पदान्यत्वाभिमानाभावात्। ग्रामो ग्रामः। वाग् वाक्। गीर्गीः। काँस्कान्। कस्कः। सर्वत्रायं नियमः। केवलमेकादिशब्दानामुपसर्जन-प्रकृतिभावो विकल्प्यते। एकान्यपरेतरोत्तरादय एकादयः। तेषूभयथा प्रयोगा दृश्यन्ते – लुप्तविभक्तिकाः कृतपुंवदभावाश्च प्रकृत्याकृताश्च। एकैकमक्षरम्। एकैकस्मै देहि। एकैकया। अन्यान्यमार्गेण। परपरो भावः। पर परा प्रक्रिया। इतरेतरा दृष्टिः। अन्यमन्यं पश्यामि। परं परं परां पराम्। इतरमितरम्। इतरामितराम् उत्तरमुत्तरम्। पूर्व पूर्वमित्यादि वा। येषां तु प्रातिपदिक द्विरुक्तिकल्पनादेकैकादिशब्दाः साध्यन्ते तेषामप्येकादि-शब्देष्वेव प्रातिपदिकद्विरुक्तिरिति नियमसिद्ध्यर्थमावश्यकमिदं वचनम्।

अथेह द्विरुक्तमित्युच्यते। समानाकृतेश्च द्विर्वचने द्विरुक्तशब्दः स्वार्थी भवति। तेनेह पर्य्यायवाचिनां विभाषितव्याकरणानां वा सह प्रयुक्तिर्नास्ति। घटं कलशं स्पृशति। द्रोग्धा द्रोढा गतः इति। एवमुक्ते वीप्सायाः अनवगतेः। घटं घटं स्पृशति। द्रोग्धा द्रोग्धेति वा। द्रोढा द्रोढेति वा सारूप्येण प्रयुक्ते तदवगतेश्च। नन्वेवं तर्हि वाग् वागनुभवत्यनुभवतीत्यादिकमपि नावकल्प्येत। सन्धिकृतवैरूप्यादिति चेन्न। विरूपाणां द्विरुक्तिर्निराक्रियते, द्विरुक्तस्य तु सन्धिकृतं वैरूप्यमुपरिष्टादापन्नं, तत्र जातः संस्कारो न निवर्तते इति कृत्वा तदवहेलने कारणाभावात्।

अथ वीप्सायां द्विरुच्यते। वीप्सा तु बहूनर्थानुद्दिश्य प्रवर्तते। साकल्यं, भागसाकल्यं, वण्टनकर्म, विस्रम्भणदानं, प्रत्यासत्त्यतिशयं, बहुत्वं, दूरव्यापित्व-माधिक्यं, चावस्थाविशेषसम्बन्धं चैवमन्यं चान्यं च। अक्षरमक्षरं पठति। अनवशिष्य सर्वं पठतीति गम्यते। इतः सप्तधान्यः राशेर्यवं यवमिह भवद्भ्यो देहि तदन्यत्सर्वं त्वया ग्राह्यमित्यत्र यवांशे साकल्यं वीप्सया द्योत्यते। इमं कार्षापणमिह भवद्भ्यो माषं माषं देहीत्युक्तोऽसौ मषशो विभज्य दत्वैतं निःशेषं करोति। एकैकस्मै च माषं माषं दत्वा सर्वेभ्यः कार्षापणं ददाति। न त्वेकैकस्मै द्विस्त्रिर्माषं ददाति न वा सर्वेभ्यो माषं दत्वा पुनः सर्वेभ्यो माषं ददाति। स एष विशेषो द्विरुक्तसमासार्थः। ननु यत्रोच्यते- अस्मात् कार्षापणादिह भवद्भ्यां माषं माषं देहीति। तत्रायमेकैकस्मै माषं पृथक् पृथग् दत्वा पुनः

---

1 प्रथमानिर्दिष्टं समास उपसर्जनम्। (1-2-43)

शेषं पृच्छति किमनेन क्रियतामिति। आतश्चात्र वीप्सा नास्ति इति गम्यते। तथा चात्र द्विरुक्तं कथमवकल्पते। अथानेकमाषसमुदायादपि कार्षापणाद् द्वयोरस्ति दानक्रियया व्याप्तिरित्येवं तु न शक्यं वीप्साऽऽधातुम्। अनयवुत्याभिधानस्यैव वीप्सा पदार्थत्वात् सन्निहितस्य कस्याप्यर्थस्य वर्जने विवक्षिते तदव्यपदेशासंभवात्। भाग साकल्यं त्वस्ति वीप्सा। तद्भागस्यानवशेषविवक्षणात्। इह तु नास्ति वीप्सा। यस्य द्विरुक्तं तस्यैव शेषरूपेण परिगृहीतत्वात्। सत्यम्। वाचनिकं तु तत्र द्विरुक्तमुपरिष्टात् वक्ष्यामीति सन्तोष्टव्यम्। यास्यति यास्यति, याति याति, जीवति जीवति, इत्यादिषु निभृतं विश्वसिहीति विस्रम्भणं दीयते। पश्य, पश्य, धावति धावति मेऽयं मेषः – इति धावनादिसिद्धेरत्यासत्तिर्बोध्यते। देशं देशं पर्यटतीत्यत्र बहून् देशानिति गम्यते। जीवति जीवति, गच्छति गच्छतीत्यत्र क्रियाया दूरकालव्यापित्वमाधिक्यं च गम्यते। कमलानि कमलानि तत्रादृश्यन्तेत्यत्र बहुदूरदेशव्यापित्वमत्याधिक्यं च गम्यतें। खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र, क्षीणः क्षीणः परिलघु पयः-स्रोतसां[1] चोपभुज्येत्यवस्था विशेषसम्बन्धो गम्यते। एवमन्यदूह्यम्।

अथ यत्र वीप्सा च विवक्ष्यतेऽतिशयश्च। तत्र कथं भाव्यं, सह वा क्रमेण वा। क्रमेऽपि द्विरुक्तेनातिशायिकेन वा। उच्यते। न चैकस्य प्रयोक्तुरनेकमर्थं युगपद वक्तुं संभवोऽस्ति, ततोऽवश्यं क्रमोऽनुरुध्यते। तदेतत् प्रयोक्तर्य्यधीनं भवति-इदं वा प्रथमं, तद्वेति। अथापि न सर्वत्रेदानीन्तनस्यैकान्ततः कामचारः। चिरादिदानीं यावदविच्छिन्न लोकव्यवहारादयं क्रमः शब्दभेदा् व्यवतिष्ठते। अस्ति हि समानेऽपि निमित्ते लोकव्यवहारस्य क्वचित् काचित् प्रसृततरा गतिर्भवति। इह तावत्-पचति पचतितरां तिष्ठतीत्यत्राभीक्ष्ण्यमुक्त्वाऽतिशायिकः क्रियते। इत्येषां प्रसृततरागतिः। एवमन्यत्रान्यत्र।

अथ यत्र संख्यासर्वनामादीनि विशेषणानि प्रयुज्यन्ते तत्र तेषामेव द्विरुक्तिः समासो वा न विशेष्याणाम्। वृक्षं वृक्षं सिञ्चति। वृक्षौ वृक्षौ वृक्षान् वृक्षान् इत्यत्रैव साते विशेषणसमवधाने एकमेकं वृक्षं सिञ्चति द्वौ द्वौ वृक्षौ। त्रीस्त्रीन् वृक्षानित्येवं प्रयुज्यते। दृष्टा दृष्टा सुन्दरी प्रत्यवरुद्धा भवतीति वा, या या दृष्टा सुन्दरी सा सा प्रत्यरूढा भवतीति वा। अत्राह – कारकं चेद् विजानीयाद् यां यां मन्येत् सा भवेत् या या प्राप्नोति सा सा कर्तव्या – इति पतञ्जलिः प्रयुङ्क्ते। (1-4-51) तत्र प्रति निर्देशे तावदेकत्र द्विरुक्तिरेकत्र नास्तीति को हेतुः। उच्यते। विवक्षाधीना हि वीप्सेयमुद्देश एवैकत्र प्रतिपन्ना न प्रतिनिर्द्देशेऽपि, वीप्सितस्यैवार्थस्य तेनैकेन तत्पदेन बुद्धिस्थपरामर्शकेन

[1] मेघदूतम्। (श्लोक नं. 13)

ग्रहीतुं शक्त्वादीति न द्विरुक्तिः। यदि तु विवक्ष्यते प्रतिनिर्द्देशेऽपि सा वीप्सा तदा स्थाने द्विरुक्तिः। एवमन्यत्रापि नेयम्।

अथेह कस्मान्न भवति द्विरुक्तिः समासो वा – यवो व्रीहिरिति। यावता जातिशब्दा एतेऽनवयवाभिधानाः कार्त्स्न्येन द्रव्याणि प्रतिपादयन्ति। उच्यते यदि व्यक्तिव्यतिरिक्ता जातिरथवा त्यक्तभेदहतवो व्यक्तय एव जातिः। उभयथा भेदाभावाज्जातिलक्षण एकोऽर्थः स्यात्। आतश्चैकमर्थं प्रत्याययिष्यामीति जातिशब्दः प्रयुज्यते, अनेकार्थं तु प्रत्याययिष्यामीति वीप्सा क्रियते। तदनयोर्जातिशब्दवीप्सा-शब्दयोर्भिद्यते कर्मेति न जातिशब्दे द्विरुक्तिरतिसज्जते।

अथेह कस्मान्न भवति द्विरुक्तसमासः – वृक्षान् पश्यति, फलानि गृह्णातीति पदे, सप्तपर्णमानयति, अष्टापदमिति समासे, द्विपदिका, त्रिपदिका, माषशः,कार्षापणशः इति तद्धिते। ग्रामे ग्रामे पानीयम्। माषं माषं देहीति वाक्ये चेति? उच्यते। इह तावत् वृक्षान् पश्यतीति न द्विरुक्तिः प्राप्नोति। सजातीयानामनेकेषां द्रव्याणामेकस्यां क्रियायां पार्थक्येन क्रमिकान्वयविवक्षया प्रत्येकपरिसमाप्ते कारकत्वे द्विरुक्तविषयताभवति, ऐकरूप्येण सहितान्वयविवक्षया व्यासज्यवृत्ते कारकत्वे त्वेकशेषविषयतेत्येवं विवक्षितानिमित्तभेदादेतद्द्वयं व्यवतिष्ठते। वृक्षं वृक्षं पश्यतीति वा वृक्षान् पश्यतीति वा। ततो नान्यार्थविवक्षायामन्यप्रसङ्गाक्षेपो युज्यते।

सप्तपर्णे तु न संख्याया वीप्सा, अनेकव्यासज्ज्यवर्त्तिन्यास्तस्या एकत्वाद् न वा पर्णानाम्। तथा सति यदत्र वीप्सायुक्तं नादः प्रयुज्यते पर्वणि पर्वणि सप्तपर्णान्यस्येति वीप्सा संतिष्ठते न सप्तपर्णेषु। तस्मादप्राप्तिर्द्विरुक्तस्य। अथापि वा नान्यपदार्थे वीप्सा। तस्यैकत्वेन विवक्षितत्वात् सप्तपर्णानित्यादीनां त्वेकशेषविषयत्वात्। तस्मा-दिहाप्यनाक्षेपः। अत एव च न द्विपदिकायां द्विरुक्तप्रसङ्गः। सप्तपर्णेन समानस्थानत्वात्। अथ माषशः शब्दे त्ववश्यं द्विरुक्तमनुवर्त्तेत यदि शस् प्रत्ययो न दृष्टः स्यात्। उपेयप्रतिपत्यर्था ह्युपाया अनेकजातीया भवन्ति। तत्रान्यतमप्रयोगे प्रयोक्तुरिच्छा प्रमाणम्। यथा घटः कलशः इत्यन्यतरेण पर्यायवाचिना कृतं भवति। एवं माषं माषमिति वान्यतरेण प्रयुक्ते कृतं भवति। एकतरेण गतार्थत्वाच्चाभिधित्सानिवृत्त्याभिधानान्तरस्य न प्राप्तिः। तस्मादत्रापि नाक्षेपः। अथ वाक्येऽपि यदि ग्रामे वीप्सा, तदा भवत्येव द्विरुक्तम्--ग्रामे ग्रामे पानीयमिति। यदि पानीये वीप्सा तदा भवत्येव तत्र द्विरुक्तं – ग्रामे पानीयं पानीयमिति। यदि वाक्ये वीप्सा तदा भवत्येव तत्र द्विः प्रयोगः – ग्रामे पानीयं ग्रामे पानीयमिति। समासस्तु नास्ति। पदाधिकारात्। अथावयववीप्सया वाक्यद्विरुक्तिराक्षिप्यते चेदस्थाने स आक्षेपः। यदर्थस्य वीप्सा तत्रैव द्विरुक्तसमास

प्रवृत्तेः। तदिदं सर्वं सुनिपुर्णं भाव्यम्। न वाक्यादावामन्त्रितं द्विरुक्तं समस्यतेऽसूया सम्मतिकोपकुत्सनभर्त्सनेषु तत्रोपसर्जनं प्रकृत्या। सुन्दर सुन्दर वृथा ते सौन्दर्य्यम्। मनीषित् मनीषित्-- वृथा ते मनीषा। भूपते भूपते वृथा ते भूपतित्वम्। देव देव। वन्द्योऽसि-इति, भगवन् भगवन्नायाहीति वा सम्मानः दुर्विनीत दुर्विनीत। महाननर्थस्त्वया चरित इति कोपः। धानुष्क धानुष्क। वृथेदं धनुर्धारयसीति कुत्सा। शिव शिव। कथमिदं तुभ्यं रोचते। हरे हरे। किमिदं करोषीति वा कुत्सा। चोर चोर। इदानीं ज्ञास्यामि जाल्म। घातयामि त्वमिति भर्त्सितकम्। अत्राह- न ह्यनसूयन् कुत्सयति, तस्मादेकोऽर्थः स्यादसूया च कुत्सा च। तत्र कुत्सनमिति किमर्थं पृथगुच्यते नासूययैव कृतं स्यात्। अपि च नाकुपितो भर्त्सयते। तस्मादेकोऽर्थः स्यात् कोपश्च भर्त्सना च। तत्र भर्त्सनमिति किमर्थं पृथगुच्यते न कोपेनैव कृतं स्यात्। यद्यपि चाकुपिता अपि दृश्यन्ते दारकान् भर्त्सयमानास्तथाप्यन्ततस्ते तां शरीराकृतिं कुर्वन्ति या कुपितस्य भवति। यदि वा कोपमप्रदर्शयन्तो भर्त्सयेरन्, तत्तर्हि तेभ्यो नैव दारकाविभियुरित्यस्ति कोपस्यार्थः। अत्रोच्यते। अस्तु द्वयोर्द्वयोरेकत्र कार्य्यकारणभावात् समावेशः। वाक्यं तु तयोः पृथगिवानुप्रयुज्यते। अर्थौ च तौ तावेतौ भिद्येते। असूयाकोपौ तावदात्मलाभाय बुद्धिप्राधान्येनापेक्षेते कुत्सनभर्त्सने तु वचनम्। तत्रान्तरेणापि तथा बुद्धिमर्थान्तरेणापि तथावचनं कृतावसरं भवति। यत्रापि हास्येन प्रेम्णा वा कुत्सयन्ते तत्रापि यथा स्यात् यत्रापि वा गुणोत्पत्तिमुद्दिश्य वात्सल्यबुद्धिमन्तो वाचा ताडयन्तीव तत्रापि यथा स्यात्। उक्तं चेदमभियुक्तैः –

**सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषीक्षितैः।**
**लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः ॥1॥**[1]

प्रकारेगुणवचनं द्विरुक्तं समस्यते[2] पुंवत्वं चोपसर्जने[3]। अत्रगुणोपसर्जन-द्रव्यवाचिनः केवलगुणवाचिनश्च विवक्ष्यन्ते। प्रकारः सादृश्यप्रतियोगित्वमुपमानाभिन्न-बोधो वा। शुक्ल शुक्लं रूपम्।

शुक्ल शुक्लः पटः। शुक्लत्वेन प्रतिपन्नादभेदेनैव प्रतिपद्यमान इत्यर्थः। यत्र शुक्ल इव ज्ञातोऽर्थस्तत्रैवमुच्यते । उपमानोपमेयभावनिर्देशेन चेषदर्थोऽन्तर्भाव्यते। शुक्ल शुक्लः पटः, ईषच्छुक्ल इत्यर्थः। पटु पटुः। मृदु मृदुः। मन्द मन्दम्। अल्पाल्पम्। समास

---

1 महाभाष्ये (8-1-8)
2 प्रकारे गुणवचनस्य (8-1-12)
3 पुंवत्कर्मधारयजातीयदेशीयेषु (6-3-42)

निबन्धनो विभक्तिलोपः स्त्रीलिङ्गेषु तु- पटुपट्वी मृदुमृद्वी। मन्दमन्दा शुक्लशुक्लेत्यादिषु पुंवद्भावश्च विधीयते। विभक्तिलोपश्च समासात् सिद्ध एव। किञ्चित् किञ्चित्। ये तु केवलद्रव्यवाचिनो द्रव्योपसर्जनद्रव्यवाचिनो वा तेषां द्विरुक्तं नास्ति। गौर्वाहीकः। अग्निर्माणवकः। अत्राह— सर्वे शब्दाः प्रकारे वर्तमाना – गुणवचनाः संपद्यन्ते[1]। तेनेहापि प्राप्नोति—अत्रोच्यते। न प्रकारं गुणवचनत्वे निमित्तं ब्रूमः। किन्तर्हि द्विरुक्तेनिमित्तं लक्षयामः। न प्रकारे सति यद्गुणवचनं तद् द्विरुक्तमित्यर्थः। किन्तु गुणवचनं प्रकारे द्विरुक्तमित्यभिप्रायः। तेन प्रकारे च, प्रकारात् प्रागपि च यद्- गुणवचनं तस्येह ग्रहणं न तु गोरग्नेर्वा। अथास्मिन्नेव प्रकारेविधीयमानो जातीयप्रत्ययस्त्वविशेषात् प्रयुज्यते द्रव्यवचनाच्च गुणवचनाच्च। ब्राह्मणजातीयः। पटुजातीयः। तत्र पटु पटुरिति समासो वा पटुजातीय इति तद्धितो वा पर्य्यायेण प्रकारमभिदधाते। प्रयोक्तुरिच्छा च तत्रान्यतरप्रयोगे प्रमाणम्। ननु कथं 'भीतभीतमिव शीतमयूख'-इत्यत्र प्रकारार्थमुभयं प्रयुज्यते- इव शब्दश्च द्विरुक्तं च। नान्यतरेण कृतं स्यात्। उच्यते। भयस्याल्पमात्रत्वं गमयितुमिव तयोरावश्यकत्वात्। अथवा प्रकारे द्विरुक्तं, सादृश्ये त्विवशब्द इति नान्यतरेण गतार्थता। प्रकारसादृश्ययोः कथंचिद्भेदेन प्रतिपन्नत्वात्। अत एव सर्वत्रापि दिरुक्ते तत्प्रयोगो न विरुद्ध्यते। पटुपटुरिव। मृदुमृदुरिव।

अथेदं जिज्ञास्यते। 'नवनवा वनवायुभिराददे,[2] नवं नवं प्रीतिरहो करोति, मन्दमन्दमुदितः प्रययौखम्, मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्।'[3] इत्येवमादिषु गुणवचनद्विरुक्तेषु विभक्तिलोपः क्वचिद्।

तत्र को हेतुः उच्यते। नित्यवीप्सयोः सर्वस्य द्वे भवत इति हि तावत् पूर्वं प्रतिज्ञातम्। ततो गुणवचनानामपि यत्र वीप्सा विवक्ष्यते तत्र पूर्वनियमाद् द्विरुक्तं विभक्त्यलोपश्च। नवं नवं। मन्दं मन्दमिति। यत्र तु प्रकारनिबन्धमेव द्विरुक्तं तत्र स्थाने विभक्तिलोपः प्रवर्तते पुंवद्भावश्च। नव नवा। मन्दमन्दमिति। एवमन्वत्रापि नेयम्।

आनुपूर्व्ये भागवचनं द्विरुक्तं समस्यते प्रकृत्या चोपसर्जनम्।[4] विभक्ति लोपो निवर्त्यते प्रकृत्या करणात्। मूले मूले स्थूलाः। अग्रे अग्रे सूक्ष्माः। अग्रमध्यमूलानि त्रयो

---

1 प्रकारे सर्वेषां गुणवचनत्वात्सर्वप्रसङ्गः। वा. (प्रकारे सर्वेषां गुण वचनत्वात्सर्वप्रसङ्गः। सर्वे हि शब्दाः प्रकारे वर्तमाना गुणवचनाः सम्पद्यन्ते। तेनेहापि प्राप्नोति) (महाभाष्य- 8-1-12)

2 शिशुपालवधम् (6-32)

3 मेघदूतम् (नवम् श्लोकः)

4 आनुपूर्व्ये द्वे वाच्ये (वा. 4692)

भागाः। तत्रैकमेव मुख्यमग्रं मूलं च। अन्येषां तु भागानामपेक्षया कृतोऽग्रमूलव्यपदेशः। न चैकरूपं भागानां स्थौल्यं सौक्ष्म्यं वा किन्तु यथा मूलमुपचीयते स्थौल्यं, यथाग्रमुपचीयते सौक्ष्म्यं ततो नास्ति वीप्सेति नियमान्तरं क्रियते। उच्चैरुच्चैः संकोचो नीचैर्नीचैः प्रसारः। उपर्य्युपरि कृष्णः। अधोऽधः शुक्लः स कृष्णसारः। अन्तरन्तरमुष्य क्षुद्रं वृत्तं। बहिर्बहिरमुष्य वृहद्वृत्तम्। उत्तरोत्तरं पूर्वपूर्वमित्यत्र तु उत्तरस्मादुत्तरमित्येवं पञ्चमी तत्पुरुषो गुणवचनद्विरूक्तं वा। मूले मूले पथि विटपिनामित्यत्र तु वीप्सायामेव द्विरुक्तम्।

अनेकावधारणेऽवधार्य्यमाणवचनं द्विरुक्तं समस्यते प्रकृत्या चोपसर्जनम्। अस्मात्कार्षापणादिह भवद्भ्यां माषं माषं देहि। एकस्मै एकं मासमित्येवं देहीति भावः। एभ्यः पञ्चभ्यो माषं माषं देहि। पृथगेकैक दत्वा माषान् देहीति भावः। अनवधारणे तु नास्ति द्विरुक्तं। एभ्यो माषं माषौ माषान् देहीति। यथेच्छं कस्मैचिदेकं कस्मैचिद् द्वौ कस्मैचिद्वा त्रीनिति कामचारोऽनुज्ञायते। एकावधारणेऽपि नास्ति। अस्मात्कार्षापणात् इह भवद्भ्यां माषं देहि। उभाभ्यामेकोऽवधार्य्यते।

संभ्रमेण प्रवृत्तौ चापलहेतुभूतं चापलार्थविधिर्वा बहुलं द्विरुक्तं समस्यते प्रकृत्या, चोपसर्जनम्[1]। आदरार्थे भयहेतोः चोपस्थितौ संभ्रमेण प्रवृत्तिर्भवति। तत्राशुप्रतिपादनहेतुभूतो योऽर्थस्तत्पदं द्विरूक्तं स्यात्। आशुकारित्वार्थं प्रयुक्तं क्रियापदं वा द्विरुक्तं स्यात्। मित्र मित्र। आयाहि आयाहि। कृष्ण कृष्ण। आदरो गम्यते। चोरश्चोरः। पश्यत पश्यत। बहुलमित्युच्यते। यथेष्टमनेकधा प्रयोगो ह्यत्रानुगृह्यते। न चावश्यं द्वे एवं। यावद्भिः शब्दैः सोऽर्थो गम्यते तावतां प्रयोगस्य न्यायसिद्धत्वात्। अहिरहिरहिः। बुध्यस्व बुध्यस्व बुध्यस्व। पलायस्व पलायस्व पलायस्व। आद्रव आद्रव आद्रव। भयं गम्यते। इहानेक पद प्रयोगमात्रं न समासः। समासस्वीकारे फलादर्शनादिति मतम्।

अव्यक्तानुकरणं दिरुक्तं समस्यते[2] भूर्भूः श्वसिति। भुग् भुग् प्रज्वलिति। श्रत् श्रत्। पट् पट्। खट् खट्। पटत् पटत्। धगद्धगज्ज्वलदिति केषांचित् त्रिरूक्तिरशास्त्रीया। धगद्धगद्धनज्ज्वलदिति। वा पाठः साधीयान्। पटत्। पटपटायति। तकारलोपो वक्ष्यते[3]। पटपटायति। घटघटायति। शरशरायति। पटपटाकरोति। खरटखरटा करोति। त्रपटत्रपटा करोतीत्यादि। अनेकाक्षरादनितौ डाच्प्रत्ययस्तद्धितः। इति परत्वे तु पटत्पटेति। पटत्पटदिति।

---

1 संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः (वा. 5056)

2 डाचि विवक्षिते द्वे बहूलम् (वा. 4697)

3 नित्यमाम्रेडिते डाचीति वक्तव्यम् (वा. 3638)

आभीक्ष्ण्ये तत्कृतकृदन्तं द्विरुक्तं समस्यते। भोजं भोजं व्रजति। आभीक्ष्ण्येऽम् प्रत्ययः कृत्। श्रावं श्रावं ब्रूते। पायं पायं पश्यति। स्मारं स्मारं दृष्यति। गामं गाममायाति। गम गमं विलीयते। जागरं जागरं शेते। प्रलम्भं प्रलम्भं क्रीडति। भुक्त्वा भुक्त्वा ब्रजति। श्रुत्वा श्रुत्वा। एष्वाभीक्ष्ण्यं कृत्प्रत्ययेन गतार्थमिति पूर्वनियमेनाप्राप्तं द्विरुक्तं नियमान्तरेणादिष्यते। तत्रापि यस्तावदाभीक्ष्णसामान्यं निमित्तीकृत्य तेनाभीक्ष्ण्य शब्देनैव चोल्लिख्य कृतप्रत्ययो विधीयते तदन्तमेव द्विरुक्तं भवति। यस्त्वाभीक्ष्ण्यविशेषं निमित्तीकुरूते शब्दान्तरेण च प्रवर्तते तत्र नायं विधिः गेहानुप्रवेशमास्ते। गेहानुप्रयातम्। गेहानुप्रपादम्। गेहानुस्कन्दम्। इहं गेहमनुप्रवेशमिति वीप्साया वा गेहमनुप्रवेश-मनुप्रवेशमित्याभीक्ष्ण्यस्य च वा सत्वेऽपि कृतप्रत्ययेन समासेन चोक्तार्थत्वात्। द्विरुक्तं न स्थानमाप्नोति।

क्रियासमभिहारे लोडन्तं द्विरुक्तं समस्यते[1]। स भवान् लुनीहि नुलीहीत्येवायं लुनाति। पुनीहि पुनीहीत्येवायं पुनाति। याहि याहीति याति। पलायस्व पलायस्वेति पलायते। यत्र संघगतः सवोव्यग्रचित्तत्वाद् विशिष्य कश्चिल्लक्ष्यमकुर्वाण एवान्यं पौनः पुन्येन प्रवर्त्य स्वयं प्रवर्तते। अन्योऽन्यं वा प्रवर्त्य स्वयं सर्वे प्रवर्तन्ते। तत्र संघकर्तव्ये युद्धोत्सवादावस्य विषयता। अयमाख्यातसमासः प्रसङ्गादाख्यातः।

समसंप्रधारणायां स्त्रीनिगदभावे दर्शनीये डतरडतमान्ते द्विरुक्ते समस्येते प्रकृत्या चोपसर्जनम्[2]। आद्याता ऋषिः भूतिः संपदित्यादयो भावाः स्त्रीलिङ्गशब्दाभिधेयाः स्त्री निगदाः। किं यत्तदेकेभ्यो निर्द्धारणे डतरडतमौ प्रत्ययो विधीयेते। तदन्तस्येयं द्विरूक्तिः। उभाविभावाद्यौ श्रूयेते। तत्र कतरा कतरानयोराद्यता। सर्व इमे आद्याः कतमा कतमा एषामाद्यता एतावुभौ समृद्धौ दृश्येते। परन्तु यतरा यतरा तयोः समृद्धिः सा मया विज्ञायते। इमे सर्व एवं संपन्नाः। यतमा यतमा चैषां संपत्तिः। सा पुनरेकतमैकतमा स्यादलं नगरनिर्माणाय। बहुलमिति वक्तव्यम्। दृश्यते हि क्वचिद्व्यवहितप्रयोगाद् वाक्यम्। उभावेव सिद्धौ दृश्यते किन्तु कतरा तयोः सिद्धिः प्रथमा कतरा वा पश्चिमेति न ज्ञायते। वेदमन्त्रेऽप्येवं व्यवहित प्रयोगो दृश्यते।

**कतरा पूर्वा कतरा परायोः कथा जाते कवयः। को वि वेद।**
**विश्वं त्मना विभृतो यद्ध नाम विवर्तेते अहनी चक्रियेव ॥1॥**[3]

---

1 क्रियासमभिहारे च (वा. 4695)

2 किं यत्तदो निर्धारणे द्वयोरेकस्य डतरच् (5-3-92)

3 ऋग्वेदसंहिता (1'185-1)

अथवा यत्रायं व्यवहितप्रयोगस्तत्र युक्तो द्विः प्रयोगोऽपेक्षितत्वादेकेन चाकृतार्थत्वात्। यत्र पुनरेकेन शब्देन गतार्थता बहूनां वा प्रयोग प्राप्तिः तत्रैवायं द्विरुक्तनियमः प्रवर्तते। तत्र च नित्यं समास इति बोध्यम्।

आबाधे द्विरुक्तं समस्यते[1] विभक्तिलोपश्चोपसर्जनस्य पुंवत्वं च। आबाधः पीडा। गतगतः। पीड्यमानस्येयमुक्तिः गतगता। इह पुंवत्वं च।

उपर्य्यध्यधसः सामीप्ये परिवर्जने[2] प्रसमुपोदस्तु ऋक पादपूरणे द्विरुक्ताः समस्यन्ते बहुलम्। उपर्य्युपरि भित्तिं प्रदीपमाला। भित्तेरूपरिष्टात् संश्लिष्टप्रायेत्यर्थः। अध्यधि कोपमनुरागो रमण्याः पत्यौ। कोपानुरागयोरासत्तिर्गम्यते। अधोऽधस्तोरणं मणिमालाऽवसज्जते। तौरणसंलग्नेति गम्यते। परि परि वङ्गेभ्यो वृष्टो देवः। वङ्गान् परिहृत्येत्यर्थः। परित्रिगर्त्तं वृष्टो देव इत्यत्र तु न द्विरुक्तिः। ऋग्विषयत्वात्। प्रप्रायमग्निः। संसमिद्युवसे। उपोप मे परामृश। किं नो दुदु हर्षसे। बहुलमित्युच्यते दृश्यते हि क्वचिद् व्यभिचारोऽपि। गृहस्योपरि। परिवङ्गेभ्यः। प्र सम्राजं चर्षणीनाम्। उद्वयं तमसस्परि।

अकृच्छे प्रियसुखयोर्विकल्पेन द्विरुक्तं समस्यते[3]। यस्य दानादौ क्लेश संभावना तत्रैव तदभावप्रतिपादनाय प्रियसुखयोः प्रयोगः। प्रियप्रियेण ददाति। प्रियेण ददाति। सुखसुखेन गच्छति। सुखेन गच्छति दानादिकर्मणा कृच्छ्मप्राप्नुवन् तत्र प्रवर्तते इत्यर्थः। विभक्तिलोपः समासात् सिद्धः। क्रियाविशेषणतया नपुंसकत्वात्पुंवद्भाव-विषयता नापेक्ष्यते।

यथास्वे यथायथं नपुंसकलिङ्गम्[4]। यथास्वमिति वीप्सायामव्ययीभावः। योऽयमात्मा यच्चात्मीयं तद् यथास्वम्। तत्रेदं द्विरूक्तं समस्यते नपुंसकलिङ्गं च तन्नियम्यते। यथायथं सर्वे पदार्था विज्ञाताः। यथा स्वभावं यथा स्वरूपं चेत्यर्थः।

द्वन्द्वं नपुंसकलिङ्गमभिव्यक्त्यादिषु। द्विरुक्तस्य द्वौ द्वाविति प्राप्ते पूर्वपदस्थविभक्तेरम्भावः उत्तरपदस्य चात्वम्[5]। विशिष्टस्य नपुंसकत्वमेकत्वं चेहादिष्यते। अत्यन्तसहचरितत्वेन लोकविज्ञानमभिव्यक्तिः। द्वन्द्व स्कन्दविशाखौ। द्वन्द्वं

---

1 आबाधे च (8-1-10)

2 उपर्यध्यधसः सामीप्ये (8-1-7) परेर्वर्जने (8-1-5)

3 अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् (8-1-13)

4 यथास्वे यथायथम् (8-1-14)

5 द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु (8-1-15)

रहस्यं मर्य्यादावचनं व्युत्क्रमणं यज्ञपात्रप्रयोगश्चेत्येवमादयोऽर्था गृह्यन्ते। द्वयो रहस्यं द्वन्द्वम्। द्वन्द्वं मन्त्रयते। रहस्यमित्येकं द्वन्द्व शब्दस्य वाच्यम्। इतरे विषयभूता इत्याहुः। स्थित्यनतिक्रमो मर्यादा। आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति। वृषेण च पुत्रपौत्रप्रपौत्रैश्च व्युतक्रमणं पृथगवस्थानम्। द्वन्द्वं व्युत्क्रान्ताः। द्विवर्गसंबन्धेन पृथगवस्थिताः। द्वन्द्वं न्यञ्चि यज्ञपात्राणि प्रयुनक्ति। वीप्सायां द्विरुक्तस्यात्रैव द्वन्द्वभावोऽन्यत्र तु प्रकृतिभावः। द्वौ द्वौ। अन्येप्येवं प्रयोगविषया उह्याः। युद्धं च साहचर्य्यं च समाहारश्च। द्वाभ्यां क्रियमाणं द्वन्द्वं। द्वन्द्वयुद्धान्यवर्त्तन्तेति द्वयोः साहचर्य्यं द्वन्द्वम्। द्वन्द्वं संकर्षणवासुदेवौ। द्वयोः साहित्यं द्वन्द्वम्। सहितं वा द्वयं द्वन्द्वम्। घटपटयोर्द्वन्द्वम्। द्वन्द्वमिह वर्त्तते घटश्च पटश्चेति। अर्थान्तरेण लिङ्गव्यत्यासोऽपि दृश्यते। समास इत्यादौ।

अन्योन्यं परस्परिमितरेतरं च कर्मव्यतिहारे स्त्रीनपुंसकयोरुत्तरपदस्याम्भावश्च विकल्पेन[1]। अन्यस्तावदन्यं प्रतीत्येवं क्रियाविनिमयेन प्रवर्तमानं द्वन्द्वमन्योऽन्यम्। परः परं प्रतीति परस्परम्। इतर इतरं प्रतीतिः इतरेतरम्। इतरशब्देपूर्वपदस्थविभक्तिलोपः समासनियमात्। अन्यपरशब्दयोस्तु पूर्वपदस्थाया विभक्तेरलोपमादिश्यते[2] प्रथमैकवचनसरूपत्वं च। यत्राप्यन्ये संभूयान्यान् पश्यन्तीत्यर्थविवक्षा तत्राप्यन्योन्यान् पश्यन्ति ब्राह्मणा इतीष्यते प्रयोगः। कर्मव्यतिहारद्विरुक्तेन सर्वनामत्वाव्याघातादुत्तरपदे सर्वाणि विभक्ति कार्य्याणि सर्वनामवदेव लभ्यन्ते केवलं प्रथमाद्वितीययोर्द्विरुक्तादददादेशो नास्ति। अन्योन्यम्। अन्योन्ये। अन्योन्यस्मै। अन्योन्यस्मात्। अन्योन्येषाम्। परस्परम्। परस्परे। परस्परस्मै। परस्परस्मात्। परस्परेषाम्। इतरेतरम्। इतरेतरे। इतरेतरस्मै। इतरेतरस्मात्। इतरेतरेषाम्। इत्यादि स्त्रीपरत्वे नपुंसकपरत्वेऽपि वा सर्वनाम्नो वृत्तिमात्रे पुंवदभावनियमात् पूर्वपदे पुंस्त्वम्। उत्तरपदे तु स्त्रीप्रत्ययो निषिध्यते, अथ सर्वासां विभक्तीनां विकल्पेनाम्भावोऽनुज्ञायते। अन्योन्यमिमे ब्राह्मण्यौ ब्राह्मणकुले वा भोजयतः। अन्योन्यां भोजयतः। परस्परम्। परस्पराम्। इतरेतरम्। इतरेतराम्। द्वितीयाया एवायमाम्भावः। तृतीयादिषु तु पुंवदेव रूपमिति केचिदाहुः।

अथेह निरुक्तप्रक्रियया किञ्चिद् व्याख्यास्यामः। इह तावदन्यस्मै इति प्राप्ते कर्मव्यतिहारविषयतायां द्विर्वचनं प्रयोक्तव्यमिति शास्त्रादनुज्ञायते इत्येवं केचन मन्यन्ते तदापाततः। समाससमात्रस्य वाचनिकत्वेऽपि शब्दद्वयस्यार्थप्राप्तत्वात् तदर्थं शास्त्रानपेक्षणात्। संभवति हि राजपुरुषादिविभिन्नाकारशब्दद्वयवत्। समानाकारशब्द-

---

1 कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम् (वा. 4700)

2 असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः (वा. 4700)

अथेह निरुक्तप्रक्रियया किञ्चिद् व्याख्यास्यामः। इह तावदन्यस्मै इति प्राप्ते कर्मव्यतिहारविषयतायां द्विर्वचनं प्रयोक्तव्यमिति शास्त्रादनुज्ञायते इत्येवं केचन मन्यन्ते तदापाततः। समासमात्रस्य वाचनिकत्वेऽपि शब्दद्वयस्यार्थप्राप्तत्वात् तदर्थं शास्त्रानपेक्षणात्। संभवति हि राजपुरुषादिविभिन्नाकारशब्दद्वयवत्। समानाकारशब्द-द्वयस्याप्यर्थानुरोधेन लोकत एव सर्वथा प्राप्तिः। तथा हि-यत्तावदुच्यते-चैत्रमैत्रौ पश्यत इति, द्वे दर्शनक्रिये प्रतीयेते। तयोश्च चैत्रमैत्रौ कर्त्तारौ प्रतिपद्येते। कर्तृत्वग्राहिकायाः कारकविभक्तेः श्रूयमाणत्वात्। अथ कर्म्मपदं तु नेह निर्दिश्यते। सकर्मिका चेयं दर्शनक्रियाऽवश्यमाकाङ्क्षते कर्म्म। तत्र द्वेधा विवक्षितं संभवति। स्यादाभ्यां चैत्रमैत्राभ्यामतिरिक्तं किञ्चित् कर्म्म स्यात्। स्यादिमावेव चैत्रमैत्रौ कर्म्मणी स्याताम्। तत्रातिरिक्तं चेत् तत्पदमध्याहृत्य प्रयुज्यते। अथेमौ चेत् कथं वाच्यम्। न तावदेताभ्यामेव निर्दिष्टाभ्यां चैत्रमैत्राभ्यां तदाकाङ्क्षाशान्तिः शक्यं कर्त्तुम्। कर्त्तारं ग्राहयितुं विनियुक्तयोस्तयोः पदयोरन्यत्र विनियोगायोगात्। कर्म्मज्ञप्तिविनियोग समर्पिकायाः कारकविभक्तेरभावाच्च। नापि वा चैत्रमैत्रौ चैत्रमैत्रौ पश्यतीत्येत्येवमुपाख्यं शब्दाभ्यासः साधीयान् प्रतीयते। कारक विभक्तिभेदेन समानार्थकसमानाकारक-शब्दद्वयप्रयोगस्यारोचकत्वात्। गृहीतनाम्नः प्रतिनिधिशब्देन सर्वनाम्नैव च पुनरूपचारस्य प्रयोगकुशलानां संप्रदायभुक्तत्वात्। किञ्चविभागाप्रसिध्या चैत्रश्चैत्रमैत्रौ, मैत्रोऽपि चैत्रमैत्रौ पश्यतीत्येवमर्थलाभात् विवक्षितार्थ सिद्धिः स्यात्। नहि चैत्रौ वा मैत्रो वा स्वमपि पश्यतीत्यर्थो विवक्ष्यते किन्तर्हि- अन्यः अन्यम्। मैत्रादन्यश्चैत्रः स्वस्मादन्यं मैत्रं पश्यति। चैत्राद्वायमन्यो मैत्रः स्वस्मादन्यश्चैत्रं पश्यतीति विवक्ष्यते। तस्मादेवमर्थं विवक्षमाणस्तथाभूतेनैव शब्देनाभिधातुमुपक्रमते चैत्रमैत्रावन्योन्यं पश्यत इति। एवमुक्ते खल्वप्येतदुभयं सिद्ध्यति। अस्ति चैत्रमैत्रौ कर्त्तारौ भवतः, अस्ति चैत्रमैत्रौ कर्म्मणी भवतः इति नातिरिक्तमेताभ्यां कर्म्मेह विवक्षितं न वातिरिक्तः कर्त्ता कश्चिदित्येकम्। एकैकस्यां तु दर्शनादिक्रियायामन्यस्य कर्तृत्वमन्यस्य च कर्मत्वमाख्यायते न तु वा स्वक्रियायां स्वस्यापि कर्मत्वं निरुप्यते- इति द्वितीयम्। तथा च कर्मव्यतिहारः फलतीत्यतस्तादर्थ्ये तादृशोपचारातिशयादिदमैकैकपद्येन गृहीत्वा त एतेऽन्योन्यादिशब्दा उपनीयन्ते। स एष तेषां त्रयाणामन्योन्यादिशब्दानां स्वरूपसिद्धौ तावन्नैरुक्तः समयः।

अन्यः अन्यमिति क्रियाविनिमय स्वरूपमात्रं दिदर्शयिषितं न त्वत्र प्रक्रियायां पुमान् स्त्री नपुंसकं वा विशिष्य लक्षयितव्यानि। नाप्येकत्वं द्वित्वं बहुत्वं वा तत्र व्यावर्तकतयाऽपेक्ष्यन्ते। क्रियाविनिमयं प्रति लिङ्गवचनयो विशेषानाधायकत्वात्। यथा स्वलिङ्गं यथास्ववचनं चैकदलमन्यदलाय यया प्रक्रियया प्रवर्तते तयैव तु तद्दलमपि यथा

स्वलिङ्गं यथा स्ववचनं सत् तस्मै पूर्वकृते प्रवर्तते। इत्येतावन्मात्रस्य तत्रार्थस्यापेक्षितत्वात्। एवमपि नान्तरेण किञ्चिल्लिङ्गं वचनं वा शक्यमनव्ययं नामपदं व्यवहर्तुमिति नाप्राप्ते लिङ्गे तावदैक्षन्त वृद्धाः। सर्वपुरुषार्थ कारण भूतेयं क्रिया तावन्महापुरुषार्थः। विशिष्टक्रियाकरण माहात्म्याच्च पुरुषत्वं प्रथते तस्मादस्ति प्रवृत्तौ पुरुषस्य घनिष्ठः सम्बन्धः – इत्यविवक्षायामपि लिङ्ग-विशेषाणां क्रिया सम्बन्धादये पुमानेवोपतिष्ठते। उपस्थित त्यागे च मानाभावात् प्रथमोद्दिष्टे कारके नाप्राप्तं पुंलिङ्गं व्यवहर्त्तव्यम्। अन्यः पर इतर इति। एकत्र निर्णीतोऽन्यत्रापि नीयते इति न्यायात् क्रियाविषयतायाः प्रधानभूतायाः सम्बन्धेन सिद्धोऽयं पुंलिङ्गनियमो ननूं क्रिया विषयत्वाव्यतिरेकेऽपि नीयते। सुसूक्ष्मं पश्यद्भिः सर्वत्रैव क्रियाया दृश्यमानत्वाच्च। तस्मादन्योन्यधनंपरस्परफलमित्यादिष्वपि साधीयान् पुंव्यवहारः। अन्यः पर इतर इति। द्वितीये त्वविवक्षितमुक्ष्यत्वांशे कारके कामचारः। विशेष्यनिघ्नतया सर्वलिङ्ग प्रयोगात्। अन्योन्यस्मिन्निमौ स्थितौ। अन्योन्यस्मिन्निमे स्थिते। अन्योन्यस्यामिमे स्थिते। क्रियाविशेषणत्वाऽभिप्राये तु सर्वत्र नपुंसकमात्रप्रयोगोऽपि नासांप्रदायिको दृश्यते। अन्योन्यमिमौ सन्नद्धौ। अन्योन्यमिमे संनद्धे। अन्योन्यमिमे ब्राह्मण्यौ भोजयतः। परस्परमिमे सुन्दर्य्यौ पश्यतः। इतरेतरमिमे पुष्पिण्यौ स्पृशतः। अन्योन्यमिमे ब्राह्मणकुले भोजयतः। परस्परमिमे क्षत्रकुले स्पर्द्धेते। इतरेतरमिमे मुखे स्पृशतः। अन्योन्यं वीरौ प्रहरतः। परस्परं राजानौ स्पर्द्धेते। इतरेतरं पितापुत्रौ रक्षेते। स एष तेषां त्रयाणां लिङ्गसिद्धौ नैरुक्तः समयः।

यत्र कस्यचिदेकस्यार्थस्य संनिरुपकस्य स्वरूपसिद्धयर्थमन्यौ द्वावर्थौ प्रयोजकतयावपेक्षेते। तत्र तयोरपेक्षमाणयोः प्रतियोग्यनुयोगिनोः प्रतियोगित्वा-नुयोगित्वाभ्यां विपर्य्यस्य प्रयोजकत्वविवक्षणं कर्मव्यतिहारः। स चायमेकोऽर्थः सनिरूपकः क्रियात्मक एव दृश्यते प्रायेण क्वचिद्वा सामान्यात्मको गुणात्मको वा विवक्षाभेदेन तत्र तत्र भिद्यते। क्रियायां तावदपेक्षितयोः कर्तृकारकयोः कर्मकारकयोर्वा विनिमयः कर्मव्यतिहारः चैत्रमैत्रावन्योन्यं प्रहरतोऽन्योन्यस्मै ददाते इत्यादिषु प्रहरणादि क्रियायामेकपक्षे तावच्चैत्रः कर्तृपदमवगाहते मैत्रः कर्मपदं संप्रदानपदं कारकान्तरपदं वा, अन्य पक्षे पुनः स मैत्रः कर्तृपदमाक्रमते, चैत्रः कर्मपदं संप्रदानपदं कारकान्तरपदं वा-इत्येवं विनिमयो विवक्षितः कर्तृप्रत्यये। सोऽयं जातिसामान्यादेकत्वेन विवक्षितां क्रियां प्रति प्रयोजकयोः कर्तृकारकयोरन्तरान्तरा विपर्य्यस्य विपर्य्यस्य विवक्षणाद् विनिमयो लक्ष्यते। कर्मप्रत्यये तु चैत्रमैत्रावन्योन्येन दृश्येते अन्योन्यस्मै गम्येते। इत्यादिषु दर्शनादिक्रियायामेकतश्चैत्रः कर्म्मेष्यते। मैत्रस्तु कर्त्ता स्यात् संप्रदानं वा कारकान्तरं वा।

इत्येवं विनिमयः। सोऽयं जातिसामान्यादेकत्वेन विवक्षितां क्रियां प्रति प्रयोजकयोः कर्मकारकयोरन्तरान्तरा विपर्य्यस्य विवक्षणाद् विनिमयोऽभिज्ञायते, क्रियातिरिक्ते तु सामान्यादिसम्बन्धे यथा- चैत्रमैत्रावन्योन्यं शत्रू-- इत्यत्र शत्रुत्वभावं प्रत्येकतश्चैत्रः प्रतियोगी मैत्रोऽनुयोगी। अन्यतः पुनर्मैत्रः प्रतियोगी चैत्रोऽनुयोगी। इत्येवमुभयथाऽप्यर्थो विवक्ष्यते। चैत्रो मैत्रस्य शत्रुः। स मैत्रोऽपि चैत्रस्य शत्रुरित्येवमुभयथा प्रतिपत्तेः। एवं चैत्रमैत्रावन्योन्यमुत्कृष्टौ सातिशयौ वेत्यादिषु गुणादिकं प्रत्यप्येवमर्थविनिमयो द्रष्टव्यः। अथवैतदन्यथा भावयिष्यामः। सर्वाणि कारकाणि कांचित् कांचिद्वा क्रियां कुर्वन्त्येव कारकत्वं भजन्ते। सर्वाभिश्च ताभिः क्रियाभिः कृतशरीरा काचिदेका विशिष्टा क्रिया धातुनोपपाद्यते। तत्र चैत्र मैत्रावन्योन्यं प्रहरत इत्यादिष्वेकदा तावत् कर्त्तृचिता क्रिया चैत्रे समवैति कर्मोचिता तु मैत्रे, अथान्यदा सा कर्त्तृचिता क्रिया मैत्रे समवेति कर्म्मोचिता तु चैत्रे- इत्येवमेकैका क्रिया स्वाश्रयद्रव्यं विनिमयेन गृह्णाति तत्रायं क्रिया-विनिमयो वा द्रव्यविनिमयो वेत्येवं शक्यमुभयथाप्याशंसितुमेतेषु। अथ चैत्रमैत्रावन्योन्यं शत्रू— इत्यादिष्वप्येकदा शातनक्रिया चैत्रे समवैति। शातनभावस्तु मैत्रे। अथान्यदा सा शातनक्रिया मैत्रे समवैति, शातनभावस्तु चैत्रे-- इत्येवं क्रिया- विनिमयो द्रव्यविनिमयो वा नेयः। सर्वाणि नामानि कर्मजान्येवेति नैरुक्तः सिद्धान्तः तदित्थं यथेच्छं क्रियायां वा अन्यत्र वा विनिमयो विवक्ष्यताम्। सोउ-ततः क्रियायामेवैष विनिमयः प्रतिष्ठां लभते क्रियापदसंनिधाने ह्येवैस तु कर्मव्यतिहारविषयोऽन्योन्यादिपदप्रयोग इति तु नितरां नियम्यते। अन्योन्यस्वत्वसंसर्गादन्योन्यधनभागिनः। ''अन्योन्य शत्रुमित्राध्यां संभवन्ति सहोदराः'' इत्यादिषु यथेच्छमन्योन्यादिशब्दप्रयोग दर्शनात्। अत्राह। मृत्तिका च घटश्चेत्येतदन्योन्यमन्योन्यस्य धर्मः। जाया च पतिश्चेत्येतदन्योन्यमन्योन्यस्य धनम्। इत्येवमादयोऽपि दृश्यन्ते प्रयोगाः। तत्र कथं अर्थसंगतिः। उच्यते। मृदघटश्चेत्यन्योन्यधर्म्मावितौ। अथवा अन्योन्यधर्मोऽयं मृत्तिका च घटश्चेति। शक्यमेवमुभयथापि तदर्थ नेतुम्। तत्र मृद्घटौ मृदघटान्योन्यधर्माविति वा मृद्घटौ घटधर्ममृद्धर्माविति वा प्रथमस्यार्थः। साहित्यगर्भितेऽप्युद्देश्यविधेयभावे तत्परित्यागात् प्रत्येकं तस्य विश्रामः। अथैतत्परित्याज्यं – साहित्यमनन्तर्भाव्यैव यत्र प्रयोक्तुमिष्यते तत्रैतस्मिन् द्वितीयवाक्ये-अन्योन्यधर्म इति विधेयांशेः। अयमित्युद्देश्यांशः, मृत्तिका च घटश्चेति तात्पर्यग्राहकांशः। पर्याप्तं प्रयुज्यते। अर्थोऽभिगम्यते। उपपत्तिस्तु नास्ति। न तावन्मृत्तिकामात्रमिदं पदार्थः। तस्य घटमात्रधर्मत्वेऽप्यन्योन्य-धर्मत्वाभावात्। 'शब्दबुद्धिकर्म्मणां विरम्य न व्यापारं इत्येकत्र कृतकृत्यमिदं पदं घटं नैव गृह्णीयादिति। तदुद्देश्यकविध्यसंभवापत्तेश्च। न च द्वाविदं पदार्थः। द्विवचनादर्शनात्। न च द्वयमिदं

पदार्थः। समाहारस्याधर्मत्वात्। अपेक्ष्यते त्विदंपदेनोभयोर्युगपद ग्रहणम्। उद्देश्यता तु तयोरपेक्ष्यते पर्य्यायेण। तन्नान्तरेण यत्नं सिद्ध्येदित्यवश्यमेकैकादिपदाध्याहारेणार्थः कर्त्तव्यः प्राप्नोति। मृत्तिका च घटश्चेत्यनयोरेकैकमन्योन्यधर्म इति। स यावता ब्रूयादेकैकमिति तावता ब्रूयादन्योन्यमिति। तस्मादेतदसन्देहार्थमनध्याहारार्थ चानुगृह्णातो ब्रूते- मृत्तिका च घटश्चेतदन्योन्यमन्योन्यस्य धर्म इति। अथायं विनिमयो वीप्सागर्भितो वा स्यात्। तद्गर्भितो वेत्यपि नैकान्ततो नियम्यते। एकवारं अनेकवारं वा प्रहरणेऽप्यन्योन्यं प्रहृतमित्येवं प्रयोगस्य दृश्यमानत्वात्। कस्याप्यर्थस्य विनिमयमात्रं त्ववश्यमपेक्ष्यतेऽन्योन्यादिशब्दप्रयोगाय। अत एव यत्र वीप्सामात्रमपेक्ष्यते न तु विनिमयस्तत्रवीप्साद्विरुक्तस्यैव शब्दसिद्धिः। यदि प्रातिपदिके वीप्सा तर्हि अन्यान्यदृष्ट्यापरपरभूमिकया इतरेतरकक्षयेत्यादयः। यदि पदे वीप्सा तदा अन्यान्या दृष्टिः, अन्यदन्यद्वनम्। अन्योन्यो लोकः, इत्यादयः। स एष तेषां त्रयाणामन्योन्यादिशब्दानामर्थसम्बन्धे नैरुक्तः समयः।

सत्सु खलु सर्वेषु कारकेषु कारकविभक्त्या यत्कारकं विधीयते तत् प्रधानं वाच्यम् तेन कर्तृ प्रत्यये कर्त्ता प्रधानं भवति कर्म प्रत्यये तु कर्म। क्रियातिरिक्ते तु सम्बन्धेऽनुयोगी प्रधानं स्यात् प्रधानं चान्योन्यादि शब्दे प्रथमपदस्यार्थः। प्रधानं च सर्वत्र विभागे प्रथमं गण्यते इत्यत एवैतस्मान्नियमेन प्रथमा विभक्ति क्रियते। अभिहितस्यार्थस्योद्बुद्धतया प्रथमोपस्थानाद् द्वितीयादिविभक्त्ययोग्यत्वात्। तेनैते प्रथमाः प्रथमान्ता एव दृश्यन्ते। अन्यः पर इतर इति। अथ यत्राप्यनेकाः क्रिया दृश्यन्ते तत्राप्येकां प्रधानक्रियामेवाश्रित्यायं विनिमय व्यवहार आत्मानं लभते इत्यतस्तदेकत्वग्राहकं प्रधानैकत्वमिह विवक्षितं भवतीति नियमेन प्रधानादेकवचनं प्रयुज्यते- अन्यः पर इतर इति। इतर शब्दाद् विभक्तेरश्रवणं तूत्तरपदस्य स्वरादित्वात्। ततो विभक्तिलोपात् सन्धिः। अथैषां द्वितीयपदेभ्योऽपि यद्येषा प्रथमा विभक्तिः क्रियेत, नूनं तत्तर्हि तदर्थस्यापि प्राधान्यमनुगृह्येत। प्रधानयोश्च समवाये स्यादनयोस्तादात्म्यं लभ्येत स्याद्वा समुच्चयः, न तु वा विनिमयो गम्येत। विनिमयस्य भिन्न प्रवृत्तविषयत्वात्। तस्मान्न द्वितीयपदात् प्रथमपद्वत् प्रथमाविभक्तिः कर्त्तव्या। यत्रापि वा कथंचिदर्थसंभवात् कर्तुमिष्यते तत्रापि तस्या द्विवचनबहुवचने एव कर्तव्ये न पुलिङ्गादेकवचनं प्रथमायाः कर्त्तव्यम्। इत्याहुः। अन्ये त्वविशेषात् सर्वाणि वचनानि मन्यन्ते। अन्योन्येऽस्तु गुरुश्च शिष्यश्चेत्यादिषु विनिमय संभवात् द्वितीयादिविभक्तयस्तु यथेच्छं जायन्ते। सर्वेषां कारकाणां प्रतियोगित्वेन विवक्षितानां च द्वितीय पदार्थत्व संभवात्। अन्ये। अन्यम्। अन्यौ। अन्यान्। अन्यैः। अन्येभ्यः। अन्यस्मात्। अन्येषाम्।

अन्येषु इत्यादि। अनयोरेकत्र समासात् तथाभूतान्येव पदानिसिद्धयन्ति। अन्योन्ये। अन्योन्यम्। अन्योन्यौ। अन्योन्यान्। अन्योन्यैः। अन्योन्येभ्यः। अन्योन्यस्मात्। अन्योन्येषाम्। अन्योन्येषु। इत्यादि। यद्यत्र समासादेकपद्यं न स्वीकृतमभविष्यत् तदानीं यथानयोः पूर्वोत्तरपदयोर्विभक्त्या योगः प्राप्तस्तथैव निर्विशेषं समासेऽपि नियम्यते न तु समासनिबन्धनो विभक्तिभेद इष्यते। अन्यस्तावदन्यं सेवते- इत्यन्योन्यं सेवते। अन्यस्तावदन्येन धृत इत्यन्योन्येन धृतः। अन्यस्तावदन्यस्मै ब्रूते इति अन्योन्यस्मै ब्रूते। अन्यस्तावदन्यस्माद-पसरतीत्यन्योन्यस्मादपसरति। इदं तु बोध्यम्। द्वाभ्यामन्य–शब्दाभ्यामिह पृथक् संगृहीतं सापेक्षं कारकद्वयमैकशब्देनोपनीयते- इत्यतो नेदमेकस्यापि कारकस्य समानाधिकरण विशेषणं संभवति किन्तु भिन्नप्रवृत्तिकमिदं तद्वाक्योपस्थितयोरेव कारकयोर्बोधकं क्रियाविशेषस्वरूपसंपत्तये समुपयुक्तं क्रियायामेव स्वातन्त्र्येण पृथगन्वेति। अत एव यथेच्छं लिङ्गवचनव्यत्यासेनापि दृश्यते व्यवहारः। परो मेषः परस्मान्मेषादपसरतीति परस्परस्मान्मेषावपसरतः। अन्योन्यं भोजतीतित्यन्योन्यं ब्राह्मणौ भोजयतः। अन्यश्चान्यं पश्यतीत्यन्योन्यं जनाः पश्यन्ति अन्यश्चान्यो गृह्णातीत्यन्योन्यौ जना गृह्णति। अन्योऽन्यान् प्रणमतीत्यन्योन्यान् ब्राह्मणाः प्रणमन्ति। अथवा पक्षान्तरमेतत् समासाद् द्वितीयैकवचनमेव प्रयुज्यते न त्वन्यान्या विभक्तिः। लिङ्गे तु कामचारः। तत्र पुंनपुंनसकयोरैकरूप्यम्। स्त्रियां तु टाबन्त प्रयोगः। अन्योन्यं पश्यति। अन्योन्यं प्रहरन्ति। अन्य खल्वन्यावन्यान् वा प्रणमति। अन्योन्यं प्रणमति प्रणमतः प्रणमन्ति। अन्योन्यं स्त्रियौ पश्यतः। अन्योन्यं स्त्रियः पश्यन्ति। अन्योन्यं कुले युज्येते। अन्योन्यं कुलानि स्पर्द्धते। स्त्रीत्वेन प्रयुयुक्षायां तु अन्योन्यां स्त्रियौ पश्यतः। अन्योन्यां स्त्रियः पश्यन्ति। अन्योन्यां कुले युज्येते। अन्योन्यां कुलानि स्पर्द्धन्ते। अयमत्राभिसन्धिः। द्वन्द्व साहित्यवदयं विनिमयोऽपि द्वेधा प्रवर्त्तते। कारकमनुविशेषणभूतो विशेष्यभूतो वा। विशेषणत्वे विशेष्यस्य कारकस्यानुरोधेन सर्वाणि लिङ्गानि सर्वा विभक्तयः सर्वाणि च वचनानि लभ्यन्ते। विशेषणत्वे तु विनिमयस्यैकत्वादेकवचनम्। विनिमयस्य क्रियाविशेषणत्वात् कर्म्मतया द्वितीया विभक्तिः। विनिमयस्य पुंस्त्वात्पुंस्त्वम्, क्रियार्थत्वात् स्त्रीत्वं क्रियाविशेषणत्वान्नपुंसकत्वं वेति यथेच्छं सर्वलिङ्गता। तथा च सार्वविभक्तिकत्वं वा द्वितीयेकवचनमात्रविभक्तिकत्वं वेति विभक्ति सम्बन्धे द्वैविध्यं सिद्धम्। पूर्वपदे तु पुलिङ्गमेव, प्रथमैव, एकवचनमेव, चेत्येवं नियमः प्रागेवोक्त इत्यलम्। स एष तेषां त्रयाणामन्योन्यादिशब्दानां विभक्तिवचनसिद्धौ नैरुक्तः समयः।

अत्यल्पमिदमिहोपन्यस्तं प्रसङ्गाद् व्युत्पत्यर्थम्। एवमेवैतेषां पूर्वेषां द्विरुक्तपदानामुत्तरेषां च द्वन्द्वाव्ययीभावतत्पुरुषबहुव्रीहिपदानामेकैकसम्बन्धेनायं नैरुक्तः समयो नेतव्यः। यथा तु प्रयुक्तो दृश्यते तथा लक्षणतो निर्दिर्दश्य लघुनोपायेन विज्ञाप्यते – इत्येतावदिह व्याकरणस्य कर्त्तव्यम्। कस्मात्तु तत्तथैव प्रयुज्यत कस्मान्नान्यथा। किञ्चैतस्य शब्दस्य तादृशे स्वरूपे तादृशे वार्थे लिङ्गे वचने वा निमित्तम्, इत्येवं तदपेक्षितानां सर्वेषामर्थानां निःशेषवचनादर्थसाधनं निरुक्तिशास्त्रम्। तदिह व्याकरणस्य कार्त्स्न्यं साधनं भवतीति व्याकरणदूर्ध्वं वैशद्येन निरुपयिष्यामः। तदित्थं द्विरुक्त समासस्य विधितन्त्रमादिष्टम्। शेषतन्त्रमतः परमुच्यते।

## अनुविधिः

उपसर्जनसिद्धिः, समासान्तः, विकारादेशः विभक्तिलोपालोपौ पुंवद्भावः, लिङ्गविधिः, वचनविधिः, स्वरविधिश्चेत्येवमष्टौ समासाश्रयविधयो भवन्ति। समस्यमानयोर्द्वयोः पदयोर्मध्ये एकस्य पूर्वप्रयोगो नियम्यते स उपसर्जनविधिः। समासस्यान्तावयवतया कश्चित्तद्धितप्रत्ययो विधीयते स समासान्तः। एवं समासनिबन्धनः पदद्वयसंयोगनिबन्धनः समासान्तनिबन्धनो वा यः कश्चित्पूर्वपद-स्योत्तरपदस्य वा विकारो विधीयते स विकारादेशः। समासे पूर्वपदस्थविभक्तेः श्रवणं लोपो वा व्यवस्थाप्यते स विभक्तेर्लोपालोपविधिः। स्त्रीप्रत्ययान्तात् पूर्वपदात् स्त्रीप्रत्ययो निवर्त्यते स पुंवद्भावः। समस्तशब्दस्य लिङ्गव्यवस्था लिङ्गविधिः। समस्तशब्दादिभक्तिवचननियमो वचनविधिः। समस्तशब्दे उदात्तादिव्यवस्था स्वरविधिः। तेषाममीषां मध्ये कश्चित् कश्चित् क्वचित् समासे व्यभिचरन्नपि दृश्यते। यथेह द्विरुक्त समासे उपसर्जनसिद्धिः समासान्तश्च नादिश्येते। पूर्वोत्तरपदयोः सारूप्येण पूर्वप्रयोगविधेर्नैरर्थक्यात्, समासस्यान्ते प्रत्ययविशेषस्यादर्शनाच्च। अथ विकारादेशो वक्तव्यः।

**1. कष्कादिष्वाम्रेडिते परे पूर्वपदस्थविभक्तेर्विसर्गस्य सकारः स्यान्नकारस्य त्वनुनासिकपूर्वोऽनुस्वारपूर्वो वा सकारः स्यात्[1]।**

अत्र प्रकरणे द्विरुक्तयोः परं रूपमाम्रेडितसंज्ञां भवति। कस्कः। कौतस्कुतः। काँस्कान्। कांस्कान्। परस्परम्।

**2. अहरहः स्यादह्नो रेफादेशात्[1]। अहरहः।**

---

[1] कष्कादिषु च (8-3-48) कानाम्रेडिते (8-3-12)

3. **अव्यक्तानुकरणस्यानेकाक्षरस्याम्रेडिते डाजुदये पूर्वोत्तरपदान्त्य–व्यञ्जनलोपः[2] स्यादितिशब्दोदये तूत्तरपदान्त्यस्यातस्तकारलोपो विकल्पेन[3]।**

पटत् इत्यव्यक्तानुकरणे द्विरुक्ते ततस्तद्धितो डाच्प्रत्ययः। तत्र पूर्वस्योत्तरस्य च तकारो लुप्यते। पटपटाकरोति। पतत्। पतपता करोति। धगत्। धग्धगाकरोति। खरटत्। खरटखरटा करोति। इति शब्दे तु परे डाच प्रत्ययो नास्ति तत्रोत्तरपदं यदि अच्छब्दान्तं तदा तकारो विकल्पेन लुप्यते। पटत्। पटत्पटेति। पटत्पटदिति। धगद्धगेति। धगद्धगदिति। वाग्निः प्रज्वलिति। खरटत्खरटेति। खरटत्। खरटदिति। अद्रूपत्वाभावे तु नास्ति। खरट्। खरट् खरडिति। अनेकाक्षरस्यैवेदं सर्वं नैकाक्षरस्य। श्रत् श्रत्। पट् पट्। खट् खडिति जायते। भुग्भुगित्यग्निर्ज्वलिति।

4. **यथायथस्योत्तरपदान्त्यं ह्रस्वमुक्तं नपुंसकत्वाद्धासिद्धम्[4]। यथायथम्।**

5. **द्विशब्दादौ विभक्तेर्नपुंसकैकवचनत्वविवक्षणादम्भावः स्याद् द्वि शब्देकारलोपश्चाभिव्यक्त्यादिद्विरुक्ते कर्तव्ये[5]।**

अन्यत्र द्वौ द्वौ इति द्विरुक्तं दृष्टम्। अभिव्यक्त्याद्यर्थयुक्ते तु द्विरुक्ते चिकीर्षिते औ विभक्तिर्न प्रयुज्यते तत्स्थाने अमिति क्रियते। नपुंसकैकवचनम्। इकारश्च द्विशब्दस्य लुप्यते। तेन द्वामिति सिद्धौ तस्य द्विरुक्तिः पूर्वपदे विभक्त्यलोपश्च। द्वन्द्वम्। पूर्वमुक्तमपीदं विकारप्रकरणशुद्ध्यर्थं पुनरिहोपात्तम्। इति विकारादेशः।

## लोपालोपौ

1. **विभक्त्यलोपो विधितन्त्रे व्याख्यातस्ततोऽन्यत्र विभक्तिलोपः स्यात्। शुक्लशुक्लम् प्रियप्रियेण। इति विभक्ति लोपालोपौ।**

---

1 रोऽसुपि (8-2-69)

2 नित्यमाम्रेडिते डाचीति वक्तव्यम्। (वा.3638) टेः (6-4-155)

3 नाम्रेडितस्यान्त्यस्य तु वा (6-1-99)

4 यथास्वे यथायथम्। (8-1-14)ह्रस्वो नपुंसके प्रातिपदिकस्य (1-2-47)

5 द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु (8-1-15)

## पुंवद्भावः

1. **अन्यत्र प्रकृत्याकरणाद् द्विरुक्ते पूर्वपदस्य पुंवद्भावो विधितन्त्रे व्याख्यातः।**

यत्र पूर्वपदस्य प्रकृतिभावो विधीयते तत्र पुंवत्वं नास्ति। यां यां सा सा, क्रियां क्रियां हसन्तीं हसन्तीम्।अन्यत्र तु सिद्धम्। अन्योन्यां परस्पराम्। गतगता, पूर्वपूर्वा। परपरा। शुक्ल शुक्ला। इति पुंवद्भावः।

## लिङ्गवचने

1. **अन्यत्र लिङ्गकरणाद् वचनकरणाद्वा यथाप्राप्तं लिङ्गवचने।**

द्वन्द्वं यथायथं नपुंसकम्। अन्योन्यं परस्परामित्येकवचनम्। अन्यत्र गतगतः,गतगता। गतगतम्। तटस्तटः। तटी तटी, तटंतटम् इत्यादि।

## स्वराः

1. **आबाधद्विरुक्तस्यैकैकस्य चोपसर्जनं प्रकृतिस्वरं स्यात्।**

गतगतो रतरतः, अनाकारपूर्वक निष्ठान्तद्विस्वरत्वादाद्युदात्तौ गतशब्दः प्रथमः प्रकृत्या द्विरुक्तौ। द्वितीयस्तु सर्वानुदात्तः परिशेषात् चिन्तितचिन्तितम्। राद्धराद्धम्। उपसर्जनान्तोदात्तावेतौ तदन्यानुदात्तौ। एकैकम्। आद्युदात्तोऽयम्। सर्वनामत्वादेकशब्दस्याद्युदात्तत्वात्।

2. **आभीक्ष्ण्यवीप्सादिद्विरुक्तस्यामन्त्रितस्योपर्युपर्य्यध्यधसां वाम्रेडितं सर्वमनुदात्तं स्यादुपसर्जनं तु यथाप्राप्तम्।**

पचति पचति, याति याति, सर्वानुदात्ता एते। आख्यातस्याम्रेडितस्य चानुदात्तत्वविधानात्। दिवे दिवे। उपसर्जनैव स्वर उदात्तः। अन्येऽनुदात्ताः। ग्रामो ग्रामः। आद्युदात्तोऽयं ग्रामस्याद्युदात्तत्वात्। सुखं सुखम्।सुखस्यान्तोदात्तत्वादत्रोपसर्जने खादकार उदात्तः। अन्येऽनुदात्ताः। आमन्त्रितमपदात्परमाद्युदात्तं सिद्धम्। तत्रामन्त्रितस्य पूर्वस्याविद्यमानवद्भावा-दाम्रेडितस्याप्याद्युदात्तत्वं प्राप्तम्। तदिह प्रतिषिध्यते। आम्रेडितं सर्वानुदात्तं भवतीति ज्ञेयम्। सुन्दर सुन्दर। अभिवर्जमुपसर्गा निपाताश्चाद्युदात्ताः

सिद्धाः, तेषामाम्रेडितं सर्वानुदात्तम्। परि परि। उपर्य्युपरि। अध्यधि। अधोऽधः। आद्युदात्ता एते। परानुदात्ताः।

**4. प्रकारद्विरुक्तस्य प्रियसुखयोर्द्वन्द्व यथायथयोरन्त उदात्तः।**

मन्दमन्दम्। आम्रेडितस्यान्तस्वरो दकारस्थ उदात्तः। पूर्वेऽनुदात्ताः एवं प्रियप्रियम्। सुखसुखम्। द्वन्द्वम्। यथायथम्। अन्तोदात्ता एते। पूर्वानुदात्ताः।

**5. यस्योदात्तत्वं स्वरितत्वं वा नियम्यते ततोऽन्ये तत्पदनिष्ठाः सर्वे स्वराः अनुदात्ताः।** इति स्वरविधिः।

तदित्थं विकारादेशः। विभक्तिलोपालोपौ। पुंवद्भावः। लिङ्गविधिः, वचनविधिः। स्वरविधिश्चेति षडेते द्विरुक्ताश्रयविधयः प्रदर्शिताः।

**इति द्विरुक्तसमासः**

# अथ द्वन्द्वसमासः

अथ द्वन्द्वः समासः। द्वयोः साहित्यं द्वन्द्वं, सहितं वा द्वयं द्वन्दम्। तच्चेह साहित्यं कस्यांचिदेकस्यां क्रियायां गुणे द्रव्ये वा एकतन्त्रेणान्वीयमानानामनेकेषां पदार्थानां विवक्षितम्[1] ईश्वरं च गुरुं च भजस्वेत्यादिषु क्रियायाम्। रक्तः पटश्चायं कुण्डलं चेत्यादिषु गुणे। राज्ञो गजश्चाश्वश्चेत्यादिषु द्रव्ये, द्वयोर्द्वयोः समुच्चय करणात्। धवखदिरौ छिन्धीति क्रियायाम्। रक्तंनेत्राधरमिति गुणे, स दुःखेकस्य, ईक्षणभाषणे तु क्रियाया इति द्रव्येयोगात्। क्रियायामेव वा सर्वत्रयोगो द्रष्टव्यः। च शब्देन साहित्यं द्योतत इति प्रायोवादः। अन्तरेणापि हि चं साहित्यमवगम्यते। एकक्रियान्वयतात्पर्य्येणानेक-पदार्थोल्लेखस्यैव तदर्थावभासकत्वात्। इन्द्रस्त्वष्टा वरुणोवायुरादित्य इति। यत्र साहित्योद्बोधस्तत्रावश्यं द्वन्द्वसमास इति नियम्यते॥ अथ यद्येवं तत्तर्हि कस्मान्नेह भवति याज्ञिकश्चायं वैयाकरणश्च, कठश्चायं बह्वृचश्च, औक्थिकश्चायं मीमांसकश्चेति। नात्र क्रियान्वयित्वेन विवक्षितानां पदार्थानामनेकत्वं साहित्यं वा। एक एवार्थोऽनेकधा स्तूयते। यः खलु व्यक्तिविशेषो याज्ञिकत्वेन विवक्षितः स एव तु वैयाकरणत्वेनापि। तत्र क्वानेकेषां साहित्यम्। अथ पदार्थकुक्षिप्रविष्टा विशेषणार्थाः यद्यप्येनेके दृश्यन्ते, अन्यद् याज्ञिकत्वमन्यद्वैयाकरणत्वम्। तयोश्चैहेकस्मिन् व्यक्तिविशेषे साहित्यं विवक्षितम् तदुद्बोधायैवेह च शब्द प्रयोगात्। तथापि नेह द्वन्द्व समासः। ययोः साहित्यं तयोरत्र पदार्थत्वाभावात्। पदार्थत्वं च पदजन्यबोधीयविशेष्यतावत्वम्। अस्मिन् याज्ञिकत्व वैयाकरणत्वे विद्यते इत्येवं विवक्षायां तु भवत्येव द्वन्द्वः समासः प्रमाणप्रमेयावित्यत्र तु प्रकारभेदपुरस्कारेण प्रतिपिपादयिषितत्वात् सामानाधिकरण्या-विवक्षणाद् भवत्येव द्वन्द्व समास इति बोध्यम्। अथेह कस्मान्न भवति द्वन्द्वः इन्द्रस्त्वष्टा वरूणोवायुरादित्य इति। अत्र समुच्चयसाहित्यसद्भावेऽपि समासोपयोगी साहित्याभावादसमासः। चतुर्धा हि साहित्यं दृश्यते लोके- समुच्चयेन, अन्वाचयेन इतरेतरयोगेन, समाहारेण चेति। यत्रैकत्वां क्रियायाननेके पदार्थाः इतरेतरनिरपेक्षाः पृथक् तन्त्रेणानुयन्ति स समुच्चयः तत्र न द्वन्द्व, समासः स्वातन्त्र्येण पृथग् पृथग् अन्वयविवक्षया सहितयोरन्वयाभावेन समासोपयोगिसाहित्याप्रसक्तेः। परस्परनिरपेक्षतया समासप्रयोजकैकार्थीभावाभावाच्च। यथा -

**अहरहर्नयमानो गामश्वं पुरुषं पशून्।**

---

[1] चार्थे द्वन्द्वः (2-2-29)

**वैवस्वतो न तृप्यति सुरया इव दुर्म्मदी ॥1 ॥** इति

एवमेकस्यां क्रियायामनेकेपदार्था यत्र गौणमुख्यभावेन भिन्नकक्षतया विवक्षितत्वात् पृथक् तन्त्रेणान्वियन्ति सोऽन्वाचयः। तत्र न द्वन्दसमासः। एकस्य प्राधान्येनान्वये तदनुरोधेनैवेतरस्यापि क्रियासम्बन्धादुभयोः समासोपयोगिसाहित्या-भावात्। आनुषङ्गिकस्य साहित्यसापेक्षत्वेऽपि प्रधानस्य तदनपेक्षित्वाच्च। यथा-

अथ यत्रैकस्यां क्रियायामनेकपदार्थानामितरेतरसहितानां युगपदधिकरण-विवक्षणादेकतन्त्रेणैवान्वयसम्भवः स इतरेतरयोगः, स एव च समाहारोऽपि। एकतन्त्रेणान्यार्थं विवक्षितसाहित्यानामनेकेषां समूहस्योभयत्राविशेषेऽपि केवलमियान् भेदो भवति- यदेवात्र साहित्यं विशेषणं, द्रव्यं विशेष्यम्। अन्यत्र तु साहित्यं प्रधानं द्रव्यं विशेषणम् एकत्र समूह उद्बुद्धावयवभेदोऽन्यत्र तिरोहितावयवभेद इति। यत्र समूहस्यैकत्वेऽप्यवयवभेदानामूदबुद्धत्वविवक्षायां तदनुरोधेनैवानेकवचनता लभ्यते स इतरेतरयोगद्वन्द्वः। यथा--

**उपस्नातं स्थूलसिक्तं तूष्णीगंङ्गं महदम्।**<br>
**द्रोणं चेदशको गन्तुं मा त्वा ताम्रां कृताकृते ॥1 ॥** इति श्रुतिः<br>
**अध्याय्या धर्मतः साधु शक्ताप्तज्ञानवित्तदाः।**

अथ यत्रानूद्बुद्धावयवभेदः समूहो विवक्ष्यते तत्र समूहस्वैकत्वादेकन्तैव लभ्यते स समाहार द्वन्द्वः।

विवक्षाधीनाश्चैते चत्वारोऽप्यर्था इति यथेच्छं कदाचित् समाहारद्वन्द्वः, कदाचिदितरेतरयोगद्वन्द्वः, कदाचिद्वा समुच्चयान्वाचयसद्भावे समासाभाव इति दृश्यते। अथाप्याचार्या विवक्षमेतां प्रयोगविशेषानुरोधाच्छब्द्विशेषे नियमयन्ति। तथाहि- क्वचित् समाहार द्वन्द्व एष समुच्चयो वा। क्वचिदितरेतरयोगद्वन्द्व एष समुच्चयो वा। क्वचिदुभयमपि कामचारात समुच्चयो वा इति त एते प्रदेशाः प्रदर्श्यन्ते।

## समाहारद्वन्द्वः

1. **समाहारद्वन्द्वः स्तूर्यवृत्तीनां प्राण्यङ्गानां च।**[1]

मृदङ्गवादनवृत्तयोर्मार्द्दङ्गिकाः। पणववादनवृत्तयः पाणविकाः। मार्दङ्गिक-पाणवीकम्। पाणिपादम्। कथं तर्हि ''नेत्रास्य नासिकाबाहुहृदयेभ्यस्तथोरसः। निर्गम्य दर्शने तस्थो ब्रह्मणेऽव्यक्तजन्मनः''। इति निद्राधिष्ठान भूतानि सूक्ष्मशरीरभुक्तानि

---

[1] द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्(2-4-2)

हीमानि नेत्रादीन्यतीन्द्रियकरणान्यमूर्त्तत्वान्न प्राण्यङ्गानि। यानि तु मूर्त्तिमन्ति तेषामिह ग्रहणम्। तदुक्तम्।

**अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।**
**अतत्स्थं तत्र दृष्टम् च तेन चेत् तत्तथायुतम् ।।इति ।।**

**2. अनुवादे चरणानां समाहारद्वन्द्वो यदि स्थेणोरद्यतनीभूतक्रिया स्यात्।2।**[1]

चरणशब्दो मार्गपर्यायवाचिनश्च वेदशाखायां प्रयुज्यन्ते। उदगात्कठकालापम्। प्रत्यष्ठात्कठकौथुमम्। उद्गात्कौमदपेप्पलादम्। अनद्यतनभूतक्रिया भावेत्त्वितरेतरयोगः।[2]

**नन्दन्तु कठकालापा वर्द्धन्तां कठकौथुमाः।**
**तिष्ठन्तु कठकालापा यन्तु वा कठकौथुमाः।।**

**3. अध्यर्तुक्रतुवाचिनामनपुंसकानां द्वन्द्वः समाहारे ।।3 ।।**[3]

अर्काश्वमेधम्। यजुर्वेदविहितो हीमौ क्रतू। सामवेदीयक्रतूनां तु न। इषु व्रजौ। यजुर्वेदीयत्वेऽपि पुंनपुंसकोभयलिङ्गत्वान्नेह। राजसूयवाजपेये।

**4. अध्ययननिबन्धनाख्यानां द्वन्द्वः समाहारे।4 ।।**[4] पदक्रमकम्।

**5. अप्राणिद्रव्यजातीयानां जातिपरत्वे समाहारद्वन्द्वः ।।5 ।।**[5]

धानाशष्कुलि। प्राणिनां तु विट्शूद्राः द्रव्येतरजातीयानां रूपरसौ गमनाकुञ्चने। द्रव्यपरत्वे बदरामलकानि।[6]

**6. साधारणग्रामेतरदेशानां नदीनां च भिन्नलिङ्गानां द्वन्द्वः समाहारे ।।6 ।।**[7]

कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम्। मथुरापाटलिपुत्रम्। साधारण ग्रामस्य प्रतिषिद्धत्वादिह नगरस्याप्रतिषेधः। यत्र तु नगरग्रामयोरूभयोः साहित्यं तत्र ग्राम-सम्बन्धात् प्रतिषेधो भवत्येव- शौर्य्यं नगरम्, केतवता ग्रामः। शौर्य्यकेतवते। जाम्बवं नगरं

---

1 अनुवादे चरणानाम् (2-4-3) स्थेणोर्लुङीति वक्तव्यम्। (वा 1535-1536)
2 चार्थे द्वन्द्वः(2-2-29)
3 अध्वर्युक्रतुरनपुंसकम्( 2-4-4)
4 अध्ययनतोऽविप्रकृष्टाख्यानाम् (2-4-5)
5 जातिरप्राणिनाम् (2-4-6),
6 चार्थे द्वन्द्वः(2-2-29)
7 विशिष्टलिङ्गो नदीदेशोऽग्रामाः (2-4-7),

शालूकिनी ग्रामः। जाम्बवशालूकिन्यौ।[1] नदीनां तु- उद्धयश्चेरावती च उद्धयेरावति। गङ्गा च शोणश्च गङ्गाशोणम्। एकलिङ्गत्वेत्वितरेतरयोगः। मद्रकेक्याः। गङ्गायमुने।

**7. क्षुद्रजन्तूनां सेनाङ्गानां चाबहुप्रकृतीनां द्वन्द्वः समाहारे॥7॥**[2]

यूका च लिक्षा च यूकालिक्षम्। क्षोत्तव्या क्षुद्रजन्तवः (1)अनस्थिकाः क्षुद्रजन्तवः (2)येषां स्वयं शोणितं नास्ति ते क्षुद्रजन्तवः(3)येषामासहस्त्रादञ्जलिर्न पूर्य्यते ते क्षुद्रजन्तवः (4)येषां गोचर्ममात्रं राशिं हत्वा न पतति ते क्षुद्रजन्तवः(5)अथवा नकुलपर्यन्ताः क्षुद्रजन्तवः (6)संगृह्यैतानि लक्षणानि पठ्यन्ते-

**क्षुद्रजन्तुरनस्तिः स्यादथवा क्षुद्र एव यः।**
**शतं वा प्रसृतौ येषां केचिदानकुलावधि॥1॥**

बहुप्रकृतिकत्वे तूभयं भवति, समाहारश्चेतरेतरयोगश्च। यूकाश्च लिक्षाश्च यूकालिक्षम्, यूकलिक्षाः।[3] रथिकश्चाश्वारोहश्च रथिकाश्वारोहम्। बहुप्रकृतिकत्वे तु विकल्प्यते। रथिकाश्वारोहं रथिकाश्वारोहाः। हस्त्यश्वं हस्त्यश्वाः। गजाश्वरथपत्तयः।

**8. अनिरवसितानां शूद्राणां समाहारद्वन्द्वः॥8॥**[4]

कुतोऽनिरवसितानाम्। यद्यार्यावर्तात्, तर्हि किष्किन्ध गन्धिकं, शक्यवनं, शौर्य्यक्रोञ्चमिति न सिद्धेत्। प्रागादर्शात् प्रत्यक् कालकवनात् दक्षिणेन हिमवन्तम्, उत्तरेण पारियात्रं ह्यमार्य्यावर्तः। आर्य्यावर्तादिमे बहिष्कृता दृश्यन्ते। यदि त्वार्य्यनिवासात् तर्हि-- चण्डालमृतपा इति न सिद्ध्येत्। य एते महान्तः संस्त्यायास्तेष्वभ्यन्तरा इमे चाण्डालाश्च मृतपाश्च बसन्तो दृश्यन्ते। ग्रामो घोषो नगरं संवाहः। संवाहो वणिक् प्रधानः। इति कैयटः।[5] सर्व इमे भवन्त्यार्यनिवासाः। न ततो बहिष्कृता इमे लक्षम्। यत्तु कैयटादया।

---

1 चार्थे द्वन्द्वः(2-2-29)

2 क्षुद्रजन्तवः (2''4''8) फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्। (वा1540)

3 क्षुद्रजन्तवः(2-4-8) फलसेनावनस्पतिमृगशकुनि क्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्। (वा 1540)

4 शूद्राणामनिरवसितानाम् (2-4-10)

5 तत्र-ग्रामः-प्रसिद्धः। घोषो-गोमहिष्यादि निवासः। संवाहो वणिकप्रधानः। (महाभाष्ये सू. सं0 2-4-10 प्रदीप टीकायाम्)

अथ यदि याज्ञात् कर्म्मणस्तर्हि- तक्षायस्कारं, रजकतन्तुवायमिति न सिद्ध्येत् एषां यज्ञेऽनधिकारात्। एवं तर्हि पात्रादनिरवसितानां शूद्रानां समाहारद्वन्द्वो द्रष्टव्यः। यैर्भुक्तं पात्रं संस्कारेण शुद्ध्यति त एवानिरवसिताः। यैर्भुक्ते पात्रं संस्कारेणापि न शुद्ध्यति ते तु निरवसिताः।

**9. शाश्वतिकविरोधानां समाहार एव द्वन्द्वः ॥9॥**[1]

अहिनकुलम्। गोव्याघ्रम्। काकोलूकम्। श्वश्रृगालम्। श्रमणब्राह्मणम्। श्रमणाः क्रियाप्रधानाः। श्रमस्य क्रियारूपत्वात्। ब्राह्मणा ज्ञानप्रधानाः। ब्राह्मणो ज्ञानरूपत्वात्। क्रियैकाद्वयवादिनः श्रमणाः। ज्ञानैकाद्वयवादिनो ब्राह्मणाः। श्रमणा अनीश्वरवादित्वात्पौरुषेयमात्र प्रवणाः। ब्राह्मणास्त्वीश्वरवादित्वाद् ब्रह्मनियति श्रदधानाः। यदहं करिष्यामि तदेव भविष्यति न तु कश्चित् नियन्तास्तीति श्रमणाश्च तिष्ठन्ते। ईश्वरकृतनियत्यनुसारेणैवेदं सर्वं भवति न तद्विरोधेन वयं किमपि कर्तुम् शक्नुम् इति ब्राह्मणाः। स्वतन्त्रा वयमित्युन्मर्य्यादाः श्रमणाः। ईश्वर परतन्त्रा वयमिति मर्य्यादादीक्षित ब्राह्मणा वैदिकाः। तदित्थं विरुद्ध श्रद्धानतया शाश्वतिकविरुद्धा उभये दृश्यन्ते।

**10. दर्भशरादीनां समाहारद्वन्द्वः।[2] दर्भशरम्। गवाश्वम्। गवाविकम्। गवैडकम्।**

## इतरेतरयोगः

**1. तृण, धान्य, वृक्ष, फलजातीनामबहुप्रकृतिमितरेतरयोग द्वन्द्वौ[3] न समाहारे।**

कुशश्च काशश्च कुशकाशौ। ब्रीहियवौ। प्लक्षन्यग्रोधौ। बदरामलके। बहु प्रकृतिकत्वे तु तृणधान्यवृक्षजातीनां विकल्पाः[4] कुशकाशं कुशकाशाः। शरशीर्षं

---

1 येषां च विरोधः शाश्वतिकः (2-4-9)

2 गवाश्वप्रमृतीनि च (2-4-11)

3 चार्थे द्वन्द्वः (2-2-29)

4 फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम् (वा.1540) विभाषा वृक्षमृगतृणधान्धव्य ञ् जनपशुशकुन्यश्वययडवपूर्वापराधरोत्तराणाम् (2-4-12)

शरशीर्षाः। मासतिलम मासतिलाः। ब्रीहियवं ब्रीहियवाः। प्लक्षन्यग्रोधं प्लक्षन्यग्रोधाः। फलजातेस्तु अप्राणिजातित्वान्नित्यं समाहारः[1] बदरामलकम्। द्रव्यविवक्षायां तु बदरामलकं बदरामलकानि इत्येव।

**2. क्षुद्रजन्तूनां सेनाङ्गानां चाबहुप्रकृतीनामितरेतरयोगो न समाहारः।**[2]

यूका च लिक्षा च यूकालिक्षे। रथिकाश्वारोहौ। बहुत्वे तु नित्यं समाहारः। यूकाश्च लिक्षाश्च यूकालिक्षम्।[3] रथिकाश्वारोहम्।[4]

**3. मृगाणाममृगैः शकुनीमशकुनीभिरितरेतरयोगो[5] न समाहारः।**

पशुपक्षिमृगाः। मृगपक्षिणः। सिंहमनुष्यौ। गरुडरावणौ हंसगावौ।

**4. सजातीयद्वन्द्वानामपि मृगाणां शकुनीनां चाबहुप्रकृतीनां शाश्वतिक-विरोधानापन्नानामितरेतरयोगो न समाहारः।**[6]

रुरुपृषतौ। सिंहव्याघ्रौ शुकबकौ। हंसचक्रवाकौ। बहुत्वे तु विकल्पः।[7] रुरुपृषतं रुरुपृषताः। सिंहव्याघ्रं सिंहव्याघ्राः। शुकबकाः। हंसचक्रवाकं हंसचक्रवाकाः। विद्वेषिणां तुसमाहार एव[8] श्वश्रृगालम् काकोलूकम्।

**5. विप्रतिषिद्धानां गुणानां द्रव्यपरतायामितरेरयोगो न समाहारः।**[9]

शीतोष्णे उदके स्तः। अद्रव्यपरत्वे तु विकल्पः।[10] शीतोष्णं शीतोष्णे।

**6. अधिकरणैतावत्वे निश्चितसंख्या विवक्षायामितरेतरयोगो न समाहारः।**[11]

---

1 जातिरप्राणिनाम् (2-4-6)

2 चार्थे द्वन्द्वः(2-2-29)

3 क्षुद्रजन्तवः(2-4-8)

4 द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् (2-4-2)

5 चार्थे द्वन्द्वः(2-2-29)

6 फलसेनावनस्पतिमृग.(वा.1540), चार्थे द्वन्द्वः (2-2-29)

7 विभाषा वृक्षमृगतृण. (2-4-12)

8 येषां च विरोधः शाश्वतिकः(2-4-9)

9 चार्थे द्वन्द्वः (2-2-29)

10 विप्रतिषिद्धं चानधिकरणबाचि(2-4-13)

11 अधिकरणैतावत्वे च(2-4-15)

दश दन्तोष्ठाः। यत्र तु संख्या सामीप्येन द्रव्यस्यैतावत्वं निर्देश्यं तत्र विकल्प एत।[1] उपदशं दन्तोष्ठम्। उपदशा दन्तोष्ठाः। उपदशं पाणिपादम् उपदशाः पाणिपादाः।

7. **मधुसर्पिरादीनामितरेतरयोगो न समाहारः।**[2]

**मधुसर्पिशी च सर्पिर्मधुनी तद्वच्च दधिपयसी।**
**दीक्षातपसी मेधातपसी अध्ययनतपसी च ॥1॥**
**श्रद्धामेधे श्रद्धातपसी तद्वच्च श्रुततपसी।**
**स्कन्दविशाखौ ब्रह्मप्रजापती च शिववैश्रवणौ ॥**
**मित्रावरुणौ मातापितरौ भीमार्जुनौ पितापुत्रौ।**
**अथ च परिव्राजककौशिकौ तथा शुक्लकृष्णौ च ॥2॥**

**सूर्याचन्द्रमसौ वा**

**आद्यवसाने तद्वदलूखलमुसले च ऋकसामे।**
**ज्ञेयौ तथा प्रवर्ग्योपसदो तद्वच्च वाङ्मनसे ॥3॥**
**ऐषां न समाहारे भवतीघ्माबर्हिषी तथा द्वन्द्वः।**
**किन्त्वितरेतरयोगे दृष्टव्यो वाक्याथवा स्याद् ॥4॥**

यत्र न समाहारद्वन्द्वस्त एते प्रदेशा भवन्ति। एष्वितरेतरयोग एव स्यात् समुच्चयो वा।

## समाहारश्चेतरेतरयोगश्च

1. तृण, धान्य, वनस्पति जातीनां बहुप्रकृतीनां समाहारश्चेतरेतरयोगश्च।[3] कुशकाशं, कुशकाशाः। शरशीर्ष, शरशीर्षाः। ब्रीहियवं ब्रीहियवाः। माषतिलं माषतिलाः। प्लक्षन्यग्रोधम् प्लक्षन्यग्रोधाः।

---

1 विभाषा समीपे (2-4-16)

2 न दधिपयआदीनि(2-4-14), चार्थे द्वन्द्वः(2-2-29)

3 विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् (2-4-12) फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्(1540) चार्थे द्वन्द्वः (2-2-29)

अश्वस्योदुम्बरम्,अश्वस्योदुम्बराः। अबहुप्रकृतीनां त्वितरेतरयोग एवोक्तः।[1] कुशकाशौ। ब्रीहियवौ। प्लक्षन्यग्रोधौ।

**2. मृगशकुनीनां बहुप्रकृतीनां समाहारश्चेतरेतरयोगश्च।**

रुरुपृषतं, रुरुपृषताः। सिंहव्याघ्रम्, सिंहव्याघ्राः। शुकबकं, शुकबकाः। हंसचक्रवाकं, हंसचक्रवाका5। अबहुप्रकृतीनां त्वितरेतरयोग एवोक्तः रुरुपृषतौ। शुकबकौ।

**3. फलानां सेनाङ्गानां क्षुद्रजन्तूनां च बहुप्रकृतीनां विभाषा।[2]**

बदरामलकम्, बदरामलकानि। हस्त्यश्वं, हस्त्यश्वाः। यूकालिक्षं, यूकालिक्षाः। अबहुप्रकृतीनां त्वेषां समाहार एव। अप्राणिजातित्वाद् बदरामलकम्।[3] सेनाङ्गत्वाद् हस्त्यश्वम्।[4] क्षुद्रजन्तुत्वाद यूकालिक्षम्[5] यत्तु कैयटादयो बहुप्रकृतीनामेव समाहारद्वन्द्वौ नाबहुप्रकृतीनाम्। य एषां नियमान्तरैर्नित्यं समाहार आदिश्यते स बहुप्रकृतीनामेव दृष्टव्यः। बदराणि चामलकानि च बदरामलकम्। हस्त्यश्म्, यूकालिक्षम् इति। ये त्वबहुप्रकृतयस्तेषामितरेतरयोग एव। बदरामलके, रथिकाश्वारोहौ यूकालिक्षे इति प्राहुः। तदेतत् भ्रान्तं भाष्योदाहरणविरुद्धं च। बदरामलके इति भाष्योदहरणं त्वप्राणिजातीनां जातिप्राधान्ये एवं समाहारद्वन्द्वविवक्षणाद् द्रव्यविवक्षायामितरेतरयोगस्यैवावक्लृप्तिः। बहुप्रकृतीनां तु द्रव्यविवक्षायामपि समाहारश्चेतरेतरयोगश्चेत्यभिप्रायात्। तेन फलोदाहरणेष्वबहुप्रकृतीनां जातिप्राधान्ये समाहार एव। द्रव्यप्राधान्ये त्वितरेतरयोग एव। अथ बहुप्रकृतीनां जातिप्राधान्ये द्रव्यप्राधान्ये च विभाषेत्यर्थः सिद्धः।

**4. व्यञ्जनानां पशूनां च शाश्वतिकविरोधापन्नानां समाहारश्चेतरेतरयोगश्च।**

दधिघृतं, दधिघृते[6] दधिमधु, दधिमधुनी इत्यादि। दधिपयसी, मधुसर्पिषी, सर्पिर्मधुनी, इत्येतेषु तु समाहाराभावः पूर्वनियमात्[7]। अथ पशूनां गोमहिषं, गोमहिषाः।

---

1 चार्थे द्वन्द्वः(2-2-29)

2 वार्तिककारस्तु फल सेना वनस्पति, इत्यादि वार्तिकेन बहुप्रकृतिद्वन्द्वस्य नित्यमेव एकवदभावमाह अत्र विकल्पे मूलं द्रष्टव्यम्।

3 जातिरप्राणिनाम्(2-4-6)

4 द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् (2-4-2)

5 क्षुद्रजन्तवः(2-4-8)

6 विभाषावृक्षमृगतृणधान्यव्यञ्जन.(2-4-12)

7 न दधिपय आदीनि(2-4-14)

महाजोरभ्रं, महाजोरभ्राः। सेनाङ्गानां तु पूर्वनियमाद्विशेषः। गजाश्वम्। सेनाङ्गत्वेऽपि अवश्ववडव शब्दे विकल्प उत्तरनियमात्। विद्विष्टानां तु पशूनां पूर्वनियमात् समाहार एव। श्वश्रृगालम्[1]।

**5. अश्ववडवादीनां समाहारश्चेतरेतरयोगश्च[2]।**

त्रय एवाश्ववडवादयः। अश्ववडवम्, अश्ववडवौ। पूर्वापरम्, पूर्वापरे। अधरोत्तरम्। अधरोत्तरे।

**6. शेषाणां द्वन्द्वः सर्वो विभाषा[3]।**

संज्ञापरिभाषं, संज्ञापरिभाषे। प्रत्यक्षानुमानोपमान शब्दाः, प्रत्यक्षानुमानोपमान शब्दमित्यादि- तदित्थं यत्रोभयद्वन्द्वस्त इमे प्रदेशा व्याख्याताः।

अथायं इतरेतरयोगद्वन्द्वो द्वेधा- अनेकपदश्चैकशेषश्चेति। तत्रानेकपद प्रदेशा उक्ता। एकशेषः प्रदर्श्यते।

**1. एकरूपानेकपदद्वन्द्वे पूर्वेषां विलोपनात् पर एवैकोऽवशेष्यते[4]।**

एकेन गतार्थत्वाच्छेषः। घटश्च घटश्च घटघटाविति प्राप्ते घटावित्येव व्याह्रियते राजराजराजान इति प्राप्ते राजान् इत्येवाख्यायते। एकः शब्दः सजातीयाननेकार्थावभासको भवतीति प्रतीतिबललभ्योऽर्थः। तानि च समानरूपाणि पदानि सामानार्थानि स्युः। विभिन्नार्थानि तु वेति नाग्रहः। तेनेहापि भवति। अक्षाः पादा भाषा इति। हरित वर्ण स्त्री हरिणी। हरिणस्य स्त्री हरिणी। ते हरिण्यौ। रोहित वर्णास्त्री रोहिणी रोहिणस्य स्त्री रोहिणी। ते रोहिण्यौ। श्येनवर्णा स्त्री श्येनी। श्येनस्य स्त्री श्येनी। ते शेन्यौ। ननु चेह कस्मान्न भवति माता च जनयित्री। मातारौ च धान्यादीनां मापकौ। त इमे मातमातारः। विरूपपदत्वादिति ब्रूमः। एकरूप्यं त्वेकशेषे निमित्तम्। रूपनिग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्। तत्र चैतयोः शब्दयोः क्व क्वचित् सारुप्यं क्वचिद्वैरुप्यम् च पश्यामः। माता मातरौ मातर इत्येकस्य रुपाणि। माता मातारौ मातार इत्यन्यस्य रुपाणि। येषान्तु समानकारकविभक्ति समवधाने सर्वत्रैकरुप्यं तेषामयमेकशेष आदिश्यते ततो न दोषः गर्गाश्च गार्ग्यौ च गर्गाः। अथेह कस्मान्न भवति। एकश्चैकश्चेति। द्वौ च द्वौ चेति। अनविधानान्न भवतीति ब्रूमः। यत्रैकः शब्दोऽनेकमर्थमभिधातुं शक्नोति

---

1 येषां च विरोधः शाश्वतिकः(2-4-9)

2 विभाषा वृक्षमृगतृण.(2-4-12)

3 सर्वो द्वन्द्वौ विभाष्यैकवद भवति(परि.)

4 सरूपाणामेकशेष एकविभक्तौ(1-2-64)

तत्रैकशेषो नान्यत्र। प्रयुक्तानामेवान्वाख्यानात्। स्वभावस्त्वेष दृश्यते यदिह संख्या संख्येयवचनाः संख्या शब्दाः, एकशेष द्वन्द्वेन युज्यन्ते। विंशती चत्वारिंशतौ शते सहस्रे इति। संख्येयवचनास्तु न युज्यन्ते सप्त, सप्त च, पञ्च पञ्च चेति।

**2. एकार्थानेकपद द्वन्द्वे पूर्वेषां विलोपनात् पर एवैकोऽवशेष्यते [1]।**

एकेन गतार्थत्वाच्छेषः। वक्रश्च कुटिलश्च कुटिलौ वक्रौ वा। घटश्च कलशश्च कलशौ घटौ वा। एतानि च समानार्थानि पदानि समान रूपाणि स्युर्विभिन्नरूपाणि वेति नाग्रहः।

**3. एकर्ष्योर्वृद्धयूनोर्द्वन्द्वे वृद्ध एकोऽवशेष्यते [2]। गर्ग एक ऋषिः।**

तद्वंशे वृद्धौ गार्ग्य इत्युच्यते युवा तू गार्ग्यायणः वृद्ध यूनोर्वृद्धः प्रधानम्। प्रधाने कार्यं संप्रत्ययाच्छेषः। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। भिन्न वंशे तु नैकशेषः। गार्ग्यवात्स्यायनौ। वृद्धस्य यूनो वान्येन द्वन्द्वेऽपि नैकशेषः। गर्गगार्ग्यौ, गर्गगार्ग्यायणौ। ऋषि शब्दोऽत्रमूलपुरुषपरः। वृद्धयुवानौ तु तद्धितान्तमूलपुरुषशब्दावेवेह विक्षितौ। तेनेह नैकशेषः शङ्क्यः--अजवर्करौ। अश्वकिशोरौ। उष्ट्रकरभौ। यत्र तु वृद्धायाः स्त्रियो यूना सहोक्तौ द्वन्द्वैकशेषो भवति। तत्रैकशेषे वृद्धायाः पुवंद्भावो वक्ष्यते[3]। वृद्धप्रत्ययलोपनियमश्च तद्धिते व्याख्यातः[4]। गर्ग गोत्रे वृद्धा स्त्री गार्गी। गार्गी च गार्ग्यायणौ च गर्गाः। दाक्षी च दाक्षायणश्च दाक्षी।

**4. एक शब्दानां नपुंसकानपुंसकानां समाहारद्वन्द्वेऽपि नपुंसक एकोऽवशेष्यते[5]।**

एवं हि दृश्यते लोके। अनिर्ज्ञातेऽर्थे गुणसंदेहे च नपुंसकलिङ्ग प्रयुज्यते किं जातमित्युच्यते। द्वयं चैव हि जायते स्त्री वा पुमान् वा। तथा विदूरे अव्यक्तरूपं द्रष्ट्वा वक्तारो भवन्ति, महिषीरूपमिव, ब्राह्मणिरूपमिव तस्मान्नपुंसकानपुंसकयोर्नपंसकं प्रधानम् प्रधानेकार्यसम्प्रत्ययाच्छेषः[6]। शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम् तदिदं शुक्लं तानीमानि शुक्लानि।

---

1 विरुपाणामपि समानार्थानाम् (वा.747)

2 वृद्धौ यूना तल्लक्षणश्चेदेव विशेषः(1-2-65)

3 स्त्री पुवंच(1-2-66)

4 यञञोश्च(2-4-64)

5 नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्(1-2-69)

6 प्रधानाप्रधानं प्रधानेकार्यसम्प्रत्ययः (परिभाषा)

**5. एकशब्दयोः स्त्रीपुरुषयोर्द्वन्द्वे पुरुष एकोऽवशेष्यते[1] न त्वानीप्रत्ययान्तस्य।**

स्त्रीपुरुषयोः पुरुषः प्रधानम्। प्रधानेकार्यसम्प्रत्ययाच्छेषः। हंसी च हंसश्च हंसौ। देवी च देवश्च देवौ। गोमाश्च गोमती च गोमन्तौ। कारकश्च कारिका च कारकौ। पटुश्च पटवी च पटू। एकशब्दयोरित्युक्तेनेह ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेति। हंसश्च वरटा चेति। कच्छपश्च दूलिश्चेति। ऋष्यश्च रोहिचेति। स्त्री शब्दस्यानी प्रत्ययान्तत्वे तु नास्त्येकशेषः। इन्द्रेन्द्राण्यौ। भवभवान्यौ। मृडमृडान्यौ। रुद्ररुद्राणयौ। शर्वशर्वाण्यौ। वरुणवरुणान्यौ। केचित्तु देवता द्वन्द्वभावे विकल्पमिच्छन्ति। शिवशिवे। देवाश्च देव्यश्च देवदेव्यः।

श्वश्रवा सहोक्तौ श्वसुर एकोऽवशेष्यने विकल्पेन[2]। श्वश्रू श्वसुरयोः श्वसुरः प्रधानम्। प्रधानेकार्यसंप्रत्ययाच्छेषः। श्वश्रूश्च श्वसुरश्च श्वसुरौ। श्वश्रूश्वसुरौ वा। अत्रापि शब्दतो नियमो नत्वर्थग्रहणम्।

**6. अनेकशफानां ग्राम्यपशूनां संघेष्वतरुणेष्वेकशब्दयोः स्त्रीपुरुषयोर्द्वन्द्वे स्त्रयेवैकावशेष्यते[3]।**

गावो ह्युत्कालितपुंस्का वाहाय च विक्रयाय चोपयुज्यते ततः स्त्रिय एवावशिष्यन्ते। उत्कालित पुंस्कानां स्त्रीभिरविशेषात्। महिषादिष्वपि दुग्धाद्युपयोगातिशयात् स्त्रीजातय एव प्राधान्येन संघशः पाल्यन्ते। अप्रधानश्च तत्रैको वाधिको वा पुंजातीयः। प्रधानेकार्यसम्प्रत्ययाच्छेषः। इमे गावश्च, इमा गावश्च गाव इमाश्चरन्ति। इमे महिषाश्च, इमा महिष्यश्च महिष्य इमाश्चरन्ति। अजा इमाश्चरन्ति। गावो महिषा अजा अवयोऽश्वा अपि च ग्राम्याः पशवः। तेष्वश्वा एकशफा भवन्तीति न स्त्री शेषः[4]। अश्वा इमे। गर्दभा इमे। ये त्वारण्याः पशवो मृगशब्दवाच्यास्तेषां संघद्वन्द्वे पुरुषा एव शिष्यन्ते। कः पुनरर्हति अग्राम्याणां पुंस उत्कालयितुं ये ग्रहीतुमशक्याः। कुत एव वाहाय च विक्रयाय च। रुरव इमे। न्यङ्कव इमे शूकरा इमे। सिंहाश्च सिंह्यश्च सिंहा इमे। तरुणानां पुंस उत्कालयितुं येऽशक्या वाहाय च विक्रयाय च। वत्सा इमे। तरुणका इमे। वर्करा इमे। संघः समवायो बहूनामेकत्र व्रजगोष्ठादौ संनिवेशोपवेशस्तत्र स्त्रीत्व पुंस्त्वाभ्यां विशिष्यानिर्ज्ञाते प्रातिस्विकेऽर्थे स्त्रीप्राधान्यं व्यवहारसामान्यात् परिपश्यतां

---

1 पुमान् स्त्रिया (1-2-67)
2 श्वसुरः श्वश्रवा (1-2-71)
3 ग्राम्यपशुसङ्घेश्वतरुणेषु स्त्री (1-2-73)
4 अनेकशफेष्विति वाच्यम्(वा 805)

स्त्रीशब्दे प्रवृत्तिरेकशेषेनिमित्तम्। अत एवायं संघविषयः। यत्र तु द्वयोर्द्वन्द्वस्तत्र न स्त्रीशेषः। कः पुनरर्हति निर्ज्ञातेऽर्थे अन्यथा प्रयोक्तुम्। एतौ गावौ। इमौ महिषौ।

**7. मात्रा सहोक्तौ पितैकोऽवशेष्यते विकल्पेन[1]।**

मातापित्रोः पिता प्रधानम्। प्रधानेकार्यसंप्रत्ययाच्छेषः माता च पिता च पितरौ। पक्षे तूभयश्रुतिः। माता पितरौ प्राचाम्। मातारपितरावुदीचाम् मातृपितृ शब्दयोरेवायमेकशेषः नैतदर्थानाम्। तेन प्रसूजनयितारावित्येव।

**8. स्वस्रा सहोक्तौ भ्राता, दुहित्रा सहोक्तौ पुत्र एकोऽवशेष्यते[2]।**

भ्रातृभगिन्यौभ्राता प्रधानम्। कन्यापुत्रयोः पुत्रः प्रधानम् प्रधानेकार्यसंप्रत्यायाच्छेषः। भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ।

**9. अन्यैः सहोक्तौ त्यदादिरेकोऽवशेष्यते[3]। सर्वनामत्वात् त्यदादिः प्रधानम्।**

प्रधानेकार्यसम्प्रत्ययाच्छेषः। स च रामश्च तौ। स च रामश्च कृष्णश्चते। सोमश्च विष्णो यदपस्पृधेथामिति मन्त्रेऽपस्पृधेथामित्येतत् क्रियावलाध्याहूतस्य युवामित्यस्य सोमश्च त्वं चेति विग्रहः।

**त्यदादिरुच्यते त्यत् तद् यदेतदिदमप्यदः**
**एकं द्वे युष्मदस्मदश्च भवत् किमिति द्वादश।**

स्यः। सः। यः। एषः। अयम्। असौ। एकः। द्वौ। त्वम्। अहम्। भवान्। कः। स्या। सा। या। एषा। द्वयम्। असौं। एका। द्वे। त्वम्। अहम्। भवती। का। त्यत्। तत्। यत् एतत्। इदम्। अदः।एकम्। द्वे। त्वम्। अहम्। भवत्। किम्।

**10. त्यदादीनां मिथः सहौक्तौ परः एकोऽवशेष्यते[4]।**

पर शब्दः प्रधानवचनः। तेन द्वयोर्मध्ये मुख्यत्वेन विवक्षितो योऽर्थस्तद्वाचकस्य तादादेरेकशेषः। प्रधानेकार्य सम्प्रत्ययात्। स च यश्च यौ। स च अयं च इमौ। स चायं च असौ च अमी। त्वं चाहं चावाम्। अथवा स चायं च तौ। स चायं चासौ च ते। केचित् त्यदादिगणपाठे यः परतः पठितस्तस्य शेषः इति मन्यन्ते तदशुद्धम्। कश्चाहं च

---

1 पित्रा माता (1-20-70)

2 भ्रातृपुत्रौ स्वसृदुहितृभ्याम्( 1-2-68)

3 त्यदादीनि सर्वैर्नित्यम् (1-2-72)

4 त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते (वा.801)

रात्रिमन्ववेष्याव इति श्रौतोदाहरण विरोधात्। पूर्वशेषोऽपि दृश्यत इत्यभ्युपगमे त्वलं नियमालम्बन स्वीकारेण। तस्मान्मुख्याभिप्रायकस्यैव त्यदादेः शेषः।

एकश्च द्वौ च त्रयः एकश्च त्रयश्च चत्वारः एकश्चैकश्च द्वौ च चत्वारः। द्वौ च द्वौ च चत्वारः। इह यद्यपि न तयोरेकोऽवशिष्यते तथापि द्वयोःप्रसङ्गे एकोऽन्यः शिष्यते इत्यत एवैकशेषोऽभ्युपेयते। तदित्थं यत्रैकशेषः त इमे प्रदेशा व्याख्याताः।

## द्वन्द्वप्रतिषेधः

**11. सामान्यविशेषवाचिनोर्न द्वन्द्वः सामान्येन गतार्थत्वाद्विशेषस्य सहयोगाप्रयोगात्।**

पशुश्च गोश्चेति। हंसश्च पक्षी चेति। कथं तर्हि शूद्राभीरं, गोबलीवर्दं, तृणोलपम्, मृगसिंहमित्यादि। आभीरास्तावज्जात्यन्तराणीति ब्रूमः।

**ब्राह्मणादुग्रकन्यायामाभीरो नाम जायते।**
**माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्॥**[1]

वर्णसङ्करजातिरतिरिच्यते वर्णविशेषाच्छूद्रादित्यभिप्रायः। गोबलीवर्दमिति गाव, उत्कालिपुंस्का वाहाय च विक्रयाय च स्त्रिय एवावशिष्यन्ते। वलीवर्दा अनुत्कालितपुंस्का इत्यर्थभेदो विवक्ष्यते। तृणोलपमित्यपामुपलपमिति नामधेयम्। मृगसिंहमित्यत्र मृगशब्दो मृगविशेषपरो हरिणजातिवाचीति न सामान्यविशेष द्वन्द्वः। यत्रैवं क्वचित् सामान्यशब्दो विशेषपरतया प्रकरणादिना लक्ष्यते तत्र सामान्यविशेषसाहित्याभावादिष्यते द्वन्द्वः। सामान्यपरत्वे तु सर्वविशेषाणां व्याप्तत्वात् समुच्चयासंभणः ननु तं ब्राह्मणमानय गार्ग्यमित्येवं दृश्यते सामान्यविशेषयोः सहप्रयोगः। बाढं दृश्यते। उद्देश्यविधेयभावस्तु भवति न सहितयोरन्यत्रान्वययोग्यता। विशेषान्तराणि व्यावर्तयितुं तु सामान्ये विशेष शब्दः, प्रवर्तते। तस्मात्तत्रापि न द्वन्द्वनिमित्तं साहित्यम् इति द्वन्द्वप्रतिषेधः।

---

1 याज्ञवल्क्यस्मृतिः

## अनुविधिः

षड् द्वन्द्वाश्रयविधयो भवन्ति। पुंवदभावस्य तु न प्रदेशोदृश्यते द्वन्द्वे। उपसर्जनम्। समासान्तः विकारादेशः विभक्तिलोपा लिङ्गविधिः वचनविधिश्चेति अथ एषां प्रदेशा दर्शयितव्याः तत्र समासे यस्य प्रथम प्रयोगो नियम्यत तदुपसर्जनम्। तद्भिज्ञानार्थामिदानीं प्रयोगविधिरूच्यते।

1. **द्वन्द्वे घि शब्दः पूर्वम्** [1]**।**

ह्रस्वेकारोकारान्ता अनदीसंज्ञका घि शब्दाः। हरिहरौ, मधुघृते, पटुगुप्तौ।

2. **घि शब्दानेकत्वे त्वेकत्र नियमोऽनियमः शेषे** [2]**।**

हरिगुरहराः, हरिहरगुरवः, पटुमृदुशुक्लाः, पटुशुक्लमृदवः।

3. **स्वरादिकारान्तः पूर्वं द्वन्द्वेऽनेकश्चेदनियमः**[3] **।**

उष्ट्रखरौ, ईशकृष्णौ। बहुषुकामचारः। अश्वरथेन्द्राः, इन्द्राश्वरथाः।

4. **घ्यन्तात् स्वरादिरकारान्तः पूर्वम** [4]**।** इन्द्राग्नी।

5. **स्वल्पाक्षरं पूर्वं द्वन्द्वेऽनेकं चेदनियम**[5] **।**

शिवकेशवौ, वाग्दृषदौ। बहुषुकामचारः। मृदङ्शङ्खपणवाः[6] पृथङ् नदन्ति संसदि प्रासादे धनपतिरामकेशवानाम्।

6. **घि शब्दात् स्वराद्यकारान्ताच्च स्वल्पाक्षरं पूर्वम्**[7] **।**

वागग्नी, वागिन्द्रौ।

7. **लघ्वक्षरं पूर्वम् द्वन्द्वे**[8] **। कुशकाशं, शरचापम्।**

---

1 द्वन्द्वे घि (2-2-32)

2 अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे (वा. 1410)

3 अजाद्यदन्तम् (2.2.33)

4 घ्यन्तादजाद्यदन्तं विप्रतिषेधेन (वा. 1426)

5 अल्पाच्तरम्(2-2-34)

6 तूणवाः इति मूले।

7 अल्पाच्तरम् (2-2-34) इत्यनेनैत्व गतार्थम्। अल्पाच्तरं परत्वात् 'द्वन्द्वे घि' इत्यस्य बाधकम्।

8 लघ्वक्षरं पूर्वम् (वा. 1413)

8. **स्त्रीपुंसयोः स्त्रीपूर्वं द्वन्द्वे न तिरश्चां भिन्नशब्दानाम्** [1]**।**

सीतारामौ, राधाकृष्णौ, गौरीशङ्करौ। तिरश्चां तु अश्ववडवौ, हंसवरटे।

9. **अभ्यर्हितं पूर्वं द्वन्द्वे** [2]**। मातापितरौ, तापसपर्वतौ, श्रद्धामेधे।**

10. **लघ्वक्षरादपि चाभ्यर्हितं पूर्वम्** [3] **। दीक्षातपसी, श्रद्धातपसी।**

11. **संख्यायामल्पीयसी पूर्वम्** [4]**। त्रिचतुराः, पञ्चषाणि, एकादश द्वादश।**

12. **भ्रातृणां ज्यायान् पूर्वमभ्यर्हितत्वादानुपूर्व्याच्च द्वन्द्वे** [5]**। युधिष्ठिरार्जुनौ।**

13. **वर्णानां पूर्वः पूर्वकानुपूर्व्याद् द्वन्द्वे** [6]**।**

ब्राह्मणक्षत्रियो, क्षत्रियवैश्यौ, वैश्यशूद्रौ। ब्राह्मणक्षत्रियवैश्यशूद्राः। व्यभिचारोऽपि क्वचिदचिराभ्यस्तशब्देन। वैश्यराजन्ययोः। नवदशभिरस्तुवत शूद्रार्य्यावसृज्येताम् (वा.सं. 14-30-91कं) शूद्रार्यौ चर्मणि व्यायच्छेते (ता. ब्रा.5-5-14)

14. **ऋतुनक्षत्राणां समानाक्षराणां पूर्वं पूर्वकानुपूर्व्याद् द्वन्द्वे** [7]**।**

शिशिरबसन्तौ, उदगयनस्थौ। हेमन्तशिशिरबसन्ताः। बसन्तग्रीष्मौ। प्रावृट्शरदौ। कृत्तिकारोहिण्यः। व्यभिचारोऽपि क्वचिदचिराभ्यस्तशब्देन। तिष्यपुनर्वसू।

15. **केशश्मश्र्वादयो यथोक्तम्।**

पूर्वपरनियतप्रयोगाभ्यां पदाभ्यां सिद्ध। एते शब्दाः।

**केशश्मश्रू अभिभ्रुवं शिरोवीजमपि शिरोजानु।**
**शूद्रार्य्यमवन्त्यश्मकमपि वा चित्ररथ वाह्लीकम्॥1॥**
**जायापती च भार्यापती तथा जम्पती तद्वत्।**
**दारगवं पुत्रपशू पुत्रपती दम्पती तद्वत्॥2॥**
**तन्दुलकिण्वमुलूखलमुसलं दृष्टदुपलमपि तद्वत्।**

---

1 अपाणिनीयप्रयोगः।

2 अभ्यर्हितं च (वा.1412)

3 अभ्यर्हितं च(वा.1412)

4 संख्याया अल्पीयस्याः (वा.1417)

5 भ्रातुर्ज्यायसः (वा.1616)

6 वर्णानामानुपूर्व्येण (वा.1415)

7 ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण (वा.1421)

स्नातकराजानावथ विष्वक्सेनार्जुनौ तद्वत् ॥3 ॥
गोपलधानीपूलासं पूलास ककरण्डवत् ।
अपि वा स्थूलपूलासं स्थलपूलासं इत्यपि ॥4 ॥
उशीरबीजं सिञ्जास्थ मारग्वायनवन्धकी ।
चित्रास्वाती गोजवाज मन्ये चैव विधाः कति ॥5 ॥
16. धर्मार्थादिष्वनियमः[1] । आकृतिगणोऽयम् ।
धर्मार्थावथ शब्दार्थौ कामार्थौ मधुसर्पिषी ।
गुणवृद्धी तथाद्यन्तौ व्यत्यासादपि सिध्यतः ॥1 ॥
अर्थधर्मावर्थ शब्दावर्थकामौ यदृच्छाया ।
स्तः सर्पिर्मधुनी वृद्धिगुणावन्तादिवत् परे ॥2 ॥

इति पूर्वप्रयोगविधिः

## विभक्तिलोपालोपौ

1. **विद्यासम्बन्धवाचिनां योनिसम्बन्धवाचिनां च ऋदन्तानां द्वन्द्वे तदुपान्त्यपदात् प्रथमाया अलोपश्चैकवत्वं[2] च ।**

प्रथमान्तवत् कार्य्याणां श्रवणमिहादिश्यते न तु प्रथमाया एव श्रवणे तात्पर्यम्। होतापोतारौ, नेष्टोद्गातारौ, प्रस्तौताप्रतिहर्तारौ, होतृपोतृनेष्टोद्गातारः। द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वकरणे तु होतापोतानेष्टोद्गातारः। मातापितरौ प्राचाम्। उदीचां तु मातरपितरौ वक्ष्यते[3]।

2. **पुत्रे प्रत्यये पितुः प्रथमाया अलोपश्चैकवत्वं च द्वन्द्वे[4]।**

पितापुत्रौ। पितरश्च पुत्राश्च पितापुत्राः।

3. **यासामलोपं विधीयते ततोऽन्यास्तत्र समासे विभक्तयो लुप्यन्ते।**

---

1 धर्मादिष्वनियमः(वा.1418)
2 आनङ्ऋतो द्वन्द्वे (6-3-25)
3 मातरपितरावुदीचाम्(6-3-32)
4 पुत्रेऽन्यतरस्याम् (6-3-22), आनङ्ऋतो द्वन्द्वे (6-3-25)
4 सुपो धातुप्रातिपदिकयोः (2-4-71)

पूर्वपदस्थाया उत्तरपदस्थायाश्च विभक्तेर्लोपे पश्चादस्मात्समासाद्विशिष्टार्थावरोधिनी विभक्तिरुत्पद्यते। इति विभक्ति लोपालोपौ। हविर्भागादिप्रसिद्धसाहचर्याणां वायुभिन्नानां देवतानां द्वन्द्वेऽन्त्यपदात् पूर्वस्य पदान्त्यस्वरस्य दीर्घाकारः[1]।

सूर्य्याचन्द्रमसौ, अग्नेन्द्रौ, मित्रावरुणौ, इन्द्रावरुणौ, इन्द्राविष्णू, अग्नाविष्णू, सोमापूषणौ, अग्नामरुतौ, इन्द्राब्रह्मणस्पती। शब्दतो नियमो न त्वर्थग्रहणम्। तेनेह न। सूर्य्यचन्द्रौ, मित्रशशिनौ। प्रसिद्धसाहचर्याणामित्युक्तम्। तेनेह न-- ब्रह्मप्रजापती, इन्द्रसूर्यौ, मित्रभगौ। एतद्धि नैक हविर्भागित्वेन श्रुतं नापि लोके प्रसिद्धं साहचर्यम् वायु भिन्नानामित्युक्तम्। तेनेह न-- अग्निवायू, वाय्वग्नी।

4. **सोमवरुणयोः परयोरग्नेरन्त्यस्वरस्य दीर्घो द्वन्द्वे सस्य षत्वं च [2]।**

5. **इध्मनोऽन्त्यव्यञ्जनस्याकारो वर्हिषा द्वन्द्वे [3]।**

6. **द्योरन्त्यस्वराद् दिवोऽन्त्यव्यञ्जनाद्वा प्राक् पश्चाच्च युगपदाकारो भूमिक्षामा पृथिवीभिर्द्वन्द्वसाहित्ये दैव्यां तु समुच्चय साहित्येऽपि [4]।**

द्योश्च भूमिश्च द्यावाभूमी, द्यावाक्षामा, द्यावापृथिव्यौ, द्यावापृथवी, द्यावाचिदस्मै पृथिवी।

7. **द्योर्दिवा वा दिवस्त्वं चादिश्यते पृथिवीपरक द्वन्द्वे [5]। द्यौश्च पृथिवी च दिवस्पृथिव्यौ।**

8. **उषसोऽन्त्यव्यञ्जनात् प्राक् पश्चाच्च युगपदाकारो नक्तसूर्याभ्यां द्वन्द्वसाहित्ये दैव्यां तु समुच्चय साहित्येऽपि[6]।**

उषासासूर्य्यम्, उषासानक्ता, नक्तोषासा।

---

5 देवताद्वन्द्वे च (6-3-36), वायुशब्दप्रयोगे प्रतिषेधः (वा.39707)

6 ईदग्नेः सोमवरुणयोः (6-3-37)

7 न दधिपयआदीनि (2-4-14), निपातनाद्दीर्घः।

4 दिवो द्यावा (6-3-29)

5 दिवसश्च पृथिव्याम्(6-3-30)

6 उषासोषसः(6-3-39)

9. **पितुर्मातुर्वान्त्यस्वरात् प्रागकारः पश्चात्वाकारो मात्रा पित्रा वा द्वन्द्वे दैव्याम्[1]। आ मागन्तां पितरा मातरा च। मातरा पितरा .......।**

10. **आर्ष्यां तूदीचां मातुरन्त्यस्वरात् प्राक् पश्चाच्च युगपदकारः पित्रा द्वन्द्वे[2]।**

उदीच्या मातरपितरौ भाषन्ते। प्राच्यास्तु मातापितरौ इत्येवार्ष्यां भाषायाम्।

11. **गोरन्त्यस्वरात् पश्चादकारोऽश्वाविकैडकैर्द्वन्द्वे[3]। गवाश्वम्। गवाविकम्। गवैडकम्।**

12. **जायाया जंभावो दंभावो वा पत्या द्वन्द्वे विकल्पेन[4]। जाया च पतिश्च दम्पती जम्पती जायापती।**

13. **इतोऽन्येऽपि विकारा वर्णसन्धिकृताः सति निमित्ते सर्वत्र नीयन्ते। शीतोष्णे।**

**इति विकारादेशविधिः**

## समासान्तः

1. **चवर्ग्यान्ताद् दृषहान्ताच्च समाहारद्वन्द्वादकारः स्यात्[5]।**

वाक् च त्वक् च वाक्त्वचम्, त्वक्स्रजम्, शमीदृषदम्, वाक्त्विषम्, छत्रोपानहम्।

2. **अहः पूर्वायारात्रेर्द्वन्द्वादकारः स्याट्टिलोपश्च[6]।**

अहोरात्रः। सप्तम्यर्थ वृत्तौ त्वहोरात्रम्।

3. **अहोरात्रिनक्तं पूर्वाणाम् दिवा सप्तम्यर्थविषयाणां समाहारद्वन्द्वादकारः स्याद्रात्रेर्मान्तत्वं च[1]।**

---

1 पितरामातरा च छन्दसि (6-3-33)

2 मातरपितरावुदीचाम्(6-3-32)

3 गवाश्वप्रभृतीनि च (2-4-11)

4 जायाशब्दस्य जम्भावो दम्भावश्चवा निपात्यते।

5 द्वन्द्वाच्चुदषहान्तात्समाहारे (5-4-106)

6 अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः(5-4-87)

अहनि च दिवा च-अहर्दिवम्। वीप्सा गम्यते- अहन्यहनीत्यर्थः। रात्रौ च दिवा च रात्रिन्दिवम्, नक्तंदिवम्।

4. **ऋग्यजुषोर्वष्ठीवपदष्ठीवाक्षिभ्रुवदारगवेभ्यः समाहार द्वन्द्वादकारः स्यादष्ठीवतष्टिलोपश्च [2]।**

ऋग्यजुषम्, उरु चाष्ठीवन्तौ च ऊर्वष्ठीवम्, पादौ चाष्ठीवन्तौ च पदष्ठीवम्। अत्र पादस्य पद्भावो विकारादेशश्च नेयः। अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्, दाराश्च गावश्च दारगवम्।

5. **ऋक्सामवाङ्मनसधेन्वनडुहस्त्रीपुंसेभ्य इतरेतरयोगादकारः स्यात् साम्नष्टिलोपश्च [2]।**

ऋक्सामे, वाङ्मनसे, धेन्वनडुहौ, स्त्रीपुंसौ।

6. **तद्धिता अप्येते स्वार्थिकाः समासान्तविषयत्वादिहैवोपदिश्यन्ते।**

**इति समासान्तविधिः**

## लिङ्गोद्देशः

1. **समाहारद्वन्द्वो नपुंसकमहोरात्रस्तु पुंलिङ्गः।**

घटपटम्, संज्ञापरिभाषम्, धनवनम्, छात्रोपानहम्, दन्तोष्ठम्,-दन्तौष्ठम्[2]। अहोरात्रस्तु पुंलिंगः[3]। अहश्च रात्रिश्चानयोः समाहारोऽहोरात्रः। अहोरात्रं चिन्तमान इति तु कालवचना-दत्यन्तसंयोगे द्वितीया[4]।

2. **इतरेतरयोगद्वन्द्वः परवल्लिङ्गः पूर्ववदश्ववडवौ [5]।**

---

1 अचतुरविचतुरस्त्रीपुंसधेन्वनडुहर्वसामवाङनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीच नक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिः श्रेयसपुरुषायुषद्वयायुषत्र्यायुषर्ग्यजुषजातोक्षकहीक्ष-वृद्धोक्षोपनगोष्ठश्वा (5-4-77)

2 नपुंसकम् (2-4-97)

3 रात्राह्नाहाः पुंसि (2-4-29)

4 कालाध्वनोरत्यन्त संयोगे (2-3-5)

5 परवल्लिङ्गं द्वन्द्व तत्पुरुषयोः(2-4-26) पूर्ववदश्ववडवौ (2-4-27)

स्त्रीपुरुषौ कन्यापुत्रौ, धनसम्पत्ती, गुणविद्ये, स्त्रीभृत्यधनानि, हंसवरटे। पूर्ववदश्ववडवौ। अश्वजातिः स्त्री चेद्वडवेत्युच्यते। स्त्रीलिङ्ग शब्दोऽयम्। अश्वेनेतरेतरद्वन्द्वे पुंलिङ्गत्वं विधीयते समाहारे तु नपुंसकमेव। अश्ववडवम्।

3. **हेमन्तशिशिरावहोरात्रे च पूर्ववद्दैव्याम्**[1]**।**

हेमन्तश्च शिशिरं च हेमन्तशिशिरौ। अहश्च रात्रिश्चाहोरात्रे। अहोरात्राणि विदधत्। दैव्यां भाषायामिदमुक्तम्। आर्ष्यां तु परवल्लिङ्गता। हेमन्तशिशिर।

4. **द्वन्द्व तत्पुरुषयोरविशेषणानां त्यदादीनामेकशेषः द्वन्द्वो नपुंसकं नपुंसक शेषे लोपे वा तदभावो तु पुंल्लिङ्गः पुंल्लिङ्गशेषे लोपे वा तदभावे तु स्त्रीलिङ्गः**[2]**।**

तच्च मैत्री च ते। तच्च पुरुषश्च ते। तच्च देवदत्तश्च यज्ञदत्ता च तानि। एषु नपुंसक शेषान्नपुंसकत्वम्। स च धनं च ते। सा च कुलं च ते। सा च वर्गश्च कुलं च तानि। एषु नपुंसकलोपान्नपुंसकत्वम्। तत्र नपुंसकपदयोगाभावे तु स एकशेषः पुंल्लिङ्गः स्यात्। स च स्त्री च तौ। अत्र पुंशेषात् पुंस्त्वम्। सा च पुरुषश्च तौ। अत्र पुंलोपात् पुंस्त्वम्। ताश्च स्रजश्च ताः।

5. **द्वन्द्व तत्पुरुषविशेषणानां त्यदादीनामेकशेष द्वन्द्वो विशेष्यवल्लिङ्गः**[3]**।**

कुक्कुटमयूर्याविमे, मयूरीकुक्कुटविमौ, तच्च सा च अर्द्धपिप्पल्यौ।

6. **अथान्तरपदलिङ्ग तु प्रकरणन्तराद्विज्ञेयम्।**

**इति लिङ्गोद्देशविधिः**

## वचनोद्देशः

1. **समाहारद्वन्द्वादेकवचनमवयव संख्यानपेक्षणात्**[4]**।**

अहिश्च नकुलश्चाहिनकुलम्। अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्। अङ्गानि चोपाङ्गानि च अङ्गोपाङ्गम्। समाहारानेकत्व निबन्धनानि तु वचनानि भवन्त्येव। छत्रोपानहं-छत्रोपानहे, छत्रोपानहानि।

---

1 हेमन्तशिशिराहोरात्रे छन्दसि

2 नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम्(1-2-69)

3 परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः(2-4-26)

4 समाहारस्य एकत्वात्। द्व्येकयोर्द्विवचनैकवचने (2-4-22)

**2. इतरेतरयोगादवयवसंख्यासापेक्षाणि द्विवचनबहुवचनानि [1]।**

सुखदुःखे, वेदधर्मौ, ज्ञानक्रिये, पृथिव्यन्तरिक्षस्वर्गाः, अग्नीन्द्रसूर्याः, ज्ञानाज्ञानान्यथाज्ञानानि, कर्माकर्मविकर्माणि, पृथिवीजलतेजोवाय्वाकाशाः, विशाखे चानुराधा च विशाखानुराधाः, कृतिकारोहिण्यः।

**3. तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनम् [2]। पर्यायवाचिनोऽपिग्रहणम्।**

तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू, सिद्ध्यपुनर्वसू, पुनर्वसू द्वे तारे। तिष्यश्चैका, इत्यर्थबाहुत्वाद् बहुवचनं प्राप्तं तत्र द्विवचनं विधीयते। अत्राह? अस्ति पुनर्वसु शब्द एकवचनान्तोऽपि। तेन द्वन्द्वे सिद्धं द्विवचनम्। किमर्थाऽयमारम्भः। उच्यते। सिध्यत्येवम्। यस्तु द्विवचनान्तः पुनर्ववसुशब्दः, तेन द्वन्द्वे बहुवचनमपि प्राप्नोति तन्नान्तरेण यत्नं निवर्तेत। एतदर्थोऽयमारम्भः। अयं तिष्यपुनर्वसु शब्दोऽस्त्येव ज्योतिषी वर्तते-अस्ति च कालवाची। तद्यथा- बहवस्तिष्यपुनर्वसवोऽतिक्रान्ताः, कतरेण तिष्येण गत इति। तत्र यो ज्योतिषी वर्तते तस्येदम्, ग्रहणम् अन्यत्र नित्यं बहुवचनम्। तिष्यपुनर्वसवःकालाः। तिष्यपुनर्वसवो माणवकाः द्वन्द्व इत्युक्ते नेह। यस्तिष्यस्तौ पुनर्वसू येषां त इमे तिष्यपुनर्वसवः उन्मुग्धाः। बहुवचनस्य द्विवचनविधानात् समाहारैकवचनं श्रूयत एव उदितं तिष्यपुनर्वसु।

**4. फल्गुनीप्रोष्ठपदानां च नक्षत्रैकशेषे द्विवचनस्य बहुवचनं विकल्पेन [3]।**

उदिते पूर्वे फल्गुन्यौ। उदिताः पूर्वाः फलगुन्यः। उदिते पूर्वे प्रोष्ठपदे। उदिताः पूर्वाः प्रोष्ठपदाः। अत्राह? फल्गुनी समीपगते चन्द्रमसि फल्गुनी शब्दो प्रवर्तते। बहवस्तेऽर्थाः। तत्र युक्तं बहुवचनम्। यदा तयोरेवाभिधानं तदा द्विवचनं भविष्यति। कोऽर्थोऽनेन। अपि वा-चतस्रः फल्गुनीताराः। चतस्रः प्रोष्ठपदाताराः।

''चत्वार एकमाभिकर्म देवाः प्रोष्ठपदा स इति यान् वदन्ति''-इति श्रुतेः। ततोऽयं बहुवचनः शब्दः। समुदाये दृष्टाः शब्दा अवयवेऽपि वर्तन्ते पूर्वे पञ्चाला उत्तरे पञ्चाला इतिवत्। ततो बहुवचनम्। अथ ताराद्वयी विवक्षायां द्विवचनम्। कोऽर्थाऽनेन। उच्यते। अस्ति पञ्चालशब्दोऽयं प्रदेशखण्ड समुदाये वर्तते मनुष्यसमुदाये वर्तते

---

1 बहुषु बहुवचनम्( 1-4-21)

2 तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्( 1-2-63)

3 फल्गुनीप्रोष्ठपदानां च नक्षत्रे ( 1-2-60)

गृहसमुदाये च वर्तते। तत्र पूर्वेऽपि पञ्चाला बहवोऽर्था उत्तरेऽपि। अतो युक्तं बहुवचनम्। इह तु चतस्र एव तारा फल्गुन्यः। तासां द्वयोर्द्वयोर्विभागे द्वे पूर्वे भवतो द्वे चोत्तरे। ततो बहुवचनं न प्राप्नोति। अतश्च यत्रापि चन्द्रमः सान्निध्यं नापेक्ष्यते तत्रापि बहुवचनं यथा स्यात्। एतदर्थोऽयमारम्भः।

**5. पुनर्वसुविशाखानां नक्षत्रैकशेषे द्विवचनस्य एकवचनं विकल्पेन दैव्याम्[1]।**

पुनर्वसू द्वे तारे। विशाखे चन्द्रे तारे। ततो नित्यं द्विवचनं प्राप्तमित्येकवचनं पाक्षिकं विधीयते। पुनर्वसुर्नक्षत्रम्, विशाखा नक्षत्रम्। आर्ष्यां तु भाषायां द्विवचनमेव। पुनर्वसू विशाखे। अत्राह? किमयं पुनर्वसु शब्दस्तयोस्तारयोर्व्यासज्य वर्तते अथव प्रत्येकम्। व्यासज्यवृत्तावैकार्थ्यादिकवचनं सिद्धं किमर्थोऽयमारम्भः। उच्यते। सत्यं तावद् द्वेतारे प्रत्येकं पुनर्वसू। अथापि द्वे नक्षत्रे मास्यानाम् इत्युपश्लिष्टाभ्यामुभाभ्यामेकं नक्षत्रं व्यासज्यवृत्याभिधीयते। पुनर्वसू नक्षत्रमिति। ततो नक्षत्रपरत्वे तत्रैकवचनं न प्राप्नोतीत्ययमारम्भः। अपराह। द्विविधं पुनर्वसु नक्षत्रम्-द्वे तारे च। कलानामष्टशत्या-परिच्छिन्नो भूमण्डलप्रदेशश्च। तत्र तारापरत्वे द्विवचनं प्रदेशपरत्वे त्वेकवचनं सिद्धम्। किमर्थोऽयमारम्भः। उच्यते। सिध्यत्येवम्। एवमेव प्रकारेणार्ष्यां भाषायामप्येकवचनं प्राप्नोति। तन्नान्तरेण यत्नं निवर्तेत। अतो दैव्यामेव भाषायामेकवचनं प्रयोक्तव्यं नार्ष्यामिति नियमार्थोऽयमारम्भः।

**इति वचनोद्देशविधिः**

## अथ स्वरः

**1. अन्धकवृष्णिवश्यानां बहुवचनान्तानां राजन्यानां द्वन्द्वे पूर्वपदं प्रकृत्या[2]।**

श्वफल्कस्यापत्यानि श्वाफल्काः, चैत्रकस्य चैत्रकाः, अन्तोदात्तावेतौ। तेषां द्वन्द्वे श्वाफल्कचैत्रकाः। तृतीयस्वर उदात्तोऽन्ये पञ्चानुदात्ताः। शिनिवासुदेवाः। शिनिराद्युदात्तो लक्षणया तदपत्ये वर्तते। द्वन्द्वे प्रथमस्वर उदात्तोऽन्य पञ्चानुदात्ताः[3]।

---

1 विशाख्योश्च (1-2-62)

2 राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु (6-2-34)

3 राजन्यबहुवचन (6-2-34)

अन्धकवृष्णिवंश्यत्वाभावान्नेह प्रकृति स्वरः कुरुपञ्चालाः। बहुवचनत्वाभावाद् व्यक्तिद्वन्द्वे नास्ति। संकर्षणवासुदेवौ। अभिषिक्तवंश्याः क्षत्रियाः एवेह राजन्या विवक्ष्यन्ते न तु राजापत्यमात्रम्। तेनेह न। द्वैप्यभैमायनाः। द्वीपे भवा द्वैप्याः। भैमेरपत्यं युवा भैमायनः अन्धकवृषणय एते न तु राजन्याः।

**2. संख्यावाचिनां द्वन्द्वे पूर्वपदं प्रकृत्या [1]।**

त्रयोदश। त्रय इत्यन्तोदात्तः, इत्याह, काशिकाकारो दीक्षितश्च तदशुद्धमाद्युदात्तस्यैव 'त्रयो दश च मे' इत्यादौ सर्वत्र लक्ष्ये दर्शनात्। तेनेह संख्या द्वन्द्वे प्रथम स्वर उदात्तः। अन्ये त्रयोऽनुदात्ताः। द्वादश। षोडश।

**3. आचार्य्योपसर्जनानामन्तेवासिनां द्वन्द्वे पूर्वपदं प्रकृत्या [2]।**

पाणिनीयरौढीयाः। मध्योदात्तयोरनयोर्द्वन्द्वः प्रकृतिस्वरत्व................। आपिशल पाणिनीय व्याडीय गौतमीया इत्यादावनेकपदद्वन्द्वे सर्वप्रथमस्य पूर्वपदस्य यः स्वरः स द्वन्द्वस्वरः।

आचार्य्योपसर्जनानामित्युक्तेरन्तेवासिनामपि शास्त्रोपसर्जनानां नास्ति छान्दसवैयाकरणाः। आचार्य्योपसर्जनानामपि शास्त्राणां नास्ति। आपिशलपाणिनीये शास्त्रे। अन्यतरस्याप्याचार्य्योपसर्जनत्वाभावे नास्ति। पाणिनीयदेवदत्तौ।

**4. कार्त्तकौजपादीनां द्वन्द्वे पूर्वपदं प्रकृत्या [3]। कृतस्यायं कार्त्तः। कुजपस्यायं कौजपः। कार्त्तकौजपौ। सावर्णिमाण्डूकेयौ। जरामृत्यू। वत्सजरन्तः।**

1. अथ कार्त्तकौजपावथ शब्दाः स्युर्मौदपैप्पलादाश्च।
2. अविमत्तकामविद्धाः वत्सजरन्तो जरामृत्यू।
3. शाकलशुनकाः शाकलशणकाः स्युः शाणकवाभ्रवास्तद्वत्।
4. बाभ्रवशालङ्कायन वाभ्रवदानच्युतास्तद्वत्।
5. चिन्तिसुराष्ट्राः कुन्तिसुराष्ट्राः, आर्चामिमौद्गलास्तद्वत्।
6. तण्डवतण्डाः सौश्रुतपार्थिववत् स्त्रीकुमारं च।
7. अथ शैतिकाक्षपा चालेयाः स्युः कटुकवाधूलेयाः।
8. पैलश्यापर्णयाः श्यापर्णेयास्तथैव कपिपूर्वाश्चेत्।

---

1 संख्या (6-2-35)

2 आचार्योपसर्जनश्चान्तेवासी (6-2-36)

3 कार्तकौजपादयश्च (6-2-37)

9. शब्दा अथ चावन्त्यश्मकाश्च सावर्णिमाण्डूकेयौ।
10. कौथुमलोकाक्षाः कठकालापाश्च कठकौथुमाश्च भवन्ति।
11. पूर्वपदप्रकृतिस्वरवन्तो याज्यानुवाको च।
12. षड्विंशति संख्याका द्वन्द्वा एते विनिर्दिष्टाः।

**5. शण्डामर्कादीनां देवतानां च द्वन्द्वे पूर्वमुत्तरं च पदं युगपत् प्रकृत्या[1] न तु पृथिवीरुद्रपूषमन्थिभिन्नेऽनुदात्तादावुत्तरपदे [2]।**

शण्डामर्कौ। तृष्णावस्त्री। लम्वाविश्ववयसौ। इति शण्डामर्कादयः। देवताद्वन्द्वे। इन्द्रावरुणौ। अत्रेन्द्रवरुणावाद्युदात्ताविति ह्युदात्तौ द्वन्द्वः। इन्द्रावृहस्पती। इन्द्र आद्युदात्तः। वृहस्पतौ वृहछब्दः पति शब्दश्चाद्युदात्तौ। तेनायं द्वन्द्वस्त्र्युदात्तः। एषु समस्यमानयोः पदयोः समासात् प्राग् यथा यथा स्वरस्तथैव निर्विशेषं समासेऽप्यनुज्ञायते। उत्तरपदस्यानुदात्तादित्वे तु पृथिव्यादीनामेव प्रकृतिभावो नान्येषाम्। इन्द्राग्नी। अग्निरन्तोदात्तत्वादनुदात्तादिः। तेनात्र पूर्वपदस्य प्रकृति-स्वरत्वाभावादन्तोदात्तो द्वन्द्वः। पृथिव्यादीनां त्वन्तोदात्तत्वादनुदात्तादित्वेऽपि भवत्येव प्रकृतिस्वरता। द्यावापृथिवी सोमारुद्रौ। इन्द्रापूषणौ। शुकामन्थिनौ। पूर्वेषामुत्तरेषां चाद्युदात्तत्वादनुदात्तादित्वेऽपि भवत्येव प्रकृतिस्वरता। द्यावापृथिवी। सोमारुद्रौ। इन्द्रापूषणौ। शुक्रामन्थिनौ। पूर्वेशामुत्तरेषां चाद्युदात्तत्वाद् ह्युदात्ता एते द्वन्द्वाः।

**6. शेषा द्वन्द्वाः सर्वेऽप्यन्तोदात्ताः[3]। घटपटौ। पाणिपादम्।**

**7. यस्योदात्तत्वं स्वरितत्वं वा नियम्यते ततोऽन्ये तत्पदनिष्ठाः सर्वे स्वरा अनुदात्ताः[4]।** इति स्वरविधिः।

तदित्थं उपसर्जनसिद्धिः, समासान्तः, विकारादेशः, विभक्तिलोपालोपौ, लिङ्गविधिः, वचनविधिः, स्वरविधिश्चेत्येवं सप्तधा विभक्तं शेषतन्त्रं वृत्तम्।

**इति द्वन्द्वसमासः समाप्तः**



1 देवताद्वन्द्वे च (6-2-141)
2 नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु (6-2-142)
3 समासस्य (6-1-223)
4 अनुदात्तं पदमेकवर्जम् (6-1-158)

# अव्ययीभावः

**1. अथाव्ययीभावः। अनव्ययस्याव्ययत्व संपत्तिरव्ययीभावः[1]।**

अत्र पृच्छायते उपकृष्णमित्येवमादिरेवेष्यते सोऽव्ययीभावः। तत्र तावन्नोपस्याव्ययीभावः, नित्याव्ययत्वात्। अभूततद्भावानवक्लृप्तेः। नापि कृष्णस्य। इदानीमपि तस्यानव्ययत्वात्। नापि वा अस्य समासस्य। अव्ययत्वविधिना सहैव समास विधानादौत्पत्तिकेऽव्ययत्वेऽभूततद्भावासंभवात्। तस्मात् कस्यानव्ययस्य सतोऽयमुपरिष्टादव्ययीभावः? अत्रोच्यते। न वयं समासस्यावयीभावं कल्पयामः, किम् तर्हि समासमेवाव्ययीभावं ब्रूमोऽव्ययीभावं वा समासम्। येषां पदानां समासस्तेषां प्रागव्ययानामनव्ययानां वा सतामुपरिष्टादव्ययत्वं नियमेन पश्यामः। तथा च खलु येनेत्ययमनव्ययानामव्ययत्वसंपत्तिर्भवति, तथा समसनमव्ययीभावः। इत्यवगम्यम्।

अव्ययीभावे पूर्वपदार्थप्राधान्यमिति प्रायोवादः। सूपप्रति, अक्षपरीत्यादिषु उत्तरपदार्थप्राधान्यस्य, उन्मत्तगङ्गं, तिष्ठद्गु- इत्यादिष्वन्यपदार्थप्राधान्यस्य च दर्शनेन व्यभिचारात्। अत एव यत्राव्ययेन समासोऽव्ययार्थप्राधान्यं चेत्यादिकमपि नाव्ययीभावलक्षणम्। सूपप्रत्यादौ[2] व्यवभिचारवारणेऽपि तिष्ठद्गु, उन्मत्तगङ्गम्, सप्तगङ्गम्, पारेगङ्गम्, द्विमुनीत्यादिष्वनव्ययसमासेष्वप्यव्ययीभावत्वदर्शनात्। तस्मात् किमव्ययीभावस्य लक्षणमिति चेत्- अत्रोच्यते। यतो नव्ययमव्ययं भवति समासविधानात् सोऽव्ययीभावः। विधेयमव्ययत्वं च नपुंसकयोग्य यत्किञ्चित् विभक्तिनियतमेवेह प्रतिपद्यम्।

अयमव्ययीभावस्त्रेधा- सर्वानव्ययवृत्तः, सर्वाव्ययवृत्तः, अव्ययानव्ययवृत्तश्च। समभूमि, समपदाति, तिष्ठद्गु, बहद्गु, सप्तगङ्गम्, प्राग्वनमित्येवमादयोऽनव्ययवृत्ताः। संप्रति, असंप्रति, इत्येवमादयोऽव्ययवृत्ताः परिविन्ध्यम् उपकृष्णम्, अधिहरि, इत्येवमादयः, स्वलक्षणाः। लोहितगङ्गमित्येवमादयो बहुब्रीहिलक्षणाः। सप्तगङ्गमित्येवमादयो द्विगुलक्षणाः। सर्वमपीदमुपरिष्ठात् विस्पष्टमुपदिष्टं द्रष्टव्यम्।

---

1 अव्ययीभावश्च (2-1-5)

2 'सूपप्रत्ययादौ' इति मूलग्रन्थे।

विभक्त्यर्थे वर्तमानमव्ययमव्यवहितं प्राक् प्रयुज्यमानमव्ययीभावाय[1] भवति। कारकविभक्तिर्नामिनः पश्चादेव प्रयुज्यते इति संस्कृतभाषायां नियमः[2] किन्तु कारकविभक्तेरर्थे वर्तमानं किञ्चिदव्ययं चेत्तद्विभक्ति पर्य्यावृत्त्या विवक्षितं स्यात्। तदास्य नाम्नः प्रागेव संसक्तं तत् प्रयुज्यते। ततस्तेनाव्ययेनोक्तार्थत्वात् पुनरमुष्य नाम्नः पश्चात् कारकविभक्तिर्निवृत्ताकाङ्क्षा नोत्पद्यते। अत एवेदमनव्ययमपीदानीमव्ययं भवतीत्ययं समासोऽव्ययीभावशब्देनाख्यायते। यथा हरौ- इति वक्तव्ये तत्समानार्थतया "अधिहरि" इत्येवमाख्यायते। तत्र हरिशब्दादुत्तरतः प्रयुक्ता सप्तमी विभक्तिर्यावन्तमर्थं प्रत्याययति तावन्तमेव निर्विशेषं पूर्वतः प्रयुक्तोऽयमधिशब्दः। विशेषस्तु केवलमेतावानेव द्रष्टव्यो यदेकत्र विभक्तिः पश्चादेव प्रयुज्यते न प्राक्। अन्यत्राव्ययं प्रागेव प्रायः प्रयुज्यते न पश्चात्। अधिकरणं त्वव्ययार्थः प्रधानमिति लिङ्गसंख्याद्यसमन्वयाद्विभक्तयन्तराप्राप्तिः। मुख्याव्ययेतरशब्दे यत्र लिङ्गान्तराप्राप्तिः। तत्र सामान्ये नपुंसकम्[3]। यत्र विभक्त्यन्तराप्राप्तिस्तत्र प्रथमा। यत्र वचनान्तराप्राप्तिः- तत्रैकवचनम्। इति सामान्यनियमादिहाप्यव्ययीभावे पूर्वपदार्थप्राधान्येऽप्युत्तरपदस्यानव्ययत्वात्तदुत्तरं प्रथमैकवचनसिद्धिः। नपुंसकवच्च तत्कार्यम्[4]। तेन गृहे इत्यर्थेऽधिगृहम्।गोपीत्यर्थेऽधिगोपम्। शालायामित्यर्थेऽधिशालम्। मत्यामिति-अधिमति। लक्ष्म्यामिति-अधिलक्ष्मि। गौर्य्यामित्यधिगौरि। सेतावित्यधिसेतु। चम्वामित्यधिचमु। धातरीत्यधिधातृ। रायीत्यधिरि। गवीत्यधिगु। द्यवीत्यधिद्यु। नावीत्यधिनु। ग्लावीत्यधिग्लु एवम् प्रयोगा द्रष्टव्या इत्याहु।

**अथवा**

गृहे अधिगृहमित्यनयोः समानार्थकत्वं नास्ति। अधिकरणार्थस्य भावत्वविवक्षायामुत्तरतो विभक्तियोगः। सत्वत्व[5] विवक्षायां पूर्वतोऽव्यययोगः इति वैषम्यात्। अत एवाव्ययीभावादुत्तरतः सर्वा विभक्तयः प्राप्नुवन्ति तदर्थसमन्वयोपपत्तेः। दृश्यन्ते हि अधिगृहात्, अधिगृहेण, अधिगृहे[6], अधिगृहमित्येवं विभक्त्यर्थयुक्ताः

---

1 अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्य-थानुपूर्व्य-यौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु (2-1-6)

2 परश्च (3-1-2)

3 स नपुंसकम् (2-4-17)

4 नाव्ययीभावादतोऽम्त्वपञ्चम्याः(2-4-83)

5 भावत्वम् इत्यर्थः

6 तृतीयासप्तम्योर्बहुलम् (2-4-84)

प्रदेशााः। अधिगृहादानय, गृहमध्यादानायेत्यर्थः। अधिगृहे नय, गृहमध्येप्रापयेत्यर्थः। न चैवं विभक्तियोगादव्ययीभावत्वं व्याहन्यत इत्याक्षेप्यम्। नियतैकविभक्तिकं, प्रकृत्या गतार्थविभक्तिकं, अयोग्यत्वान्निर्विभक्तिकम् इत्येवं त्रैविध्ये नाव्ययत्वस्य प्रागुक्तेर्नियतैकविभक्तित्वेऽप्यव्ययीभावत्वाक्षतेः। दृश्यते हि- चिरं चिरेण, चिराय, चिरात्, चिरस्य, नक्तं, रात्रौ, उच्चैः, नीचैः, ऋते, प्रगे, आरात्, अञ्जसा, अह्नाय, सपदीत्येवमादीनां भूयसां शब्दानां विभक्तियोगेऽप्यव्ययत्वम्। एवमव्ययीभावेऽपि प्रथमैकवचनयोगात् तृतीया पञ्चमी सप्तम्येकवचनयोगाद् वा विभक्तिमत्वेऽप्यसार्व-विभक्तिकत्वादव्ययत्वमुपपद्यते। तत्राकारान्तादव्ययीभावात् पञ्चम्यर्थयोगे प्रागुक्त एव आद्विभक्ति पञ्चमी नत्वम् विभक्तिः[1]। अधिगृहात्, अधिशालात्। तृतीयासप्तम्यर्थयोगे तु दैविध्यम्[2]। अधिगृहे-अधिगृहम्। अधिगृहेण-अधिगृहम्। अपदिशेन, अपदिशे, अपदिशम्। क्वचित्तु तदर्थयोगेऽपि प्रथमैकवचनमेव। पूर्वोक्तरूपेण तु तृतीयादिविधिर्नास्ति[3]। सुमद्रम्, उन्मत्तगङ्गम्। अनकारान्तात्वव्ययीभावान्न-पुंसकैकवचनवदेव सर्वत्र प्रयोगः।

**2. संपत्याद्यर्थे वर्तमानमव्ययमव्यवहितं प्राक् प्रयुज्यमानमप्यव्ययीभावाय भवति[4]।**

सम्पत्त्यादयोऽर्था यथा--

**सम्पत्तिश्च समृद्धिव्यृद्धी वीप्साऽऽनुपूर्व्यं च।**
**अर्थानतिवृत्तिश्चाभावश्चैवात्ययश्च योग्यत्वम्॥1॥**
**शब्दाप्रादुर्भावासंप्रति सादृश्य सदृशार्थाः।**
**मध्यसमीपौ युगपत् पश्चात्पर्य्यन्त साकल्ये॥2॥**
**एष्वर्थेषु यदव्ययमुपपन्नं प्राक् प्रयुज्यमानं स्यात्।**
**तदवश्यमुत्तरस्य च नाम्नः स्यादव्ययत्वाय॥3॥**

क्षत्राणां सम्पत्तिः सक्षत्रम्। मद्राणां समृद्धिः सुमद्रम्। ऋद्धैराधिक्यम् समृद्धिः। अनुरूपमात्मभावः संपत्तिरिति भेदः। यवनानां व्यृद्धिर्दुर्यवनम्। अर्थमर्थं प्रति प्रत्यर्थम्।

---

1 नाव्ययीभावाद्तोऽम्त्वपञ्चम्याः(2-4-83)

2 तृतीयासप्तम्योर्बहुलम्(2-4-84)

3 तृतीया सप्तम्यो-'इति बहुलग्रहणात'

4 अव्ययं विभक्तिसमीपसमृद्धिव्यृद्यर्थाभावात्यया संप्रतिशब्दप्रादुर्भावपश्चाद्य-थानुपूर्व्ययौगपद्यसा दृश्यसंपत्तिसाकल्यान्तवचनेषु (2-1-6)

ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम्। शक्तिमनतिक्रम्य यथाशक्ति। मक्षिकाणामभावो निर्मक्षिकम्। हिमस्यात्ययोऽतिहिमम्। रूपस्ययोग्यमनुरूपम्। योग्यस्यानुरूपं यथायोग्यमित्यपि द्रष्टव्यम्। हरि शब्दस्य प्रकाश इति हरि। निद्रा संप्रति न युज्यते इत्यतिनिद्रम्। हरेः सादृश्यं सहरि। सादृश्यार्थः सहशब्दः। सहशब्दस्य हशब्दो विलुप्यतेऽव्ययीभावे। यदि कालवाचकःपरतो न स्यात्[1]। यथा शब्दस्तु सादृश्यार्थो नाव्ययीभावे प्रयुज्यते[2] स्वभावात्। यथाहरिस्तथाहरः। हरेरूपमानत्वं यथा शब्दो द्योतयति। सदृशः सख्या ससखि। सदृशार्थः सहशब्दः। दिशोर्मध्येऽपदिशम्[3]। कृष्णस्य समीपमुपकृष्णम्। चक्रेण युगपत् सचक्रम्। सहपूर्वाह्णम् यौगपद्यार्थः सह शब्दः। विष्णोः पश्चादनुविष्णु। आग्निग्रन्थपर्य्यन्तमधीते साग्नि। तृणमप्यपरित्यज्येति सतृणमत्ति साकल्येनेत्यर्थः।

अवधारणार्थो यावच्छब्दः पूर्वं प्रयुक्तोऽव्ययीभावाय भवति[4]। यावच्छ्लोकमच्युतप्रणामाः। यावन्तः श्लोकास्तावन्त इत्यर्थः। यावद् ग्रामं चरति, सर्वेष्वित्यर्थः।

मात्रार्थः प्रति शब्दः परतः प्रयुक्तोऽव्ययीभावाय भवति[5]। शाकस्य लेशः शाकप्रति। माषप्रति सूपप्रति। ओदनप्रति।

द्यूतव्यवहारपराजयविषयकाक्षशब्दाच्छलाका शब्दात्संख्या वचनाच्च तृतीयान्तात् परतः प्रयुक्तः परि शब्दोऽव्ययीभावाय[6] भवति। पञ्चिकानाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति तत्र यदा सर्वे एकरूपाः पतन्ति तदा पातयित्वा जयति। अन्यथा तु पाते पराजीयते तत्रेदमुच्यते। अक्षेण विपरीतं वृत्तमक्षपरि। शलाकापरि। एकपरि द्विपरि। पूर्वस्माद् वृत्तादन्यथात्वे द्योत्ये समासोऽयम्। अक्षेणेदं न तथा वृत्तं यथापूर्वम्। सुष्ठु वृत्तमित्यर्थे। विवक्षितेऽक्षणपरिवृत्तमित्युच्यते। शलाकया यथावृत्तं पूर्वं वृत्तं न तदेदानीं वृत्तमित्याह शलाकापरि वृत्तमिति। एकेन तथा न वृत्तं यथापूर्वमित्याह एकपरीति। द्वाभ्यां तथा न वृत्तं यथापूर्वमिति द्विपरि। अक्षशलाकयोस्त्वेकवचनान्तयोरेवायं समासः, तेनाक्षाभ्यां वृत्तम्, अक्षैर्वृत्तमित्यादौ

---

1 अव्ययीभावे चाकाले (6-3-81)

2 यथाऽसादृश्ये (2-1-7)

3 अव्ययमिति योगविभागादत्र समास इष्यते।

4 यावदवधारणे (2-1-8)

5 सुप्प्रतिना मात्रार्थे (2-1-9)

6 अक्षशलाकासंख्याः परिणा (2-1-10)

नास्ति। कितवव्यवहारादन्यत्र तु अयथात्वेऽपि द्योत्ये नायं समासः अक्षेणेदं न तथा वृत्तं शकटेन यथापूर्वमिति। अव्ययीभावे केवलमेतावेव प्रतिपरी शब्दावुत्तरतः प्रयुज्येते। अत एवेहैवोत्तरपदार्थ प्राधान्यं च। अन्यत्तु सर्वमेवाव्ययं पूर्वत एव प्रयुक्तं द्रष्टव्यम्। अतः पूर्वपदार्थप्राधान्यमव्ययीभावस्य प्रसिद्धम्। प्रतिपरी अपीहैवोत्तरतः प्रयुज्येते। अन्यत्र तु सर्वत्र प्रागेव समासे। इत्थमेतावत्सु नित्यमव्ययीभावः। अथोत्तरतो विकल्पेनाव्ययीभावो विधीयते, तत्र समासश्च वाक्यं च द्विविधिं साधु।

अञ्चूत्तरशब्दा अपपरिबहिः शब्दाश्च पञ्चम्यन्तात् प्राक् प्रयुक्ता विकल्पेनाव्ययीभावाय भवन्ति[1] प्राग् वनम्। प्राग् वनाद् वृष्टिः। अपदक्षिणापथम्, अपदक्षिणापथात् वृष्टिः। परिविन्ध्यं परिविन्ध्यात् वृष्टो देवः। बहिः पाञ्चालं, बहि पाञ्चालाद् वृष्टो देवः। अपपरीवर्जने बहिः शब्दश्च।

मर्य्यादाभिविध्योरर्थयोरा शब्दः पञ्चम्यन्तात् प्राक् प्रयुक्तो विकल्पेनाव्ययीभावाय भवति[2] अवध्यर्थं परित्यज्यैव कृता सीमा मर्यादा[3]। आदक्षिणपथमादक्षिणापथादार्य्यावर्तः। अत्र नार्यावर्ते दक्षिणापथः संगृह्यते। आकुमारीक्षेत्रमाकुमारीक्षेत्राद् भारतवर्षः। अत्र भारतवर्षे कुमारिका क्षेत्रमपि संनिधत्ते।

आभिमुख्येऽर्थेऽभिप्रती लक्षणात् प्राक् प्रयुक्तौ विकल्पेनाव्ययीभावाय भवतः[4]। लक्षणे द्वितीया विधिरूक्तः। अत्राभिमुख्यप्रतियोगि लक्षणम्। प्रत्यग्नि शलभाः पतन्ति। अग्निं प्रति वा। अभिगन्धं भ्रमराः पतन्ति, गन्धमभि वा।

सामीप्ये विषयभूतेऽनुर्लक्षणात् प्राक् प्रयुक्तो विकल्पेनाऽव्ययीभावाय[5] भवति। यस्य सामीप्यं तदिह लक्षणम्। अनुवनमशनिर्गतः। वनसमीपं गत इत्यर्थः।

दैर्ध्ये विषयभूतेऽनुर्लक्षणात् प्राक् प्रयुक्तो विकल्पेनाव्ययीभावाय[6] भवति। यस्य दैर्घ्येण दैर्घ्यम् लक्षणीयं तदिह लक्षणम्। अनुगङ्गम्-वाराणसी। अनुयमुनं मथुरा। गङ्गादि दैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः। गङ्गाया अनु। यमुनाया अनु।

---

1 अपपरिबहिरञ्चवः पञ्चम्या (2-1-12)

2 आङ्मर्यादाऽभिविध्योः (2-1-13)

3 मर्यादाविशेष एव अभिविधिः, सैव हि मर्यादा यदा कार्येण अभिसंबध्यते तदा अभिविधिरित्युच्यते। आपाटलिपुत्रं वृष्टो देवः एष मर्यादा। आकुमारं यशः पाणिनेः एषा अभिविधिः इति न्यासः।

4 लक्षणेनाभिप्रती आभिमुख्ये (2-1-14)

5 अनुर्यत्समया (2-1-15)

6 यस्य चायामः (2-1-16)

पारेमध्येशब्दौ सप्तम्यन्तश्रुतौ षष्ठ्यन्तात् प्राक् प्रयुक्तौ विकल्पेनाव्ययीभावाय भवतः[1] पक्षे षष्ठीतत्पुरुषोऽपि विकल्पेन। पारे गङ्गं पश्य। पारेगङ्गादानय, गङ्गापारात्। गङ्गाया पाराद्वा। मध्ये गङ्गं पश्य। मध्येगङ्गादानय, गङ्गामध्यात् गङ्गाया मध्याद् वा।

वंश्यवाचकात् प्रागुक्तः संख्यावचनो विकल्पेनाव्ययीभावाय भवति[2]। विद्यावंशः प्रजननवंशश्चेति वंशो द्विधा। वंशे भवः वंश्यः। यथा त्रयो मुनयो वंश्या इति त्रिमुनि व्याकरणस्य। अत्र द्विगुना सस्थानता। अभेदविवक्षायां त्रिमुनिव्याकरणमित्यप्याहुः एकविंशतिर्भारद्वाजा वंश्या इत्येकविंशति भारद्वाजम्। अत्र बहुव्रीहिणा सस्थानता।

समाहारे समासार्थे नदीवचनात् प्रागुक्तः संख्यावचनो विकल्पेनाव्ययीभावाय भवति[3]। सप्तगङ्गम्, सप्तानां गङ्गानां समाहारः। द्वियमुनं द्वयोर्यमुनयोः समाहारः। अत्र द्विगुना संस्थानता।

संज्ञा शब्देऽन्यपदार्थे गम्यमाने नदीवचनात् प्रागुक्तशब्दोऽ[4]व्ययीभावाय भवति[5]। उन्मत्तगङ्गम् नामदेशः। लोहितगङ्गम् नामदेशः। सप्तगोदावरम्। नदीशब्देनापि समासो दृश्यते। पञ्चनदम्, सप्तनदम्, एकनदम्। नदी शब्दस्याकारान्तत्वमव्ययीभावे भवति[6]। अत्र बहुव्रीहिणा संस्थानता।

**तिष्ठद्ग्वादयोऽव्ययीभूता निपात्यन्ते[7]।**

यस्मिन् गावो दोहाय तिष्ठन्ति स कालः तिष्ठद्गुः। प्रथमरात्रेरर्द्धघटीत्येके। प्रावृट्काल इत्यन्ये। यस्मिन् गावो वहन्ति स कालो वहद्गु। संगवकाल इत्येके। शरत्काल इत्यन्ये। तिष्ठद्गु त्वयात्र स्थेयं, वहद्गु तु नूनं क्षेत्रे गम्यमित्याह। कालविशेषविषयतायामेतौ शब्दौ। बहुव्रीहिणा च संस्थानता भवति। आयती गवादीनि नित्यं प्रथमान्तानि। तिष्ठद्ग्वादीनां पदान्तरेण सह पुनः समासो नास्ति। परमं तिष्ठद्गु। कथं तर्हि- आदिष्ठद्गु जपन् संध्यां प्रकान्तामायतीगवम्। प्रातस्तरां पतन्त्रिभ्यः प्रबुद्धः प्रणमन् रविमिति भट्टिप्रयोगः? उच्यते द्वन्द्वतत्पुरुषवादयो विजातीयाः प्रतिषिध्यन्ते न

---

1 पारे मध्ये षष्ठ्या वा (2-1-18)
2 संख्या वंश्येन (2-1-19)
3 नदीभिश्च (2-1-20), समाहारे चायमिष्यते (वा. 1246)
4 नदीवाचक इत्यर्थः।
5 अन्यपदार्थे च संज्ञायाम् (2-1-21)
6 नदीपौर्णमास्याग्रहायणीभ्यः (5-4-110)
7 तिष्ठद्गुप्रभृतीनि च (2-1-17)

पुनरव्ययीभावोऽपि। किञ्च आतिष्ठदगु इति पद द्वयं व्यस्तमेवोपगम्यते न तु समस्तमित्यदोषः। दोहार्थं जलपानार्थं निवासार्थं चायत्यो गावो यत्र काले स आयतीगवं सांयकालः। आयत्य आगच्छन्त्यः अत्र प्रथमा समानाधिकरण्येऽपि सदादेशः। तत्पुरुषाभावेऽपि समासान्ताकारः। पुंभावाभावाश्चैतानि प्रतिपदोक्तानि कार्य्याणि। आगच्छन् हायनो यत्र स कालविशेषः स्यादायतीसमम्। वसन्त इति केचित्। संह्रियमाणानि वुसानि यत्र काले। संहृतानि वुसानि यत्र.। खलं धान्यवपन स्थानं, तत्र वुसानि यस्मिन् काले। सप्तम्या अलोपः वुसं यवादि धान्यत्वक्। तस्य संह्रियमाणस्य संहृतस्य खलेऽवस्थाप्यमानस्य च कश्चन समयोनिर्णीतो भवति कृषीवलानाम्। तत्रेते शब्दा निपात्यन्ते। एवं यवस्यापि। पूंवा पूयमाना वा यवा यत्र काले। पूवनं हि वायुना तुसनिवारणम्। लूनयवम्। लवनं क्षेत्रे छेदनम् कालविषयतायामेवैते शब्दा निपात्यन्ते। दशादिविषयतायां तु बहुब्रीहिः। तिष्ठदगुः। तिष्ठद्गवो ग्रामाः। वहद्गुर्हलपंक्तिः। वहदगवः कुटुम्बिनः। आयत्यो गावो यत्र स आयदगु। लूनयवेषु क्षेत्रेषु वसतीत्वादि। संप्रतीति प्रादि संघातो वर्तमानकालार्थः, स एवं न सम्पर्कादसंप्रति। समा भूमिर्यत्रेति वा भूमेः समत्वं वा समभूमीति शाकटायनः। समं भूमीति केचिदिच्छन्ति। समभूमयो वीथय इति बहुब्रीहिर्न निवार्य्यते। एवं सतपदातीति शाकटायनः। समं पदातीति केचित्। समपदातयो राजान् इति बहुब्रीहिश्चेष्यते। दुष्टत्वं समाया वा दुष्टाः समा यत्रेति वा दुष्षमम्। निर्गता समा यस्मादिति वा निर्गतत्वं समाया वा निष्षमम्। समेन वा विग्रहः। शोभनत्वं समाया वा। एवं विषमं पापसमं च। पुण्यसमं च। प्रगतत्वमहां प्रगतमह इति वा प्राह्नम्। प्रगतत्वं रथस्य, प्रभूता वा रथाअस्मिन् देशे प्ररथम्। प्रस्तुता दक्षिणादिश्यं प्रस्तुता वा दक्षिणस्याः प्रदक्षिणम्। प्रस्तुत्य दक्षिणतो भ्रमति। भोज प्रदक्षिणं वाममित्याह। प्रगता मृगा यत्र काले यतो वारण्यात् तत्प्रमृगम्।

**तिष्ठद्गवादय उक्ता ऊनत्रिंशत् परेऽव्ययीभूताः।**
**तिष्ठद्ग्वपि च वहदग्वायतीगवं चायती समं चापि ॥1॥**
**संह्रियमाणबुसं खलु संहृतयवमपि खलेबुसं तद्वत्।**
**संह्रियमाणयवं खलु संहृतयवमपि खलेयवं तद्वत् ॥2॥**
**संप्रति तद्वदसंप्रति पूतयवं पूयमानयवम्।**
**समभूमि समपदाति च लूनयवं लूयमानयवम् ॥3॥**
**दुष्षममपि निष्षममपि सुषमं विषमं तथापसमम्।**
**पापसमं पुण्यसमं प्राह्णं प्ररथं प्रदक्षिणं प्रमृगम् ॥4॥**

तदित्थमव्ययीभावस्य विधितन्त्रमादिष्टम्।शेषतन्त्रमतः परमादिश्यते।

## अनुविधिः

उपसर्जनम्, समासान्तः, विकारादेशः, विभक्त्यलोपः, पुंवद्भावः, लिङ्गोद्देशः, वचनोद्देशः स्वरोद्देशश्चेति। अष्टावेतेऽव्ययीभावाश्रय विधयो भवन्ति।

समासे यस्य प्रथमप्रयोगो नियम्यते तदुपसर्जनम्[1]।

प्रयोगविधिश्च समास विधिना सहैवोपदर्शितः। अथ कस्यचिदव्ययीभावस्यान्तेऽकार प्रत्ययो भवति स प्रदर्श्यते--

## समासान्तः

**अव्ययीभावस्योत्तरपदभूताः शरदादयोऽकारान्ताः संपद्यन्ते[2]।**

**शरदादयोऽष्टादश।**

शरदिति, यत्, तत्, कियदिति, विडिति, विपाड्, दृक्, च दिक् चतुरूपानत्। चेतो जरो मनोऽनस्त्यदिति च हिमवान्नड्वान् द्यौः।

केचिदत्र पथि, हिरुग्, विच्छब्दानपि पठन्ति। शरदः समीपमुपशरदम्। यस्य समीपमुपयदम्। अधियदम्। तस्य समीपमुपतदम्। अधितदम् कियतीत्यधिकियतम्। उपकियतम्। विशीत्यधिविशमुपविशम्। प्रतिविपाशम्। विपाशाशब्देन सिद्धेऽपि विपाद् शब्दार्थमिदमुच्यते। दृशोः समीपमुपदृशम्। दिशं दिशं प्रति प्रतिदिशम्। दिशा शब्देनापि सिद्धमेतत्। चतुरश्चतुरः प्रति प्रतिचतुरम्। उपचतुरम्। उपोपानहम्। प्रतिचेतसम्। उपजरसम्। जरा शब्देनाव्ययीभावो नास्ति स्वभावात्, जरश्शब्देन कृतार्थत्वाच्च। प्रतिमनसम्। प्रत्ययनसम्। उपानसम्। अनः शब्दः शकटे जले च वर्तते। तच्छब्द समानार्थस्त्यच्छब्दः। उपत्यदम्। उपहिमवतम्। अधिहिमवतम्। उपानडुहम्। प्रत्यनडुहम्। प्रतिदिवम्। अनुदिवम्।

**प्रतिपरसमनुभ्योऽक्ष्णष्टिलोपश्चाकारान्तत्वं च[3]**

अक्षि शब्दस्येन् भागष्टिः। अक्षि अक्षि प्रति प्रत्यक्षम्। अक्ष्णः परस्तात् परोऽक्षम्। परः शब्दोऽयं सान्तो निपातो नियतविषयः। परोरजसे। परोऽवरम्।

---

1 प्रथमानिर्दिष्टं समास उपसर्जनम्(1-2-43) उपसर्जनं पूर्वम् (2-2-30)

2 अव्ययीभावे शरत्प्रभृतिभ्यः(5-4-107)

3 प्रतिपरसमनुभ्योऽक्ष्णः (ग 148) यस्येति च (6-4-148)

पारोवर्य्यम्। परस्परम्। परः शतं परः सहस्त्रमित्याद्यनेक प्रयोगदर्शनात्। यत्तु ''कथं पारोवर्य्यविदिति।'' असाधुरेवायमिति कौमुद्यां दीक्षितो व्याचष्टे[1] तत्तस्य साहसमात्रम् अक्ष्णा युगपदिति वा प्रत्यक्षम्। यौगपद्ये प्रतिशब्दः। अक्ष्णः पश्चात् परोऽक्षम्। पश्चादर्थे परः शब्दः। प्रत्यक्षं हि शत्रवो विनयेनोपतिष्ठन्ते परोक्षं त्वनर्थाय सज्जन्ते। परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनमित्यादावप्यव्ययीभावः। अक्षिप्रतिगतं प्रत्यक्षम्। अक्ष्णःपरोभूतं परोक्षमिति तत्पुरुषावपि जायेते तेन प्रत्यक्षोऽर्थः। परोक्षा क्रियेत्यादयोऽपि प्रयोगा उपपन्नाः। अक्ष्णः समीपं समक्षम्। अक्ष्णो योग्यमन्वक्षम्। अधियुक्तमित्यर्थः। अधोक्षजादिशब्दे चक्षुरादि सर्वेन्द्रियवाची दृश्यतेऽक्षशब्दः, तेन सिद्धऽप्यक्षिशब्दार्थ वचनम्। अन्यथा प्रत्यक्षीत्यपि स्यात्। 'द्वितीये चानुपाख्ये' इति पाणिनिवचनेऽनुपाख्यमप्रत्यक्षमित्यर्थमाचष्टे। तत्रोपाख्यशब्दोऽयमुपाक्ष शब्दस्य विकृत इति विज्ञायते स चाक्षशब्दादेव निर्वाह्यः। अक्षमुपगतमिति वा, अक्षस्य समीपमिति वा व्युत्पत्त्या तत्सिद्धेरित्यूह्यम्।

अन्नन्तस्योत्तरपदस्याव्ययीभावे टिलोपश्चाकारान्तत्वं च[2]। अन् भागदिष्टः। राज्ञ समीपमुपराजम्। आत्मनीत्यध्यात्मम्।

नपुंसकान्नन्तस्योत्तरपदस्याव्ययीभावे विकल्पेन टि लोपश्चाकारान्तत्वं[3] च। उपचर्मम्। उपचर्म्म। प्रतिकर्म्मम् , प्रतिकर्म। शर्म्मणां समृद्धिः सुशर्म्मम् सुशर्म्म।

निरनुनासिकस्यार्शान्ता अव्ययीभावस्योत्तरपदभूता विकल्पेनाकारान्ताः[4] संपद्यन्ते। क, च, ट, त, पाः। ख, छ, ठ, थ, फाः। ग, ज, ड, द, वाः। घ, ऊ, ढ, ध, भाः। इति निरनुनासिकस्पर्शाः। प्रतित्वचं प्रतित्वक्। प्रतिवाचं, प्रतिवाक्। जगतीत्यधिजगतम्। अत्यूर्जम्, अत्यूर्क्। प्रतिसंपदं प्रतिसंपत्। उपसमिधम् उपसमित्।

नदीपौर्णमास्याग्रहायणीनामव्ययीभावस्योत्तरपदभूतानां टिलोपश्चाकारान्तत्वं चादिश्यते विकल्पेन[5]।

---

1 वैयाकरणसिद्धान्तकौमुद्यां सूत्र संख्या 1811 (5-2-10)

2 अनश्च (5-4-108), नस्तद्धिते (6-4-144)

3 नपुंसकादन्यतरस्याम् (5-4-109)

4 झयः (5-4-111)

5 नदीपौर्णमास्याग्रहायणीभ्यः(5-4-110)

उपनदम्, उपनदि वा गृहं क्रियते। प्रतिपौर्णमासं प्रतिपौर्णमासि वा स आयाति। उपाग्रहायणमुपाग्रहायणि वा गर्भो जातः। टिलोप संनियोगशिष्टमकारान्तत्वं तदभावे न प्रवर्तते।

**गिरेरव्ययीभावोत्तरपदस्य टिलोपे चाकारान्तत्वं च सेनकः कुरुते[1]।**

उपगिरम्। इतरलोकसाधारण व्यवहारे तु नाकारान्तता। उपगिरि वृष्टो देवः। तद्धिता अप्येते स्वार्थिकाः समासासाधारण्यादिहैवोपदिश्यन्ते।

## विकारादेशः

विकारो द्वेधा- समासान्तनिमित्तः, पदनिमित्तश्च। तत्राद्यः समासान्तविधिना सहैवोपदर्शितः। पदनिमित्तः प्रदर्श्यते--

**सह शब्दस्य ह शब्दो विलुप्यतेऽव्ययीभावे यदि कालवाचकः परतो न स्यात्[2]।**

चक्रेण युगपत् सचक्रं वाणो गतः। पूर्वाह्णेन सदृशः, सहपूर्वाह्णं सायाह्नः। इतोऽन्येऽपि विकारा वर्गसन्धिकृताः सति निमित्ते सर्वत्र नीयन्ते।

## विभक्त्यलोपः

1. **अव्ययीभावे षष्ठ्यन्तार्थात् प्राक्प्रयुक्तयोः पारेमध्ये शब्दयोः सप्तमी न लुप्यते[3]।**
2. **खलेवुसादिषु पूर्वपदात् सप्तमी न लुप्यतेऽव्ययीभावे[4]।**
   खलेवुसम्। खलेयवम्।
3. **यासामलोपो[5] विधीयते ततोऽन्यास्तत्र समासे विभक्तयो लुप्यन्ते[6]। चक्रेण सह सचक्रम्।**

---

1 गिरेश्च सेनकस्य (5-4-112)
2 अव्ययीभावे चाकाले (6-3-81)
3 पारे मध्ये षष्ठ्या वा (2-1-18)
4 तिष्ठद्गुप्रभृतिषु पाठात्
5 यासामलोपं इति मूलग्रन्थे
6 सुपो धातुप्रातिपदिकयोः (2-4-71)(नाव्ययीभावादतः) (2-4-83)

## पुंवद्भावः

1. **संज्ञायां नदीविशेषणं पुंवत् स्यादव्ययीभावे** [1]**।**

**उन्मत्तगङ्गम् नामदेशः। लोहितगङ्गम्।एकनदम्।**

2. **तिष्ठद्गवादिषु पूर्वं पुंवत्** [2] **।**

तिष्ठन्त्यो गावो यस्मिन् काले भवन्ति तथा कालः तिष्ठद्गुः। वहद्गुः।

## लिङ्गवचनोद्देशः

1. **सर्वोऽव्ययीभावो नपुंसकमेकवचनान्तश्चादिश्यते** [3]**।**

नपुंसकवत् सर्वाणि कार्याणि भवन्ति। दीर्घान्तस्य प्रातिपदिकस्य ह्रस्वः[4]। अनुगङ्गं काशी। अधिरि, अधिगु।अकारान्तादम् प्रथमैकवचनम्। उपगृहम्। इत्यादि।

अवान्तरपदलिङ्गं तु प्रकरणान्तराद् विज्ञेयम्।

## अथ स्वरः

अथाव्ययीभावे स्वरं वक्ष्यामः पूर्वप्रकृतिभावं परादिं समासान्तं च। अन्ये स्वरा अव्ययीभावे न सन्ति।

**अपपरी प्रत्युपौ च प्रकृत्या स्युर्वर्ज्यमानेष्वहोरात्रावयवेषु च परेषु** [5]**।**

उपसर्गा आद्युदाता अभिवर्जमिति सामान्यशास्त्रम्। तेन प्रकृतिभावात् सर्वत्र पूर्वादिः स्वरः सिद्धः। अपत्रिगर्त्तं वृष्टो देवः। परित्रिगर्त्तम्। त्रिगर्तप्रदेशं वर्जयित्वाऽवर्षदिति वर्ज्यमानता। अपपर्योरेव वर्ज्यमानार्थतया तयोरेव वर्ज्यमानोदाहरणम्। अहोरात्रावयवा अपि तयोर्वर्ज्यमानरूपा एवोदाहरणानि। अपपूर्वाह्ण मा सेवते। परिसायाह्नम्।

---

1 स्त्रियाः पुंवद्भाषित (6-3-34)

2 तिष्ठद्गुप्रभृतीनि च (2-1-17)

3 अव्ययीभावश्च (2-4-18) नाव्ययीभावादतोऽम्त्वपञ्चम्याः(2-4-83)

4 ह्रस्वो नपुंसके प्रातिपदिकस्य (1-2-47)

5 परिप्रत्युपापा वर्ज्यमानाऽहोरात्रावयवेषु (6-2-33)

प्रतिपूर्वाह्णम्। प्रत्यपररात्रम्। उपपूर्वरात्रम्। उपसायाह्नम्। सर्व एवाद्युदात्ता एते। बहुब्रीहितत्पुरुषयोरप्यपपरि प्रत्युपपूर्वयोराद्युदात्तत्वं साधारणम्। इति पूर्वप्रकृतिभावः।

## परादिः

तीरतूलमूलकूल शालाक्षसमानामुत्तरपदानामादिरूदात्तः स्यादव्ययीभावे [1]। परितीरम्। उपतूलम्। उपमूलम्। उपशालम्। उपाक्षम्। सुषमम्। विषमम्। दुःषमम्। निःषमम्। अपसमम्। आयतीसमम्। उपसमम्। पुराणसमम्। तिष्ठद्गुप्रभृतिष्वेते। मध्योदात्तः।

## समासान्तस्वरः

अन्ये तु कृतसमासान्ताश्चाकृतसमासान्ताश्च सर्व एवाव्ययीभावा अन्तोदाताः [2]।

उपशरदम्। उपजरसम्। अध्यात्मम्। उपसमिधम्। त्रिमुनि एकपरि। यावदायम्।

तदित्थम्--उपसर्जनसिद्धिः। समासान्तः। विकारादेशः विभक्ति लोपालोपौ। पुंवद्भावः। लिङ्गविधिः। वचनविधिः। स्वरविधिश्चेत्यष्टधाविभक्तं शेषतन्त्रं वृत्तम्।

## इत्यव्ययीभावस्वराः



1 कूलतीरतूलमूलशालाऽक्षसममव्ययीभावे (6-2-129)

2 समासस्य (6-1-223)

# तत्पुरुषसमासः

अथ तत्पुरुषः। स पुरुषः तत्पुरुषः अथवा तस्य पुरुषस्तत्पुरुषः। अयमप्येकः समासः। स नाव्ययीभावः। सार्वविभक्तिकतयाऽनव्ययत्वात् पुंलिङ्गत्वाच्च। न द्वन्द्वः। अद्विवचनान्तत्वात् पुंलिङ्गत्वाच्च। न बहुब्रीहिः। वृत्तिमत्पदार्थकत्वेन निर्वाहसम्भवेऽन्य–पदार्थकल्पनाया अनौचित्यात्। तथा च परिशेषात् तत्पुरुष शब्दे यः समासस्तादृशः सर्वोऽपि समासस्तेनैव तत्पुरुषशब्देनोपलक्ष्यते।

तत्पुरुषे उत्तरपदार्थप्राधान्यम्- इति प्रायोवादः। अतिमालादौ तत्पुरुषे तद्व्यभिचारात्। वस्तुतस्तु वृत्तिमदेकपदार्थे प्राधान्ये सत्यनव्ययत्वं तत्पुरुषलक्षणम्।

तत्पुरुषस्त्रिविधः – अभिन्नतत्पुरुषः (कर्मधारयः), भिन्नतत्पुरुषः, उत्कीर्णतत्पुरुषश्च। तत्राभिन्नतत्पुरुषः कर्मधारय इत्युच्यते। तत्र च पूर्वोत्तरपदयो समानविभक्तिकत्वं तन्त्रम्। अर्थतः सामानाधिकरण्यं च। अत एवायं कर्मधारयः समानाधिकरण तत्पुरुष इत्यप्युच्यते। समानाधिकरणत्वादेव च कर्मधारयसंज्ञाप्युपपद्यते[1]। कर्मधारय इति यदाह स्वपदकर्मधारक इत्येवैतदाह यदस्य समासस्य स्वं पदम् तस्य चैकैकस्य तदर्थे बुद्धिप्रापणरूपं यादृशं कर्म, तादृशमेव कर्म्म यो धारयति स कर्मधारयः। स्वपद समान व्यापारः इत्यर्थः। अथवा विपर्य्येणैतद् द्रष्टव्यमृ। स्वीयेनैकैकेन पदेन यः स्वं कर्म्म धारयति स कर्मधारयः। यत्रार्थेऽसौ बुद्धिं गमयति तत्रैवामुष्य पदमप्येकैकं बुद्धिं गमयति। अथवा यमर्थमुद्दिश्यप्रवृत्तिस्तत्कर्म, न त्वत्र क्रिया कर्म्म। पदार्थस्य पदकर्मत्वात्। दृश्यत च निरुक्तादिष्वर्थे कर्मशब्दव्यवहारः। तथा चास्य समासस्य योऽर्थस्तमेवासौ स्वेनैकैकेन पदेनाऽपि धारयतीति कर्मधारयः कथ्यते। अयं भावः। अन्यः सर्वोऽपि समासः स्वपदसमान कर्मा न दृश्यते। द्वन्द्वस्तावद् घटपटौ घटपटमित्युभयविधोऽपि यमर्थमाह न तमर्थमेको घटो वा पट एव वा प्रत्याययितुमीष्टे। घटेन पटानवबोधनात् पटेन च घटानवबोधनात्। द्वन्द्वेन तु युगपत् उभयावबोधनं दृश्यते तस्मद्विभिन्न कर्म्मता। उपकृष्णमित्यव्ययीभावोऽयमर्थमाह न समुपशब्दः कृष्णशब्दो वा प्रत्याययति। केवलस्योपशब्दस्य प्रयोगाभावात्। कृष्णशब्देन च कृष्णसामीप्यार्थानवबोधनात्। तस्माद् विभिन्नकर्मता। राजपुरुष इति भिन्न तत्पुरुषो राजसम्बन्धविशिष्टं पुरुषमाचष्टे न राजानमाचष्टे राजशब्दस्तु राजानमेवाह न

---

1 तत्पुरुषः समानाधिकरणः कर्मधारयः (1-2-42)

पुरुषमप्याह। तस्माद्विभिन्न कर्मता। पीताम्बर इति बहुब्रीहिर्न पीताम्बरमाचष्टे किं तर्हि पीतेनाम्बरेण सम्बन्धयुक्तं कंचिदन्यं पुरुषमवगमयति स तस्यार्थः। पदं तु तस्यैतत् पीतं वाम्बरं वा न तमर्थं गमयति। तस्माद्विभिन्न कर्मता। अथैक एवायं समासः समानाधिकरणो नाम, यः समानकर्म्मा भवति। पीतमम्बरं पीताम्बरमिति। यदेव द्रष्टमभेदसंयोगात् समासे नाभिगम्यते तदेव तु जातिसंयोगात् अम्बरशब्देन गुणसंयोगात् पीत शब्देन चैकैकेनापि शक्यते बुद्धावानेतुम्। एकत्राभेदमुखे नान्यत्र तु जातिमुखेन वेत्येवं प्रतिपादननिमित्तभेदेऽपि प्रातिपाद्योऽयमेक एवार्थो अभिधत्ते। तस्मादयं समासः स्वपदेनापि स्वकर्मधारयतीति हेतोः कर्मधारय इत्युच्यते।

अभिन्नतत्पुरुषः षोढा--विशेषणादिः, विशेष्यादिः, अनियतादिः, विशेषणम्, उपमा, लोपी चेति भेदात्। यत्र पूर्वपदं विशेषणमुत्तरपदं विशेष्यं भवति स विशेषणादिः। यत्र तु पूर्वं विशेष्यमुत्तरं विशेषणं स विशेष्यादिः। यत्र विशेष्यादिर्वा स्याद्विशेषणादिर्वेति यथेच्छमुभयथा शक्यते प्रयोक्तुं सोऽनियतादिः। यत्र विशेषणमेव विशेषणान्तरसंसर्गात् स्वरूपतः संपद्यते स विशेषण तत्पुरुषः। यत्र पूर्वपदमुत्तरपदं वा नियमेनोपमानवचनं स्यात् स उपमान तत्पुरुषः। अथ यत्र समासे पूर्वपदस्य पदद्वयघटितस्यैकं पदं विलुप्यते स लोपीकर्मधारयः। इत्येवं षडेते कर्मधारयाः क्रमेण प्रदर्श्यन्ते। तत्रादौ--

## अभिन्नतत्पुरुषः (कर्मधारयः)

### 1. विशेषणादिः कर्मधारयः

(अ) विशेषणं विशेष्यात् प्राक् प्रयुक्तं कर्म्मधारयो बहुलं तादात्म्ये [1]। द्वयोः पदार्थयोस्तादात्म्यप्रतिपत्तिरेव तयोः पदयोः समासेनार्थः। व्यासे तु विशेषणस्था विशेष्यसमानविभक्तिस्तत्र विनियुज्यते। अत एव समासो वा व्यासो वा समानार्थावेतौ भवतः। नीलघटः नीलोघटः। यद्यपि समान विभक्तिकत्वं सर्वासु विभक्तिषु संभवति तथाऽपि लाघवात् प्रथमान्तेनैव निदर्शनमत्र क्रियते प्रायेण। कृष्णः सर्पः कृष्णसर्पः। यस्तु कृष्णसर्पो जातिविशेषः सर्पस्य, तत्र सामर्थ्यान्नित्यं समासः। वाक्येन जात्यनवबोधात्। समस्तस्यैव जातिविशेषप्रयोगप्राचुर्य्येण समयलाभात्।

**विशेषणं द्वेधा**- उद्देश्यकोटिप्रविष्टं विधेयं च। सुन्दरं पुस्तकं मदीयमित्यत्र मदीयमितिविधेयम् सुन्दरमुद्देश्यकोटिकम्। सुन्दरमुद्दिश्य सुन्दरत्वविशिष्टे

---

1 विशेषणं विशेष्येण बहुलम् (2-1-57)

मदीयत्वविधानात्। मदीयं पुस्तकं सुन्दरमित्यत्र तु सुन्दरं विधेयम् मदीयं पुनरुद्देश्यकोटिकम्। मदीयमुद्दिश्य मदीयत्वविशिष्टे सुन्दरत्व विधानात्। तत्रोद्देश्यकोटिकविशेषणमेवोत्तरस्मिन् विशेष्ये विकल्पेनोपसर्जनं भवति। तत्रावश्यं किञ्चिदन्यद्विशेषणं विधेयं भवति। यथा नीलघटो द्रष्टव्यः, नीलघटोऽस्तीति। अथ यद्विधेयविशेषणं तस्य विशेष्यपदेन समासो नास्ति, सामर्थ्यालाभात्। विधानात् प्राक् विशेषणत्वं वक्तुमशक्यम्। विधानोत्तरं विधेयाभावाद्वाक्यप्रयोग एव कर्तुमशक्यः। सर्वं हि वाक्यं किञ्चिदद्विधातुं प्रवर्तते। न त्वविधायकं वाक्यं भवति। तस्माद्वाक्ये विधेयविशेषणेन समासो नास्ति रामो जामदग्न्यः। उद्देश्यकोटिकत्वे पुनर्भवत्येव जामदग्न्यरामो निर्दिश्यते इति।

(ब) पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराः विशेष्यात् प्राक् प्रयुक्ताः कर्मधारयः[1]। पूर्ववैयाकरणः। अपराध्यापकः। प्रथमकल्पः। चरमवर्णाः। जघन्यजातिः। समानप्रक्रमः। मध्यदेशः। मध्यमग्रामः। वीरपुरुषः। नियतप्रयोगविषयत्वात समासेन समानार्थ वाक्यमेतेषु नास्तीत्येतदावेदयितुं पृथक् समासोऽयमुक्तः। अन्यत्र पूर्वेण विकल्पः[2]।

(स) अपरार्द्धःपश्चार्द्धो वा समानार्थः कर्मधारयः[3]। पश, च,[4] आत् -- इति निपातसमाहारोऽन्यत्र प्रयुज्यते पश्चादिति। आदिति पञ्चमीविभक्तिः। सा तद्धितेऽपि प्रयुज्यते पश्चात्तनः पाश्चात्यः समासेऽप्यन्यत्र प्रयुज्यते। पश्चातकृतं पाश्चात्कृत्यम्। क्वचित्तु तद्धिते न प्रयुज्यते, पश्चिमः। क्वचित्समासेऽपि न प्रयुज्यते पश्चादर्धः पश्चार्द्धः। पश्च शब्दोऽत्र पश्चात्तनपर इति कर्मधारयत्वम्।

(द) क्षेपार्थः किं शब्दोविशेष्यवचनात् प्राक् प्रयुक्तः कर्मधारयः[5]। कुत्सितो राजा किं राजा। यो न रक्षति।

(य) जातिपरिप्रश्ने कतरकतमौ जातिवचनात् प्राक् प्रयुक्तौ कर्मधारयः[6]। कतरकठः। कतमकलापः। गोत्रं च चरणानि चेति वचनात्[1] कठादीनां जातित्वम्।

---

1 पूर्वपरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च (2-1-58)

2 विशेषणं विशेष्येन बहुलम् (2-1-57)

3 अपरस्यार्थे पश्चभावो वक्तव्यः (वा.3253)

4 – पर च इति मूलग्रन्थे।

5 किं क्षेपे (2-1-64)

6 कतरकतमौ जातिपरिप्रश्ने (2-1-63)

(र) एकसर्वजरत्पुराणनवकेवलाः विशेष्यवचनात् प्राक् प्रयुक्ताः कर्मधारयः[2]। अयमपि समासः पृथगुक्तो नियतप्रयोगविषयत्वं बोधयितुम्। एकनाथः। सर्वयाज्ञिकाः, जरन्नैयायिकाः, पुराणमीमांसकाः, नवपाठकाः। केवलवैयाकरणाः। एक शब्दसन्निधाने वीरशब्दस्य विशेष्यत्वमेवोपपद्यते न विशेषणत्वम्। अतस्तत्रैकवीरः इति जायते न तु पूर्वनियमाद्वीरशब्दः पूर्वं प्रयोज्यः। विश्वेदेवा इति नियतसन्निधानप्रयोगेऽपि वाक्यमेवेदं न समासः। वैश्वदेव्यमित्यादि तद्धितप्रयोगे दृष्टः समासस्तु पूर्वनियमेन सिद्धः[3]।

(ल) सन्महत् परमोत्तमोत्कृष्टाः पूज्यमानात् प्राक् प्रयुक्ताः कर्मधारयः[4]। सद्वैद्यः। महावैयाकरणः। कर्मधारयबहुब्रीह्योः पूर्वपदस्य महत आकारो वक्ष्यते। परमप्रियः, परमोदारः, परमधानम् ,उत्तमाङ्गम्। उत्कृष्टधर्मः।

(व) पापाणके कुत्स्यमानात् प्राक् प्रयुक्ते कर्मधारयः[5]। पापनापितः, अणककुलालः।

(श) विशेष्यवचनात् प्राक् प्रयुक्ते दिक्संख्ये संज्ञायामेव कर्मधारयः[6]। वाक्येन संज्ञानवगमान्नित्यसमासः। पूर्वेषुकामशमी सप्तर्षयः, सप्त ऋषयो वा अन्यत्र नास्ति। उत्तरा वृक्षाः, पञ्च ब्राह्मणाः। त्रिलोकनाथः इत्यत्र तु समाहारे द्विगुः स्यान्नपुंसकत्वं च विकल्पेन।

## 2. विशेष्यादिः कर्मधारयः

कुत्सनविशेषणानि कुंत्स्यमानात् परतः प्रयुक्तानि कर्मधारयः[7]। वैयाकरणखसूचिः। मीमांसकदुर्दुरूटः।

वृंदारकनागकुञ्जराः पूज्यमानात् परतः प्रयुक्ता कर्मधारयः[8]। गोवृन्दारकः, पुंनागः, पुरुषकुञ्जरः। वृन्दारकादीनामुपमानत्वविवक्षायां श्रेष्ठार्थतात्पर्य्यकत्वामात्रे

---

1 गोत्रं च चरणानि च, म. भा. (4-1-63)
2 पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन (2-1-49)
3 विशेषणं विशेष्येण बहुलम्(2-1-57)
4 सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः (2-1-61)
5 पापाणके कुत्सितैः(2-1-50)
6 दिक्संख्ये संज्ञायाम् (2-1-50)
7 कुत्सितानि कुत्सनैः (2-1-53)
8 वृन्दारकनागकुञ्जरैः पूज्यमानम्(2-1-62)

समासवचनमेतत् उपमानत्वविक्षायां तूपमित समासो वक्ष्यते। पोटायुवतिस्तोककतिपय-गृष्टिधेनुवशावेहद्वष्कयणी प्रवक्तृश्रोत्रियाध्यापकधूर्ता जातिवचनात् परतः प्रयुक्ताः कर्मधारयः[1]। इभपोटा- इभो हस्ती। पोटा स्त्री पुंसलक्षणा। इभयुवति। अग्निस्तोकः, उदश्वित्, कतिपयम्।गृष्टिः सकृत्प्रसूता। गोगृष्टिः। धेनुर्नवप्रसूतिका। गोधेनुः। वशा वन्ध्या। गोवशा। वेहद् गर्भघातिनी। गोवेहत् वष्कयणी तरुणवत्सा। गोवष्कयणी। कठप्रवक्ता। कठश्रोत्रियः कठाध्यापकः, कठधूर्तः।

प्रशंसा वचना जातिवचनात् परतः प्रयुक्ताः कर्मधारयः[2] मतल्लिका मचर्चिका प्राकाण्डमुद्धतल्लजौ।

प्रशस्तवाचकान्यमून्युपोत्तराणि जातितः।

गोमतल्लिका। गोमचर्चिका। गोप्रकाण्डम्। गवोद्धः। गोतल्लजः। प्रशस्तागौरित्यर्थः। मतल्लिकादयो नियतलिङ्गा न तु विशेष्यनिघ्नाः।

खलतिपलितवलिनजरतीशब्दाः युवशब्दाद् परतः प्रयुक्ताः कर्मधारयः[3]। उत्तरपदार्थप्रधाने समासे समस्तपदादेव लिङ्गावगमात् पूर्वपदस्य पार्थक्येन लिङ्गावगमनायाविनियोगात् युवशब्देनैव समाससिद्धिः। वाक्ये तु पदभेदाद्वृत्तिभेदाच्चोभयोः समानाधिकरणयोः समानाधिकरण्यं प्रतिपादयितुमेव तु पार्थक्येन लिङ्गावगमने विनियोग इत्युभयोरेकलिङ्गता। युवखलतिः। युवखलती। युवपलितः, युवपलिता। युववलिनः। युवजरतीयुवत्यामेवजरती धर्मोपलम्भेन तद्रूपारोपात् सामानाधिकरण्यम्।

अजातिवचनाः कृत्यप्रत्ययान्तात् तुल्यपर्य्यायवचनाच्च परतः प्रयुक्ताः कर्मधारयः[4] जातिवचनानां प्रतिषेधो गुणवचनानां क्रियावचनानां चोपसंग्रहार्थः। भोज्योष्णम्, तुल्यश्वेतः, सदृशश्वेतः।

श्रमणादयः कुमारशब्दात् प्राक् अनिर्द्धारित लिङ्ग एव कुमारशब्दः संसक्तः[5]। समस्तपदाल्लिङ्गावगमेऽपि तदेकदेशात्कुमारभागात् तदनवबोधात्। वाक्ये तु स्त्रीलिङ्गत्वं युक्तम्। कुमारी श्रमणा कुमारश्रमणा।

---

1 पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः(2-1-65)

2 प्रशंसावचनैश्च (2-1-66)

3 युवा खलतिपलितवलिनजरतीभिः(2-1-67)

4 कृत्यतुल्याख्या अजात्या (2-1-68)

5 कुमारः श्रमणादिभिः(2-1-70)

**श्रमणा च प्रव्रजिता कुला वन्धकी तथा ।**
**गर्भिणी तापसी दासी पण्डितोऽध्यापकः पटुः ।। 1 ।।**
**निपुणः कुशलस्तद्वच्चपलश्चाभिरूपकः ।**
**मृदुरित्येव मुदिताः शब्दा हि श्रमणादयः ।।2 ।।**

गर्भिणीशब्दश्चतुष्पाज्जातिवचनात् परतः प्रयुक्तः कर्मधारयः[1] । गोगर्भिणी ।

मयूरव्यंसकादयः कर्मधारया भवन्ति[2] ।

व्यंसकोधूर्तः--मयूरव्यंसकः । अन्योऽर्थः अर्थान्तरम्, द्रव्यान्तरम्, जात्यन्तरम्, स्त्र्यन्तरम्, राजान्तरम् ।

**मयूरव्यंसकश्छात्रव्यंसकोऽर्थान्तरादिकम् ।**
**कम्बोजमुण्डो यवनमुण्डोऽवश्यविधेयवत् ।। 1 ।।**
**अहमहमिका तद्वत् पुनर्दायः पुनर्वसू ।**
**श्वः श्रेयसं कान्दिशीको यदृच्छाश्वोवसीयसम् ।।2 ।।**

आहोपुरुषिकाऽन्येऽपि मयूरव्यंसकादयः ।

## 3. अनियतादेः कर्मधारयः

कडारादयः शब्दाः पूर्वतः परतो वा प्रयुक्ताः कर्मधारयः[3] ।।

कडारजैमिनिः । जैमिनिकडारः ।

**विद्धि कडारं गौरं जठरं मठरं च बर्बरं वधिरम् ।**
**कुब्जं खञ्जं खोडं खलतिं गडुलं च भिक्षुकं वृक्षम् ।। 1 ।।**
**काणं कुण्ठं पिङ्गं पिङ्गलतनुमपि गणे कडारादौ ।**
**काकं शुकं श्रृगालं प्रायं प्रकृतिं समं विषमम् ।।2 ।।**
**अक्षं नावं गोत्रं दिद्रोणं पञ्चकं च सा सत्रम् ।**
**प्रति परि अनु इति शब्दानप्येके तत्र कथयन्ति ।।3 ।।**[4]

---

1 चतुष्पादो गर्भिण्या (2-1-71)
2 मयूरव्यंसकादयश्च (2-1-72)
3 कडाराः कर्मधारये (2-2-38)
4 कडार, गडुल, काण, ख ज, कुष्ठ, ख जर, खलति, गौर, वृद्ध, भिकु, पिङ्गल, तनु, वटर काशिका वृत्तौ कडारादिगणे इमे एवं शब्दाः पठिताः सन्ति ।

## 4. विशेषणकर्मधारयः

पातानुपातादयः कर्मधारयाः क्रमविवक्षायाम्[1]। पूर्वं पतः पश्चादनुपातः। पातानुपातम्। पातस्याप्यनुपातत्वमनुपातस्य च पातत्वं क्रमानुरोधाद्विवक्षितमिति सामानाधिकरण्यम्। वादानुवादम्। यातानुयातम्। गत प्रत्यागतम्। यातायातम्। पुटापुटिका। क्रयाक्रयिका। फलाफलिका। मानोन्मानिका इत्यादि। आकृतिगणोऽयम्।

पूर्वकालिकत्वेन विवक्षितात् निष्ठान्तात् परतः प्रयुक्तः परकालिकत्वेन विवक्षितो निष्ठान्तः कर्मधारयः[2]। पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः। दृष्टस्मृतः।

अभूततद्भावविषयेभ्यः श्रेण्यादिभ्यः परतः प्रयुक्ताः कृतादयः कर्मधारयः[3]।

**अश्रेणयः श्रेणयः कृताः श्रेणीकृताः। एकीकृताः।**
**श्रेणी राशिः पूगो विशयो निचयो निधान एकश्च।**
**इन्द्रमुकुन्दौ देवो भूतो मुण्डो वदान्यश्च ॥1॥**
**अध्यापकाभिरूपक पटुपण्डितकुशल चपलाश्च।**
**निपुणः कृपणः श्रवणो ब्राह्मण उ क्षत्रियश्चेति ॥2॥**
**श्रेण्यादयो निरुक्ताः कृतादयश्चाथ कथ्यन्ते।**
**कृतमितमतोक्तभूताः कलितो दलितोऽवकल्पितो दृष्टः ॥3॥**
**संभावितावधारितनिराकृतोदाहृतोपकृताः।**
**उदितोऽपि समाम्नातोऽपि समाज्ञातः समाख्यातः ॥4॥**
**विश्रुत उपाकृतोऽन्येऽप्याकृतिसिद्धाः प्रयोगतो ज्ञेयाः।**
**श्रेण्यादिभ्यः परतः कृतादयोऽभूततद्भावे ॥5॥**

अनञ् विषिष्टात् निष्ठान्तात् परतः प्रयुक्तं नञर्थविशिष्टं समानप्रकृतिकं निष्ठान्तं कर्मधारयंः क्रियाविसमाप्तौ[4]।

कृतं च तदकृतं च कृताकृतम्। अर्द्धकृतमित्यर्थः। अशिता न शितेन जीवति क्लिष्टाक्लिशितेन। नञर्थविशिष्टमित्युच्यते। तेनेहापि समासः। कृतापकृतम्।

---

1 कृतापकृतादीनामुपसंख्यानम्॥ वार्तिक॥

2 पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन (2-1-49)

3 श्रेण्यादयः कृतादिभिः (2-1-59) श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम्(वा. 1296)

4 क्तेन नञ्विशिष्टेनानञ्(2-1-60)

भुक्तविभुक्तम्। पीतविपीतम्- इत्यादिः। सर्वत्र क्रियाया असमाप्तिर्गम्यते। प्रकृतिभेदान्नेह समासः। सिद्धं चाभुक्तं चेति।

इषत्छब्दात् परतः प्रयुक्तं गुणवचनं कर्म्मधारयः[1]। ईषत्पिङ्गलः। ईषद्रक्तम्, ईषत्पीतम्, ईषत्पाण्डुर्धूसरः।

वर्गवाचको वर्गवाचकात् परतः प्रयुक्तः कर्म्मधारयः[2]। कृष्णसारङ्गः, नीलश्वेतः, श्वेतरक्तः पाटलः। कृष्णलोहितो धूम्रः।

## 5. उपमितसमासः

अथ यत्र पूर्वपदमुत्तरपदं वा नियमेनोपमानवचनं स्यात्तादृशाः प्रदेशाः कर्मधारयस्य कथ्यन्ते।

उपमानवाचकात् परतः प्रयुक्तः सामान्यवचनः कर्मधारयः[3]। घन इव श्यामो घनश्यामः। इह पूर्वपदं पूर्वपदार्थसदृशे लाक्षणिकम्।

सामान्यवचनाप्रयोगे तूपमेयात् परतः व्याघ्रादिरूपमानवाचकः कर्म्मधारयः[4]।

पुरुषो व्याघ्र इव पुरुषव्याघ्रः। पुरुषर्षभः। चरणारविन्दम्। मुखचन्द्रः। इहोत्तरपदमुत्तरपदार्थसदृशे लाक्षणिकम्। सामान्यवचनप्रयोगे तु नायमुपमितसमासो दृश्यते। पुरुषो व्याघ्र इव शूरः।

**व्याघ्रः सिंहो हस्ती कुञ्जरशार्दूलनागमृष भक्षौ।**
**वृष वृकः वरह कितवाः सूर्यः सोमः पृषच्च चन्द्रश्च ॥1॥**
**किसलयपलाशपघ्नान्यरविन्दं पुंडरीमम्भोजम्।**
**अम्बुजः पङ्कज सरसिज सरोजकमलानि चन्दनं चतरुः ॥2॥**

व्याघ्रादिराकृतिगणः शिष्टप्रयोगादुन्नेयः। इमे च शब्दा उपमानत्वेन विवक्षिता उत्तरतः प्रयुक्ताः स्वगतपशुत्वजडत्वादिदोषं परित्यज्य श्रेष्ठत्वादिगुणं पूर्वपदार्थे उपसंक्रान्तं प्रत्याययन्ति तदुक्तम् –

**स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः।**
**सिंह शार्दूलनागाद्याः पुंसिश्रेष्ठार्थवाचकाः ॥1॥ इति**

---

1 ईषदकृता (2-2-7) ईषद गुणवचनेनेति वाच्यर्म् (वा.1316)

2 वर्णो वर्णेन (2-1-69)

3 उपमानानि सामान्यवचनैः(2-1-55)

4 उपमितं व्याघ्रादिभिः सामान्याप्रयोगे (2-1-59)

### 6. उत्तरपदलोपीकर्मधारयः

यत्र विशेषणस्य समस्त– पूर्वपदस्य विशेषणत्वसमर्पकमुत्तरपदं विलोप्य विशेष्यवचनात् प्राक्प्रयोगः क्रियते स शाकपार्थिवादिरुत्तरपदलोपी कर्म्मधारयः[1]।

शाकप्रियः पार्थिवः शाकपार्थिवः। शाकस्यप्रदता शाकेन प्रसिद्धो वा पार्थिवःशाकपार्थिवः। देवपूजको देवप्रधानो वा ब्राह्मणो देवब्राह्मणः। कुतपसौश्रुतः, अजातौल्वलिरित्यादि। एकशतं षष्ठ्यर्थः। तेन शाकस्य पार्थिवः शाकपार्थिवः। इत्येवं षष्ठीसमासेन गतार्थत्वादनारब्धव्योऽयं लोपीसमास इति मतम्।

तदित्थं युक्तो योग्यः संचारी विशेषणमुपमा पदलोपी चेत्येते षोढा विभक्ताः कर्म्मधारय संज्ञा अभिन्नतत्पुरुषाः प्रदर्शिताः। अतः परं भिन्न तत्पुरुषाः प्रदर्श्यन्ते। तेऽपि द्वितीया तत्पुरुषादि संज्ञाः षोढा भवन्ति। पूर्वपदविभक्तिभेदात्। तत्रादौ--

## भिन्नतत्पुरुषः

### 1. द्वितीयातत्पुरुषः

1. द्वितीयान्तात् परतः पूर्वतो वा प्रयुक्ते प्राप्तापन्ने तत्पुरुषः स्यात्[2]। सुखं प्राप्तः सुखप्राप्तः प्राप्तसुखो वा। रोगमापन्नो रोगापन्नः। जीविकां प्राप्तो जीविकाप्राप्तः प्राप्तजीविको वा जीविकापन्नः। आपन्नजीविको वा जीविकां प्राप्ता स्त्री प्राप्तजीविका, आपन्नजीविका-इत्यत्र तु प्राप्तापन्नयोः पूर्वपदयोः पुंवद्भावो वक्ष्यते[3]। बहुव्रीहिणाऽपि सिद्धत्येतत् कर्तृनिष्ठान्तार्थ तु सूत्रमिदम्।

**2. द्वितीयान्तात् परतः प्रयुक्ताः श्रितादयस्तत्पुरुषः स्यात्[4]।**
**श्रितं पतितमत्यस्तमतीतं गतमित्यपि।**
**गम्यादयः परेऽप्येवं मताः शब्दाः श्रितादयः ॥1॥**

---

1 शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् (वा. 1310)

2 द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः(2-1-14) प्राप्तापन्ने च द्वितीयया (2-2-4)

3 प्राप्तापन्ने च द्वितीयया (2-2-4) इह सूत्रे 'द्वितीयया अं इति छित्वा पूर्वपदे अकारोऽपि विधीयते।

4 द्वितीया श्रितातीत. (2-1-14)

धर्म्म श्रितो धर्म्मश्रितः, राजानमाश्रितो राजाश्रितः, पादं पतितः पादपतितः। जलमत्यस्तो जलात्यस्तः। दुःखमतीतो दुःखातीत। गृहं गतो गृहगतः। मध्यगतः। ग्रामं गमी ग्रामगमी, गामं गामी ग्रामगामी[1]। अन्नं बुभुक्षुः अन्नबुभुक्षुः-- इत्यादिः।

**3 द्वितीयान्तात् खट्वा शब्दात् परतः प्रयुक्ताः निष्ठातान्ताः नित्यं तत्पुरुषः स्यान्निन्दायाम्[2]।**

खट्वारुढो जाल्मः। अधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वारोढव्या। य इदानीमतोऽन्यथा करोति स उच्यते खट्वारुढः। अयं जाल्मो नातिवृतत्वात्। नित्यसमासत्वात् विग्रहवाक्यं नास्ति। यत्र तु निन्दा न विवक्षते तत्रेष्यते पूर्वेण विकल्पः[3]। खट्वामारुढः स दृश्यते।

**4. द्वितीयान्तात् कालवचनात् परतःप्रयुक्तोऽत्यन्त-संयोगित्वेनाभिप्रेत-स्तत्पुरुषः स्यान्निष्ठातान्तस्त्वनत्यन्त संयोगेऽपि[4]।**

मूहूर्त सुखं मुहूर्तसुखम्। मासक्रिया। तान्तस्तु मासप्रमितः प्रतिपचन्द्रः मासं परिच्छेत्तुमारब्धवानित्यर्थः। षण्मुहूर्ताश्चराचराः। ते कदाचित्- अह-र्गच्छन्ति कदाचिद्रात्रिम्। अहर्गताः, रात्रिगताः। अहरतिसृताः।रात्र्यतिसृताः।

**5. सामि शब्दात् परतः प्रयुक्तो निष्ठातान्तस्तत्पुरुषः स्यात्[5]। सामिकृतम्।**

## 2. तृतीयातत्पुरुषः

**1. तृतीयान्तात् परतः प्रयुक्तास्तत्कृतगुणवचना ऊनार्था अर्थादयश्च तत्पुरुषः स्यात्[6]।**

शङ्कुलया कृतः खण्डः शङ्कुलाखण्डः। कुसुम्भेन कृतो लोहितः कुसुम्भलोहितः। किरिकाणः।ऊनार्थे-माषोनं कर्षापणमृ। मासविकलम्।

---

1 गम्यादीनामुपसंख्यानम् (वा.1247)
2 खट्वा क्षेपे (2-1-26)
3 द्वितीयाश्रितातीति. (2-1-14)
4 अत्यन्तसंयोगे च (2-1-29), कालाः (2-1-28)
5 सामि (2-1-27)
6 तृतीया तत्कृतार्थेन गुणवचनेन (2-1-30)

**अर्थः कलहो निपुणः श्लक्ष्णो मिश्रः समश्च सदृशश्च**
**पूर्वोऽवरो विमिश्रः संमिश्रितोऽप्येवमर्थाद्याः ॥1॥**

धान्येनार्थो धान्यार्थः। अन्यायार्थः। विद्यार्थः। याज्यकुलार्थः। प्रतिग्रहार्थः। वाक्कलहः। आचारनिपुणः।आचारश्लक्ष्णः। गुडमिश्रः। उपसृष्टोऽपि मिश्रशब्दो गृह्यते। गुडविमिश्राः गुडसंमिश्राः धानाः[1]। पितृसमः। मातृसदृशः। मासेन पूर्वो मासपूर्वः। मासेनावरो मासावरः[2]। संवत्सरावरः।

**2. तृतीयान्तात् व्यञ्जनवचनात् परतः प्रयुक्तमन्नवचनं मिश्रीकरणात्तु भक्ष्यवचनं तत्पुरुषः स्यात्[3]।**

दध्नोपसिक्त ओदनो दध्योदनः। गुडेन मिश्रिता धाना गुडधानाः।

**3. तृतीयान्तात् साधनवचनात् परतः प्रयुक्तं कृदन्तं तत्पुरुषः स्यात्[4]।**

**4. कर्तृतृतीयान्तात् करणतृतीयान्ताद्वा परतः प्रयुक्तं कृत्य प्रत्ययान्तं तत्पुरुषः स्यात् अधिकार्थवचने[5]।**

स्तुतिनिन्दाद्यर्थविशेषफलकमर्थवादवचनमधिकार्थवचनम्। वातच्छेद्यं तृणमिति स्तुतिर्गम्यते। काकपेया नदीति निन्दा। वुसोपेन्ध्यं तृणोपेन्ध्यम्। अग्नेरल्पत्वात् काष्ठमेतत् वुसेन तृणेन वा प्रज्वलनीयमित्यर्थः। घनघात्यम् काठिन्यं गम्यते।

**5. र्तृतृतीयीयान्तात् करणतृतीयान्ताद्वा परतः प्रयुक्तं कृदन्तं शुद्धं वा गतिकारकपूर्वं वा बहुलं तत्पुरुषः स्यात्[6]।**

हरिणा त्रातो हरित्रातः। देवरातः, सर्पदष्टः । नखैर्भिन्नौ नखभिन्नः। पदालूनः। परशुच्छिन्नः। त्वत्संदृष्टः। नखनिर्भिन्नः[7]। भिक्षाभिरूषितः इत्यत्र तु न समासः। हेतु

---

1 पूर्वसदृशसमोनार्थकलहनिपुणामिश्रश्लक्ष्णैः(2-1-31) मिश्रं चानुपसर्गमसन्धौ इत्यत्रानुपसर्गग्रहणात्।

2 अवरस्योपसंख्यानम् (वा.1256)

3 अन्नेन व्यञ्जनम् (2-1-38) भक्ष्येण मिश्रीकरणम्(2-1-35)

4 कर्तृकरणे कृता बहुलम्(2-1-32

5 कृत्यैरधिकार्थवचने (2-1-33)

6 कर्तृकरणे कृता बहुलम्(2-1-32)

7 कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्(प-29)

तृतीयान्तत्वात् दात्रेण लूनवान् इत्यादावपि न समासः। बहुलत्वात्। अनेन निष्ठातान्तमेव समस्यते इति मतम्।

**6. स्वयं शब्दात् परतः प्रयुक्तं निष्ठातान्तं तत्पुरुषः स्यात्[1]।**

स्वयं तेन यत्कृतं तत्तस्य स्यात्। स्वयंकृतम्। स्वयंकृतस्यापत्यं स्वायंकृतिः।

## 3. चतुर्थीतत्पुरुषः

**1. चतुर्थ्यन्ताद्विकृतिवचनात् परतः प्रयुक्तं प्रकृतिवचनं तत्पुरुषः स्यात्[2]।**

प्रकृतिः प्रभावो योनिः समवायिकारणमुपादानकारणं चेति समानार्थाः। यूपाय दारुः यूपदारुः।

**2. तादर्थ्यचतुर्थ्यन्तादुपयोक्तृवचनात् परतः प्रयुक्ताः– बल्यादयस्तत्पुरुषः स्यात्[3]।**
**बलिर्विद्या सुरा घासो रक्षितं चैवमादयः।**
**बल्यादिगणभुक्ताः स्युः शब्दालोकप्रयोगतः॥**

महाराजाय बलिर्महाराजबलिः। भूतबलिः। शिवाबलिः। हस्तिविद्या। हस्त्यन्नं माषादि विद्यापदार्थः। श्वश्रूसुरम्। अश्वघासः[4]। गोरक्षितम्। गोग्रासः। इत्यादिः। तादर्थ्यचतुर्थ्याग्रहणान्नेह समासः। छात्राय रुचितम्। छात्राय स्वदितम्। उपयोक्तृत्वाभावान्नेह समासः। रन्धनाय स्थाली। अवहननायोलूखलम्।

**3. चतुर्थ्यन्तात् परतः प्रयुक्ता हितादयस्तत्पुरुषः स्यात्[5]।**

गोहितम् तद्धितम्। गोसुखम् सर्वसुखम्। हितादिराकृतिगणो लोक प्रयोगादवसेयः।

**4. चतुर्थ्यन्तात् परतः प्रयुक्तोऽर्थ शब्दो नित्यं तत्पुरुषः स्याद् विशेष्यलिङ्गश्च[6]।**

---

1 स्वयं क्तेन (2-1-25)
2 चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः(2-1-36)
3 चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः(2-1-36)
4 भाष्यमते हि अश्वघासादय षष्ठी तत्पुरुषः।
5 चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः(2-1-36)
6 अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्(वा. 1273-1274)

द्विजाय यः स द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः।

5. तुर्य्यन्तात् पूर्वतः प्रयुक्तोऽलं शब्दो नित्यं तत्पुरुषः स्यात् [1]।

अलं कुमार्यै अलंकुमारि। अलंविघम्। अलंजीविकायै अलंजीविकः।

## 4. पञ्चमीतत्पुरुषः

1. ञ्चम्यन्तेभ्यः स्तोकादिभ्यः परतः प्रयुक्तं निष्ठातान्तं तत्पुरुषः स्यात् [2]।

**स्तोकार्थाश्चसमीपार्था दूरार्थाःसकला अपि।**
**कृच्छशब्दश्च कथ्यन्ते शब्दाः स्तोकादयस्त्विमे ॥**

स्तोकान्मुक्तः। अल्पान्मुक्तः। अन्तिकादागतः। अभ्यासादागतः। दूरादागतः। विप्रकृष्टादागतः। कृच्छादागतः। एषु पञ्चम्या अलोपं वक्ष्यते [3]।

2. ञ्चम्यन्तात् परतः प्रयुक्ता भयादयस्तत्पुरुषः स्यात् [4]।

**भयं भीतं च भीतिभीः पतितापेतनिर्गताः।**
**अपोढमुक्तापत्रस्ता जुगुप्सुश्च भयादयः ॥**

वृकाद्भयं वृकभयं। वृकभीतः, वृकभीतिः, वृकभीः, स्वर्गपतितः। सुखापेतः, ग्रामनिर्गतः। कल्पनापोढः। चक्रमुक्तः। तरङ्गपत्रस्तः। अधर्म्मजुगुप्सुः। विधाने [5] तु नास्ति समासः, प्रासादात् पतितः।

## 5. षष्ठीतत्पुरुषः

1. षष्ठ्यन्तात् परतः प्रयुक्ता नामविभक्त्यन्तास्तत्पुरुषः स्यात् [6]।

राज्ञः पुरुषः राजपुरुषः। तस्य पुरुषः। तत्पुरुषः। विश्वेषां नाथो विश्वनाथः।

---

1 द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः (वा.1545) इति वार्तिक ज्ञापनात्समासः।

2 स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन (2-1-39)

3 पञ्चम्याः स्तोकादिभ्यः(6-3-2)

4 पञ्चमी भेयन (2-1-37) अपेतापोढमुक्तपतितापत्रस्तैरल्पशः (2-1-38) भयभीतभीतिभीभिरिति वाच्यम्(वा.1275)

5 अल्पशः इत्यस्य अल्पा पंचमी समस्यते न सर्वाः तेन प्रासादात् पतितः इत्यादौ न समासः (काशिकायाम्) विधाने इत्यनेन किमभिप्रेतं इति न ज्ञायते।

6 षष्ठी (2-2-8)

**2. क्रीडायां जीविकायां चाकेन षष्ठी नित्यं समस्यते [1]।**

विकल्पः प्रतिषेधो वा नात्र प्रवर्तते इति वक्तुं नित्यमित्युच्यते [2]। उद्दालकपुष्पभञ्जिका, क्रीडाविशेषस्य संज्ञेयम्।जीविकायां दन्तलेखकः। वस्त्रनिर्णेजकः इत्यादि।

## 6. षष्ठीसमासप्रतिषेधः

**1. प्रतिपदविधाना षष्ठी न समस्यते [3]।**

साक्षाद्धातुकारकविशेषणोपादानेन विहिता प्रतिपदविधाना। चतुर्विधाहि षष्ठी भवति- शेषलक्षणा, कृद्योगा, प्रतिपदविधाना, अर्थविहिता च। तत्र जगतामीशो जगदीशः। इति शेष षष्ठी सम्बन्धमात्रविवक्षायां विहितत्वात्। इध्मनः प्रव्रश्चनः-- इध्मप्रव्रश्चनः, पलाशशातनः इति कृद्योगा षष्ठी [4]। कृच्छब्दोपादानेन विहितत्वात्। अनयोरिष्यते समासः। नेष्यते तु मधुनो ज्ञानं, सर्पिषो ज्ञानमित्यादौ प्रतिपदविधानायाम् [5]।

**2. तरबन्तगुणादन्येन निर्द्धारणे षष्ठी न समस्यते [6]।**

जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणम्। तत्र षष्ठी जायते सा यदि तरबन्तगुणादन्येन निर्द्धारणं स्यात् तदा न समस्यते। नृणां द्विजः श्रेष्ठः। गवां कृष्णां बहुक्षीरा। गच्छतां धावन् शीघ्रः। छात्राणां मैत्रः पटुः। तरबन्तगुणेन तु सर्वेषां श्वेततरः सर्वश्वेतः। सर्वमहनिति [7] वक्ष्यते। शेषलक्षणास्वपि क्वचित् प्रतिषेध स्थानं पश्यन्ति।

**3. समानाधिकरणेन षष्ठी न समस्यते [8]। राज्ञः पाटलिपुत्रकस्य।**

शुकस्य माराविकस्य। पाणिनेः सूत्रकारस्य। तक्षकस्य सर्पस्य। गोर्धेनोः। सर्पिषः पीयमानस्य। यजुषः क्रियमाणस्य। कटस्य क्रियमाणस्य।

---

1 नित्यं क्रीडाजीविकयोः (2-2-57) याजकादिभिश्च (2-2-9)

2 विभाषाधिकारात् षष्ठी समास विकल्पे प्राप्ते।

3 प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम् (वा.-1320)

4 षष्ठी (2-2-8) कृद्योगा च षष्ठी समस्यत इति वाच्यम्( 1317)

5 प्रतिपद विधाना. (1320)

6 न निर्धारणे (2-''2''-10)

7 गुणात्तरेण तरलोपश्चेति वक्तव्यम्(वा.3841)

8 पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन(2-2-11)

**4. समानाधिकरणप्रयोगयोग्येर्गुणैरूपरञ्जकैरतरलोपिभिः स्वरूपगुण–विशेषणैश्च षष्ठी न समस्यते।**

द्विविधा हि गुणा भवन्ति- स्वरूपगुणाः, उपरञ्जकगुणाश्च। येषां गुणानामेकैको विशेषस्तद् द्रव्यं न व्यभिचरन्ति द्रव्यं च तं विशेषं ते द्रव्यस्यासाधारणत्वात् स्वरूपगुणा उच्यन्ते। इमे च तद्द्रव्यान्निकृष्टा एवं शब्देन प्रत्याय्यन्ते। चन्दनस्य गन्धः। इक्षो रसः। ब्राह्मणस्य वर्णः। पटहस्य शब्दः नद्या घोष इति। न चैते गुणोपसर्जन द्रव्यं कदापि ब्रुवते। अतः एव न समानाधिकरण्येनापि दृश्यन्ते प्रयुक्ताः। चन्दनं गन्धः, पटहः शब्दः इत्येवम्। तेषामेषामिष्यते षष्ठी समासः। चन्दनगन्धः। इक्षुरसः। ब्राह्मणवर्ण। पटहशब्दः नदीघोषः। अथेतरे गुणा उपरञ्जका उच्चन्ते। ये व्यभिचरित विशेषा भवन्ति। व्यभिचारादसाधारणत्वं निवर्तते। तस्मादेषां स्वरूपगुणत्वं नास्ति एषां च शब्दाः कदाचित् गुणोपसर्जनद्रव्यं ब्रुवते कदाचिद् गुणमात्रम्। अतः एवैते गुणास्तद्द्रव्येणैकत्वमापन्ना वा तद्द्रव्यान्निकृष्टा वा यथेच्छं शब्देनोपनीयन्ते-- शुक्लः पटः, कृष्णः पटः, इति वा। पटस्य शुक्लः, पटस्य कृष्ण इति वा। तेषामेषां समानाधिकरणप्रयोगयोग्यानां वैयधिकरण्येन प्रयोगे नेष्यते षष्ठीसमासः। समानाध्किरण्यं च न समानार्थवृत्तित्वमात्रं किन्तु समानविभक्तिलिङ्गवचनत्वं चेह विवक्षितम्। तेन संख्या शब्दानां संख्येय संख्या परत्वाभ्यां विंशतिर्गावो गवां विंशतिरित्येवं प्रयोग द्वैविध्यादुपरञ्जकत्वेऽपि न प्रतिषेधः। लिङ्गवचनभेदात्। गो विंशतिः। गोशतम्। गोसहस्रम्। पापः पुरुषः, पुण्यः पुरुषः। पुरुषपापं पुरुषपुण्यमित्यादिष्वपि न प्रतिषेधः। कपूयचरितरमणीयचरितार्थयोः पापपुण्ययोः क्रिया शब्दत्वात्। अतरलोपिभिरित्युक्तेर्यत्र तरलोप संभवस्तत्र न प्रतिषेधः। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां कृष्णतरः सर्वकृष्णः। तरलोपो वक्ष्यते। एवं यत्र भावप्रत्ययादिना गुणपरत्वं तत्रापि न प्रतिषेधः। काकस्य कार्ष्ण्यं काककार्ष्ण्यम्। कण्टकतैक्ष्ण्यम्। बलाकाशौक्ल्यम्। अर्थप्राधान्यम्। शब्दगौरवम्। बुद्धिमान्द्यम्। अधरमधुरिमा। कुचकाठिन्यमित्यादि। भगवान् पतञ्जलिस्तु काकस्य कार्ष्ण्यमित्याद्यपि प्रतिषेधोदाहरणं मन्यते [1]। ब्राह्मणस्य शुक्ला वृषलस्य कृष्णा इत्यादि च। द्रव्यमत्रापेक्ष्यते दन्ता इत्यतः सापेक्षत्वात्। सामर्थ्याभावादेव तत्र समासो न प्राप्नोतीति तु नाशङ्क्यम्। भवति वै कस्यचिदर्थात् प्रकरणाद्वाऽपेक्ष्यं निर्ज्ञातमित्यपेक्षानुत्थानाद् वृत्तिप्राप्तिसंभवात्। अत एव स्वरूपगुणविशेषणेऽपि प्रतिषेधो विधीयते। घृतस्य तीव्रो गन्धः, चन्दस्य

---

1 इदं तर्हि काकस्य कार्ष्ण्यम् कण्टकस्य तैक्ष्ण्यम् (गुणे उदाहरणम्) महाभाष्ये अनित्योऽयं गुणेन निषेधः ''तदाशिष्यं संज्ञाप्रमाणत्वात्'' इत्यादि निर्देशात्। तेन अर्थ गौरवम् बुद्धिमान्द्यम इत्यादि सिद्धम्(वैयाकरण सिद्धान्त कौमुदी सूत्र सं. 705)

मृदुरिति। घृतस्य तीव्र इति सापेक्ष्यत्वादप्राप्तिः समासस्य। किन्तूत्तरवाक्ये गन्धस्य निर्ज्ञातत्वादनपेक्षा, ततो वृत्तिः प्राप्नोति। स्वरूपगुणस्य गन्धस्य विशेषणत्वात्तु प्रतिषिद्ध्यते।

**5. सुहितार्थैः पूरणान्तैश्च षष्ठी न समस्यते [1]।**

सुहितं तृप्तिः। फलानां सुहितः। फलानां तृप्तः। सतां षष्ठः। बहूनां सप्तमः उञ्छषष्ठः इत्यादौ तु शेषष्ठी समास : कृद्योगास्वपि प्रतिषेधस्थानानि पश्यन्ति।

**6. पूजायामधिकरणे च निष्ठान्तेन षष्ठी न समस्यते [2]।**

राज्ञां मतो बुद्धः पूजितो वा। राजपूजित इत्यादौ तु भूतनिष्ठ्या तृतीया समासः। अधिकरणे- इदमेषामासितं गतं भुक्तं वा।

**7. कर्तृकर्मणोरुभयप्राप्तौ कर्मणि षष्ठी सा न समस्यते [3]।**

आश्चर्यो गवां दोहोऽगोपेन।

**8. सदव्ययतव्यैः षष्ठी न समस्यते [4]।**

सदिति संज्ञा प्रत्ययोरदानयोः द्विजस्य पक्ष्यन् पक्ष्यमाणो वा ओदनः। अथवा द्विजस्य कुर्वन् कुर्वाणो वा किङ्करः। अथवा चौरस्य द्विषन्। शूद्रस्य द्विषन्। यस्मिन् कृत्प्रत्ययेऽव्ययत्वं तत्रायं निषेधः। ब्राह्मणस्योच्चैर्वृषलस्य नीचैरासनम्। अथवा ब्राह्मणस्य कृत्वा, वृषलस्य कृत्वा कटः। अथवा पुरा सूर्यस्योदेतोः। पुरा वत्सानामपाकर्तोः। तदुपरीत्यादौ तु भवत्येव समासः। कृदव्ययत्वाभावात्। ब्राह्मणस्य कर्तव्यम्।शेष षष्ठी तु समस्यते स्वकर्तव्यम् [5]।

**9. कर्तरिकृताभ्यां तृजकाभ्यां षष्ठी न समस्यते न तु याजकादिषु [6]।**

तृजिति तृ प्रत्ययसंज्ञा। अपां स्रष्टा, वज्रस्य भर्ता। शेष षष्ठ्या तु समासो भवत्येव। घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः। ओदनस्य पाचकः। याजकादिषु तु न प्रतिषेधः। ब्राह्मणयाजकः, देवपूजकः, भूभर्ता[7]।

---

1 पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन (2-2-11)

2 क्तेन च पूजायाम् (2-2-12)अधिकरणवाचिना च(2-2-13)

3 कर्मणि च (2-2-14)

4 पूरणगुणसुहितार्थसदव्यय.(2-2-11)

5 षष्ठी (2-2-8)

6 तृजकाभ्यां कर्तरि (2-2-15)

7 याजकादिभिश्च (2-2-9)

याजकादिगणे भर्ता होता याजकपूजकौ ।
उद्वर्तकोत्सादकौ च स्नापकाध्यापकौ तथा ।।1 ।।
परिचारक परिषेचक, परिवेषक पत्तिगणक रक्षगणकाः ।
षष्ठीसमासमेवं केचन शब्दा न रुन्धन्ति ।।2 ।।

10. अकेन कर्तृषष्ठी न समस्यते [1]। भवतः शायिका ।

7. सप्तमीतत्पुरुषः

1. सप्तम्यन्तात् परतः प्रयुक्ता शौण्डादयोऽधिवृत्ताश्च तत्पुरुषः स्यात् [2]।

अक्षेषु शौण्डः अक्षशौण्डः । अक्षधूर्तः । स्त्रीधूर्तः ।अक्षकितवः, स्त्रीकितवः ।

**शौण्डो धूर्तः कितवः प्रवीणनिपुणौ च पण्डितः कुशलः ।**
**संवीतः पटुरन्तश्चपलौ वाडश्च शौण्डाद्याः ।।**

अधिश्ब्देन वृत्तास्तद्धितान्ता अधीनादि शब्दाः अधिवृत्ताः ईश्वराधीनः [3] ।

2. सप्तम्यन्तात् परतः प्रयुक्ता ध्वाङ्क्षार्थास्तत्पुरुषः स्यात् क्षेपे [4] ।

तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः। तीर्थकाकः। यथा तीर्थकाका न चिरं स्थातारो भवन्ति। एवं यो गुरुकुलानि गत्वा न चिरं तिष्ठति, स उच्यते तीर्थकाक इति। निन्दा गम्यते।

3. सप्तम्यन्तात् परतः प्रयुक्तानि नामानि तत्पुरुषः स्यात् संज्ञायाम् [5]।

वाक्येन संज्ञानवगमान्नित्यसमासोऽयम्। अरण्येतिलका, वनेकसेरुका। सप्तम्या अलोप[6] वक्ष्यते [7]।

4. सप्तम्यन्तात् परतः प्रयुक्ता कृत्य यदन्तास्तत्पुरुषः स्यान्नियोगे [8]।

---

1 कर्तरि च (2-2-16)
2 सप्तमी शौण्डैः (2-1-40)
3 अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः(5-4-7)
4 ध्वाङ्क्षेण क्षेपे (2-1-42)
5 संज्ञायाम्(2-1-44)
6 'अलोपो' इति मूले।
7 हलदन्तात्सप्तम्याः संज्ञायाम्(6-3-9)
8 कृत्यैर्ऋणे (2-1-43)

परप्रवर्तनयाऽवश्यकर्तव्यत्वेनार्थ स्थिरीकरणं नियोगः। मासे देयमृणम्। पूर्वाह्णे गेयं साम। अलोपं वक्ष्यते [1]। यत एव प्रत्ययस्येह ग्रहणं नान्यस्य कृत्यस्य तेनेह न-- पूर्वाह्णे दातव्या भिक्षा।

**5. सप्तम्यन्तादहोरात्रावयवात् तत्र शब्दाच्च परतः प्रयुक्ताः निष्ठातान्तास्तत्पुरुषः स्यात् [2]।**

पूर्वाह्णकृतम्। अपररात्रकृतम्। तत्रकृतम्। तत्रभुक्तमित्यादि।

**6. सप्तम्यन्तात् परतः प्रयुक्ताः सिद्धशुष्कपक्वबन्धास्तत्पुरुषः स्यात् [3]।**

सांकाश्यसिद्धः। आतपशुष्कः। स्थालीपक्वः। चक्रबन्धः। पद्मबन्धः।

**7. सप्तम्यन्तात् परतः प्रयुक्तानिष्ठान्ताः सगतिका वा तत्पुरुषः स्यात् क्षेपे [4]।**

अवतप्ते नकुलस्थितं एतत्। यथावतप्ते नकुला न चिरं स्थातारो भवन्ति एवं कार्याण्यारभ्य यो न चिरं तिष्ठति स उच्यते अवतप्ते नकुलस्थितं त एतदिति।

**8. पात्रे समितादयस्तत्पुरुषाः स्युः क्षेपे, न चैषां पुनः समासान्तरम् [5]।**

पात्रेसमिताः। भोजन समय एव संगता न तु कार्य्ये। गेहेशूरः। गेहेनर्दी। आकृतिगणोऽयम्।

**पात्रेसमिताः पात्रेबहुलाः गेहेशूरः गेहेनर्द्दी गेहेविजिती।**
**गेहेव्याडः गेहेमेही गेहेदाही गेहेदृप्तः गेहेधृष्टः॥**
**गोष्टेशूरः गोष्ठेविजिती गोष्ठेक्ष्वेडी गोष्ठेपटुः गोष्ठेपण्डितः।**
**गोष्ठेप्रगल्भः नगरकाकः नगरवायसः उदपानमण्डूकः॥**
**कुम्भमण्डूकः कूपमण्डूकः कूपकच्छपः अवटकच्छपः।**
**उदुम्बरमशकः उदुम्वरक्रिकिः पिण्डीशूरः पितरिशूरः॥**
**मातरिपुरुषः गभेतृप्तः आखनिकवकः कर्णेटिरिटिरा।**
**कणेचुरुचुरा इत्येवमादयोऽन्येऽपि शब्दा लोकप्रयोगवशादुन्नेयाः॥**

---

1 तत्पुरुषे कृति बहुलम्(6-3-14)

2 क्तेनाहोरात्रावयवाः(2-1-45) तत्र (2-1-46)

3 सिद्धशुष्कपक्वबन्धैश्च (2-1-41)

4 क्षेपे (2-1-47)

5 पात्रेसमितादयश्च (2-1-48)

अत्र सप्तम्या क्वचिल्लोपः क्वचिदलोपः च प्रयोगानुरोधात् व्यवतिष्ठते। सर्वत्र निन्दा गम्यते। एषां पुनः समासान्तरे प्रवेशो नास्ति। परमाः पात्रे समिताः।

**उत्कीर्णतत्पुरुषाः**

इत्थं द्वितीया तत्पुरुषादयः षोढा विभक्ता भिन्नतत्पुरुषाः प्रदर्शिताः। अतः परमेकदेशिसमासः, उपपदसमासः, द्विगुसमासः, गतिसमासः, नञ् समासश्चेति पञ्चधाविभक्ता उत्कीर्णतत्पुरुषाः प्रदर्श्यन्ते –

**1. एकदेशितत्पुरुषः**

**1. षष्ठ्यन्तादेकदेशिवचनादेकद्रव्यात् पूर्वतः प्रयुक्ताः पूर्वापराधरोत्तराः समांशवचनोऽर्द्धशब्दश्च तत्पुरुषः स्यात् [1]।**

पूर्वं कायस्य पूर्वकायः। अपरकायः अधरकायः। पूर्वं नाभे कायस्येत्यत्र तु नास्ति समासः। पूर्वस्य नाभ्यनवयवत्वात्। अनेकद्रव्यत्वान्नेह। पूर्वश्छात्राणाम्। परे त्वाहः – समुदाये दृष्टाः शब्दा अवयवेऽपि वर्तन्ते पूर्वे पञ्चाला उत्तरे पञ्चाला इतिवत् [2]। तेनेह कर्मधारयतोऽपि सिध्यत्येतत्। पूर्वः कायः पूर्वकायः। अपरकायः। अधरकायः। उत्तरकायः। किन्तु बहुद्रव्यत्वे मा भूदित्येतदर्थं सूत्रम्। अर्द्धपिप्यल्य इति खण्डानेकत्वात् सिद्धम्। अर्द्धराशिरित्यपि राशेरेकत्वात्सिद्धम्। अर्द्धं पिप्पल्या अर्द्धपिप्पली। अर्द्धकोशीतकी। अनेकद्रव्यत्वान्नेह – अर्धं पिप्पलीनाम्। अर्द्धशब्दोऽयं समांशवचनश्च यथाकथञ्चित् खण्डवचनश्च। तत्र खण्डवाचित्वे पूर्वेण समान्यविधिना समासः ग्रामस्यार्द्धो ग्रामार्द्धः। ग्रामावयवः कियांश्चित् प्रदेशो विवक्ष्यते न तु समः प्रविभागः।

**2. षष्ठ्यन्तादेकदेशिवचनादेकद्रव्यात कालात् पूर्वतः प्रयुक्ता एकदेश शब्दाः तत्पुरुषः स्यात् [3]।**

पूर्वमह्नः। पूर्वाह्णः। अपराह्णः। मध्याह्नः। सायाह्नः। मध्यं रात्र्या मध्यरात्रः। पश्चिमरात्रः। उभयत्र समासान्तो वक्ष्यते [4]।

---

1 पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे (2-2-1) अर्धं नपुंसकम्(2-2-2)

2 ''समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते। तद् यथा – पूर्वे पाञ्चालाः, उत्तरे पाञ्चालाः।'' इति भाष्यम्। (लक्ष्यलक्षणै व्याकरणम्)

3 संख्याविसाय इति ज्ञापकात्। अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः(5-4-87)

4 संख्याविसाय इति ज्ञापकात्। अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः(5-4-87)

**3. षष्ठ्यन्तादेकदेशिवचनादेकद्रव्यात् पूर्वतः परतो वा प्रयुक्तानि द्वितीय तृतीयचतुर्थतुर्य्याणि तत्पुरुषः स्यात्[1]।**

द्वितीयं भिक्षाया द्वितीयभिक्षा। तृतीयभिक्षा। चतुर्थभिक्षा। तुर्य्यभिक्षा अथवा भिक्षाद्वितीयं, भिक्षातृतीयं, भिक्षाचतुर्थं, भिक्षातुर्यम्[2]। द्वितीयं भिक्षाया भिक्षुकस्य इत्यत्र तु नास्ति समासः। एकदेशित्वाभावात्।

**4. षष्ठ्यन्तात् परिमाणिनः क्रियावृत्तात् पूर्वतः प्रयुक्तं कालवचनमेकद्रव्यं तत्पुरुषः स्यात्[3]।**

मासो जातस्य यस्य स मासजातः। अत्र योऽसौ मासजातयोरभिसम्बन्धः समासे स निवर्तते। अभिहितः सोऽर्थोन्तर्भूतः प्रातिपदिकार्थः संपन्नः। तेनेह वाक्ये षष्ठी, समासे प्रथम। मासजातस्येति षष्ठी तु बाह्यमर्थमभिसमीक्ष्य द्रष्टव्या। अथ तेन मूर्त्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमित्याहुः। तस्यैव कदाचिदादित्यगत्यादिरूपतया क्रियया युक्तस्याहरिति च व्यपदेशी भवति रात्रिरिति च। तयैवासकृदावृत्तया मास इति च संवत्सर इत्यादि च। तदित्थमयं संपद्यते कालचनो मासो जातस्यास्य परिमाणम्। मासौ जातस्य यस्य, माजजातस्य यस्येत्यत्र तु नास्ति समासः। अनेक द्रव्यत्वात्। द्विगोस्तु कालवचनत्वादेकद्रव्यत्वाच्चेष्यो समासः द्विमासजातः त्रिमासजातः। द्व्यहजातः त्र्यहजातः।

**5. षष्ठ्यन्तात् परिमाणिनः क्रियावृत्तात्पूर्वतः प्रयुक्तंकाल – वचनमनेकद्रव्यं संख्यापूर्वमद्विगुभूतं तत्पुरुषः स्यात्[4]।**

द्वे अहनी जातस्य यस्य स द्व्यह्नजातः। अह्नोह्नभावो वक्ष्यते[5]। भगवान् पतञ्जलिस्त्वाह। नारब्धव्योऽयमेकदेशिसमासः सर्वोऽपि। अर्द्धपिप्पल्यादीनां समानाधिकरणसमासेन सिद्धत्वात्। अर्द्धं च सा पिप्पली चार्धपिप्पली समुदायो दृष्टः शब्दोऽवयवेऽपि वर्तते। ततोऽवयवपरत्वे कर्मधारयः। समुदायपरत्वे षष्ठी तत्पुरुषः इत्युभयं समानार्थेऽपीष्टम्। अपूपार्द्धं मया भक्षितं ग्रामार्द्धं मया लब्धम्। पिप्पल्यार्द्धं दत्तमिति वा। अर्द्धापूपःअर्द्धग्रामः। अर्द्धपिप्पली वा। नात्र विशेषः। इत्येकदेशिसमासः।

---

1 द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्(2-2-3)

2 षष्ठी (2-2-8)

3 कालाः परिमाणिना (2-2-5)

4 उत्तरपदेन परिमाणिन द्विगोःसिद्धये बहूनां तत्पुरुषस्योपसंख्यानम् (वा.1288)

5 अह्नोऽह्न एतेभ्यः(5-4-8)

## 2. उपपदसमासः

### (1) उपपदात् परतः प्रयुक्तं कृदन्तं नित्यं तत्पुरुषः स्यात् [1]।

यादृशं पदं पूर्वप्रयोगनियमेन निमित्तीकृत्य कृत्प्रत्ययो विधीयते तदिहोपपदं व्यपदिश्यते। तस्य पदस्य नित्यमुत्तरसंन्निकृष्टत्वात् । कुम्भं करोतीति कुम्भकारः, स्वर्णकारः। कच्छपः। पादपः। स्तम्बेरमः। कर्णेजपः। सरसिजः सरीजम्। भूयांसि तूपपदानि कृदन्ते दर्शितानि। तेषु सर्वत्रायं समासो नेयः।

### 2. नित्याम् निमित्तभूतादुपपदात् परतः प्रयुक्तममन्तकृदन्तं नित्यं तत्पुरुषः स्यात् [2]।

स्वादुङ्कारम् भुङ्क्ते। यावदेदं भुङ्क्ते। अकृतकारं करोति। पादघातं हन्ति। हस्तग्राहं गृह्णाति। उदपेषं पिनष्टि। शुष्कपेषं पिनष्टि। चेलक्नोपं वृष्टोदेवः। उदरपूरं भुङ्क्ते। ब्राह्मणवेदं भोजयति। कथंकारम्। इत्यंकारमित्यादिः। नित्याम्। निमित्तभूतादित्युच्यते। विकल्पिताम् निमित्तभूतात्तु नास्ति समासः। अग्रे भोजम्। अग्रे भुक्त्वा। प्रथमं भोजं। पूर्वं भोजम्। अमन्तकृदन्तमित्युच्यते न मान्तमित्येव। तेन भोक्तुं कालः समयो भोक्तुमित्यादौ न समासः।

### 3. पूर्वकालिकाम् निमित्तभूतादुपपदात् परतः प्रयुक्तममन्तं त्वान्तं वा कृदन्तं विकल्पेन तत्पुरुषः स्यात् [3]।

यत्र द्वयोः क्रियोर्मध्ये एकस्या पूर्वकालिकत्वं प्रत्याययितुमम् प्रत्ययः प्रयुज्यते स पूर्वकालिकः। तन्निमित्तभूतोपपदात् त्वप्रत्ययान्तस्यापि समासो दृश्यते। मूलकेनोपदंशं भुङ्क्तेः। मूलकोपदंशं भुङ्क्ते। दण्डेन ताडं गाः कालयति दण्डताण्डं वा। पाण्युपकर्षं धानाः संगृह्णाति। पाणिना पाणौ वोपकर्षम्। केशग्राहं हस्तग्राहं वा युध्यन्ते। केशेषु हस्तेन वा गृहीत्वा। यष्टिग्राहं युध्यन्ते- यष्टिं गृहीत्वा शय्योत्थायं धावति। ह्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति। भूविक्षेपं कथयति। भ्रूवं विक्षेपं वा। उरः प्रतिपेषं युध्यन्ते । नामग्राहमाह्वयति। त्वान्तं वा समस्यते [4]। समासे तु त्वाप्रत्ययस्य त्यभावो

---

1 उपपदमतिङ् (2-2-19)
2 अमैवाव्ययेन (2-2-20)
3 तृतीयाप्रभृतीन्यन्यतरस्याम्(2-2-21)
4 क्त्वा च (2-2-22)

यभावो वा शब्दभेदेन [1]। उच्चैः कृत्वा, नीचैः कृत्य तिर्य्यक्कारं वा गतः। मुखतोभूय, मुखतोभूत्वा मुखतोभावं वा निरीक्षते। तूष्णीं भूय। तूष्णीं भूत्वा तूष्णीं भावं वा समीक्षते। इत्यादि। एतत्समासोपयुक्तान्युपपदानि कृदन्त प्रकरणादुपलप्स्यन्ते।

## 3. द्विगुतत्पुरुषः

**(1) तद्धितार्थविषयतायां दिग्वचनात् संख्यावचनाच्च परतः प्रयुक्तं नामपदं तत्पुरुषः स्यात् [2]।**

पूर्वस्यां शालायां भवः पौर्वशालः। आपरशालः। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावात् पूर्वापराशब्दयोर्ह्रस्वान्तत्वम् [3]। भवार्थे तद्धितोदयादादिवृद्धिः [4]। षण्णां मातृणामपत्यं षाण्मातुरः। द्वैमातुरः। अपत्यार्थे तद्धितोदयः [5]। पञ्चभिरश्वैः क्रीतः पञ्चाश्वः। द्वौ पुरुषौ प्रमाणस्य द्विपुरुषः खातः। द्विकाण्डं क्षेत्रम्। एषु तद्धितलोपः [6]। संख्यापूर्वस्तत्पुरुषो द्विगु संज्ञः स्यात् [7]। तेनेह दिक्पूर्वस्य न द्विगु संज्ञा। तथापि समानार्थ प्रसङ्गात् द्विगुवर्गे निक्षेपः।

**(2) समाहारविषयतायां संख्यावचनात् परतः प्रयुक्तं नामपदं तत्पुरुषः स्यात् [8]।**

त्रयाणां फलानां समाहारस्त्रिफला। त्र्यनीका सेना। त्रिकटु। पंचानामजानां समाहारः पञ्चाजी। त्रिलोकी। त्रिलोकम्। त्रिभुवनम्। चतुर्युगम्। पञ्चपात्रम्। पञ्चगवम्। सर्वत्र समाहारो गम्यते। समाहारस्यैकत्वादेकवचनसिद्धिः [9]।

---

1 समासेऽन ञ् पूर्वोक्तोर्ल्यप् (7-1-37)
2 तद्धितार्थोत्तरपदसमाहारे च (2-1-51)
3 सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः (वा 1376)
4 दिक्पूर्वपदादसंज्ञायां (8-2-107) तद्धितेष्वचामादेः(2-7-117)
5 मातुरुत्संख्या संभद्रपूर्वायाः (4-1-115)
6 द्विगोर्लुगनपत्ये (4-1-88)
7 संख्यापूर्वो द्विगुः(2-1-52)
8 तद्धितार्थोतरपद समाहारे च (2-1-51)
9 द्विगुरेकवचनम्(2-4-1)

## 4. गतितत्पुरुषः

### 1. गतिस्वतिदुराङ्कुप्राद्यव्ययेभ्योऽकर्मप्रवचनीयेभ्यः परतः प्रयुक्तं पदं तत्पुरुषः स्यात्[1]।

धातोः पूर्वमुपसर्गभूताः प्रादयो वक्ष्यमाणांश्च च्व्यन्तडाजन्तोर्यादिप्रभृतयः क्रियास्वरूपं प्रविष्टाः क्रियात्मानमनुगता इत्यतो गतय उच्यन्ते। प्रकारकः। प्रपाणकः। प्रणयकः। प्रसेवकः। उरीकृत्य। पटपटाकृत्य इत्यादि। पदमिति समर्थमात्रोपलक्षणम्। दृश्यते हि गतलनां कृदन्तमात्रेण समासः। व्याघ्रः व्याघ्री[2]। स्वत्यादीनां यत्र गतित्वं नास्ति तत्रापीष्यते समासः। तेषां च प्रदेशानर्थतः स्पष्टयितुं सौनागसूत्राणि दर्श्यन्ते –

(1) स्वतिपूजायाम्। सुपुरुषः, सुब्राह्मणः, सुवृषलः, सुराजा, अतिराजा, अतिब्राह्मणः

(2) दुर्निन्दायाम्। दुःकुलम्, दुर्गवः, दुर्ब्राह्मणः, दुर्वृषलः।

(3) आङ्ईषदर्थे। आकडारः। आपिङ्गलः।

(4) कु पापार्थे। कुब्राह्मणः। कुवृषलः। कुपुरुषः[3]।

(5) प्रादयो गताद्यर्थे प्रथमया[4]। प्रगत आचार्य्यः प्राचार्य्यः। प्रशिष्यः प्रान्तेवासी। प्रपितामहः। प्रपौत्रः।

(6) अत्यादयः क्रान्ताद्यर्थे द्वितीयया[5]। अतिक्रान्तो मालामतिमालः। अतिखट् वः। अतिसीमः।

(7) अवादयः कुटाद्यर्थे तृतीयया[6]। अवक्रुष्टः कोकिलया, अवकोकिलः।

(8) पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्या[7]। परिग्लानोऽध्ययनाय पर्य्यध्ययनः।

(9) निरादय क्रान्ताद्यर्थे पञ्चम्या[1]।निष्कान्तः कौशाम्ब्या निष्कौशाम्बिः निर्वाराणसिः।

---

1 कुगतिप्रादयः (2-2-18)ऊर्यादिच्विडाचश्च(1-4-61)
2 उपपदमतिङ् (2-2-19) गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः(प.76)
3 कुगतिप्रादयः (2-2-18)
4 प्रादयो गताद्यर्थे प्रथमया (वा.1335)
5 अत्यादयः क्रान्ताद्यर्थे द्वितीयया(वा.1336)
6 अवादयः क्रुष्टाद्यर्थे तृतीयया(वा.1337)
7 पर्यादयो ग्लानाद्यर्थे चतुर्थ्या (वा.1338)

(10) अव्ययं प्रवृद्धादिभिः। पुनः प्रवृद्धं बहिर्भवति। पुनर्गवः, पुनः सुखम्।

(11) पूर्वपदमिवेन विभक्त्यलोपश्च [2]। वाराणसी इव। कन्ये इव। जीमूतस्येव।

(12) अव्ययमव्ययेन। प्रप्र यज्ञपतिम्। उपोपमे परामृश।

(13) धातो शुद्धादुपसृष्टाद्वा पूर्वतः प्रयुक्ता उपसर्गा विकल्पेन तत्पुरुषः स्यात्।

पूर्वं धातुः साधनेन युज्यते। पश्चादुपसर्गेण। क्वचिद् वा पूर्वं धातुरूपसर्गेण युज्यते पश्चात् साधनेन। पर्य्यभूषत्। अनुव्यचलत्। व्याकुरुते। प्रतिषेधति। अनुभवति। विहरति। अवैति। अनुव्याकरोत्। यत्परियन्ति। समासफलमैकपद्यमव्यवहित-प्रयोगोऽर्थसंनिकर्षश्च। विकल्पाद् व्यवधानं च मन्त्रे दृश्यते। आ देवो याति। निहोता सत्सि वर्हिषि। परा दुःस्वप्न्यं सुव। प्रसम्राजं चर्षणीनामिन्द्रे स्तोता नव्यं गीर्भिः।

एषु सर्वत्रादि शब्दः प्रकारे तेन लोकादर्थमनुरुध्य समासो द्रष्टव्यः। कर्मप्रवचनीयानान्तु प्रादीनां समासो नास्ति [3]। वृक्षं प्रति पर्य्यनु वा विद्योतते विद्युत्। साधुरयं मातरं प्रति।

**2. च्व्यन्ताद् डाजन्तादर्य्यादिभ्यश्च परतः प्रयुक्तं क्रिया वृत्तं तत्पुरुषः स्यात् [4]।**

अभूततद्भावेऽर्थे च्विसंज्ञो डाच् संज्ञश्च तद्धित प्रत्ययो भवति। अशुक्लं शुक्लं कृत्वा – शुक्लीकृत्य। पटपटाकृत्य। ऊरीकृत्य। उररीकृत्य- स्वीकृत्येत्यर्थः। कारिकाकृत्य – क्रियां कृत्वेत्यर्थः। एवं शुक्लीभूय। ऊरीभूय, आविर्भूय, प्रादुर्भूय, स्वधाभूयेत्यादि। कृभ्वस्तिवृत्तानां समासमाहुः स प्रायोवादः। अन्यत्रापि क्वचिद्दर्शनात्। श्रद्धाय।

**ऊरीउररी आक्ली विक्ली [5] पापी वषट् स्वधा स्वाहा।**
**श्रौषड् वौषट् प्रादुश्चाविः श्रुत् फ्लू फली शकलाः ॥1॥**
**[6]संशकला ध्वंसकला भ्रंसकला गुलुगुधा सजूर्धूसी।**

---

1 निरादयः क्रान्ताद्यर्थे पञ्चम्या (वा. 1339)

2 इवेन समासो विभक्त्यलोपश्च (वा. 1236)

3 कर्मप्रवचनीयानां प्रतिषेधः(वा. 1339)

4 ऊर्यादिच्विडाचश्च(1-4-61)

5 पाम्पी इति मूल पुस्तके

6 स्रंसकला इति मूले

**केवाली[1] सेवाली शेवाली मसमसा च वेताली ॥2 ॥**
**वर्षाली आलोष्टी स्यादेवं मस्मसौर्य्यादौ ।**
**अथवेह पाठभेदाच्छब्दाः केऽप्यन्यथा पठिताः॥3 ॥**
**केवासी वशला धूली मष्मसा मस्मसाऽश्मसा ।**
**वार्दाली किञ्च पाद्दार्ली पाम्पाली तन्त्र्यपीष्यते ॥4 ॥**
**आङ्गी ताली च आताली वन्द्यऽऽलम्वी च संकला ।**
**एषामथापि पूर्वेषां प्रयोगादेव निर्णयः ॥5 ॥**

**(3) अनुकरणादनिति परात् परतः प्रयुक्तं कृवृत्तं तत्पुरुषः स्यात्[2]।**

खादकृत्य, फट्कृत्य, इति परकत्वान्नेह- खाडिति कृत्वा निरष्ठीवत्। अनुकरणाकृतिः प्रतिनिर्दि्दश्यते। नैकैका व्यक्तिः। श्रौषड् वौषडिति कृत्वा निरष्ठीवत्।

**4. अव्ययाभ्यां पुरोऽस्तंभ्यां परतः प्रयुक्तं क्रियावृत्तमच्छ – शब्दादव्ययाद् गत्यर्थवद्वृत्तं तत्पुरुषः स्यात्[3]।**

पुरः शब्दोऽयमादरेणाग्रभावे वर्तते। अस्तं शब्दो निम्लोचनेऽच्छशब्दस्त्वा – भिमुख्ये। पुरस्कृत्य। पुरोधाय। अस्तंगत्य। अस्तमित्य। अच्छगत्य, अच्छोद्य। अनव्ययत्वान्नेह- पुरः कृत्वा। नगराणिकृत्वेत्यर्थः। शत्रुं अस्तं कृत्वा पराजयदानेनाधो निक्षिप्येत्यर्थः। जलमच्छं गछति। निर्मलमित्यर्थः।

**5. श्रद्धाप्रतिघाते कणेमनोभ्यामादरे सतोऽनादरेऽसतो भूषणेऽलं शब्दादपरिगृहेऽन्तः शब्दादनुपदेशेऽदः शब्दादन्तर्द्धौः तिरः शब्दात् परतः प्रयुक्तं क्रियावृत्तं तत्पुरुषः स्यात्[4]।**

कणे शब्दः सप्तमी प्रतिरूपको निपातोऽभिलाषातिशये वर्तते, मनः शब्दोऽप्यत्रैव। कणे हत्य पयः पिवति। मनोहत्य गच्छति। श्रद्धाप्रतिघातविषयता गम्यते। सत्कृत्य। आदृत्येत्यर्थः।असत्कृत्य, अनादृत्येत्यर्थः। अलंकृत्य आभृत्येत्यर्थः। सदसदलं शब्देभ्यः कृवृत्तस्यैव समासो दृश्यते,[5] नान्यधातुवृत्तस्य। अन्तर्हत्य –मध्ये-

---

1 सेवाली एषः शब्दः काशिकायां नास्ति।

2 अनुकरणं चानितिपरम्( 1-4-62)

3 पुरोऽव्ययम्( 1-4-67) अस्तं च( 1-4-68)अच्छगत्यर्थवदेषु ( 1-4-69)

4 कणेमनसी श्रद्धाप्रतिघाते ( 1-4-66) आदरानादरयोः सदसती ( 1-4-6) भूषणेऽलम् ( 1-4-64) अन्तरपरिग्रहे ( 1-4-65) अदोऽनुपदेशे ( 1-4-70) तिरोऽन्तर्धौ ( 1-4-71)

5 अनुकरणं चानितिपरम्( 1-4-62) इत्यादित्रिसूत्रीस्वभावात् कृ विषया।

हत्वेत्यर्थः। द्विविधोऽयमन्तर्भावः – परिगृहीतश्चापरिगृहीतश्च। यत्र कुड्यादिना व्यवधानादेकतोऽन्तर्धानबुद्धिरन्यतो बहिर्भावबुद्धिः। तत्रापरिगृहः। अन्तर्द्धाय। तिरोधायेत्यर्थः। यत्र तूदरप्रवेशस्तत्र परिग्रह इत्यतो न समासः। ईश्वरः सर्वभूतानामन्तः स्थित्वा नियच्छसि। अदः कृत्यगमिष्यामि। अध्यवसायमात्रं नोपदेशोऽयम्। तिरोभूय अन्तर्द्धानं गम्यते। अर्थान्तरेषु तु न समासः। अमनस्कयोगेन मनो हत्वा विमुक्ष्यते। प्रागसद्गतं घटद्रव्यं पश्चात् सत् कृत्वा दर्शयति। कुम्भकारः। ओदनमलं कृत्वा गतः। पर्याप्तमनवशेषं भुक्त्वेत्यर्थः। अदः कृत्वा, अदः कुरु। उपदेशो गम्यते। सूर्यस्तिरो भूत्वा गच्छति, वायुस्तिरोभूत्वा प्रवहति।

**6. उपाजेऽन्वाजे मध्ये पदे निवचने तिरोभ्यः परतः प्रयुक्तं कृवृत्तं विकल्पेन तत्पुरुषः स्यात्[1]।**

उपाजेकृत्य, उपाजेकृत्वा। अन्वाजेकृत्य, अन्वाजेकृत्वा। दुर्बलस्य बलमाधायेत्यर्थः। मध्येकृत्य, मध्येकृत्वा। पदेकृत्य, पदे कृत्वा। निवचनेकृत्य, निवचने कृत्वा। तिरसकृत्य, तिरःकृत्य, तिरःकृत्वा।

**7. अभूततद्भावे साक्षात् प्रभृतिभ्योऽनत्याधाने तूरसिमनसिभ्यां परतः प्रयुक्तं कृवृत्तं विकल्पेन तत्पुरुषः स्यात्[2]।**

साक्षात्कृत्य, साक्षात्कृत्वा। साक्षादिति पञ्चमी प्रतिरूपकम्। लवणंकृत्य, लवणंकृत्वा – लवणमिति द्वितीया प्रतिरूपंकम् मान्तमव्ययम्। अग्नौकृत्य, वशेकृत्य सप्तमी प्रतिरूपकमेतत्।

**साक्षादुदकं चार्द्रं शीतं चोष्णं च लवणं च।**
**अर्थे वशे विहसने तथा विकसनेप्रतपनेऽग्नौ ॥1॥**
**प्राजरुहा वीजरुहा प्राजर्याकिञ्च वीजर्या।**
**संसर्याऽऽस्था मिथ्या चिन्ता भद्रा च लोचना श्रद्धा ॥2॥[3]**
**आविः प्रादुर्नम इति साक्षात् प्रभृतिर्गणः प्रोक्तः**
**आकृतिसिद्धाः शब्दाः प्रयोगतोऽन्येऽपि तत्र स्युः ॥3॥[4]**

---

1 उपाजेऽन्वाजे (1-4-73) मध्ये पदे निवचने च (1-4-76) विभाषा कृञि (1-4-72)

2 साक्षात्प्रभृतीति च (1-4-77) अनत्याधान उरसिमनसी (1-4-75)

3 'रोचनाऽमाद्धा' इति मूल पुस्तके

4 विभाषा संपत्का, अमा, विकम्पने प्रहसने। एते शब्दाः काशिका वृत्तौ गणपाठे अधिकाः सन्ति।

उरसि मनसीति सप्तमी प्रतिरूपके। ततः समासे तल्लोपे नास्ति। उरसिकृत्य, उरसिकृत्वा पाणि शेते – इत्येव।

**8. उपयमने पाणौ हस्तेभ्यां वन्धने प्राध्वं शब्दादौपम्ये जीविकोपनिषद्भ्यां परतः प्रयुक्तं कृवृत्तं नित्यं तत्पुरुषः स्यात्** [1]**।**

उपयमनं विवाहकरणं स्वीकारमात्रं वा पाणौ हस्ते इति सप्तमी प्रतिरूपकत्वादलोपः। पाणौकृत्य हस्तेकृत्य। अध्याधाने तु कन्दुकं पाणौकृत्वा, दण्डं छत्रं च हस्तेकृत्वा इत्येव। प्राध्वमित्यव्ययं विप्रतिकूलस्य प्रतिपन्न लोक मार्गासादने। अध्वानं प्रगतः प्राध्वः प्राध्वंकृत्य। बन्धनादिबलप्रयोगेणानुकूल्यं कृत्वेत्यर्थः। प्रार्थनादिना त्वानुकूल्यकरणे प्राध्वं कृत्वेत्येव। जीविकामिव कृत्वा प्रतिग्रहं जीविकाकृत्य असौ तत्र वसति। उपनिषदमिव कृत्वा गुरुवचनमुपनिषत्कृत्यासौ तत्र श्रद्धत्ते। एषां च्व्यन्तडाजन्तोर्यादि प्रभृतीनां क्रियास्वरूपसंपत्तये विनियुक्तानामत एव क्रियामुपसमानानां क्रियास्वेव गतिर्दृश्यते न स्वातन्त्र्येण पृथग्भूयैतेऽवस्थातुमिदानीं शक्नुवन्ति। व्याकरणादिव दूरीकरण नमस्करणादीनां विशिष्टानामेव क्रियाविशेषतयाऽभ्युपगमादित्यत एवैते सर्वेऽपि गति शब्देन प्रतिसिद्धयन्ति।

## 5. नञ् तत्पुरुषः

**1. नञो भेदार्थात् परतः प्रयुक्तं नामपदं तत्पुरुषः स्यात्** [2]**।**

अनुविधौ वक्ष्यामि नञो वर्णद्वयमनखादिषु विपर्य्यस्तम् पदवत् स्यात् स्वरपरत्व इति। नञो वर्णद्वयं नकारश्चाकारश्च, विपर्य्यस्तं तत् स्यादकारश्च नकारश्च। तयोरनयोः प्रयोगनियमो विधीयते। असमासे न शब्द एवं प्रयोक्तव्यः समासे। त्वनखादिष्वन् शब्द एवेति। तस्यैतस्यानो व्यञ्जनपरत्वे राजस्वादिवन्नकारलोपः। न भिन्नः – अभिन्नः। अधर्मः: अधीरः असुरः, अश्रान्तम्, अविरतम्, अविच्छिन्नम्, न सः असः। क प्रत्ययेऽपि पद्कार्यं न लोपो दृश्यते अकब्राह्मणः स्वराद्युत्तरपदपरत्वे तु पदकार्य्यं वार्य्यते तेन न लोपो नकारद्वित्वञ्च[3] नास्ति। अनश्वः अनवरतम्, अनवच्छिन्नम्, अनाग्रहः अनादरः अनिच्छा अनुद्धतः, अनेकः, अनैक्यम्, अनेकधा

---

1 नित्यं हस्तेपाणावुपयमने (1-4-77) प्राध्वं बन्धने (1-4-78) जीविकोपनिषदावौपम्ये (1-4-79)

2 नञ् (2-2-6)

3 ङमो ह्रस्वादचि ङ. मुण्नित्यम् इत्यनेन नुडविधिरेव द्वित्वमुक्तम्

स्वरव्यञ्जनोभयसधर्मणामन्तःस्थानां सन्निधाने तु व्यवस्थितं द्वैविध्यं दृश्यते। व्यञ्जनत्वात् क्वचित् नलोपः, स्वरत्वात् क्वचिन्न श्रवणम्। अयुक्तम् अन्यत्। नखादिषु तु समासेऽपि न शब्द एव प्रयुज्यते न त्वन् शब्दः। नैकधा, नभ्राट, नपात्, नवेदाः, नासत्या,नमुचिः। स्त्रियाः स्त्रीलक्षणाभावे पुंस्त्वमर्थतो व्यपदेशाय प्रसज्ज्यते नादिह[1] प्रतिषिध्यते – नपुंसकमिति। पुमानपि नास्तीति भावः। तथा चोभयतः प्रतिषेधान्यध्यावस्था नियम्यते। नक्षत्रम्, नक्रः, नगः, नागः[2]। द्विविधो ह्यं न शब्दः – भेदार्थश्चाभावार्थश्च। तत्र भेदार्थस्यायं तत्पुरुषः। अनुपलब्धिरविवादोऽविघ्न-मित्यादिष्वपि भेदार्थसंभवात्। अर्थाभावे त्वव्ययीभावो विधीयते। स पूर्वपदार्थः। असंहितम्। अमक्षिकम्, अशब्दम्, अप्रत्ययम्, अन्यपदार्थत्वे बहुब्रीहिः। अदयः, अधनः।

नन्वेवं न तत्पुरुषः किं पदार्थः। यदि तत्पुरुषः स्वाभाव्यादुत्तरपदार्थप्रधानः स्यात्। तर्हि – अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं स्यात्। अन्य पदार्थ प्रधानश्चेदवर्षाहेमन्त इति हेमन्तस्य यल्लिङ्गम् वचनं च तत्समास्यापि स्यात्। यथेह पूर्वपदार्थस्य लिङ्गसंख्याभ्यां योगो नास्ति एवममुष्य समासार्थस्यापि प्रसज्ज्येत। अत्रोच्यते। अस्तु पूर्वपदार्थप्रधाने न तत्पुरुषः। यथा हि चार्थे द्वन्द्वः। तत्र च शब्देनाभिनीतार्थो लिङ्गसंख्याभ्यामयोगी। च शब्दस्य निपातत्वेन द्योतकतयाऽर्थस्य साध्यरूपेणैव प्रतीतेः। समासेन त्वभिनीतोऽर्थो युज्यते लिङ्गसंख्याभ्याम्। समासस्य वाचकतया तदर्थस्य सिद्धरूपेण प्रतीतेः। एवमिह निपातेन नञाभिनीतोऽर्थो लिङ्गसंख्याभ्यामयोगी। समासेन तु युज्यते इति स्वाभाविकमेतत्। अथवा पुनरस्तूत्तरपदार्थ प्रधानः। द्विविधश्चायं न शब्दः। पदार्थ निवृत्यर्थोऽव्ययीभाव योग्य एकः, निवृत्तपदार्थस्तु तत्पुरुषयोग्यो द्वितीयः। न ब्राह्मणोऽब्राह्मण इति, यदाह – निवृत्तपदार्थो ब्राह्मणोऽब्राह्मण इत्येवैतदाह। तत्र स्वार्थद्रव्ये पदार्थो भवति। प्रवृत्तिनिमित्तभूता धर्म्माः स्वार्थः, तदाश्रयो द्रव्यम्। यथा ब्राह्मण इत्यत्र ब्राह्मण्यं स्वार्थः। तदुपहितस्तु धर्मविशेषो द्रव्यम् तयो क्वचित्स्वार्थमात्रनिवृत्ति विवक्षया नञ् शब्दः प्रयुज्यते क्वचिद्वा द्रव्यनिवृत्तिविवक्षया। क्वचित्तूभयनिवृत्ति विवक्षयेति शब्दैक्येऽपि तात्पर्य्य विशेषादर्थ भेदो दृश्यते लोके। स्वनिवृत्यं तु यं यमर्थमर्थाशं वा निवर्तयितुं यो[3] नञ् शब्दो नियुज्यते तत्पर एवायं तमेवार्थमर्थाशं वा निवर्तयति नान्यमंशं न तु वा स्वनिवर्त्ये

1 'नदिह' इति मूल ग्रन्थे।

2 न भ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या (6-3-75)

3 यं. इति मूले

नियुक्तोऽपीति नञः स्वभावः। यथा जाति भ्रंशकर पातक संयोगाद् ब्राह्मणोऽयमब्राह्मणो भवति। निवृत्तब्राह्मण्यकः स भवतीति तात्पर्य्यम्। नात्रेष्यते द्रव्यनिवृत्ति। निश्चितस्वार्थयोगे निवृत्ति शब्दः स्वार्थनिवृत्तौ तात्पर्य्यग्राहकः। असुराः पूर्वदेवाः। अमर्त्या निवृत्तमृत्यवः। निष्फलकर्मैव अकर्म्म। फलवत् कर्मणि कर्मशब्दः परिभाषित इति फलाभावात् कर्मपदव्यवहारायोग्यमित्यर्थः। निवृत्तक्षत्रियधर्म्मा कश्चित् कायस्थौऽक्षत्रियः। यत्र तु निश्चितस्वार्थायोगस्तत्र निवृत्तिशब्दो द्रव्यनिवृत्तौ तात्पर्यग्राहकः। प्रतीतः क्षत्रियश्चेदब्राह्मण इत्युचते ततः सादृश्यादिनाध्यारोपित ब्राह्मण्योऽयमित्यवगम्यते। नपुंसकः। आरोपितपुंस्त्ववान्। अनश्वोऽश्वतरः। आरोपितक्षत्रियधर्मा कश्चित् कायस्थोऽक्षत्रियः। नात्रेष्यते स्वार्थनिवृत्तिः क्वचित्तूभयमिष्यते निवार्तयितुम्। अब्राह्मणः क्षत्रियादिः, अनुपलब्धिः, अविवादः, अविघ्नम्, अनित्यं कार्य्यम्। ननु निवृत्तपदार्थो ब्राह्मणशब्दः किमर्थ प्रयुज्यते। एवं यथा विज्ञायेत अस्य पदार्थो निवर्तत इति। नेत्युक्ते न निश्चीयेत कस्य पदार्थो निवर्तत इति एवमर्थो ब्राह्मण शब्दः। अथवा सर्व एते शब्दा गुण समुदायेषु वर्तन्ते – ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति।

**तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम्।**
**तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥1॥**

कर्म, विद्या, जन्म चेति त्रयः समुदिता ब्राह्मण्यहेतुः। तथा गैरः शुच्याचारः, पिङ्गल कपिलकेशः इत्येतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्ति। समुदायेषु च वृत्ता शब्दा अवयवेष्वपि वर्तन्ते पूर्वे पञ्चाला इतिवत्। ततः समुदाये प्रवृतो ब्राह्मणशब्दोऽवयवेष्वपि वर्तते – जातिहीने च गुणहीने च। गुणहीने तावदब्राह्मणोऽयं यस्तिष्ठन् मूत्रयति, यस्तिष्ठन् भक्षयति। जातिसंयोगाद् ब्राह्मणशब्दः प्रवृत्तो गुणकृता चार्थनिवृत्तिः। अपि च न ह्ययं कालं माषराशिवर्णमापणे आसीनं दृष्ट्वाऽध्यवस्यति ब्राह्मणोऽयमिति। अब्राह्मणोऽयमिति निर्ज्ञातं तस्य भवति। अथ जातिहीने सन्देहाद्दुरूपदेशाच्च ब्राह्मणशब्दो वर्तते। तथा हि –गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्टाध्यवस्यति ब्राह्मणोऽयमिति। ततः पश्चादुपलभते नाऽयं ब्राह्मण इत्यब्राह्मणोऽयमिति। तत्र संदेहात् ब्राह्मणशब्दः प्रवृत्तो जातिकृता चार्थस्य निवृत्तिः। एवम् – अमुस्मिन्नवकशेऽस्ति ब्राह्मणस्तमानयेत्येवं पद्यस्य दुरुपदिष्टं भवति स तत्र गत्वा यं पश्यति। तमध्यवस्यति ब्राह्मणोऽयमिति निर्ज्ञातं तस्य भवति। तत्र दुरुपदेशात् ब्राह्मणशब्दः प्रवृत्तो जातिकृता चार्थस्य निवृत्तिः। एवमन्यत्राऽपि। अथवा सामान्यविशेषभ्यां भावाभ्यां गृहीतानि द्रव्यगुणकर्म्माणि पदार्थः। आभ्यामेव चैतानि

स्वरूपं दधत इति सामान्ययोगात् स स शब्द प्रवर्तते, विशेषानुपलम्भात्तु पुनर्निवर्त्तते। विशेषाणामेव शब्दप्रवृत्तिनिमित्तत्वात्। अब्राह्मण इति निवृत्तब्राह्मण्यविशेषः कश्चित् सामान्यभाव इत्येवार्थः। तदित्थमुत्तरपदार्थप्रधानत्वमर्थतः सिद्धम्। अत एवानेकमित्येकवचनस्यापि संसिद्धिः।

2. **नञोऽवक्षेपविषयात् परतः प्रयुक्तमाख्यातपदं तत्पुरुषः स्यात्**[1]।

अपचसिवैत्वं जाल्म्। अप्रकरोषि वैत्वं जाल्म्। एकपद्यमेवात्र समासार्थोऽवक्षेपार्थ समुच्चयश्च कारकविभक्तयस्तु नैतस्मादुत्पद्यन्ते प्रवृत्तिनिमित्तार्थायोगात्। इति नञ् तत्पुरुषः।

तदित्थमेकदेशिसमास उपपदसमासस्तथा द्विगुसमासो गतिसमासो नञ् समासश्चेति पञ्चावयवोऽयमुद्गीर्णसमासः प्रदर्शितः। इत्थं च कर्मधारयो भिन्न उद्गीर्णश्चेति त्रेधा विभक्तं तत्पुरुषस्य विधितन्त्रमादिष्टम्। शेषतन्त्रमतः परमादिष्यते।

## तदनुविधिः

उपसर्जनसिद्धिः, समासान्तो, विकारादेशो, विभक्तिलोपालोपौ, पुंवदभावो लिङ्गविधिः, स्वरविधिश्चेति सप्तेते तत्पुरुषाश्रयविधयो भवन्ति वचनोद्देशाय तु विशेषतत्पुरुषे न दृश्यते। तत्र समासे यस्य प्रथमप्रयोगो नियम्यते तदुपसर्जनम्[2]। प्रयोग व्यवस्था च प्राक् समासादेशेन सहैवोपदर्शिता। अथ समासान्तः प्रदर्शनीयः।

## समासान्तः

स चेह तत्पुरुषेऽकार एवोपजायते – पञ्चत्रिंशच्छब्देभ्यः।

| | | | | |
|---|---|---|---|---|
| तत्र ह्रस्वेकारान्ता अष्टौ – | 1. | भूमि, | 2. | सखि, |
| | 3. | सक्थि | 4. | अक्षि, |
| | 5. | अङ्गुलि | 6. | अञ्जलि |
| | 7. | रात्रि | 8 | .पथि |
| दीर्घेकारान्त एकः – | 1. | खारी | | |
| ओकारान्त एकः – | 1. | गो | | |

1 नञो नलोपस्तिङि क्षेपे (वा.3984)

2 प्रथमानिर्दिष्टं समास उपसर्जनम्(1-2-43) उपसर्जनं पूर्वम्(2-2-30)

| | | | | | |
|---|---|---|---|---|---|
| औकारन्त एकः | – | 1. | नौ | | |
| सकारन्ता एकादश | – | 1. | वसीयस् | 2. | श्रेयस् |
| | | 3. | वर्चस् | 4. | तमस् |
| | | 5. | रहस् | 6. | उरस् |
| | | 7. | अनस् | 8. | अयस् |
| | | 9. | सरस् | 10. | छन्दस् |
| | | 11. | आयुस् | | |
| नकारान्ता दश | – | 1. | अश्मन् | 2. | तक्षन् |
| | | 3. | श्वन् | 4. | ब्रह्मन् |
| | | 5. | अक्षन् | 6. | अध्वन् |
| | | 7. | राजन् | 8. | अहन् |
| | | 9. | सामन् | 10. | लोमन् |
| चकारान्त एकः | – | 1. | ऋक् | | |
| रकारान्तौ द्वौ | – | 1. | पुर् | 2. | धुर् |

(इ)

**1. कृष्णोदक्पाण्डुभ्यः परस्य भूमेरुत्तरपदस्य तत्पुरुषोऽकारान्तः स्यादि कारलोपश्च [1]।**

कृष्णा भूमिः कृष्णभूमः, उदग्भूमः, पण्डुभूमः, अन्ये त्वेषु बहुब्रीहिमेवेच्छन्ति।

**2. सख्यन्तस्तत्पुरषोऽकारान्तः स्यादिकारलोपश्च [2]।**

कृष्णसखः, परमसखः त्र्यम्बकसख कुवेरः।

**3. उपमानादुत्तरमृगपूर्वेभ्यश्च परस्य सक्थन उत्तरपदस्य तत्पुरुषोऽकारान्तः स्याट्टिलोपश्च [1]।**

---

[1] कृष्णोदकपाण्डुसंख्यापूर्वाया भूमेरजिष्यते (वा.5046)

[2] राजाहस्सखिभ्यष्टच् (5-4-91) यस्येति च (6-4-148)

गोष्ठे श्वा गोष्ठाश्व, षष्ठीतत्पुरुषादौ गोष्ठश्वेत्येव। फलकमिव सक्थिफलकसक्थम्, उत्तरसक्थम्, मृगसक्थम्, पूर्वसक्थम्।

**4. उत्तरपदस्याप्राण्ङ् गस्याक्ष्णस्तत्पुरुषोऽकारान्तः स्याट्टिलोपश्च [2]।**

गवामक्षीव गवाक्षः, अक्ष शब्देन सि़द्धावपि गवाक्षीत्येतन्निरासार्थमिमिदमुच्यते, लवणाक्षम्। अश्वानां बहुछिद्रकं मुखावरणमुच्यते कम्वराक्षम्अश्वा ह्येतेन पश्यन्ति प्राण्यङ्गात्तु न समासः। ब्राह्मणाक्षि।

**5. अव्ययसंख्याभ्यः परस्याङ्गुलेरुत्तरपदस्य तत्पुरुषोऽकारान्तः स्यादिकारलोपश्च [3]।**

निर्गतमङ्गुलिभ्यो निरङ्गुलम् , द्वे अङ्गुली प्रमाणमस्य द्वयङ्गुलं दारु।

**6. द्वित्रिभ्यां परस्या जलेरुत्तरपदस्य तत्पुरुषो विकल्पेनाकारान्तः स्यादिकारलोपश्च न चेत् तद्धितलोपः [4]।**

द्वयञ्जलं, द्वयञ्जलि। तद्धितलोपे तु द्वाभ्यामञ्जलिभ्यां क्रीतो द्वयञ्जलिरित्येव।

**7. अव्ययसंख्याभ्यः सर्वसंख्यापुण्येभ्यः एकदेशवचनाच्च परस्य रात्रेरुत्तरपदस्य तत्पुरुषोऽकारान्त स्यादिकारलोपश्च [5]।**

अतिक्रान्तो रात्रिमतिरात्रः, द्वयोः रात्र्योः समाहारो द्विरात्रम्, त्रिरात्रम्, दशरात्रम्, सर्वा रात्रिः सर्वरात्रः, संख्यातरात्रः, पुण्यरात्रः, पूर्व रात्रेः पूर्वरात्रः, अपररात्रः।

**8. पथ्यन्तस्तत्पुरुषोऽकारान्तः स्यादिकारलोपश्च स न पूर्वो विकल्पेन [6]।**

उत्तरपन्थाः उत्तमपथः, सत्पथः, राजपथः, छायापथः, धर्म्मपथः, न्यायपथः। पथ शब्दात् सि़द्धाविकारान्तनिवृत्यर्थमिदम्। नञतूभयथा प्रयोगः [7]। अपन्थाः, अपथम्।

---

1 उत्तरमृगपूर्वाच्च सक्थ्नः (5-4-97) नस्तद्धिते (6-4-144)

2 अक्ष्णोऽदर्शनात् (5-4-76)

3 तत्पुरुषस्याङ्गुले संख्याव्ययादेः (5-4-86)

4 द्वित्रिभ्यामञ्जले (5-4-102)

5 अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः (5-4-87) अहर्ग्रहणं द्वन्द्वार्थम्(वा.3353)

6 ऋक्पूरब्धूः पथामानक्षे (5-4-74)

7 पथो विभाषा (5-4-72)

**(ई)**

1. **द्विगोरर्द्धाच्च परस्य खर्य्या उत्तरपदस्य तत्पुरुषोऽकारान्तः स्यादीकारलोपश्च प्राचानाम्**[1]**।**

द्विखारं धान्यम् अर्धखारम् इति प्राच्या भाषन्ते। उदीच्यास्तु द्विखारि धान्यम् अर्धखारीत्येव। अर्द्धखारीति दीर्घेकारो न तु ह्रस्वः।

**(ओ)**

1. गोन्तस्तत्पुरुषोऽकारान्तः स्यान्न चेत्तद्धितलोपः[2]। पञ्चानां गवां समाहारः पञ्चगवम्, पञ्चगवधनः, अष्टगवम्, चित्रा गौश्चित्रगवी, कपिलगवी, सवत्सगवी।

**(औ)**

1. **द्विगोरर्द्धाच्च परस्य नाव उत्तरपदस्य तत्पुरुषोऽकारान्तः स्यान्नचेत्तद्धितलोपः**[3]**।**

द्वाभ्यां नौभ्यामागतो द्विनावरूप्यः। द्विनावं, त्रिनावम्, पञ्चनावप्रियः। तद्धितलोपे तु पञ्चभिर्नौभिः क्रीतः पञ्चनौरित्येव। नावोऽर्द्धमर्द्धनावम्। अत्र नपुंसकत्वं दृश्यते।

**(स)**

1. **श्वोवसीयसं श्वः श्रेयसं निः श्रेयसम्**[4]**। वसीयः श्रेयः शब्दावकारान्तौ निर्दिश्येते।**

वसु शब्दः प्रशस्त वचनः, स ईयसन्तो वसीयः शब्दः। श्वेः शब्दः उत्तरपदार्थप्रशंसामाशीर्विषयतां चाह। उत्तरोत्तरमायत्याम् कल्याणभावः। श्वोवसीयसम्, श्वः श्रेयसं ते भूयात्, निश्चितं श्रेयो निःश्रेयसम्।

---

[1] खार्याः प्राचाम् (5-4-101)
[2] गोरतद्धितलुकि (5-4-92)
[3] नावो द्विगो5 (5-4-99)
[4] श्वसो वसीयः श्रेयसः (5-4-80)

2. **ब्रह्म, राज, पल्य, हस्तिभ्यः परस्य वर्चस उत्तरपदस्य तत्पुरुषोऽकारान्तः स्यात्[1]।**

ब्रह्मणो वर्चः – ब्रह्मवर्चसम्, राजवर्चसम्, पल्यं, मासं, मांसभोजी वा पल्यः, पल्यवर्चसम्, हस्तिवर्चसम्।

3. **अवसमन्धेभ्यः परस्य तमस उत्तरपदस्य तत्पुरुषोऽकारान्तः स्यात्[2]।**

हीनं तमः – अवतमसम्। विष्वक् तमः – सन्तमसम्। अन्धं कुर्वत् प्रकाढं तमोऽन्धतमसम्।

4. **अन्ववतप्तेभ्यः परस्य रहसः उत्तरपदस्य तत्पुरुषोऽकारान्त स्यात्[3]।**

अनुरहसम्, अवरहसम्, तप्तरहसम्।

5. **प्रशंसार्थमग्राख्यायामुरस उत्तरपदस्य तत्पुरुषोऽकारान्तः स्यात्[4]।**

अश्वानमुर इव – अश्वोरसम्। मुख्योऽश्व। इत्यर्थः।

6. **अनोऽयः सरोन्तस्तत्पुरुषोऽकारान्तः स्यात् जातौ संज्ञायाञ्च[5]।**

उपानसम्, कलायसम्, मण्डूकसरसमिति जातिः। महानसम्, लोहितायसम्। जलसरसमिति।

7. **सर्वमेव तु नपुंसकमसन्तमुत्तरपदं तत्पुरुषः स्याद्विकलपेनाकारान्तं** स्याच्छन्दसि[6]।

देवच्छन्दसम्, देवच्छन्दः।

8. **पुरुषात् संख्याभ्यश्च परस्यायुष उत्तरपदस्य तत्पुरुषोऽकारान्तः स्यात्[7]।**

---

1 ब्रह्महस्तिभ्यां वर्चसः (5-4-78) पल्यराजभ्यां चेति वक्तव्यम् (वा.3352)

2 अवसमन्धेभ्यस्तमसः (5-4-79)

3 अन्ववतप्ताद्रहसः (5-4-81)

4 अग्राख्यायामुरसः (5-4-93)

5 अनोश्मायस्सरसां जातिसंज्ञयोः (5-4-94)

6 अनसन्तान्नपुंसकाच्छन्दसि (5-4-103)

7 अचतुरविचतुरसुचतुरस्त्री. (5-4-77)

पुरुषस्यायुः पुरुषायुषम्। पुरुषजीवनकालः शतवर्षात्मकः। द्वे आयुषीद्वयायुष्यम्। त्र्यायुषम्। त्र्यायुषं जमदग्ने कश्यपस्य त्र्यायुषम्।

**(न)**

1. **अश्मान्तस्तत्पुरुषोऽकारान्तः स्याज्जातौ संज्ञायाम् च टिलोपश्च अन्भागष्टिः [1]।**

अमृताश्म इति जातिः। पिण्डाश्म इति संज्ञा।

2. **ग्रामकोटाभ्यां परस्य तक्ष्ण उत्तरपदस्य तत्पुरुषोऽकारान्तः स्याट्टिलोपश्च [2]।**

ग्रामस्य तक्षा ग्रामतक्षः साधारण इत्यर्थः। यस्तु स्वकुट्यामेवावस्थाय कर्म कुरुते स तक्षा कौटतक्षः स्वतन्त्रः इत्यर्थः।

3. **सप्तम्यन्तगोष्ठादतेरप्राण्युपमेयाच्च परस्य शुन उत्तरपदस्य तत्पुरुषोऽकारान्तः स्याट्टिलोपश्च [3]।**

गोष्ठे श्वा गोष्ठश्वः षष्ठीतत्पुरुषादौ गोष्ठश्वेत्येव। श्वानमतिक्रान्तः – अतिश्वोवराहः। अतिश्वी सेवा। आकर्षः श्वेव – आकर्षश्वः। पञ्चाङ्गुलो धान्यादिकर्षकः अन्यो वा कश्चिदाकर्षणाय निर्मितः काष्ठविशेषः आकर्षः। स श्वाकारो निर्मितश्चेदाकर्षश्व इत्युच्यतेप्राणिषु तु वानरः श्वेव वानरश्वा इत्येव।

4. **ह्यान्तस्तत्पुरुषोऽकारान्तस्याट्टिलोपश्च जानपदाख्यायाम् [4]। सुराष्टे ब्रह्मा – सुराष्ट्रब्रह्म।**

कुमहद्भ्यां परस्य ब्रह्मणः उत्तरपदस्य तत्पुरुषो विकल्पेनाकारान्तः स्याट्टिलोपश्च [5]। कुत्सितो ब्रह्मा कुब्रहमः, कुब्रह्मा, महाब्रह्मः, महाब्रह्मा – महतः आत्वं विकारः।

---

[1] अचतुरविचतुरसुचतुरस्त्री. (5-4-77)

[2] ग्रामकौटाभ्यां च तक्ष्णः(5-4-95)

[3] अतेः शुनः (5-4-96) उपमानादप्राणिषु (5-4-97)

[4] ब्रह्मणो जानपदाख्यायाम् (5-4-104)

[5] कुमहदभ्यामन्यतरस्याम् (5-4-105)

**5. जातबृद्धमहदभ्यः परस्योक्ष्ण उत्तरपदस्य कर्मधारयोऽकारान्तः स्यात्।**

टिलोपश्च [1]। जातोक्षः, वृद्धोक्षः, महोक्षः।

**6. पसर्गात् परस्याध्वन् उत्तरपदस्य तत्पुरुषोऽकारान्त स्याट्टिलोपश्च [2]।**

प्रगतोऽध्वानं प्राध्वो रथः मार्गमारुढ इत्यर्थः। विरुद्धो विकटो वाध्वा व्यध्वः। दुष्टोऽध्वा दुरध्वः। व्यध्वो दुरध्वो विपथः। कद्ध्वा कापथः समाः इत्यमरः।

सर्वमेव तु नपुंसकमन्नन्तमुत्तरपदं तत्पुरुषस्य विकल्पेनाकारान्तं स्याच्छन्दसि[3]। ब्रह्मसामं ब्रह्मसाम।

**7. राजन्नन्तस्तत्पुरुषोऽकारान्तः स्याट्टिलोपश्च[4]।**

परमराजः, महाराजः, अधिराजः देवराजः, अतिराजी, राज्ञी शब्देन तु नायं समासान्तः [5]। मद्राणां राज्ञी- मद्रराज्ञी महाराज्ञी।

**8. हन्नन्तस्तत्पुरुषोऽकारान्तः स्यादव्ययादसमाहारस्थ द्वयादि संख्याभ्यः सर्वसंख्याताभ्यामेकदेशवचनाद्योत्तरस्याह्न उपधालोपमात्रयतस्तु टिलोपः स्यात् [6]।**

अन्त्याद् वर्णात् पूर्वो वर्ण उपधा[7]। यथाह्नो नकारात् प्रागकारः। रेफ घटितादकारान्तात् पूर्वपदात् परस्याह्नो नकारस्य णत्वादेशो भवति[8]। प्राह्णः अथेहनास्ति परागतमहः पराह्न। अत्यह्नः। द्वयोरह्नोर्भवो द्वह्नः, द्वह्ना, द्वह्नप्रियः। सर्वमहः सर्वाह्णः। संख्याताह्नः। अह्नः पूर्वभागः पूर्वाह्णः, अपराह्णः। मध्याह्नः। एषूपधालोपः। अन्यत्र टिलोपः उत्तमाहः। पुण्याहम्, सुदिनामहम्। सुदिनशब्दः

---

1 अचतुरविचतुरसुचतुरस्त्रीपुंस (5-4-77)

2 उपसर्गादध्वनः (5-4-85)

3 अनसन्तान्नपुंसकाच्छन्दसि (5-4-103)

4 राजास्सखिभ्यष्टच् (5-4-91)

5 प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् इति परिभाषायानित्यत्वात्।

6 राजाहस्सखिभ्यष्टच् (5-4-91), अह्नष्टखोरेव (6-4-145)

7 अलोऽन्त्यात्पूर्व उपधा (1-1-65)

8 अह्नोऽद न्तात् (8-4-7)

प्रशस्तवचनः। सुदिनासु समासु कार्य्यमेतत् प्रविचिन्वीत विशेषतः स्वयं चेत्यादिषु तत्र प्रयोगात्। एकशब्दात् संख्यावचनादप्युत्तरस्याह्नष्टिलोप एव नोपधालोपः। एकाहः। द्वयादिभ्योऽपि संख्या समाहारे टिलोप एव [1]। द्वयोरह्नोः समाहारो- द्वयहः, त्र्यहः, षडहः, सप्ताहः, दशाहः, द्वादशाहः, पञ्चदशाहः, संख्यात शब्दादप्येके टिलोपमेवेच्छन्ति – संख्याताहः। द्वे अहनी भूतो द्वयहीनः क्रतुरिति तद्धिते दर्शितम्।

**9. त्यन्वेभ्यः परयोः सामलोम्नोरुत्तरपदयोस्तत्पुरुषोऽकारान्तः स्याट्टिलोपश्च [2]।**

प्रतिसामम्, अनुसामम्, अवसामम्, प्रतिलोमम्, अनुलोमम् अवलोमम्, अव्ययीभावादिनाप्येवं रूपाणि भवन्ति।

## (च)

**1. गन्तस्तत्पुरुषोऽकारान्तः स्यात् [3]। ऋचोऽर्धमर्द्धर्चः।**

## (र)

**1. नक्षस्थ धुरन्तः पुरन्तश्च तत्पुरुषोऽकारानतः स्यात् [4]।**

राजधुरा, राज्यधुरा, धर्मधुरा, कामधुरा, अक्षे तु न। अक्षस्य धूरक्षधूः। विष्णोः पूः विष्णुपुरम्। जयनाम्नोराज्ञः प्रतिष्ठापिता पूर्जयपुरम्। पुर शब्देन सिद्धौ समासान्तविधानं विष्णुपूरित्यादि निरासार्थम्।

## प्रतिषेधः

पूजने स्वतिभ्यां [5] क्षेपे किमश्च समासान्तास्तत्पुरुषे न [6]सन्ति। शोभनो राजा सुराजा, अतिशयितो राजा अतिराजा, कुत्सितो राजा किं राजा, किंसखः, किंगवः। इति समासान्ताः।

---

1 अह्नष्टखोरेव (6-4-145)
2 अच्प्रत्यन्ववपूर्वात्सामलोम्नः(5-4-75)
3 ऋक्पूरब्धू पथामानक्षे (5-4-74)
4 ऋक्पूरब्धूपथामानक्षे (5-4-74)
5 न पूजनात् (5-4-69)स्वतिभ्यामेव (वा.3346)
6 किमः क्षेपे (5-4-70)

## विकारादेशः

अथ विकारादेशो वक्तव्यः स द्विविधः – समासान्तसंयोगनिमित्तः, पदसंयोगनिमित्तश्च। तत्राद्यः समासान्तविधिना सहैवोपदर्शितः। पदनिमित्तः प्रदर्श्यते। स एकादशधा – सत्वम्, षत्वम्, णत्वम्, ह्रस्वत्वम्, दीर्घत्वम्, आत्वम्, ईत्वम्, भागादेशः, भागलोपः, अन्तागमः, अनेकविकारश्चेति भेदात्। तत्र –

## सत्वम्

1. **कारात् परस्यानव्ययविसर्गस्यानुत्तरपदस्थस्य सत्वं स्यात् करोति काम्यति वृत्तयोः कंसकुम्भकुशाकर्णी पात्रेषु च परेषु [1]।**

अयस्कारः अयस्कामः, अयस्कंस, अयस्कुम्भः, अयस्कुशा, अयस्कर्णी, अयस्पात्रम्। अनकारात्परत्वान्नेह-गीः कारः। अव्ययविसर्गत्वान्नेह – स्वः कामः। उत्तरपदस्थत्वान्नेहः – परमयशः कारः।

2. **धः शिरसोर्विसर्गस्यानुत्तरपदस्थस्य सत्वं स्यात् पदे परे [2]।**

अधस्पदम्, शिरस्पदम्, समासाधिकारद्वाक्ये नास्ति। अधः पदं, शिरःपदम्। उत्तरपदस्थत्वान्नेह – परमशिरः पदम्।

3. **भास्करादिषु विसर्गस्य सत्वं स्यात [3]। भास्करः।**

आकृतिगणोऽयम्।

## षत्वम्

1. **नमिस्वरात् परस्योत्तरपदादिस्थस्यैकार परस्य सस्य षत्वं स्यात्।**

संज्ञायाम् नक्षत्रवचनात् विकल्पेन [4]। हरिषेणः, सुषेणः। अथेह विकल्पः। रोहिणीषेणः, रोहिणीसेनः। नामिस्वरादित्युच्यते तेनेह न। सर्वसेनः, चन्द्रसेनः, विष्वक्सेनः, मृगसेनः, शतभिषक्सेन। असंज्ञायां तु नामि स्वरादपि नास्ति। पृथुसेनः। अनेकारपरकस्यापि न – हरिसक्थम्।

---

1 अतः कृकमिकंस. (8-3-46)
2 अधः शिरसि पदे (8-3-40)
3 कस्कादिषु च (8-3-98)
4 एति संज्ञायामगात् (8-3-99) नक्षत्राद्वा (8-3-100)

**2. वियुधिभ्यां परस्य स्थिरस्य सस्य षत्वं स्यात्संज्ञायाम्** [1]**।**

गवियुधीति सप्तम्यलोपात् सिद्धयोरनुकरणम्। गविष्ठिरः, युधिष्ठिरः।

**3. मातृपितृभ्यां परस्य स्वसुरादेः सस्य षत्वं स्यान्मातुः पितुभ्यां तु विकल्पेन** [2]**।**

मातृष्वसा, पितृष्वसा, अथ विकल्पः। मातुः ष्वसा, मातुः स्वसा। पितुः ष्वसाः, पितुः स्वसा। अत्र भिक्त्यलोपं वक्ष्यते। यत्र तु समासो नास्ति तत्रेदं षत्वमपि न प्रवर्तते षत्वस्य समासेऽपि कृतत्वात्। मातुः स्वसा, पितुः स्वसा।

**4. सुषेधादिषु सस्य षत्वं स्यात्** [3]**।**

सुषेधः, दुःषेधः, निषेधः, प्रतिषेधः, सुष्ठु, दुष्ठु, अपष्ठु, प्रतिष्णिका, ऋतीषट्, जलाषाहम्, नौषेचनम्, दुन्दुभिषेवणम्, अङ्गुलिषङ्ग[4] भीरुष्ठानम्[5],

ज्योतिष्ठोमः, आयुष्ठोमः, गोष्ठोमः [6]। आकृतिगणोऽयम्। तेन गोष्पदं,[7] प्रतिष्कशः[8], विष्किरः – इत्यादयोऽन्येऽप्युदाहार्य्याः।

**5. इसुसोर्विसर्गस्यानुत्तरपदस्थस्य षत्वं स्यात् कुप्वादावुत्तरपदे परे** [9]**।**

सर्पिष्कुण्डिका, धनुष्कपालम्, सर्पिष्पात्रम्, धनुष्पृष्ठम्। उत्तरपदस्थत्वान्नेह परमसर्पिः कुण्डिकाः [10]।

## णत्वम्

**1. कोटरादिभ्यः संज्ञायामग्रे** [1]**।**

---

1 गवियुधिभ्यां स्थिरः (8-3-95)
2 मातृपितृभ्यां स्वसा (8-3-84) मातुः पितुर्भ्यामन्यतरस्याम् (8-3-85)
3 सुषामादिषु च (अस्मिन् गणे सुषेध, अपष्टु, ऋतिषट् इत्येते शब्दा न सन्ति)
4 समासेऽङ्गुले सङ्गः(8-3-80)
5 भीरोः स्थानम् (8-3-81)
6 ज्योतिरायुषः स्तोमः (8-3-83)
7 गोष्पदं सेवितासेवितप्रमाणेषु (6-1-145)
8 प्रतिष्कशश्च कशेः(6-1-155)
9 इसुसो सामर्थ्ये
10 नित्यं समासेऽनुत्तरपदस्थस्य

खदिरादिभ्यः संज्ञायां चासंज्ञायां चोत्तरस्य वनस्य नकारो णत्वं[2] यात्योषधिवनस्पतिभ्यस्त्विरिकादि-भिन्नेभ्योऽचतुरक्षरेभ्यो विकल्पेन [3]।

**कोटरमिश्रक सिध्रक शारिक पुरगाश्च केटराद्याः स्युः ।**
**खदि शरेक्षु प्लक्षाम्र कार्ष्य पीयूक्षमपि च निःप्रान्तः ॥**
**खदिराद्या दश गणिता इरिकाद्या नव गण्यन्ते ।**

कोटरावणं, मिश्रकावणं, सिध्रकावणं, शारिकावणं, पुरगावणमिति संज्ञाः । एषु दीर्घः प्रागुक्तः[4] । अग्रेवणम्, भिक्त्यलोपो वक्ष्यते [5]। खदिरवणं, शरवणं, इक्षुवणं, प्लक्षवणम्, आम्रवणं, कर्ष्यवणं, पीयूक्षावणम्, निर्वणं, प्रवणमन्तर्वणम्। द्विविधा वृक्षजातयः। ओषधयः फलपाकपर्यवसानत्वादेकवर्षस्थायिनः। परे तु वनस्पतयोऽनेकवर्षस्थायिनः। ताभ्यां विकल्पः – दूर्वावणम्, दूर्वावनम्। शिरीषवनम्। इरिकादिभ्यस्तु नास्ति। इरिकावनमिरिकावनम् तिमिरावनम् आकृतिगणोऽयं प्रयोगवशादुन्नेयः। ओषधि वनस्पति शब्दा द्वयक्षरा वा त्र्यक्षरा वात्र संग्राह्या न त्वधिकाक्षराः। तेनेह न देववदारुवनम् [6]।

2. **वाह्याणत्वनिमित्ततात्[7] परस्य वाहनस्य नकारो णत्वं याति [8]।**

स्वरहयवरकपगवेतरवर्णापरकरवयुक्तं पदं णत्वनिमित्तम्। इक्षुवाहणम्, आम्र वाहणम्, खदिरवाहणम्, इक्ष्वादीनि द्रव्याणि ह्यारोप्य वाहनेने‍ऽयन्ते अनाहितात्तु नास्ति। इन्द्रस्वामिकं वाहनमिन्द्रवाहनम्, गर्गवाहनम्। यदा तु गर्ग ाह्यत्वेन विवक्ष्यन्ते तदेहापि भवत्येव यदा गर्गाणां वाहनमपविद्धं तिष्ठति तदा णत्वं नास्ति।

3. **पूर्वपदाणत्वमिनित्तात् परस्य पानस्य भावकरणवृत्तस्य नकारो णत्वं विकल्पेन याति [9]।**

क्षीरपाणम्, क्षीरपानम्। अभ्यवहारक्रियामात्रं तत्साधनपात्रमपि वा लक्ष्यते।

---

1 वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः (8-4-4)
2 प्रनिरन्तः शरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि (8-4-5)
3 विभाषौषधिवनस्पतिभ्यः (8-4-6) इरिकादिभ्यः प्रतिषेधो वक्तव्यः (वा.4985)
4 वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम् (6-3-117)
5 राजदन्तादिषु निपातनात्सप्तम्या अलुक्।
6 द्वयच्त्र्यज्भ्यामेव (वा.4984)
7 वाह्या णत्वनिमित्त्वात् इति मूल पाठः
8 वाहनमाहितात् (8-4-8)
9 वा भावकरणयोः (8-4-10)

**4. पूर्वपदाण्णत्वनिमित्तात् परस्योत्तरपदस्यैकाक्षरस्य कवर्गतश्च प्रातिपदिकान्तो विभक्तिस्थश्च नकारो णत्वं यात्यनेकाक्षरस्याकवर्गस्य चोतरपदस्य [1]।**

विकल्पेन अथ न युवादे र्नापि निमित्त निमित्तिमत्पदाभ्यामतिरिक्तेन मध्यमेन पदेन व्यवेतस्य [2]।

एकाक्षरस्य तावत् – प्रातिपदिकान्तो नकारः – वृत्रहणौ। हरिं मानयतीति हरिमाणी। विभक्तिस्थो नकारः – क्षीरपाणि क्षीरपेण, रम्यविणा[3] पुनर्भूणाम्। कवर्गवतस्तु – हरिकामिणौ, हरिकामाणि, हरिकामेण, वस्त्रयुगाणि, वस्त्रयुगेण। एषु नित्यं णत्वम्। अथ विकल्पः माषवापिणौ,व्रीहिवापाणि प्रभावेणेति वा मासवापिनौ, व्रीहिवापानि, प्रभावेनेति वा। अथ युवादेः सर्वथा नास्ति। रम्ययूना, आर्ययूना क्षत्रिययूना, प्रपक्वानि, परिपक्वानि। युवादिराकृतिगणः। तेन दीर्घाह्नी शरदित्यादौ विकल्प प्राप्तमपि निषिध्यते गर्गाणां भगिनि – गर्गभगिनी, दक्षभगिनीत्यादिष्वपि नास्ति उत्तरपदस्य प्रातिपदिकान्त नकारत्वाभावात् [4]। मासवापिणीत्यत्र तु भवत्येव। समासोत्तरं स्त्रीप्रत्ययोत्पत्तेः। एवं तु गर्गभगोऽस्ति यस्याः सा गर्गभगिणीत्यपि णत्वं साध्वेव।

अथ मासकुम्भवापादि शब्देषु त्रिपदेषु पाणिनीयानां विप्रतिपत्तयो दृश्यन्ते। आदौ तावत् भगवान् पाणिनिः प्राह – ''निमित्त निमित्तिनोर्मध्ये पदव्यवाये सति नास्ति णत्वम्, मासकुम्भवापेन। चतुरङ्गयोगेन। अथ भगवान् पतञ्जलिः प्राहः – कुम्भस्य वापः कुम्भवापः। माषाणं कुम्भवापो मासकुम्भवापः। इत्यस्यां प्रक्रियायां नित्यंणत्वम् उत्तरपदस्य कवर्गवत्वात् मासकुम्भवापेण। इह कुम्भशब्दः कुम्भपरिमितधान्येभाक्तः। एवं व्रीहिकुम्भवापेण, चतुरङ्गयोगेण। यदा तु माषाणं कुम्भो मासकुम्भः। मासकुम्भस्य वापो माष कुम्भवाप इत्येषा प्रक्रिया। तदा विकल्पेन णत्वम्। मासकुम्भवापेण – माषकुम्भवापेन। चतुरङ्ग योगेण – चतुरङ्ग योगेन। कैयटस्तु माषाणां कुम्भवाप इति प्रक्रियायां मध्ये पदव्यवायाणत्वाभावो माषकुम्भवापेन, चतुरङ्गयोगेन। माषकुम्भस्य वाप इति प्रक्रियायां तु कुम्भस्य पदत्वानभ्युपगमात् पदव्यवायनिबन्धः प्रतिषेधो नास्तीति विकल्पितं णत्वमित्याह। परे दीक्षितादयत्तु माषकुम्भं वपतीति माषकुम्भवापस्तेन माषकुम्भवापेन, चतुरङ्गेन योगश्चतुरङ्गयोगस्तेन चतुरङ्गयोगेनत्यादिष्वपि णत्वाभावं

---

1 एकाजुत्तरपदे णः(8-4-12) कुमति च (8-4-13)प्रातिपदिकान्तनुंविभक्तिषु च (8-4-11)

2 युवादेर्न (वा. 4999) पदव्यवायेऽपि (8-4-38)

3 रम्यविशब्दात् तृतीयेकवचनम् । इति मूले

4 उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वम् (वा.4990)

पदव्यवायादभिमन्यन्ते। वस्तुतस्तु शब्दाधीना अर्थाधीना च सर्वा वैयाकरणी प्रक्रिया द्रष्ट्वया न तु[1] व्याकरणप्रक्रियाधीनः कश्चिदेकोऽपि शब्दः शब्दधर्मो वा पदत्वादिः। तस्मात् क्रियापदेऽस्मिन् माषकुम्भवापादि शब्दे मध्यमं चेदेकस्यां प्रक्रियायां पदं भवेत् सर्वास्वेव प्रक्रियासु तत्तर्हीदं पदमित्यभ्युपगन्तव्यम्। अतश्च सर्वास्वेव प्रक्रियासु णत्वाभावः पदव्यवायनिबन्धनो बोध्यः। माषकुम्भवापेन चतुरङ्गयोगेन। पतञ्जलिस्तु पदव्यवायनिबन्धन प्रतिषेधस्य प्रतिषेध्यं णत्वं केन नियमेन कथं प्राप्तमित्येवोपदर्शयितुं णत्वविधान शास्त्रे विशेषं परामृशति न तु णत्वं भवत्येवेत्यभिनिविशते आर्द्रगोमयेण शुष्कगोमयेणेत्यादौ तु न प्रतिषेधः। निमित्तात् नकारस्य[2] व्यवधायकान्मध्यपदादतिरिक्ते तृतीयपदेऽनवस्थानात्। मयस्य तद्धित प्रत्ययतया पदरुपत्वाभावात्।

**5. पूर्वपदाण्णत्वनिमित्तादकारान्तात् परस्याकारान्तस्याह्नस्य नकारो णत्वं याति।**

अह्न इति कृतसमासान्तस्यानुकरणम्। सर्वाह्णः, पूर्वाह्णः, प्राह्णः, अपराह्णः। अकारान्तत्वाभावान्नेह – परागतमहः पराह्नः। कृतसमासान्तत्वाभान्नेह – दीर्घाह्नी प्रावृट्।

## ह्रस्वत्वम्

पूर्वपदान्ते धातोर्नामि स्वरस्येयङुवङ.योग्यस्य ह्रस्व इति गालवः [3]। इ, उ, ऋ, स्वरा नामितः। सेनानिपुत्रः, ग्रामणिपुत्रः। विश्वमित्रस्य पुत्रः कश्चित् गालवाचार्यः। स इत्थं ह्रस्वघटितं प्रयोगं लोके पश्यति। अन्ये तु ग्रामणीपुत्र इत्येव पश्यन्ति। धातुसम्बन्धाभावात्तु गौरीपतिः शुक्लीभाव इत्यादौ नास्ति ह्रस्वो गालवस्यापि। यस्येयङुवङौ न भवतस्तस्यैव नामिनोऽयं ह्स्वः। तेनेह न। श्रीमदः भूपतिः।

पूर्वपदान्ते भ्रुवः स्वरस्योकारोऽकार ऊकारो वा कुटिकुंसयो परत्वे [4]। भ्रकुटिः, भ्रुकुटिः भ्रूकुटिः। भ्रकुंसः भ्रुकुंसः, भ्रूकुंसः नाट्ये स्त्रीवेशधारी पुरुषः।

---

1 न तु वा इति मूल ग्रन्था।

2 निमित्तो नकारस्य इति मूले।

3 इको ह्रस्वोऽङ्यो गालवस्य (6-3-61)

4 अभ्रु कुंसादीनामिति वक्तव्यम् (वा.3964)

ऊङन्तस्यवसादिप्रत्ययान्त विहितङ्यन्तस्यैकाक्षरङ्यन्तस्य च विकल्पेन ह्रस्वो नित्यं त्वनित्यस्त्रीलिङ्गानेकाक्षरङ्यन्तस्य गोत्रमतहतेषु चेलब्रुवककल्परूपतरतमेषु च परेषु [1]। गोत्रादीन्युत्तरपदभूतानि कुत्सनवाचीनि। वैयाकरणखसूचिरितिवत् समासः [2]। चेलब्रुवशब्दावप्येवम्। तरतमरूपकल्पास्तु यद्यपि तद्धितप्रत्यया न तूत्तरपदानि तथाप्युत्तरपदसारूप्यात् पदत्वेनाभिनेतुं शक्यत्वाच्चेहापि समासप्रकरणे तदुपन्यासः। ङीति स्त्रीप्रत्ययेकारस्य संज्ञा। श्वश्रूचेली, श्वश्रुचेली, श्वश्रूगोत्रा, श्वश्रुगोत्रा, ब्रह्मबन्धुतरा, ब्रह्मबन्धूतरा [3]। वस्, वत्, मत्, अत् – इति वसादयः कृत्प्रत्ययाः। तदन्तात् विहितः स्त्रीप्रत्ययेकार इहोदाहरणम्!। विदुषितरा, विद्वत्तरा [4] पूर्वस्य पुंवद्भावः [5]। क्वचित्तु विदुषीतरेत्यपीच्छन्ति, धनवतितरा, लज्जावतितमा, श्रीमतितरा, धीमतितमा, हसन्तितरा, तरतमयोः पक्षे पुंवत्त्वम्। रूपगोत्रादिषु पक्षे दीर्घेकारश्रुतिः। स्त्रिगोत्रा, स्त्रीगोत्रा, स्त्रिहता, स्त्रीहता, एषु विकल्पः [6]। अथ नित्यम् [7] –ब्राह्मणिचेली, ब्राह्मणिब्रुवा, ब्राह्मणिगोत्रा, ब्राह्मणिमता, ब्राह्मणिहता एवं पट्वितरा, पट्वितमा, नर्तकिरूपा, ब्राह्मणिकल्पा। नित्य स्त्रीलिङ्गस्य तु नास्ति ह्रस्वः। आमलकीतरा, कुवलीतरा, लक्ष्मितरा, तन्त्रितरा – इत्यादिष्वपि ह्रस्वत्वं कचिदिच्छन्ति तदशुद्धम्। सौनागसूत्रे कृन्नद्या ह्रस्वत्व प्रतिषेधस्य दृष्टत्वात्। तस्मात् लक्ष्मीतरा, तन्त्रीतरेत्येव भाव्यम्।

पूर्वपदान्ते ङ्यापोर्बहुलं ह्रस्वः संज्ञायां छन्दसि चैकाशब्दस्य तूत्तरपदमात्र परत्वे [8]। रेवतिपुत्रः कालिदासः महिदासः, महीदासः अजक्षीरम्।

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विकल्प इति बहुलार्थः [9] – तेनैका शब्दस्यापो नित्यं ह्रस्वत्ववैदिक्यामपि भाषायामसंज्ञायां च-एकस्या क्षीरमेकक्षीरम् [10]।

---

1 घरूपकल्पचैलडब्रुवगोत्रमतहतेषु ङ् योऽनेकाचो ह्रस्वः (6-3-43)

2 कुत्सितानि कुत्सनैः (2-1-3)

3 नद्याः शेषस्यान्यतरस्याम् (6-3-44)

4 उगितश्च (6-3-45)

5 तसिलादिष्वाकृत्वसुचः(6-3-35)

6 नद्याः शेषस्यान्यतरस्याग् (6-3-44)

7 घरूपकल्प (6-3-43)

8 ङ्यापो संज्ञाछन्दसोर्बहुलम्(6-3-53)

9 क्वचित्प्रवृत्तिः क्वचिदप्रवृत्ति क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधे बाहुलकं वदन्ति ॥

10 एक तद्धिते च (6-3-32)

इष्टकेषीकामलानां तदन्तानां च पूर्वपदानामन्त्यस्वरह्रस्वश्चिततूलभारिषु परेषु [1]।इष्टकाभिश्चितमिष्टकानां वा चितमिष्टकचितम्, पक्वेष्टकचितम्, इषीकायास्तूलमिषीकतूलम्, मुञ्जेषीकतूलम्, मालभारी, उत्पलमालभारी। हारि शब्दोऽत्र कैश्चित् पठते। मालहारी, उत्पलमालहारी- इति ह्रस्वादेशः।

## दीर्घत्वम्

गतिकारकयोः पूर्वपदयोरन्त्यस्वरदीर्घः स्यान्नहिसहितनिरुचिवृत्ति वृषिव्यधिष्वश्रूयमाण, प्रत्ययेषु परेषु[2]। उपनह्यते पादयोर्निवद्धयते –उपानत् चर्मपादुका। ऋतिं सहते- ऋतीषट् सस्य षत्वम् [3]। परितनोति परीतात्। निराचते- नीरुक्। निवर्तते नीवृत्। प्रवर्षति प्रावृट्। मर्माणि विध्यति मर्मवित्। एषु धातोः परतः कृत्प्रत्ययाः न श्रूयन्ते। गतिकारकयोरेवायं दीर्घ आदिश्यते। तेन क्रिया विशेषानां गुणवचनानां नास्तिदीर्घः। पटुःरुक्, तिमरुक्।

कोटरादीनां वने परे, किंशुलुकादीनां गिरौ परेऽन्त्यस्वरदीर्घः स्यात् संज्ञायाम् [4]।

**कोटर मिश्रक सिध्रक शारिक पुरगाः प्रदर्शिताः पञ्च।**
**किंशुलुक शाव लोहित कुक्कुट भञ्जन नडाञ्चनाः सप्त॥**

कोटरादिभ्यो वनो नस्य णत्वं वक्ष्यते [5]। कोटरावणम्, मिश्रकावणम्, सिध्रकावणम्, शारिकावणम्, पुरगावणम्, कंशुलुकागिरिः। शावागिरिः, लोहितागिरिः, कुक्कुटागिरिः, भञ्जनागिरिः, नडागिरिः, अञ्चनागिरिः।

**उपसर्गस्यान्त्य स्वर दीर्घः स्यात् घञन्ते परे बहुलम्[6]**

घञित्यकारस्य कृतप्रत्ययविशेषस्य संज्ञा। परिपाकः परीपाकः। प्रतिघातः प्रतीघातः। बहुलमित्युच्यते – तेन क्वचिन्नास्त्येव। निषादो नाम पुलिन्दो मनुष्यजातिः। विषादः, प्रसादः, प्रसारः, प्रकारः, प्रहारः, प्रकाशः, प्रसेव इत्यादि। क्वचिन्नित्यमेव यथा

---

1 इष्टकेषीकामालानां चिततूलभारिषु (6-3-65)
2 नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ (6-3-116)
3 सुषामादिषु च (8-3-98)
4 वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम्(6-3-117)
5 वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः(8-4-4)
6 उपसर्गस्य घञ्यमनुष्ये बहुलम्(6-3-112)

प्रतीहारो दौवारिकः सादकारयोः कृत्रिमे। प्रासादो देवानलां राज्ञां च वासः। प्राकारः शालो नगराद्यावरणभित्तिः। नामि स्वरान्तस्य काशे। वीकाशः, नीकाशः, प्रतीकाशः, अनूकाशः। अथ क्वचिद्विकल्प एव प्रतिवेशः, प्रतिवेशः, प्रतिकारः, प्रतीकारः।

पूर्वपदस्यान्त्यस्वर दीर्घः स्याद् वले परे संज्ञायाम्[1]। वल शब्दस्तद्धितप्रत्यय उत्तरपदवद्भासने इतीहापि प्रपञ्चितः। कृषीवलः, दन्तावलः। अ-इ-उ- इत्येषामेव त्रयाणां न तु ऋकारादीनामपि दीर्घः-भ्रातृवलः।

नामिस्वरान्तानां पील्वादि भिन्नानामन्त्यस्वरदीर्घः स्याद् वहे परे[2]। ऋषीवहम्, कपीवहम्। पील्वादीनां तु नास्ति। पीलुवहम्, दारुवहम्। आकृति गणोऽयम्।

**एकस्यान्त्यस्वरदीर्घः स्याद्दशनि परे[3]।** एकाधिकादश- एकादश।

पूर्वपदस्यान्त्यस्वरदीर्घः स्यान्नरमित्रयोः परयोः संज्ञायाम्[4]। अवाप्योरकार आद्यः श्रूयते च न श्रूयते च। तत्राश्रुताकारोऽयमवो दीर्घेण युज्यते हीना यत्र मनुष्यधर्मास वान्नरः। हीनजातिः कश्चिदासीत्। पुराऽऽरण्यमनुष्याभासः पशुधर्मा। विश्वानरः, विश्वामित्रः। विश्वानरविश्वामित्रौ बहुव्रीहिणापि साध्यौ। इति दीर्घादेशः।

## आत्वम्

अष्टनो नकारस्यात्वं स्यादुत्तरपदे परे संज्ञायां कपाले परे हविषि[5]। गवे परे युक्ते[6] दशविंशति त्रिंशत्सु परेषु संख्याया[7] चत्वारिंशत्प्रभृतौ तु शतादर्वाचीने परे विकल्पेन[8] अष्टसु स्थानेषु वक्रः अष्टावक्रो मुनिः। अष्टापदं स्वर्णम्। संज्ञा गम्यते समासेन। अष्टसु कपालेषु संस्कृतः पुरोडाशोऽष्टाकपालः। तद्धितार्थ द्विगुना हविर्गम्यते समासेन। अष्टानां गवां समाहारोऽष्टगवम्। तद्युक्तं तु शकटमष्टागवम्। युक्तं गम्यते। अष्टाधिका दश अष्टादश। अष्टाविंशतिः, अष्टात्रिंशत्। संख्या गम्यते। अथ

---

1 वले (6-3-118)
2 इको वहेऽपीलोः (6-3-121)
3 आन्महतः (6-3-46) इति सूत्रे आत् इति योगविभागात्।
4 नरे संज्ञायाम् (6-3-129) मित्रे चर्षौ (6-3-130)
5 अष्टनः कपाले हविषि (वा.3951)
6 गवि च युक्ते(वा.3952)
7 द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः(6-3-47)
8 विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् (6-3-49)

विकल्पेनात्वं भवति। अष्टाचत्वारिंशत्, अष्टापञ्चाशत्, अष्टाषष्टिः, अष्टासप्ततिः, अष्टाशीतिः, अष्टानवतिरिति वा शतादिषु तु नास्त्येव[1] अष्टशतमष्टसहस्रम्।

**महतस्तकारस्यात्वं स्यात्! समानाधिकरणे परे घासकरविशिष्टेषु जातीये च परे न त्वभूततद्भावे [2]।**

महान् देवो महादेवः, महाब्रह्मः[3] महाराजः, महाजनः, महाशूद्रः, महादेशः। घासादिषु व्यधिकरणेष्वपि भवति। महतो घासः महाघासः। महतः करो महाकरः। महतो विशेषो महाविशिष्टः, महाजातीयः अभूततद्भावे तु नात्त्वम् – अमहान् महान् संपन्नो महद्भूतश्चन्द्रमा इति। अथ महती शब्देऽप्ययमाकारः पुंवद्भावस्य वक्ष्यमाणत्वात्। महती नदी – महानदी, महाराज्ञी। महत्या घासो महाघासः। महत्याः करो महाकरः महत्या विशिष्टो महाविशिष्टः महाजातीया। नेह- अमहती महती सम्पन्ना महद्भूता ब्राह्मणी। इति आत्वादेशः।

## ईत्वम्

ष्यङन्तस्यानुपसर्जनस्य पूर्वपदस्य ष्यङईकारः स्यात् पुत्रपत्योपरयोः [4]। कौमुदगन्ध्यायाः पुत्र कौमुदगन्धीपुत्रः। अत्र धात्विवर्णत्वाभावाद् गालवस्यापि ह्रस्वता न भवति [5]। कैमुदगन्धीपतिः। परमकारीषगन्धीपुत्रः। महाकारीष गन्धीपतिः। उपसर्जनत्वे तु नास्ति [6]। कारीषगन्ध्यमतिक्रान्ता – अतिकारीषगन्ध्या तस्याः पुत्रः अतिकारीषगन्ध्यापुत्रः। तत्पुरुषे पुत्रपत्योरेवायमीत्वादेशो दृश्यते नान्यत्र। कारीषगन्ध्याया बन्धुः – कारीषगन्ध्याबन्धुः। कारीषगन्ध्यामाता। इति ईत्वादेशः।

---

1 प्राक्शतादिति वक्तव्यम् (वा.3953)

2 आन्महतः समानाधिकरणजातीययोः (6-3-46) महत आत्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च (वा.3950)

3 महाब्रह्मणः इति मूल पाठः

4 ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे (6-1-13) सम्प्रसारणस्य (6-3-139)

5 इको ह्रस्वोऽङ्योगालवस्य (6-3-61) व्यवस्थितविभाषया ह्रस्वो न, 13, स्त्रीप्रत्यये चानुपसर्जनेन (प.27)

6 स्त्रीप्रत्यये चानुपसर्जनेन (प.27)

**भागादेशः**

सर्वनाम्नष्टेः स्थाने तत्स्वरदीर्घादेशः स्यादिदमस्तु दम ईकारादेशो – अदसस्तु दसो मूकारो दृग्दृशदृक्षेषु परेषु [1]।

अकारान्तानामकारोऽदन्तानामद्भाग। इमन्तस्यायत्म्भागष्टिः। अस्य टेः स्वरूपे यः स्वरः प्रविष्टस्तज्जातीयो दीर्घः स्वरस्तस्य टेः स्थाने प्रवर्तते। यथा – अकारान्ते शब्देऽकारस्य आत्वम्। अन्य इव दृश्यते अन्यादृक् – अन्यादृशः, अन्यादृक्षः, अदन्त शब्देष्वत आत्वम् [2]। तत् स इव दृश्यते – तादृक्, तादृशः, तादृक्षः। यत् य इव दृश्यते – यादृक्, यादृशः, यादृक्षः। एतत् एष इव दृश्यते एतादृक्, एतादृशः एतादृक्षः। भवत् भवानिव दृश्यते – भवादृक्, भवादृशः, भवादृक्षः। त्वत् त्वमिव दृश्यते – त्वादृक्, त्वादृशः, त्वादृक्षः। मत् – अहमिव दृश्यते मादृक्, मादृशः, मादृक्षः। युष्मत् यूयमिव दृश्यते – युष्मादृक्, युष्मादृशः, युष्मादृक्षः। अस्मत् वयमिव दृश्यते अस्मादृक् अस्मादृशः, अस्मादृक्षः। किम् शब्दे त्विम ईत्वम्। किमिव दृश्यते – कीदृक्, कीदृशः, कीदृक्षः। इदम् शब्द पर्यायवाची कश्चिद् इच्छशब्दोऽप्यस्ति। तमिद्वर्द्धन्तु नो गिरः। आदिद् घावापृथिवी। इदावत्सरः। इदानीम् इत्थम् इत्यादौ तत्प्रयोगोपलब्धेः।

व्यवस्थितस्तु तस्य प्रयोगः इति न सर्वत्रानुषज्यते। तस्येव त्विहापि दृक्, **दृश, दृक्षाणां** समवधाने प्रयोग इत्यतः सर्वस्य तस्य टिरूपत्वात् तत्स्थाने ईकारादेशः। **इत्थं** दृश्यते – ईदृक्, ईदृशः, ईदृक्षः। येषान्तु निपातातिरिक्तोऽयमिच्छब्दो नास्ति, **येषां** वेच्छब्द पर्य्यायेणायमिदं शब्दोऽपि दृगादि समवधाने प्रयुज्यते तेषामपीदृगादयः एव प्रयोगा इष्यन्ते इति बोधयितुं नियमान्तरमुच्यते इदमस्तु दमः स्थाने ईकारादेशो भवतीति। अदसस्तु दस्य स्थाने मुकारोऽपि प्रयोगविशेषे प्रयुज्यते। तथा च सिद्धस्यामुसः शब्दस्य टेरूसस्थाने ऊकारादेशः। अथवा अदस् एव टेरसः स्थाने आकारः। पश्चाददा शब्दस्य दा स्थाने साधारण नियमेव मूकारादेश इति। असाविव दृश्यते – अमूदृक्, अमूदृशः, अमूदृक्षः। वस्तुतस्तु – तत्, यत्, एतत् अन्यत्, त्वत्, मत्, युष्मत् अस्मत्, भवतु, किम् इत्येवमादयः सर्व एवैते प्राक् स्वरान्ताः पश्चात् प्रयोगविशेषे व्यञ्जनान्ता भाव्यन्ते इत्येकः पक्षः व्यञ्जनान्ता एवोपक्लृप्ताः पश्चात्तु क्वचित् स्वरान्ताभाव्यन्ते इत्यपरःपक्षः।

---

1 इदं किमोरीश्की (6-3-90) अदसोऽसेर्दादु दो मः(8-2-80)

2 आ सर्वनाम्नः (6-3-91) दृशे च (वा.3992)

इच्छब्दस्तु पश्चात् प्रयोगविशेषेष्वमा सह समा युज्यते। अमुश्शब्द एवायं प्रागुपक्लृप्तः। स पश्चात् क्वचित् अदः शब्दभावं गच्छति भूयांसो मूकारस्य प्रदेशा अल्पीयांसो दकारस्य। तेषामेषा व्यञ्जनान्तानां सर्वनाम्नामन्तिमस्य व्यञ्जनस्य संनिहित पूर्वस्वर भावापत्ति दृग्, दृश्, दृक्षेषु परेषु प्रवर्तते इत्येव साध्वी दृष्टिः।

कुत्सितार्थस्य कोरुकारस्थानेऽदादेशः स्याज्जातिविशेषबोधाय तृणजलयो – स्त्रिवदरथेषु स्वराद्युत्तरपदे च [1]।

कुत्सितं तृणं-कत्तृणम्। तृणजातिविशेषः। कज्जलम्। अथ कुत्सितास्त्रयः कत्त्रयः[2]। कुत्सितं वदतीति कद्वदः, कद्रथः[3]। स्वरादो[4] तु सर्वत्रैव प्रायेण। कुत्सितोऽश्वः कदश्वः, कदन्नं, कदर्थः[5]। अर्य्यो धनदाता स्वामी वैश्यो वा। कदर्य्यः कृपणः।

कुत्सितार्थस्य कोरुकारस्थाने आकारादेशः स्यात् पथक्षयोः परयोः पुरुषे तु विकल्पेन।

कुत्सितः पन्थाः कापथम्। कुत्सितोऽक्षः काक्षः कुत्सिताक्षिमानपिकाक्षो बहुव्रीहिणा साध्यः पुरुषस्तु कुत्सितः कापुरुषः कुपुरुषो वा।

ईषदर्थस्य कोरुकारस्थाने आकारादेशः स्यात् स्वरादौ व्यञ्जनादौ चोत्तरपदे परे विकल्पेन त्ववादेशः स्यादाकारादेशोऽदादेशश्चोष्णे [6]। ईषदम्लः काम्लः। ईषज्जलम्, काजलम्। ईषदुष्णम् कवोष्णम् कोष्णं कदुष्णं च।

## भागलोपः

समानस्य सहस्य वा समात्रमवशिष्यते दृग्, दृश, दृक्षेषु परेषु। समानमिव दृश्यते – सदृक्, सदृशः सदृक्षः[7]।

---

1 तृणे च जातौ (6-3-103)

2 त्रौ च (3998)

3 रथवदयोश्च (6-3-102)

4 सरादौ इति मूले

5 को कत्तत्पुरुषेऽचि (6-3-101)

6 ईषदर्थे (6-3-105) कवं चोष्णे (6-3-107)

7 दृग्दृशवतुषु(6-3-89)दृक्षे चेति वक्तव्यम् (वा.3992)

समानस्य सहस्य वा समात्रमवशिष्यते ब्रह्मचारिणी परे चरणसमानतायाम्[1]। चरणः शाखा, ब्रह्मवेदः। तदध्ययनार्थं व्रतमपि ब्रह्म। तच्चरतीति ब्रह्मचारी। समानः स सब्रह्मचारी। समाने ब्रह्मणि व्रतचारीत्यर्थः। सह वा ब्रह्मचारी सब्रह्मचारी।

समानस्य सहस्य वा समात्रमवशिष्यते तीर्थे परे विकल्पेन तूदरे य प्रत्यय विधित्सायाम्[2]। तीर्थ गुरुः। समानतीर्थेवासी सतीर्थ्यः समानोदरे शायितः सोदर्य्यः – समानो दर्य्यो वा सह शब्दोऽपि समानार्थ एवेह विवक्षितः। यत्र भ्राता सहोदरः इत्यादिषु तथा दृष्टत्वात् समानस्य सहस्य वा समात्रमवशिष्यते गोत्रादिषु परेषु। समानं गोत्रं सगोत्रम् सजनपदः, सरूपम्, सस्थानम्, सनामेत्यादि। बहुव्रीहिष्वप्येते प्रयोगाः साध्यन्ते। गोत्रादिराकृतिगणः[3]।

हृदयस्य हृन्मात्रमवशिष्यते लेखलासयोर्विकल्पेन तु शोकरोगोः[4] लेखेत्यणन्तस्यैव ग्रहणम् न घञन्तस्येति सांप्रदायिकाः। हृदयं लिखतीति हृल्लेखः। घञि तु हृदयस्य लेखो हृदयलेख इत्येव[5]। हृल्लासः। अथ विकल्पः – हृच्छोकः, हृदयशोकः। हृद्रोगः हृदयरोगः।

पादस्य[6] पद् स्यादाज्यातिगोपहतेष्वर्थे[7] पत्स्यात्काषि, हति हिमेष्वर्थे[8] विकल्पेन पत्स्यात् घोषमिश्रशब्दनिष्केषु[9]।

पदाभ्यामजति – पदाजिः – पदातिः।पदगः पदोपहतः। पत्काषी, पद्धतिः पद्धिमम्। अथ विकल्पः। पद्घोषः पादघोषः। पन्मिश्रः, पादमिश्रः। पच्छब्दः पादशब्दः। पन्निष्कः पादनिष्कः।

---

1 चरणे ब्रह्मचारिणि (6-3-86)
2 तीर्थे ये (6-3-87) समानतीर्थे वासी (4-4-107)विभाषोदरे (6-3-88)
3 ज्योतिर्जनपदरात्रिनाभिनाम गोत्ररूपस्थानवर्णवयो वचनबन्धुषु (6-3-85)
4 हृदयस्य हृल्लेखयदण्लासेषु (6-3-50) वा शोकष्य रोगेषु (6-3-51)
5 उत्तरपदाधिकारे तदन्तविधिर्नास्ति (प.26)
6 पद इति मूले
7 पादस्य पदाज्यातिगोपह तेषु (6-3-52)
8 हिमकाषिहतिषु च (6-3-54)
9 वा घोषमिश्रशब्देषु (6-3-56), निष्के चेति वाच्यम् (वा. 3959)

उदकस्योदं स्यात् पेषं वासवाहनधिषु संज्ञानोत्तरपदे[1] चाथ विकल्पेना संयुक्तव्यञ्जनादि पूरयितव्यवचने मन्थादिषु च [2]।

उदपेषं पिनष्टि। उदवासः, उदवाहनम् बहुव्रीहिणापि साध्यावेतौ। उदधिः। येनोत्तरपदेन प्रयुक्तेन कस्यचित् संज्ञा संपद्यते तत्संज्ञानम्। उद्मेघः। अथ विकल्पः। उदकुम्भः, उदककुम्भः। संयुक्तादित्वान्नेह। उदकस्थाली। अपूरयितव्यत्वान्नेह। उदकपर्वतः।

**मन्थः सत्तुश्च बिन्दुश्च वज्रं गाहस्तथौदनः।**
**भारो हारो वीवधश्च मन्थादय उदाहृताः॥**

उदमन्थः, उदकमन्थः, उदसक्तुः, उदकसक्तुः उदबिन्दुः, उदकबिन्दुः, उदवज्रम् उदकवज्रम्, उदगाहः, उदकगाहः, उदौदनः, उदकौदनः, उद्भारः, उदकभारः। उदहारः, उदकहारः, उदवीवधः, उदकवीवधः।

जीवनादीनां मूतातिषु प्रथमाक्षरमात्रावशेषः स्यात्। जीवनं जलं तेन मूतो जीमूतः। देवः पति। देवादवरो देवरः। आकृतिगणावेतौ। अवश्यमः कृत्ये, संतुमोः, काममनसोर्मलोपः स्याद् विकल्पेन तु समस्ततहितयोः[3] अवश्यगन्तव्यम्, अवश्यगम्यम्। अवश्यभाव्यम्, सकामः, गन्तुकामः, कर्तुकामः। समनसा, गन्तुमनसा, दृष्टुमनसा, बहुव्रीहिषु भूयानयोः सन्तुमोर्लोपः। अल्पीयास्तयोर्विषयस्ततत्पुरुषे। अथ विकल्पः। सततं सन्ततम् सहितं संहितम्। मांसस्यान्त्य स्वरलोपः स्यात् पचि धातौ युङ घञन्ते परे। मांस्पचनी, मांस्पाकः[4]।

अन्नन्तस्य द्विगोरन्त्य नकारलोपः स्यात्[5] पंचतक्षं, पञ्चतक्षी। द्विस्तावा, त्रिस्तावा वेदिः।

यावती प्रकृतौ वेदिः ततो द्विरावृत्ता तावती वेदिरश्वमेधादौ द्विस्तावेत्युच्यते एवं त्रिस्तावा। अन्यत्र वाक्यमेव। द्विस्तावती, त्रिस्तावती रज्जुरिति। इति भागलोप।

---

1 पेषंवासवाहनधिषु च (6-3-58) उदकस्योदः संज्ञायाम् (6-3-57) उत्तरपदस्य चेति वक्तव्यम् (वा.3969)

2 एकहलादौ परायितव्ये (6-3-59) मनथोदनसवु (6-3-60)

3 लुम्पेदवश्यमः कृत्ये काममनसोऽपि। समो वा हिततयोर्मासस्य पचि युङ्घयोः॥ अपस्परा (6-1-144) सूत्रेद्रष्टव्यम्

4 लुम्पेदवश्यमः कृत्ये (6-1-144) काशिका वृत्तौ

5 न लोपः प्रातिपदिकान्तस्य (8-2-7)

**वर्णागमः**

अन्यस्याषष्ठीतृतीयास्थस्य दकारागमः स्यादूत्यादिषु परेष्वकारके षष्ठी तृतीयास्थस्यापि [1]।

**ऊतिरास्थित आस्थाऽऽशा राम आशीस्तथोत्सुकः ।**
**कारकश्चेत्यष्टे शब्देष्वन्यो दान्तः प्रवर्तते ।।**

अन्या ऊतिः अन्यदूतिः, अन्यदास्थितः, अन्यदास्था, अन्यदाशा। अन्यद्रागः अन्यदाशीः, अन्यदुत्सुकः, अन्यदीयः, षष्ठीतृतीयाविग्रहस्य तु नास्ति अन्यस्य अन्येन वा ऊतिः अन्योतिः अन्यास्थितिः, अन्यास्था, अन्याशा, अन्यरागः। अन्याशीः, अन्योत्सुकः। कारक शब्दे ईय प्रत्यये च परे सति षष्ठी तृतीयास्थस्यापि दकारः। अन्यत्कारकः, अन्यदीयः।

अस्तु सत्यागदानां कारे[2]। भद्रोष्णयोः करणे [3]। लोकस्य पृणे[4], सुखाद् घुणे[5] धेनोर्भव्याया[6] मात्मोदरकुक्षीणां भरावनभ्याशस्येत्ये[7], भ्राष्टाऽग्न्योरिन्धे[8] तिम्यादेर्गिले[9]च गिल गिले च मकारोऽन्तागमः स्यात् [10]।

अस्तु कारः, सत्यं कर, अगदंकारः, भद्रंकरणम्, उष्णं करणम्, लोकम्पृणः, सुखं घुणः, शिवखट्वाङ्गः, धेनुंभव्या, आत्मं भरिः, उदरं भरिः कुक्षिं भरिः, अनभ्यासमित्यः – दूरतः परिहर्तव्याः इत्यर्थः। भ्राष्ट्रमिन्धः। अग्निमिन्धः, तिमिङ्गिलः तिमिङ्गिलगिलः। उदरंभर्य्यादयो द्वितीयाया अलोपेनापि साध्याः।

---

1 द्विस्तावा त्रिस्त वा वेदिः (5-4-84) अषष्ठ्यतृतीयास्थ (6-3-99) कारके छे च नायं निषेधः(वा.5048)

2 कारे सत्यागदस्य (6-3-70) अस्तोश्चेति वक्तव्यम् (वा.3973)

3 उष्णभद्रयोः करणे (वा.3981)

4 लोकस्य पृणे (वा.3976)

5 इदं वार्तिकं पाणिनीय तन्त्रे न दृश्यते

6 धेनोर्भव्यायाम् (वा.3975)

7 इत्येऽनभ्यासस्य (वा.3977)

8 भ्राष्टाग्न्योरिन्धे (वा.3978)

9 गिलेऽगिलस्य (वा.3979)

10 गिलगिले च (वा.3980)

मत, भुज, प्लव, तुर, विहानां मकारोऽन्तागमः स्याद् गमे परे विकल्पे न तुगे [1]। मतङ्गमः, मतङ्गः मतगः, भुजङ्गमः, भुजंगः, भुजगः, प्लवङ्गमः, प्लवङ्गः, प्लवगः, तुरङ्गमः, तुरङ्गः, तुरगः, विहङ्गमः, विहङ्गमः, विहगः। तुर शब्दस्त्वरा पर्य्यायो विहशब्दस्तु विहाय पर्य्यायः। क्वाचित्कप्रदेशावेतौ।

गोष्पदं सेवितासेवित प्रमाणेष्वास्पदं प्रतिष्ठायामाश्चर्यमनित्ये [2]। अर्थ विशेषे गोशब्दस्य आङुपसर्गस्य च सकारोऽन्तादेशः। षत्व शत्वादिकं तु सन्धि कार्यम्। सेवितम् समवेतम्। गवामवयवभूतश्चत्वारः पादाः गोष्पदानि। असेवितं गव्यप्रतिष्ठितं पदं पदक्षोद विशेषाकारितं स्थानं वा तत्रत्यं तच्चिन्हं वा गोष्पदम्। अगोष्पदान्यरण्यानीति न संयोगेना सेवितोदाहरण प्रकल्पनं तु चिन्त्यम्। सेवितेन गतार्थत्वात् प्रमाणं परिच्छेदः। गोष्पदपूरं वृष्टोदेवः। नात्र गोष्पदं स्वार्थमुपादीयते किन्तु यथा चेलक्नोपं वृष्टोदेव इत्यसत्यपि चेलक्नोपे प्रयुज्यते। प्रमाण विशेषस्तु गम्यते। एवमिहासत्यपि गोपादपूरणे गोष्पदपूरं वृष्टोदेव इति प्रयुज्यते। प्रमाणविशेषस्तु तावता गम्यते तत्रैतत्पदं न गोसमवेतं न वा भूमिष्ठं पदचिन्हरूपं किञ्चिदित्यतः प्रमाणविशेषवचनं गोष्पदं पृथगिवोपदिश्यते। आत्मयापनफलकं स्थानं प्रतिष्ठां तत्रास्पद शब्दो विधीयते आश्चर्यशब्द-स्त्वपूर्वगृहीतेऽद्भूतेऽर्थे साध्यः। अन्यत्र त्वाचर्य्यं शोभनम्। अथवा ''आः किमेतद्- इत्येवं यत्र चर्य्यते तदाश्चर्य्यं विस्मयहेतुः। आः करणयोग्यमित्यर्थः। तत्रायमाः शब्दो निपातो न त्वाङुपसर्गः। तथा च स्वरस सिद्ध एवायं शब्दो न विशेषादेशमपेक्षते इति बोध्यम्।

पारस्करो देशः [3] कारस्करो वृक्षोऽवस्करो [4] वर्चस्कम [5]पस्करो रथाङ्ग [6] मस्करमस्करिणो च वेणुपरिव्राजकौ [7]। एष्वपि सकारोऽन्तागमः पूर्वपदानाम्।

प्रतिष्कशः सहायपुरोयायिनोरपरस्पराः क्रियासातत्ये [8]। प्रतिगतः कशां प्रतिष्कशः, सहाय, पुरोगामी वा। अन्यत्र प्रतिकशोऽश्वः। यत्र सह गच्छत्सु सार्थेषु परस्परानुरोधे व्याघाताद्गतिविलम्बः स्यादिति वुद्धया सर्वोऽपि अन्योऽन्यमननुरुद्ध्यैव धावमानो गच्छति तत्रायं प्रयोगः अपरस्पराः सैनिका भटा गच्छन्तीति। सततमविच्छेदेन

---

1 कृदन्त विहायस विह (वा.)

2 गोष्पदं सेवितासेवित प्रमाणेषु (6-1-145) आस्पदं प्रतिष्ठायाम् (6-1-146)आश्चर्यमनित्ये (6-1-147)

3 पारस्करप्रभृतीनि च संज्ञायाम् (6-1-157)

4 कारस्करो वृक्षः (6-1-156)

5 वर्चस्केऽवस्करः(6-1-148)

6 अपस्करो रथाङ्गम् (6-1-149)

7 मस्कमस्करिणौ वेणुपरिव्राजकयोः(6-1-154)

8 प्रतिकशश्च कशेः (6-1-152) अपरस्पराः क्रियासातत्ये (6-1-144)

गच्छतीत्यर्थः। परस्परान्योन्यादि शब्दा। अपि साध्याः सन्ति। ततः सिद्धावप्यर्थ विशेष व्युत्पत्यर्थमयमादेशः।

कुस्तुम्वुरुः र्धान्याकं[1] प्रस्कण्व हरिश्चन्द्रावृषी[2] विष्किरो विकिरो वा शकुनिः[3]

कुस्तुम्बुरु प्रभृतिषु प्रक्रियामात्रं न त्ववयवार्थपरिग्रहः। अन्यत्र कुत्सितानि तिन्दुकीफलानि कुतुम्बुरुणि। प्रस्कण्वः काण्वो महर्षिः। हरिश्चन्द्रो राजर्षिः। विकिर शब्दे तु शकुन्यर्थे सकारागमो विकल्प्यते। शकुनावुभयोरिष्टत्वात्। शकुनेरन्यत्र तु विकिर इत्येव। विकिरं वैश्वदेविकमित्यादि प्रयोगात्।

प्रायस्य चित्तिचित्तयोः परयोर्वनस्य पत्यौ सकरोऽन्तागमः स्यात्[4]। प्रायश्चित्तिः, प्रायश्चित्तम्, वनस्य पतिर्वनस्पतिः। येषां तु प्रायः शब्दः सान्तो निपातो, येषां वा पृषोदरादित्वाद्वनशब्दान्त्यस्वरो विलुप्यते षष्ठी च ब्रह्मणस्पति वाचस्पस्त्यादिवन्न लुप्यते तेषामयं नियमो नोपयुज्यते।

किष्किन्धादिषु पूर्वपदानां सकारोन्तागमः स्यात्[5]

किं किं धत्ते विष्किन्धा गुहा पर्वतो वा। किष्कुः प्रमाणम्। रथस्या नदी[6]। आकृति गणोऽयम्। इत्यन्तागमः।

## अनेकविकारः

षषो दशनि परे पूर्वपदान्त्यस्योत्वमुत्तरपदादेष्टुत्वं च नित्यं स्यात् षषो धा प्रत्यये तु विकल्पेन[7]। षकारे स्वरूपप्रयोजकौ द्वौ धर्मौ – ऊष्मभक्तिश्च मूर्द्धन्यताप्रयोजको गुणश्च। तयोर्विच्छेदे जाते सोष्मभक्तिरुकारभावं गत्वा पूर्वत्रानुषज्जते। गुणस्तु मूर्द्धन्यता प्रयोजकः परत्र वर्णे प्रगृह्यते। ततः स पर वर्णो मूर्द्धन्यो भवति। तत्र स्थाने प्रयत्नाभ्यामन्तरतमस्यैव प्रयत्न लाभाद्दकारस्य डकारो धकारस्य ढकारः प्रत्यादेशः।

---

1 कुस्तुम्बुरूणि जातिः (6-1-143)
2 प्रस्कण्वहरिश्चन्द्रावृषी (6-1-153)
3 विष्किरः शकुनौ वा (6-1-150)
4 प्रायस्य चित्तिचित्तयोः(वा3714)
5 पारस्करप्रभृतीनि च संज्ञायाम् (6-1-157)
6 रथस्पा नदी। रथस्था फ, रथस्या ह इति काशिकायान्
7 षष उत्वं दतृदशधा सूत्तरपदादेष्टुत्वं च धासु वेति वाच्यम् (वा.4001-4002)

षडधिका दश षोडश। अथ विकल्पः षोढा षड्धा। भगवान् पतञ्जलिस्तदनुयायी कैयटश्चोत्वमात्रं विकल्पेनाभिप्रेतो न तु वा टुत्वमपि। षड्ढा। आसीत्पतञ्जलि समयं

यावत् षड्ढेत्येवोपचारः। ततः कालेन षड्धेत्येवमुपचारः प्रवृत्तोऽभूदिति गम्यते। दुरोनाशदाशदध्येषु परेषु पूर्वपदान्त्यस्योत्वमुत्तरपदादेष्टुत्वं च स्यात्[1]। रेफस्थयोधर्मयोः स्वरभक्तिस्तावदुकारो भवति गुणस्तु परवर्णमाश्रयते। दुःखेन नाश्यतेदूणाशः। दूडाशः। दुःखेन दंभितु योग्यः दूडभः। दुःखेजन ध्यायति दूढ्यः। पृषोदरादयो यथोपदिष्टमेकानेकविकारैः साध्याः।

पृषदुदरं पृषोदरम् त लोपः। गूढ आत्मा-गूढोत्मा। आकारस्योकारः[2]। दिक् शब्देभ्यस्तीरस्य तारभावो विकल्पेन। दक्षिणतारं, दक्षिणतीरम्। उत्तरतारम्, उत्तरतीरम्[3]। हिंसतीति हिंस इति प्राप्ते वर्ण विपर्य्ययात् सिंहः। हसतीति हंस नकारागमः। वारिवाहको वलाहकः पूर्वपदस्य व उत्तरपदादेर्लत्वं च[4]। ब्रुवन्तोऽस्यां सीदन्तीति बृसी। ब्रुवच्छब्दस्य बृ आदेशः। सदो द लोपो ङीश्च। आसीदत्यस्यां सेयमासन्दी। तस धातुरूपक्षयार्थः। तसनमपहारः। तसनकरस्तस्करः चोरः। अनस्य लोपः। वृहतः पति- र्वृहतस्पतिः। पत्यौ षष्ठ्या अलोपं वक्ष्यामि। तत्र तस्य लोपे वृहस्पतिः। बृहत्या वा पति र्बृहस्पतिः। अत्र पुंवद्भावश्च विशेषः। एवमेवान्यत्रान्यत्र च यदेव यत्रापेक्षितम् तत्सर्वं प्रयोगवशादुन्नेयमित्यादेशः। यद्यपि सिद्धे शब्दार्थ सम्बन्धे लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमो यथालौकिक वैदिकेष्विति सिद्धान्ता धर्मनियमाय प्रवर्तमानेऽस्मिन् सिद्धान्वाख्याने शास्त्रेऽन्येषामिवैतेषां पृषोदरादिनामपि लक्षणशः प्रतिपदशो व प्रोच्यैवानुवचनं कर्तुमुचितम्। न त्वेवं यथोपदिष्टकर्तव्यतादेशः साधीयान् भवति।लक्ष्यस्वरूपज्ञानाय लोकानुसरणं कर्तुं नियुज्यमानेषु प्रतिपित्सुषु शास्त्रानुसरणस्य वैय्यर्थ्यापत्तेः। तथापि बहुत्वान्न शक्यन्ते प्रतिपदशः प्रवक्तुम्। प्रत्येकं च विभिन्नलक्षणाक्रान्तत्वादप्रोच्य प्रतिपदशोलक्षणेनापि न शक्यं निर्देष्टुम्। अथापि क्रियमाणे यत्ने चित्तपरिग्लानेर्विरक्तिरूदियादन्तश्च नोपगम्येत। तस्मादीदृशानां शब्दानां स्वरूपज्ञानं तत्र तत्र प्रयोगवशादेवोन्नीय तत्प्रक्रियाज्ञानसिद्धयर्थमिहोपदर्शितया संज्ञया प्रवर्तेत्येव युक्तम्। इत्यनेकविकारः।

---

1. दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च (वा.4001)
2. पृषोदरादीनि यथोपदिष्टम् (6-3-109)
3. दिक्छब्देभ्यस्तीरस्य तारभावो वा (वा.3999)
4. भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्य्ययात्।
गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम्॥

तदित्थं सत्वम्, णत्वम्, षत्वम्, ह्रस्वत्वम्, दीर्घत्वम्, आत्वम्, ईत्वम्, भागादेशः, भागलोपः, अन्तागमः, अनेकाविकारश्चेत्यवमेकादशधाविभक्तो। विकारादेशः पूर्णः। इति विकारादेशः ॥

## विभक्त्यलोपः

### प्रथमायाः

अन्योन्यपरस्परादिषु प्रथमाया अलोपः[1]। अन्य पुरुषोऽन्यं पुरुषं प्रहरतीत्येवमादि व्यवहारभूयस्त्वादन्योन्यपरस्परादिशब्दसिद्धौ विभक्त्यन्तरेऽपि तत्प्रयोगः। अन्योऽन्यस्मै देयम्। अन्योन्य भोग इत्यादि।

### द्वितीयायाः

उपपदात् खित्कृदन्ते परे द्वितीयाया अलोपः स्यादेकवत्वं चाखिदन्ते रात्रेर्विकल्पेन[2]। खित् संज्ञकाः कृत्प्रत्ययविशेषाः सन्ति। तदन्ते शब्दे खिदुत्पत्तिनिमित्तभूतस्योपपदस्य मकारान्तत्वमादिश्यते। जनमेजयः, वातमेजयः, शर्द्धंजहाः, वातमजाः, तिलन्तुदः, विधुन्तुदः, अरुन्तुदः, शुनिंधयः, स्तनंधयः, नासिकंधयः, नाडिंधयः, मुष्टिंधयः, घटिन्धयः, खरिंधयः, खारिंधयः, नासिकन्धमः, नाडिंधमः, मुष्टिंधमः, घटिंधमः, खरिंधमः, खारिंधमः, पार्णिंधमः, कूलमुद्रुजः, कूलमुद्वहः, अभ्रंलिहः, वहंलिहः, प्रस्थंपचा स्थाली, खारिं पचः कटाहः मितंपचः, नखंपचः, असूर्यंपश्या, उग्रंपश्यः, ललाटंतपः, इरंमदः, प्रियंवदः, वशंवदः, द्विषन्तपः, परन्तपः, शत्रुंतपः, वाचंयमः, सर्वंसहः, पुरंदरः, भगंदरः, सर्वंकषः, कूलंकषा, अभ्रंकषः, करीषंकषा, मेघंकरः, ऋतिंकरा, भयंकरः अभयंकरः, क्षेमंकरः, प्रियंकर, भद्रंकरः, आशितंभवः, विश्वंभरः, रथन्तरम्, पतिंवरा, शत्रुंजयः, युगन्धरः, शत्रुंसहः, अरिंदमः, सुतंगमः, पण्डितंमन्यः, रात्रिंमन्या। इत्येवमादीनि खितामुदाहरणानि। अखिति तु कृतिरात्रेरुपपदत्वे विकल्पेन द्वितीयाया अलोपः। रात्रिंचरः, रात्रिचरः, रात्रिमटः, रात्र्यटः।

---

[1] असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः (वा.4700)

[2] अरुर्द्विषद्विजन्तस्य खित्यनव्ययस्य (6-3-67)रात्रे कृति विभाषा (6-3-72)

क्रियाविशेषणादवश्यात् कृत्यभिन्ने परे भाव वचनात्तु मनः कामभिन्ने परे द्वितीयाया अलोपः स्यात्[1]। भावकर्मार्था यतव्यानीयाः कृत्प्रत्ययाः कृत्याः। तदन्ता अपि शब्दाः कृत्याः। तद्भिन्ने उत्तरपदे यथा – अवश्यंभावी, अवश्यंगामी, अवश्यं कर्त्ता। कृत्ये

तु लोप एव। अवश्यगम्यम्, अवश्यदेयम्, अवश्यकर्तव्यम्, केचित्तु अवश्यमिति मान्तं निपातशब्दमिच्छन्ति तेषामेषु मलोपः प्रागुक्तः। अथ भावे सर्वस्मादेव धातोस्तु प्रत्ययो भवति घ, क्तिन्, ल्युडादिवत्। तदन्तस्य च द्वितीया चतुर्थी पञ्चमीष्वेव प्रयोगो न त्वन्यविभक्तिष्विति निसर्गः। कर्तुमिति द्वितीया। कर्तवै, कर्तवे इति चतुर्थी, कर्तोरिति पञ्चमी। राजानं द्रष्टुं गच्छतीत्यस्य राजदर्शन क्रियामुद्दिश्य गच्छतीत्यर्थः। गमनेन दर्शनक्रियैवाप्तुमिष्टतमेत्यतस्ततो द्वितीया। सा न लुप्यते। गन्तुमिच्छा, कर्तुं ग्लानिः, कर्तुमारम्भः, द्रष्टुमुपक्रमः, भोक्तुमर्हः, मनः कामयोस्तु लुप्यते। गन्तुमनः कर्तुकामः। यैस्तु मान्तस्तुमिति प्रत्ययः कल्प्यते तेषामलोपः प्रागुक्तः।

## तृतीयायाः

आत्मनः पूरणे[2] पुंसोऽनुजे, जनुषोऽन्धे[3] सहोम्भस्तमो ओजोभ्यः कृदन्ते[4]। मनस आज्ञायिनि संज्ञायां च तृतीयाया अलोपश्चैकवत्वं च[5]।

पूरण प्रत्ययान्ते परे आत्मना पञ्चमः, आत्मनाकृतं तस्य तद् येनासौ पञ्चमः। हेतावियं तृतीया। आत्मनादशमः, आत्मना द्वितीयः, आत्मना चतुर्थः, जनार्दनस्त्वात्मचतुर्थ एवेत्येवमादयः प्रयोगास्तु बहुव्रीहिणा साध्याः। एकस्यैव वस्तुनो बुद्धिप्रकल्पितभेदस्य वर्निपदार्थत्वमन्यपदार्थत्वं च न विरुद्ध्यते। यस्याग्रजः पुमान् स पुंसानुजः। भ्रातृकनिष्ठो न तु भगिनी कनिष्ठ इत्यर्थः। जनिषान्धो विकृताक्षः। सहसाकृतम्, अम्भसाकृतम्, तमसाकृतम्, अञ्जसाकृतम्, ओजसाकृतम्। मनसा आज्ञातुं शीलमस्य मनसाज्ञायी। संज्ञायान्तु मनसागुप्ता। यत्र द्विवचनबहुवचनान्तानां समासस्तत्र तयोर्द्विवचन बहुवचनयोरेकवचनमादेशश्च स्यात्तस्य पुनरलोपश्च। यस्याग्रजौ द्वौ पुमांसौ बहवो वा पुमांसः सोपीष्यते पुंसानुज इत्येव।

---

1 लुम्पेदवश्यमः कृत्ये तुङ्गकाममनसोरपि। समो वा हित तयो मांसस्य पचि युड्घयोः वा. (6-1-144)

2 आत्मनश्च (6-3-6)पूरण इति वक्तव्यम् (वा.3882)

3 पुंसानुजो जनुषान्ध इति च (वा.3881)

4 ओजः सहोऽम्भस्तमसस्तृतीयायाः(6-3-3) अञ्जस उपसंख्यानम् (वा.3880)

5 मनसः संज्ञायाम् (6-3-4) आज्ञायिनि च (6-3-5)

**चतुर्थ्याः**

आत्मनः पराच्च पद्भाषयोः परयोश्चतुर्थ्या अलोपश्चैकवत्वं च वैयाकणाख्यायाम्[1]। आत्मनेपदम्, परस्मैपदम्, चाख्यातविभक्तिः। आत्मनेभाषः। परस्मैभाषश्च धातुः। आत्मने भाषा परस्मैभाषा च तत्प्रयोगः। यान्यप्यात्मन्यः पदानि परेभ्यो वा पदानि तान्यप्यात्मनेपदानि परस्मैपदानि।

**पञ्चम्याः**

स्तोकादिभ्यो निष्ठातान्ते परे पञ्चम्या अलोपश्चैकवत्वं च[2]। स्तोकादिभ्यः प्रतिपदसमास उक्तस्तत्र पञ्चमी न लुप्यते।

**स्तोकार्थाश्च समीपार्था दूरार्थाः सकला अपि।**
**कृच्छ्रशब्दश्च कथ्यन्ते शब्दास्तोकादयस्त्विमे ॥**

स्तोकान्मुक्तः, अल्पान्मुक्तः, कतिपयान्मुक्तः, समीपादागतः, अन्तिकादागतः दूरादागतः। कृच्छ्रादागतः। सोऽपि स्तोकाभ्यां मुक्तः स्तोकेभ्यो वा मुक्तः सोऽपीष्यते स्तोकान्मुक्त इत्येव।

ब्राह्मणाच्छंसिनि परे पञ्चम्या अलोपश्चैकवत्वं च[3]। ब्राह्मणात् कर्मचोदनाग्रन्थादाहृत्याहृत्य शंसतीति ब्राह्मणाच्छंसी- ऋत्विग्विशेषः। योऽपि ब्राह्मणेभ्यो गृहीत्वा शंसति सोपीष्यते ब्राह्मणच्छंसी।

**षष्ठ्याः**

विद्यासम्बन्धवचनात् योनिसम्बन्धवचनाच्च ऋकारान्तात् तथाविध वचने परे षष्ट्या अलोपश्चैकवत्वं[4] च विकल्पेन तु स्वसरि परे[5]। होतुरन्तेवासी। होतुः पुत्रः। पितुरन्तेवासी-पितुः पुत्रः। तथाविधवचनपरत्वाभावान्नेह होतृ धनम्[6]। अथ विकल्पः। मातृष्वसा, पितृष्वसा मातुः ष्वसा पितुः ष्वसा, मातुः स्वसा, पितुः स्वसा। इह षत्वविकल्पः प्रागुक्तः[7]।

**दिवादीनां पत्यौ परे षष्ठ्या अलोपः स्यात् संज्ञायाम्।**

---

1 वैयाकरणाख्यायां चतुर्थ्याः (6-3-7) परस्य च (6-38)
2 पञ्चम्या स्तोकादिभ्यः (6-3-2)
3 ब्राह्मणाच्छंसिन उपसंख्यानम् (वा.3878)
4 ऋतो विद्यायोनिसम्बन्धेभ्यः(6-3-23)
5 विभाषा स्वसृपत्योः (6-3-24)
6 विधायोनिसंबंधेभ्यस्तत्पूर्वोत्तरपदग्रहणम् (वा.3903)
7 मातुः पितुर्भ्यामन्यतरस्याम् (8-3-85)

दिवस्पतिः, वृहतस्पतिरिति प्राप्ते पृषोदरादिना त शब्दलोपाद् बृहस्पति[1], वाचस्पतिः, ब्रह्मणस्पतिः, वास्तोष्पतिः, क्षेत्रस्यपतिः, भूतानां पतिः, विशांपतिः, दस्यूनां पतिः, यादसां पतिः, अपां पतिः, संज्ञात्वाविवक्षयां लोपोऽपि। यादः पतिः, अय्यतिः। वनस्पतिरित्यस्य त्रेधासिद्धिमिच्छन्ति। पृषोदरादित्वाल्लुप्ताकारस्य वनस्य षष्ठ्या अलोपाद्वा, षष्ठ्या अलोपाद् वनपतिरिति प्राप्ते पृषोदरानि यभागलोपाद्वा, लुप्तषष्ठीके वनपतिरिति प्राप्ते सकारागमाद्वा। दिवादित्वाभान्नेह – गोपतिः, पशुपतिः, गणपतिः, सुरपतिः, स्वर्गपतिः, द्युपतिः, भूपतिः, भुवस्पतिरिति तु भुवः शब्दादव्ययात् साध्यम्।

दिवो दासे[2] शुनस्तु शेपपुच्छलांगूलेषु परेषु षष्ठ्या अलोपः स्यात् संज्ञायाम्[3]। दिवोदासः, काशिराजः, शुनः शेपः, शुनः पुच्छः, शुनो लाङ्गूलः, अजीगर्तपुत्रा एते।

**देवानां प्रियो मूर्खे[4]।**

यज्ञादौ देवेभ्यः पशुं बलिमुपहरन्ति। ततः पशुर्देवानां प्रियो भवति। तदेतेन शब्देनाक्षेप्यः पशुधर्मा वालिशः परामृश्यते।

अमुष्यपुत्रिकामुष्यकुलिकयोः सिद्ध्यर्थं षष्ठ्या अलोपः स्यात्[5]। अमुष्य पुत्रस्य भावः अमुष्यपुत्रिका, अमुष्यकुलिका। तद्धितप्रत्ययोऽकः[6]।

वाग् दिक् पश्यदभ्यः क्रमेण युक्तिदण्डहरेषु परेषु षष्ठ्या अलोपश्चैकवत्वं च[7]। वाचो युक्तिः। दिशोदण्डः पश्यतोहरः। यश्चापि पश्यतां स्वर्णादपि द्रव्यं हरति सोऽपीष्यते पश्यतोहरः।

निकृष्टवचनादुत्तरपदे परे षष्ठ्या अलोपः स्यादाक्रोशे बोध्ये पुत्रे तु विकल्पेन[8]। चोरस्य कुलम्, दस्यूनां चक्रम्। अथ विकल्पः दास्याः पुत्रः दासीपुत्रः बहुपुत्रः।

---

1 तद्वृहतो करपत्योश्चोरदेवतयोः सुट् तलोपश्च (वा.6-1-157)

2 दिवसश्च दासे (वा.3902)

3 शेपपुच्छलाङ्गुलेषु शुनः (वा.3901)

4 देवानांप्रिय इति च मूर्खे (वा.3900)

5 आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च(वा.3898-3899)

6 द्वन्द्वमनोज्ञादिभ्यश्च (5-1-133)

7 वाग्दिक्पश्यदभ्यो युक्तिदण्डहरेषु (वा.3897)

8 षष्ठ्या आक्रोशे (6-3-21) पुत्रेऽन्यतरस्याम् (6-3-22)

**सप्तम्याः**

अकार व्यञ्जनान्तादुत्तरपदे परे सप्तम्या अलोपः स्यात् संज्ञायां न कार नाम्नि स्यात्[1]। प्राच्यानान्तु कारनाम्नि व्यञ्जनाद्युत्तरपदपरत्वे[2]।

त्वचिसारः, युधिष्ठिरः, गविष्ठिरः। षत्वं सकारस्योक्तम्[3]। हृदि स्पृशतीति हृदिस्पृक्, दिविस्पृक्[4]। अरण्येतिलकाः।, वनेकसेरुकाः। सप्तमी नदीदोह इत्यादिः। राज्ञेदेयः, कारस्तस्य संज्ञाशब्दे लुप्यते सप्तमी-लुयूथपशुः, शरावती नद्याः, प्रागद्दक्षिणदेशीयाः प्राच्याः तेषां यो वणिक् पशु पालकर्षकेभ्यः स्वामिग्राहो भागः। तस्य नियतपरिमाणकनियतद्रव्यरूपस्य रूढ शब्दे नियमः क्रियते स्वरपरत्व एवायं सप्तमीलोपः स्यात् व्यञ्जनपरत्वे त्वलोपमेव। स्तूपेशाणः हलेद्विपदिका मुकुटेकार्षापणम् दृषदिमाषकः। एवमादयः प्राग्देशे काराः। यूथपश्वादयस्तूदग्देशे स्वरपरत्वान्नेह। अविकटोरणः। अवीनां संघाते मेष इत्यर्थः। प्राचामुदीचां चापंकारः। यत्तु केचित् प्राचामिति चिरन्तनानामुदीचामिति सांप्रतिकानामित्येवं कालेन विभज्यैतत् व्याचक्षते तत् प्रौढिवादात्। देशविभागाभिप्रायेणैवेह प्रागुदग्व्यवहारस्य व्यवस्थापितत्वादित्यन्त्र स्पष्टम्।

अग्राद् वने परे[5] मध्यान्ताभ्यां गुरौ परे सप्तम्या अलोपः स्यात्[6]। अग्रेवणम्, मध्येगुरुः, अन्तेगुरुः।

प्रावृट् शरत्कालाद्युभ्यो जे परे सप्तम्या अलोपश्चैकवत्वं च[7] विकल्पेन तु वर्षक्षरवरवरेभ्यः[8]।

प्रावृषिजः, शरदिजः, कालेजः, दिविजः। अथविकल्पः। वर्षेजः, वर्षजः क्षरेजः, क्षरजः, शरेजः, शरजः, वरेजः वरजः।

---

1 हलदन्तात्सप्तम्याः संज्ञायाम् (6-3-9)

2 कारनाम्नि च प्राचां हलादौ (6-3-10)

3 गवियुधिभ्यां स्थिरः(8-395)

4 हृद्द्युभ्यां च (वा.3885) शरादीनां च (6-3-120)

5 राजदन्तादिषु निपातनात्सप्तम्या अलुक्

6 मध्याद् गुरौ (6-3-11) अन्ताच्च (वा.3894)

7 प्रावृट्छरत्कालदिवां जे (6-3-15)

8 विभाषा वर्षक्षरशरवरात् (6-3-16)

कालवचनादकारव्यञ्जनान्तात् कालतनतरतमेषु परेषु विकल्पेन सप्तम्या अलोपश्चैकवत्वं च[1] स्याद्कालवचनात्तु तथा विधात् शयवासवासिषु परेषु विकल्पेन[2]।

पूर्वाह्णे काले, पूर्वाह्ण काले, पूर्वाह्णे तने, पूर्वाह्णतने, पूर्वाह्णेतरे, पूर्वाह्णतरे, पूर्वाह्णेतमे पूर्वाह्णतमे। अथ कालवचनात्। खेशयः, खशयः, विलेशयः, ग्रामेवासः, ग्रामवासः, ग्रामेवासी, ग्रामवासी। अन्तेवासी। इ उ ऋ वर्णाद्दीर्घाच्च नास्त्यलोपः भूमिशयः।

**पूर्वपदात् कृदन्ते परे सप्तम्या अलोपः स्याद्बहुलम्[3]।**

बहुलमित्युच्यते बहूनामर्थानामुपसंग्रहणाय। तेन क्वचिन्नित्यमलोपः। स्तम्बेरमः, कर्णेजपः। कौमुद्यां त्वत्रापि विकल्प एवोक्तः। प्रयोगस्तु प्रायेणालोपस्यैव दृश्यते। अग्रेसरः, खेचरः, घञन्ते बन्धशब्दे विकल्पः[4] हस्तेबन्धः, हस्तबन्धः, चक्रेबन्धः, चक्रबन्धः। क्वचितु नास्त्यलोपम्[5]। चक्रबद्ध पाशबद्धः, सांकाश्यसिद्धः। स्थण्डिलशायी, अनन्तशायी, जलशायी। क्वचित्पुनरिन्नन्तेऽपि नित्यमलोपम्। अन्तेवासी परमेष्ठी। अकार व्यञ्जनान्तात् स्थ शब्दे तु परे पश्चाद भाषायां नास्त्यलोपः[6]। समस्थः, विषमस्थः, अम्बष्ठः। प्रथमभाषायां तु वैदिक्यां भवत्येवालोपम् कुशेष्ठः। कृष्णोऽस्याखरेष्ठः। दिविष्ठः। क्वचिन्न बर्हिष्ठम्। अन्त्यस्वरान्तात्तु वैदिक्यामपि नास्ति। गोष्ठम्, भूमिष्ठम्, द्विष्ठम्, त्रिष्ठम्, अग्निष्ठम्। सर्ववेदपारिषदं हीदं शास्त्रं तत्र नैकः पन्थाः शक्य आस्थातुमिति बहुलग्रहणेन परिशिष्ठाः सर्वे लोपालोपप्रयोगा अनुगृह्यन्ते। इति विभक्त्यलोपः।

## पुंवद्भावः

**कर्मधारये पूर्वपदमनूङ स्त्रीप्रत्ययान्तं पुंवत् स्यात् पुंदृष्टात् प्रत्ययश्चेत्[7]।**

सुन्दरी कन्या सुन्दरकन्या, चारुचर्य्या। पूरणप्रत्ययान्तेषु प्रियादिषुः च परेषु बहुब्रीहौ पुंवद्भावः प्रतिषिध्यते[1]। कर्मधारये तु नास्ति प्रतिषेधः। महानवमी, कृष्णचतुर्दशी, महाप्रिया महाचपला, प्रियदुहिता। कोपधादीनामपि च बहुब्रीहौ पुंवद्भावः

---

1 घकालतनेषु कालनाम्नः (6-3-17)
2 शयवासवासिष्वकालात् (6-3-18)
3 तत्पुरुषे कृति बहुलम् (6-3-14), स्तम्भकर्णयोरमिजपो। (3-2-13)
4 बन्धे च विभाषा (6-3-13)
5 नेन्सिद्धबन्धातिषु च (6-3-19)
6 स्थे च भाषायाम् (6-3-20)
7 पुंवत्कर्मधारयजातीयदेशीयेषु (6-3-42)

प्रतिषिध्यते [2]। कर्मधारये तु नास्ति प्रतिषेधः। पाचकस्त्री, दत्तभार्या, पंञ्चमभार्या, स्रौघ्नभार्या, सुकेशभार्या, ब्राह्मणभार्या। ऊङन्तस्य तु न। वामोरु भार्या। स्त्रीत्वार्थ प्रत्यायकतया विधीयमानो लोपोऽपि स्त्रीप्रत्ययः। इद् विड् वृन्दारिका एडेविड वृन्दारिका। पृथ वृन्दारिका, पार्थवन्दारिका, उशिर् वृन्दारिका, औशिज वृन्दारिका। दरद् वृन्दारिका, दारद् वृन्दारिका इत्यादि।

भिन्नेऽपि तत्पुरुषे पूर्वपदमनूङ् स्त्रीप्रत्ययमान्तं पुंवत् स्यात् पुंदृष्टात् प्रत्ययश्चेन्मानिनि परे न तु कोपधं पूरणान्तं वृद्धि कृत्तद्धितान्तं जात्तिवचनं संज्ञा वा [3]।

दर्शनीयां स्त्रियं मन्यते दर्शनीयमानिनी चैत्र, दीर्घमुखमानी, श्लक्ष्णमुखमानिनी। कोपधादीनां तु पुंवत्वं नास्ति। मद्रिकामानिनी, पञ्चमी मानिनी, ब्राह्मणीमानिनी, दत्तामानिनी।

भिन्नतत्पुरुषे महती पुंवत् स्यात् घासकरविशिष्टेषु परेषु [4]। महत्या घासः करो विशिष्टो वा महाघासः महाकरः, महाविशिष्टः।

**भिन्न तत्पुरुषे कुकुट्यादयोऽण्डादिषु पुंवत् स्युः [5]।**
**कुक्कुट्यादौ मृगी काकी ततोऽन्योऽपि प्रयोगतः।**
**अण्डादौ च पदं शावो भ्रूकुंसो भ्रुकुटी तथा।**

कुक्कुट्या अण्डम् – कुक्कुटाण्डम्, मृग्यापदम् – मृगपदम्, मृगक्षीरम्, काकशावः। यद्यपि कुक्कुटाण्डादयः कुकुटादीनां जाति परत्वविवक्षाया सिध्यन्ति। अथवेतदुभयोरण्डमुभयोः पदमुभयोः स्त्रीपुंसयोः शावः। ततः पुंवचनात् सिद्ध्यन्ति। न च मृगस्य पुंसः क्षीरं भतीत्यसंभवादेव सामर्थ्यात् स्त्रियां प्रत्ययो भविष्यतीति बुध्या यत्रान्यः स्त्रीप्रत्ययो न विवक्ष्यते तत्रेदं मृगक्षीरादिकमपि संसिद्धम्। तथापि कुक्कुट्या अण्डमित्येवं विग्रहाभिमानेन कुक्कुट्यण्डमित्याद्युपचार निरासार्थमयमारम्भः।

1 संज्ञापूरण्योश्च (6-3-38)
2 न कोपधायाः(6-3-37)
3 जातेश्च (6-3-41) संज्ञापूरण्योश्च (6-3-38)
4 महत आत्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च (वा.3950)
5 कुकुट्यादीनामण्डादिषु (वा.3934)

## लिङ्गचर्या

कर्मधारयैकदेशिनौ परवल्लिङ्गाव[1]र्द्धर्चस्तु पुंनपुंसकयोः[2]। द्विविधः कर्मधारयः उत्तरपदार्थप्रधानः, पूर्वपदार्थप्रधानश्च। तत्रोत्तरप्रधानस्य दैवकृतं

परवल्लिङ्गमप्राप्तेरन्यलिङ्गस्य। यस्तु पूर्वप्रधानस्तदर्थमिदमुच्यते। पुरुषमतल्लिका। एकदेशी तु पूर्वकायः। अर्द्धपिप्पली। ऋक् शब्दः स्त्रीलिङ्गः अर्द्धर्चस्तु न स्त्रीलिङ्गः। ऋचोर्द्धमर्द्धर्चमर्द्धच।ः। परेत्वाहुः – मतल्लिकादयो नियतलिङ्ग उत्तरपदस्था एवं दृश्यन्ते न तु पृथक् प्रयुज्यन्ते तस्मान्नलिङ्गान्तरप्राप्तिः। एकदेशी तु नारभ्यते। उत्तरप्रधानेन कर्मधारयेण गतार्थत्वात्। तस्मादिदं लिङ्गमशिष्यं, लोकाश्रयत्वालिङ्गस्येति।

**रात्रान्तोऽगतितत्पुरुषः पुंसि स्याद्द्विगुस्तु नपुंसके[3]।**

सर्वारात्रिः सर्वरात्रः, संख्यातरात्रः, पुण्यरात्रः। पूर्वं रात्रेः पूर्वरात्रः, पश्चिमरात्रः। अथ नपुंसकम्- द्वयोरात्र्योः समाहारो द्विरात्रं, त्रिरात्रं, गणरात्रम्, पञ्चरात्रम्, नवरात्रम्, दशरात्रम्, पञ्चरात्रो नवरात्रो दशरात्र इत्यादयस्तु तद्धितान्ताः स्युः। गतिसमासस्तु विशेष्यनिघ्नत्वात् सर्वलिङ्गः। अतिक्रान्तो रात्रिमतिरात्रः, अतिरात्रा, अतिरात्रम्।

**अह्नान्तस्तत्पुरुषः पुंसि स्यात् पुण्यसुदिनाभ्यां तु नपुंसके[4]।**

उत्तमाहः, क्षयाहः, उत्सवाहः, एकाहः, संख्याताहः, इत्यपि केचिदच्छिन्ति। **द्विगुरपि पुंस्येव** – द्वयोरह्नोः समाहारो द्वयहः, त्र्यहः पञ्चाहः, सप्ताहः, दशाहः, द्वादशाहः। अथ नपुंसकम्। पुण्याहम् सुदिनाहम्।

अह्नान्तोऽगतितत्पुरुषः पुंसि स्यात् तद्धितार्थ द्विगुस्तु सर्वलिङ्गः[5]। सर्वमहः सर्वाह्णः संख्यातान्हः पूर्वमह्नः पूर्वाह्णः, अपराह्णः सायाह्णः द्वयोरह्नोर्भवः इत्येवमर्थान्तरगर्भितत्वे तु विशेष्यनिघ्नः। द्वयह्नः उत्सवः। द्वयह्ना क्रिया, द्वह्नं कर्म। गतिसमासः सर्वलिङ्गः। अतिक्रान्तोऽहरत्यह्नः, अत्यह्ना, अत्यह्नम्।

**पथं संख्याव्ययादिर्नपुसकम् स्यात्[6]।**

---

1 परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः (2-4-26)

2 अर्धर्चाःपुंसि च (2-4-31)

3 रात्राह्नाहाः पुंसि (2-4-29) संख्यापूर्वं रात्रं क्लीबम् (लि.131)

4 रात्रा ह्नाहाः पुंसि (2-4-29), पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा (1553)

5 रात्राह्नाहाः पुंसि(2-4-29), द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः (वा.1545)

6 पथः संख्याव्ययादेः (वा .1554)

संख्यादिरिति द्विगुसमासो भिन्नसमासश्च कथ्यते। अव्ययादिरिति कर्मधारयो नञ् समासश्च द्वयोः पथोः समाहारो-द्विपथं, त्रिपथम्, चतुष्पथम्। त्रयाणां वा पन्था स्त्रिपथम्, उत्त्पथम्। विरुपः पन्थ विपथम्, कुत्सितः पन्थाः कापथम्, अपथम्[1]। व्यध्वो

दुरध्वोविपथः, कदध्वा, कापथः समा इत्येवमादीनि कोशवचनानि तु चिन्त्यानि। अकारान्त पथशब्देन समासेऽपि नपुंसकस्येष्टत्वात्। सत्पथ इति त्वनव्ययादिः। गतिसमासे लिङ्गमन्वेष्यम्। पथ इत्यकारान्तः कृतसमासान्तो निर्दिश्यते। तेन यत्र समासान्तः प्रतिषिध्यते तत्र परवलिङ्गता। सुपन्थाः अतिपन्थाः, अपन्थाः[2]।

द्विगुः पात्रादिभिन्नाकारान्तोत्तरपदः स्त्रियां स्यादाबन्तोत्तरपदोऽन्नन्तोत्तर-पदश्च स्त्रीपुंसकयोरन्यः प्रायेण नपुंसके[3]।

अकारान्तोत्तरपदत्वेशब्दभेदेन स्त्रीनपुंसकता भवति पात्राद्युत्तरपदो नपुंसके एव। मूलाद्युत्तरपदः स्त्रियामेव। पञ्चपात्रम्, त्रिभुवनम्, चतुर्युगम् त्रिकालम्, त्रिदेवम्, चतुर्वेदम्, त्रिपिटकम् सप्तस्वरम्, षड्दर्शनम्, षट्शास्त्रम्। आकृतिगणोऽयम्। अन्यत्र तु पञ्चमूली, दशमूली। पञ्चाजी, त्रिफला, त्रयनीका।

मूलादिशब्दे तु द्विगुभेदेन स्त्रीनपुंसकता दृश्यते। दशमूलं नपुंसकमेव। पञ्चमूली स्त्रियामेव लोकसूत्रयोस्तु केचित्पात्रादित्वमिच्छन्ति केचिन्न तेनैतयोः प्रतिशब्दं स्त्रीनपुंसकता लोकोपचारात् सिद्धा। त्रिलोकं, त्रिलोकी। त्रिलोकनाथः, त्रिलोकीपतिः। त्रिसूत्रं, त्रिसूत्री। आवन्तान्नन्तयोः समयवधाने तु प्रतिशब्दं स्त्रीनपुंसकता[4]। आबिति स्त्रीप्रत्ययाकार संज्ञा। पंचखट्वम्, पञ्चखट्वी। पञ्चतक्षं, पञ्चतक्षी। नलोपः प्रागुक्तः[5] एतद्भिन्न सर्वोऽपि द्विगुनपुंसकः इत्याहुः पूर्वे[6]। पञ्चगवम्। प्रायेणेत्युच्यतेऽन्येषामपि व्यभिचाराणामुपसंग्रहणाय। दृश्यते हि नामिस्वरान्तत्वे स्त्रीत्वम्। त्रिवली, त्रिमूर्तिः त्रिकटुरित्यादि।

---

1 अपथं नपुंसकम्(2-4-30)

2 परवल्लिङ्गं द्वन्द्वतत्पुरुषयो (2-4-26)

3 अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः (वा.1556) पात्राद्यन्तस्य न (वा 1559) आबन्तो वा (वा.1557 )

4 आबन्तो वा (वा.1557)

5 अनो न लोपश्च, वा च द्विगुः स्त्रियाम् (वा.1558)

6 स नपुंसकम् (2-4-17)

**पुरान्तस्तत्पुरुषो नपुंसके [1]।**

जयस्य पूर्जयपुरम्। पुरशब्दः कृतसमासान्तो निर्दिश्यते। अन्यत्र कोशात् सिद्धम्। कन्थान्तस्तत्पुरुषो नपुंसके स्यादुशीनर कन्था संज्ञायाम् [2]। सुशमस्यापत्यानि सौशम्यः। तेषां कन्था सौशमिकन्थम्। उशीनरदेशोत्पन्नस्य कन्था विशेषस्य संज्ञेयम्। अन्यत्र वीरणकन्था, दाक्षिकन्था।

उपज्ञान्तोपक्रमान्तौ तत्पुरुषौ नपुंसके तत्प्राथम्याचिख्यासायाम् [3]। पाणिनेरुपज्ञा पाणिन्युपज्ञां व्याकरणम्। द्वैपायनोपज्ञां पुराणं। कपिलोपज्ञं दर्शनम्। नन्दोपक्रमं द्रोणः। व्याकरणादीनां प्रथमवृत्तिरवगम्यते।

**सभान्तस्तत्पुरुषो नपुंसके स्यात् संघातार्थकत्वे [4]।**

स्त्रीसभम्, रक्षः,सभम्, पिशाचसभम्, संघातो गम्यते। अन्यत्र तु परवलिङ्गतैव [5]। धर्मसभा धर्मशालेत्यर्थः। धर्मनिरुपणार्था वा सभा धर्मसभैव। संघातार्थत्वेऽपि न पूर्वपदार्थसंघातो गम्यते। अत एव नेह- राजसभा, चन्द्रगुप्तसभा। एकस्तत्र राजा चन्द्रगुप्तः। यत्र तु राज्ञामेवानन्यानामिष्यते सभा तत्रावश्यं राजसभम्, ईश्वरसभम्।

छायान्तस्तत्पुरुषो नपुंसके स्यात् बाहुल्ये नित्यमन्यत्र विकल्पेन [6]। इक्षूणां छाया-इषुच्छायम्, शरच्छायम्। अन्य विकल्पः, कुड्यच्छायम्। इक्षुच्छाया निषादिन्य इतित्वशुद्धः प्रयोगः।

**सेना सुरा शाला निशान्तास्तत्पुरुषा नपुंसके स्युर्विकल्पेन [7]।**

ब्राह्मणसेनं, ब्राह्मणसेना, यवसुरं, यवसुरा, गोशालं, गोशाला, श्वनिशं, श्वनिशा। पुरान्तादयो भिन्नतत्पुरुषा अधिक्रियन्ते तेन कर्मधारये नास्ति परमसेना। इति लिङ्गचर्या॥

---

1 क्लीबत्वं लोकात् इति सिद्धान्तकौमुद्याम् (सू.कां.940)

2 संज्ञायां कन्थोशीनरेषु (2-4-20)

3 उपज्ञोपक्रमं तदाद्याचिख्यासायाम् (2-4-21)

4 सभाराजाऽमनुष्यपूर्वा (2-4-23)

5 परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः(2-4-26)

6 छाया बाहुल्ये (2-4-22) विभाषा सेनासुराच्छायाशालानिशानाम् (2-4-25)

7 विभाषा सेनासुराच्छायाशालानिशानाम् (2-4-25)

## अथ स्वराः

अथ तत्पुरुषे स्वरं वक्ष्यामः सोऽष्टधा- पूर्वप्रकृतिभावः, परप्रकृतिभावः, उभयप्रकृतिभावः, पूर्वादिः, पूर्वान्तः, परादि परान्तः, समासान्तश्चेति ते क्रमेण प्रदर्श्यन्ते। तत्रादौ –

## पूर्वप्रकृतिभावः

**(अ) विशेषणादौ**

(1) व्रीह्यादिषु परेषु महान् प्रकृत्या स्यात् [1]।

**व्रीहिर्हैलिहिलं गृष्टिर्जावालो भार भारते।**
**अपराह्णं वैश्वदेवं प्रवृद्धेष्वासरौरवम्॥**

महाव्रीहिः, महाभारतम्, महावैश्वदेवम्, महेश्वासः। निष्ठातान्ते इति वक्ष्यमाण नियमस्याभूततद्भावार्थे प्रातिस्विके कर्मधारये विषयकरणात् प्रवृद्धे परेऽप्राप्तः पूर्वप्रकृतिभावोऽनेन विधीयते। महाप्रवृद्धः। महान्तोदात्तः। महतो व्रीहिरित्यत्र नास्ति। क्षुल्लकवैश्वदेवम्। क्षुल्लकं क्षुद्रकं न तु क्षुधं लातीति व्युत्पत्तिर्भ्रमात्कार्य्या। अन्तोदात्तः।

(2) गुणवचनेषु परेषु विस्पष्टादीनि प्रकृत्या स्युः [2]। विस्पष्टकटुकम्। विस्पष्टोऽयमाद्युदात्तः।

**विस्पष्टादिषु विस्पष्ट विचित्रव्यक्तपण्डिताः।**
**सम्पन्नः कुशल स्तदवद्यपलो निपुणोऽपि च॥**
**विचित्तपटु शब्दावप्यत्र कैश्चित् पठ्येते।**

(3) उत्तरपदे परे प्रथमो विकल्पेन प्रकृत्या स्यादचिरोपसंपत्तौ गम्यायाम् [3]। प्रथमं वैयाकरणः। संप्रति व्याकरणमध्येतुं प्रवृत्त एवेत्यर्थः। अभिनवत्वं गम्यते। प्रथमोऽन्तोदात्तः। पक्षे समासस्वरः। अभिनवत्वानवगतौ तु नित्यमन्तोदात्तत्वम्। प्रथमवैयाकरण। आद्यो मुख्यो वेति गम्यते।

(4) जातिवचनं परे कतरकतमौ विकल्पेन प्रकृत्त्या [4]। कतरकठः, कतमकलापः। पूर्वावन्तोदात्तौ। पक्षे समासेऽन्तोदात्तः।

---

1 महान्व्रीह्यपराह्णगृष्टीष्वा सजाबालभारभारहोलिहिलरौराप्रवृद्धेषु (6-2-38)

2 विस्पष्टादीनि गुणवचनेषु (6-2-24)

3 प्रथमोऽचिरोपसंपत्तौ (6-2-56)

4 कतरकतमौ कर्मधारये (6-2-57)

**(5) ब्राह्मणकुमारयोः परयोरार्य्यो राजा च विकल्पेन प्रकृत्या स्यात्** [1]।

आर्य्यब्राह्मणः, आर्य्यकुमारः। आर्य्योऽन्तस्वरितः। राजब्राह्मणः, राजकुमारः, राजाद्युदात्तः। राजाऽसौ ब्राह्मण इति ताद्धर्म्यवृत्तया सामानाधिकरण्यम्। षष्ठीसमासे तु समासोऽन्तोदात्तः[2]।

## (ब) विशेष्यादौ

(1) कृत्यप्रत्ययान्तास्तुल्यपर्य्यायवचनाश्च पूर्वपदभूता प्रकृत्या स्युः[3]। भोज्योष्णम्, भोज्यशब्दः स्वरितान्तः। तुल्यश्वेतः। तुल्य आद्युदात्तः सदृक् श्वेतः। सदृगन्तोदात्तः। सदृशश्वेतः। सदृशो मध्योदात्तः।

(2) उत्तरपदे परे कुमारः प्रकृत्या स्यात् कर्मधारये न तु पूर्वाद्युदात्तत्वविधौ [4]। कुमारश्रमणा कुमारोऽन्तोदात्तः। यत्र तु कुमारस्याद्युदात्तत्वं विधीयते तत्रेदं नास्ति। कुमारप्रत्येनाः। कुमारचातकाः, कुमारजीमूताः। आद्युदात्तत्वं वक्ष्यते [5]।

(3) श्रज्यकन्नादेशवति पापवाचिन्यवमशब्दे चोत्तरपदे भाववाचि प्रकृत्या स्यात् कर्मधारये [6]।

गमनश्रेष्ठम्, गमनज्यायः, गमनकनिष्ठम्, गमनपापिष्ठम्, गमनावमम्। करणवचनत्वान्नेह –गम्यतेऽनेनेति गमनं श्रेयो गमनश्रेयः। षष्ठी समासेऽपि नास्ति।

(4) पूर्वे परे पूर्वपदं प्रकृत्या स्याद् भूतपूर्वे गम्ये [7]। आढ्यो भूतपूर्वः आढ्यपूर्वः। पूर्व शब्दो वृत्ति विषये भूतपूर्वे वर्तते अन्यत्र न। परमपूर्वः।

(5) आशङ्का वपधनेदीपःसु परेषु पूर्वपदं प्रकृत्या स्यात् संभावने गम्ये [8]। अस्तित्वाध्यवसायः संभावनम्। गमनाशङ्कमस्ति। गमनावाधम्। गमनेदीपः। मयूरव्संसकादि समासः। गमनमाशङ्क्यते। आवाध्यते निकटतरमिति वा संभाव्यते। संभावनाभावे तु न। परमनेदीपः।

---

1 आर्यो ब्राह्मणकुमारयोः (6-2-58), राजा च (6-2-59)

2 समासस्य (6-1-223)

3 तत्पुरुषे तुल्यार्थतृतीया सप्तम्युपमानाव्ययद्वितीयाकृत्याः (6-2-2)

4 कुमारश्च (6-2-27)

5 आदिः प्रत्ययेनसि (6-2-27)

6 श्रज्याऽवमकन्पापवत्सु भावे कर्मधारये (3-2-25)

7 पूर्वे भूतपूर्वे (6-2-46)

8 आशाङ्का बाधनेदीयस्सु संभावने (6-2-21)

## (स) विशेषणे

(1) निष्ठातान्ते परे पूर्वमनिष्ठान्तं प्रकृत्या स्यात् कर्मधारये [1]। अश्रेणयः श्रेणयः कृताः श्रेणिकृताः। श्रेणिराद्यदात्ताः। पूगकृताः। पूगोऽन्तोदात्तः।

(2) गुणवचने परे पूर्वमीषद्विकल्पेन प्रकृत्त्या स्यात् [2]। ईषत्कडारः। ईषदन्तोदात्तः। पक्षे समासान्तोदात्तविधिः। प्रतिपदोक्ते विशेषण समासे एवायं न तूपपदसमासेऽपि। तेनेषद्भेद इत्यादौ कृत्स्वर एव।

(3) एताभिन्ने वर्णवाचिन्युत्तरपदे परे वर्गवाचि पूर्वपदं प्रकृत्या स्यात् [3]। कृष्णसारङ्गः। अमृगाख्यायां कृष्णोऽन्तोदात्तो वेदे। भाषायां त्वाद्युदात्त इत्याहुः। लोहितकल्माषः। आद्युदात्तम् नेह – कृष्णैतः।

(4) शिल्पिवचने परे ग्रामो विकल्पेन प्रकृत्या स्यात् प्रशंसार्थो राजा च [4]। ग्रामनापितः। ग्रामकुलालः। राजनापितः। राजकुलालः। आद्युदात्तो ग्रामो राजा च। पक्षे समासान्तोदात्तः। अत्र ग्रामनापितः इति षष्ठी समासः। राजनापितः इति कर्मधारयः राजगुणाध्यारोपेणोत्तरपदार्थस्य प्रशंसा गम्यते। षष्ठी समासो वा। अराजकीयस्य राजकीयत्वप्रतिपादने राजानं प्रति योग्यत्वमर्थाल्लभ्यते। योग्यता च न निरास्पदा भवतीत्युत्तरपदार्थे कर्मप्रावीण्यादिकमचिरादवगतं भवति। अन्ततस्तु फलमस्य प्रशंसैव। यत्र तु यथार्थमेवायं नापितो राजपुरुषः। तत्र प्रशंसानवगमन्नित्यमन्तोदात्तः समासः। राजनापितः। शिल्पीत्युच्यते नेह-राजहस्ती।

(5) चिरकृच्छ्रयोः परयोः प्रतिबन्धवाचि पूर्वपदं प्रकृत्या स्यात् [5]। कार्य्यसिद्धिमवश्यं प्रतिबध्नातीति प्रतिवन्धि। आवश्यके इन प्रत्ययः। गमनचिरम्। व्यवहारकृच्छ्रम्। चिरकालभाविनि गमनेऽत्र चिरशब्दः। तेन गमनादिकं प्रति चिरकृच्छ्रयोः समानाधिकरण विशेषणत्वादुपपद्यते विशेषण समासः। गमनादिकं कारणविकलतया चिरकालभावि कृच्छ्रयोगि वा भूत्वा प्रतिवन्धि जायते। अथवा प्रतिवन्धो यस्याभूत् तदिदं प्रतिवन्धि। चिरकालयोगद् कृच्छ्रयोगद् वा गमनादिकं प्रतिबन्धि विशिष्टं भवतीति षष्ठी समासे उदाहरणम्। गमनविलम्व इति वक्तव्ये गमनचिरं तत्राभूदित्याह। व्याहरण क्लेश इति वक्तव्ये व्याहरणकृच्छ्रमभूदित्याह

---

1 कर्मधारयेऽनिष्ठा (6-2-46)
2 ईषदन्यतरस्याम् (6-2-54)
3 वर्णो वर्णेष्वनेते (6-2-3)
4 ग्रामः शिल्पिनि (6-2-62) राजा च प्रशंसायाम् (6-2-63)
5 प्रतिबन्धिचिरकृच्छ्रयोः (6-2-6)

(6) अध्वर्यौ परे पूर्वपदं प्रकृत्या स्याज्जाति संप्रत्यये [1]। कठाध्वर्य्यु। कठेन प्रोक्तं छन्दोऽधीते सकठः। अन्तोदात्तः। जातिसंप्रत्ययाभावे तु न। परमाध्वर्युः।

(7) कषाये परे पूर्वपदं प्रकृत्या स्याज्जाति संप्रत्यये[2]। दौवारिककषायम्। द्वारे नियुक्तो दौवारिकः। अन्तोदात्तः।

(8) सदृशप्रतिरूपयोः परयोः पूर्वपदं प्रकृत्या स्यात् सादृश्यसंप्रत्यये[3]। पितृसदृशः। तृतीयासमासः षष्ठीसमासो वा। पितृप्रतिरूपः। सादृश्यासंप्रत्यये तु न। परमसदृशः। समासार्थोऽत्र पूज्यमानता न सादृश्यम्।

(9) सुखप्रिययोः परयोः पूर्वपदं प्रकृत्या स्यात् हित संप्रत्यये प्रीति संप्रत्यये च [4]। गमनप्रियम्, गमनसुखम्। सुखेन गमनं सुखे वा गमनमिति समानाधिकरणसमासो विशेष्यादिः। गमनमाद्युदात्तम्। हिताप्रत्ययान्नेह – परमसुखम्। प्रीतौ तु-ब्राह्मणसुखम् पायसम्। छात्रप्रियोऽनध्यायः। अन्तोदात्ते पूर्वपदे। प्रीत्यनवगमान्नेह राजसुखम्।

(10) सविधसनीऽसनीऽसमर्या दसवेशसदेशेषु परेषु पूर्वपदं प्रकृत्या स्यात् सामीप्ये गम्ये[5]। मद्रसविधम्। मद्रोऽन्तोदात्तः। गान्धारसनीडम्। आधुदात्तो गान्धारो मध्योदात्तो वा कश्मीरममर्य्यादम्। कशमीरो मध्योदात्तः। मद्रसवेशम्, मद्रसदेशम्। सहमर्यादया समर्य्यादं क्षेत्रम्। चैत्रसमर्य्यादम्। चैत्र सक्षेत्रमित्यर्थः। सामीप्यं गम्यते।

(11) द्विगौ परे पूर्वपदं प्रकृत्या स्यात् प्रमाणे गम्ये[6]। सप्त समाः प्रमाणमस्य सप्तसम इति प्रमाणे तद्धितार्थे द्विगुः। प्राच्यः सप्तसमः प्राच्यसप्तसम, इति कर्मधारयः प्राच्य आद्युदात्तः। समाहार द्विगौ नास्ति। परमसप्तसमम्।

(12) प्रमाणे गम्ये गाधलवणयोः परयोः पूर्वपदं प्रकृत्या स्यात् [7]। अरित्रगाधमुदकम्। तत्प्रमाणमित्यर्थः। अरित्रं नौकाष्ठम्। तस्य गाधं स्पृश्यमानतलम्।

---

1 अध्वर्युकषाययोर्जातौ (6-2-10)

2 अध्वर्युकषाययोर्जातौ (6-2-10)

3 सदृशप्रतिरूपयोः सादृश्ये (6-2-11)

4 सुखप्रिययोर्हिते (6-2-15)

5 सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये (6-2-23)

6 द्विगौ प्रमाणे (6-2-12)

7 गाधलवणयोः प्रमाणे (6-2-4)

अरित्रं मध्योदात्तम्। गोलवणम्। यावद्गवे दीयते तावदित्यर्थः। गौरन्तोदात्तः। प्रमाणमियता परिच्छेदमात्रं न पुनरायाम एव।

(13) अपदेशे गम्ये पदे परे पूर्वपदं प्रकृत्या स्यात्[1]। अपदेशो व्याजः। मूत्र पदेन प्रस्थितः। उच्चारपदेन प्रस्थितः। मूत्रमाद्युदात्तम्। उच्चारोऽन्तोदात्तः। उच्चारः पुरीषक्रिया। अपदेशाभावे नास्ति। विष्णुपदम्।

(14) वातत्राणे गम्ये निवाते परे पूर्वपदं प्रकृत्या स्यात्[2]। वातस्याभावो निवातम्। अव्ययीभाव निरूद्धो वातोऽस्मिन्निति बहुब्रीहिर्वा। कुटीनिवातम्। कुड्यनिवातम्। कुकुड्यं वा निवातमिति समानाधिकरणः समासः। षष्ठी समासोऽपि वा सम्भवति। पूर्वपदमन्तोदात्तम्। वातत्राणादन्यत्र नास्ति। राजनिवाते वसति। निवात शब्दो रुढः पार्श्वे। लक्षणया दुःखप्रतीकाररूपायां रक्षायां वा।

(15) अनार्तवार्थे शारदे परे पूर्वपदं प्रकृत्या स्यात्[3]।

शारदशब्दो नूतनार्थः। तस्यास्वपदविग्रहः। रज्जोः सद्य उद्धृतं रज्जुशारदमुदकम् इदानीमैव कूपादुद्धृतं नवं जलमित्यर्थः। रज्जुरित्याद्युदातः। आर्तवे तु नास्ति। उत्तमशारदम्। शरदि ऋतौ भवं शारदमित्ययमार्तवार्थः।

(16) नपुंसकलिङ्गेषु मात्रोपज्ञोपक्रमच्छायेषु परेषु पूर्वपदं प्रकृत्त्या स्यात्[4]। भिक्षायास्तुल्य प्रमाणं भिक्षामात्रम्। अन्तोदात्ता भिक्षा। पाणिन्युपज्ञम्। आद्युदात्तः पाणिनिः। नन्दोपक्रमम्। अन्तोदात्तो नन्दः। इषुच्छायम्। आद्युदात्तः इषुः। अनपुंसके तु न। कुड्यच्छाया।

(17) वाणिजे परे गन्तव्यवचनं च पूर्वपदं प्रकृत्त्या स्यात्[5]। मद्रवाणिजः। गोवाणिजः। सप्तमीसमासः। मद्रेषु गत्वा व्यवहरतीति मद्रवणिगेवमुच्यते। गोद्रव्ये व्यवहरतीति गोवाणिजः। षष्ठी समासो वा। मद्रो गौ श्चान्तोदात्तौ।

(18) दायादे परे दायाद्यं पूर्वपदं प्रकृत्त्या स्यात्[1]। दायस्यादानं तत्संवन्धो वा दायाद्यम्। इह तु लक्षणया आदीयमाने दायाद्य शब्दः। धनदायादः धनमाद्युदात्तम्।

---

1 पदेऽपदेशे (6-2-7)
2 निवाते पातत्राणे (6-2-8)
3 शारदेऽनार्तवे (6-2-9)
4 मात्रोपज्ञोपक्रमच्छाये नपुंसके(6-2-14)
5 गन्तव्यपण्यं वाणिजे (6-2-13)

(19) सादिवाम्योरुष्ट्रः साद सादि सारथिषु तु परेषु गौः प्रकृत्या स्यात्[2]। उष्ट्रसादिः, उष्ट्रवामिः, उष्ट्र आद्युदात्तः। गो सादः, गो सादिः, गो सारथिः।

(20) दासीभारादीनां पूर्वपदं प्रकृत्त्या स्यात्[3]। यस्य तत्पुरुषस्य समासस्य वा पूर्वपद प्रकृतिरपरत्वं दृश्यते न विशिष्यवचनं विहितं स सर्वोऽपि दासीभारादिषु द्रष्टव्यः।

**दासीभारो देवहूतिः पुरन्ध्रिस्तद्वदौषधिः।** देवदूतिः (भाष्ये)

**देवभीति र्देवलाति वसुनीतिश्च चन्द्रमाः ॥1॥** देवनीति (भा)

कुरुगार्हपतं वृजि गार्हपतमसूतजरती च रिक्तगुरुः॥ औषधी चन्द्रमा (भा.) पारे वडवा तैतिलकद्रू रश्लील दृढरूपा ॥2॥

**पण्य कम्वल इत्येष संज्ञायामेवमादयः।**

**दासीभारादयः शब्दाः पूर्वतः प्रकृतिस्वराः ॥3॥**

दास्या भारो दासीभारः। अन्तोदात्ता दासी। पुरं शरीरं ध्रियतेऽस्यामिति पुरन्ध्रिः। उपदसमासेऽपि क्वचिद्विभक्त्यलोपः। पुरमाद्युदात्तम्। ओषोधीयतेऽस्मिन् स ओषधिः। मस्यति परिणमते स माश्चन्द्रः चन्द्रो माश्चन्द्रमाः। कर्मधारयः कुरुणां गार्हपतम्। कुरुरन्तोदात्तः। वृजिराघुदात्तः। असूतैषा जरतीत्यसूत आद्युदात्ता। अश्लीलाऽपि काचिद्दृढ़रूपा भवति लावण्यरहितापि कुब्जत्वादीनामभावात् संस्थानमात्रेण दृढमस्यारूपं दृश्यते। अश्लीलाद्युदात्ता। रिक्तो गुरुराद्युदात्तोरिक्तः। पारे वडवेव या सा पारे वडवा। तत्पुरुषोऽयं निपातन सिद्धो नाव्ययीभावः पारोऽन्तोदात्तः। तितिलिनोऽपत्यं छात्रो वा तैतिलोऽन्तोदात्तः इत्याहुः। तैतिलाऽसौ कद्रूः। पण्यो व्यवहर्तव्यः कम्बल इति नियतप्रमाणकस्य नियतमूल्यस्य पुरा काले व्यवह्रियमाणस्य कस्यचित् कम्वल सामान्यस्य संज्ञायमासीत्। पण्योऽयमाद्युदात्तः। यत्र तु संज्ञा न विवक्ष्यते। तत्र समासान्तोदात्तत्वं न तु कृत्य स्वरः। कम्वलस्य जातिशब्दत्वात्। आकृतिगणोऽयम्।

---

1 दायाद्यं दायादे (6-2-5)

2 उष्ट्रः सादिवाम्यो (6-2-40)

3 कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूपण्यकम्बलो दासवीभाराणां च (6-2-42)

## (द) भिन्ने

(1) द्वितीयान्तं पूर्वपदं प्रकृत्या स्यादुत्तरपदे परे निष्ठातान्ते त्वनुपसर्गे परे समासस्याहीनवाचित्वे [1]। मुहूर्तसुखम्। निष्ठान्ते तु कष्टश्रितः, ग्रामगतः, कष्टशब्दोऽन्तोदात्तः। सोपसर्गत्वान्नेह सुखप्राप्तः। समासान्तोदात्तः। हीनवाचित्वान्नेहकान्तारातीतः।

(2) निष्ठातान्ते परे नित्यार्थ विकल्पेन प्रकृत्या स्यात् [2]। नित्यप्रहसितः। कालवचनात् द्वितीया समासः। नित्यमाद्युदात्तः। पक्षे समासोऽन्तोदात्तः।

(3) तृतीयान्तं पूर्वपदं प्रकृत्त्या स्यादुत्तरपदे परे निष्ठातान्ते तु कर्मार्थकत्वे निष्ठायाः [3]। किरिणा काणः किरिकाणः। निष्ठान्ते तु त्वोतासः। रुद्रहतः, महाराजहतः, रुरुगतः। निष्ठायाः कर्त्रर्थत्वान्नेह-रथेनायातो-रथायातः।

(4) चतुर्थ्यन्तपूर्वपदं प्रकृत्त्या स्यात्तदर्थवचने निष्ठातान्तेऽर्थशब्दे च परे [4]। चतुर्थ्यन्तार्थाय यत् तदर्थम्। यूपाय दारु यूपदारु। गवेहितम्। गोहितम्। देवाय इदं देवार्थम्।

(5) स्वामिपत्त्योः परयोः स्ववचनं पूर्वपदं प्रकृत्या स्यादैश्वर्ये गम्ये[5], न तु पत्यौ भूवाग् दिधिषूचितः प्रकृत्त्या[6] स्युर्भुवनं तु विकल्पेन [7]। गोस्वामी गृहपतिः। अन्तोदात्ते पूर्वपदे नेह भूपतिः, वाक्पतिः। दिधिषूपतिः। चित्पतिः। अथ विकल्पः भुवनपतिः। आद्युदात्तं भुवनम्[8]

(6) प्रत्येनसि परे षष्ठ्यन्तो राजा विकल्पेन प्रकृत्त्या स्यात् [9]। राजप्रत्येनाः प्रतिगतमेनः पापं यस्य स प्रत्येना राज्ञ इति षष्ठीसमासः।

---

1 अहीने द्वितीया (6-2-47) अनुपसर्ग इति वक्तव्यम् (वा.3821)
2 क्ते नित्यार्थे (6-2-61)
3 तृतीया कर्मणि (6-2-48)
4 चतुर्थी तदर्थे (6-2-43) अर्थे (6-2-44) क्ते च (6-2-450)
5 स्वं स्वामिनि (6-2-17) पत्यावैश्वर्ये (6-2-18)
6 न भूवाक्चिद्दिधिषु (6-2-19)
7 वा भुवनम् (6-2-20)
8 क्युन्नन्तत्वात्।
9 षष्ठी प्रत्येनसि (6-2-60)

(7) सप्तम्यन्तं पूर्वपदं प्रकृत्त्या स्यात् सिद्धशुष्कपक्ववन्धेषु तु परेष्वकालवचनं प्रकृत्या स्यात्[1]। मन्दयत्सखम्। सिद्धादिषु- सांकाश्यसिद्धः। आतपशुष्कः। भ्राष्ट्रपक्वः। चक्रबन्धः। कालवचनात्तु न पूर्वाह्णसिद्धः कृत्स्वरः प्रवर्तते।

## (य) द्विगौ

(1) इ, उ, ऋ वर्णान्ते कालवचने कपाल भगाल शरावेषु च परेषु संख्यावाचि पूर्वपदं प्रकृत्त्या[2] स्याद्दिष्टिवितस्त्योस्तु विकल्पेनाथ बहु विकल्पेन[3]। पञ्चारत्नयः प्रमाणमस्य पञ्चारत्निः। दशमासान् भूतो दशमास्यः। द्विगोर्यस्तद्धितः। पञ्चकपालः। पञ्चभगालः, पञ्चशरावः। नान्तारान्ताश्च संख्या आद्युदात्ताः। तेनैषामादिरुदात्तो नित्यम्। अथ विकल्पः – पञ्चादिष्टिः, पञ्चवितस्तिः। पक्षे समासान्तोदात्तः। अन्तोदात्तोऽयं बहुशब्दः संख्या वचनोऽपि न नित्यं प्रकृत्या बह्वरत्निः। बहुमास्यः। बहुकपालः। बहुभगालः। बहुशरावः। बहुदिष्टिः। बहुवितस्तिः।

(2) धने परे सुवर्णपरिमाणवाचि विकल्पेन प्रकृत्त्या स्यात्[4]। पञ्चकृष्णलको माषस्ते सुवर्णास्तु षोडश। पलं सुवर्णाश्चत्वार इत्यादिना परिमाणविशेषे सुवर्णशब्दो विधीयते। द्वे सुवर्णे परिमाणमस्य द्विसुवर्णम्। तथाधनं द्विसुवर्णधनमिति कर्मधारयः। पक्षे समासस्वरः[5]। बहुव्रीहावप्येवं विकल्प एवेष्टा द्विसुवर्णधनः।

## (र) गतौ

(1) कर्मार्थक निष्ठातान्ते परेऽनन्तरोगतिः प्रकृत्त्या स्यान्न तु कारकपूर्वपदत्वे[6]। प्रकृतं, प्रहृतं, पुरोहितम्। पुरोऽन्तोदात्तम्। धातोरव्यवहितपूर्वस्यैव गतेरयं स्वरो न तु गत्यन्तरेणान्तरितस्यापि। अभ्युद्दृतम्। संसृष्टम्। धनमुभयं समाकृतम्। उपसंहृतम् उपसमाहृतम्। उदाङीरुदात्तत्वम् स्थितं त्वभिसमादीनाम्। पूर्वेषां

---

1 तत्पुरुषे तुल्यार्थतृतीया सप्तम्युपमानाव्ययद्वितीयाकृत्याः (6-2-2), सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् (6-2-32)

2 इगन्तकालकपालभगालशरावेषु द्विगौ (6-2-29)

3 दिष्टिवितस्त्योश्च (6-2-31) बहवन्यतरस्याम् (6-2-30)

4 हिरण्यपरिमाणं धने (6-2-55)

5 समासस्य (6-223)

6 गतिरनन्तरः (6-2-49)

गतीनां गतिपरत्व निवन्धनस्यानुदात्तत्वस्यैवेष्टत्वात्। कारकपूर्वत्वे तु नायं प्रकृतिभावः। दूरादागतः। अन्तोदात्तत्वं था थादिनिमित्तम्[1]।

(2) तु प्रत्ययातिरिक्ते तादावितादौ च निति कृति परेऽनन्तरो गतिः प्रकृत्यास्यात्[2]। नित्संज्ञाः सन्ति कृत्प्रत्ययास्तिप्रभृतयः। प्रभूतिः। संगतिः। अयमेव तिर्यत्रेकारपूर्वस्तत्राप्ययमिष्यते स्वरः। प्रलपितिः। तु प्रत्यये तु नास्ति।आगन्तुः।

(3) तवै प्रत्ययान्तस्यान्तोऽनन्तरगतिश्चैतदुभयं युगपत् प्रकृत्या स्यात्[3]। भावे तु प्रत्ययस्य द्वितीया चतुर्थी पचमीयोगिनः क्रियार्थानां क्रियायां प्रयोगो भवति। आगन्तुमागन्तवै, आगन्तवे, आगन्तोः। उदेतुमुदेतवै, उदेतवे, उदेतोः। अन्वेतुमन्वेतवै अन्वेतवे अन्वेतोः। तत्र तवै प्रयोगे गतिराद्युदात्तः। प्रत्ययश्चान्तोदात्त इत्ययं द्व्युदात्तः शब्दः।

(4) व प्रत्ययान्तेऽञ्चतौ परेऽनामिस्वरान्तगतिर्न्यधि च प्रकृत्या स्युः[4]। धातोर्विहिता कृत्प्रत्ययो ये निःशेषं लुप्यमाना एव नित्यं भवन्ति ते वप्रत्ययसंज्ञाः। पराङ्पराञ्चः[5], इत्यादावप्ययमेव गतिस्वर इष्यते नतु दधीचेत्यादि वदञ्चु स्वरः। नामिस्वरान्ता वर्ज्यन्ते न त्वनामिस्वरान्तत्वं विवक्ष्यते। उदङ् उदञ्च। आद्युदात्ता गतयः। नामि स्वरान्तत्वे तु नायं प्रकृति भावः। प्रत्यङ् प्रत्यञ्चः। अन्वगु अन्वञ्चः। कृदुत्तरपदप्रकृतिस्वरः न्ध्योस्तु भवत्येव गतिस्वरः। न्यङ, अध्यङ्। उदात्तेकारस्थानीय यकारादुत्तरोऽकारः स्वरितः[6]। इति पूर्वप्रकृति भावः॥

## अथ परप्रकृतिभावः

(1) भगालवाचकमुत्तरपदं प्रकृत्या स्यात्[7]। कुम्भीभगालम्, कुम्भीनदालम्, कुम्पीपालम्। मध्योदात्ता एते।

---

1 थाऽथघ क्ताजवित्रकाणाम् (6-2-144)

2 तादौ च निति कृत्यतौ (6-2-50)

3 तवै चान्तश्च युगपत् (6-2-51)

4 अनिगन्तोऽञ्चतौ वप्रत्यये (6-2-52) न्यधी च (6-2-53)

5 मूले 'परां चं इति अधिक पाठः।

6 उदात्त स्वरितयो यण स्वरितोऽनुदात्तस्य

7 प्रकृत्या भगालम् (6-3-137)

(2) गतिकारकोपपदेभ्यः परंकृदन्तं प्रकृत्या स्यात् अन्यत्र विशेषविधानात्[1]। गतेः प्रकारकः प्रहरणम्। कारकात्-नृवाहसा। इध्मप्रव्रश्चनः। उपपदात् – उच्चैः कारम्। ईषतकरः। यत्र तु प्रकरणान्तरे लक्षणोक्तया प्रतिपदोक्त्या वा विशिष्य स्वरान्तरं विधीयते। तत्र नायं स्वरः यथा था थादि प्रत्ययान्तानामन्तोदातत्वमेव।

## अथोभय प्रकृतिभावः

वनस्पत्यादिषु पूर्वोत्तरपदे युगपदुभे प्रकृत्त्या स्याताम्[2]। वनस्पतिः, बृहस्पतिः। वृहच्छब्दः शचीशब्दश्चाद्युदात्तौ। शचीपतिः। तनूनपात् नराशंसः। शुनः शेपः।

**वनस्पत्यादयः शब्दाः वनस्पति बृहस्पती।**
**शचीपतिर्नराशंसः शुनः शेपस्तनूनपात्॥**

## पूर्वादिस्वराः

1. शिल्पिविशेषवचनेपरे पापमाद्युदात्तं स्यात्[3]। पापनापितः, पापकुलालः। पापाणके कुत्स्यमानादिति प्रतिपदोक्तसमास एवायं विधिः।

2. गोबिडालसिंहसैन्धवेषूपमानभूतेषु परेषु पूर्वमाद्युदात्तं स्यात्[4]। धान्यगवः, धान्यं गौरिवेति व्याघ्रादिसमासः। गवाकृत्या संनिवेशितं धान्यं धान्यगव शब्देनोच्यते। गोविडालः, तृणसिंहः, सक्तुसैन्धवः।

3. गोत्रान्तेवासिमाणवब्राह्मणेषु परेषु पूर्वमाद्युदात्तं स्यात् क्षेपे गम्ये[5]।

भार्य्या सौश्रुतः। सुश्रुतापत्यस्य भार्य्याप्रधानतया क्षेपः। कुमारीदाक्षाः। ओदन पाणिनीयाः। कुमार्य्यादि लाभकामा ये दाक्ष्यादिभिः प्रोक्तानि शास्त्राण्यधीयन्ते त एवं क्षिप्यन्ते। भिक्षामाणवः। भिक्षां लप्स्येऽहमिति माणवः। भयब्राह्मणः भयेन ब्राह्मणः संपद्यते।

4. मैरेये परे तदङ्गवचनमाद्युदात्तं स्यात्[6]। मयविशेषो मैरेयेः। अथवा सुराव्यतिरिक्तं सर्वमेवमद्यं मैरेयम्। अङ्गमारम्भकद्रव्यम्। मधुमैरेयः। मधु विकारस्य तस्य मध्वङ्गम्।

---

1 गतिकारकोपपदात्कृत (6-2-139)
2 उभे वनस्पत्यादिषु युगपत् (6-27140)
3 पापं च शिल्पिनि (6-2-68)
4 गोबिडालसिंहसैन्धवेषूपमाने (6-2-72)
5 गोत्राऽन्तेवासिमाणवब्राह्मणेषु क्षेपे(6-2-69)
6 अङ्गानि मैरेये (6-2-70)

5. त्रिरात्रे परे व्युष्टिगर्गाश्वा आद्युदात्ताः स्युः[1]। व्युष्टित्रिरात्रः, गर्गत्रिरात्रः, अश्वत्रिरात्रः।

6. गणपादादयः पूर्वाद्युदात्ताः स्युः[2]। गणपादः ग्रामगोधुकः, क्षीरहोता, भगिनीभर्ता, एकशितियात्। अधिकः वर्षः। इत्यादि आकृतिगणोऽयम्।

7. शालोत्तरपदत्वे छात्र्यादयः आद्युदात्ताः स्युः[3]। छात्रिशाला, व्याडिशाला। यदापि शालान्तः समासो नपुंसकलिङ्गस्तदाप्यमिष्यते छात्रिशालम्।

**शालायामाद्युदात्ताः स्युश्छात्रि पेलि च गोभि च।**
**व्याडि भाण्डि च आखण्डि आघाटि प्रथमस्थिताः ॥**

8. प्रस्थे परे कर्क्यादिव्यतिरिक्ताऽवृद्धा मालादयश्चाद्युदात्ताः स्युः[4]। आ ए औ वृद्धिः स्वराः। वृद्धिः स्वराः शुद्धाः साद्यव्यञ्जनाः सावसितव्यञ्जनाश्च वृद्धाक्षराणि वृद्ध्यक्षरारब्धं पदं वृद्धं। वृद्धेषु मालादय एवाद्युदात्तविधौ गृह्यन्ते प्रतिषिध्यन्ते। अवृद्धेषु कर्क्यादयः प्रतिषिद्धयन्ते इतरे तु गृह्यन्ते। इन्द्रप्रस्थः, हरिप्रस्थः। आद्युदात्तौ। कर्क्यादीनां तु समासान्तोदात्तः। कर्कीप्रस्थः मकरीप्रस्थः, शोणप्रस्थः।

**कर्की करीरः कर्कन्धूः शोणं शोणं च कन्दुकम्।**
**शमी च मकरी मघ्नी कवलं वदरं तथा[5]॥**

वृद्धानामपि समासोऽन्तोदात्तः[6]। दाक्षिप्रस्थः, और्वप्रस्थः, मालादीनां त्वाद्युदात्तत्वम्, मालप्रस्थः, शोणाप्रस्थः।

**माला शाला शोणा द्राक्षा क्षामा दिवोदासः।**
**एकः काञ्ची कामो वध्यश्वोऽन्येपि तद्वत् स्युः ॥**

---

1 युक्तारोह्यादयश्च (6-2-81)

2 युक्तारोह्यादयश्च (6-2-81)

3 छात्र्यादयः शालायाम् (6-2-86)

4 प्रस्थऽवृद्धमकर्क्यादीनाम् (6-2-87), मालादीनां च (6-2-88)

5 कर्की, मघी मकरी, कर्कन्धू, शमी, कीर, कटुक, कुरल, बदर इत्येव शब्दाः कर्क्यादिगण पठिताः (काशिका 6-2-87)

6 समासस्य (6-1-223)

9. नगरेपरे महन्नवन् भिन्नं पूर्वमाद्युदात्तं स्यान्नतूदीयाम्[1]। ब्रह्मनगरम्। देवनगरम्। आद्युदात्ते एते। महन्नवन् पूर्वत्वे तु समासोन्तोदात्तः। महानगरम् नवनगरम्। उदीचान्तु सर्वत्रान्तोदात्ता। कार्तिकनगरम्।

10. अर्मे परे द्वित्रस्वरमवर्णान्तमाद्युदात्तं स्यान्न तु महन्नवन् भूताधिकसञ्जीवमद्राश्ममद्राश्मकज्जलम्[2]। गुप्तार्मम्, कुक्कुटार्मम्। द्विस्वरं त्रिस्वरं वा विवक्षितम्। तेनेह न कपिञ्जलार्मम्। अवर्णान्तत्वाभावान्नेह बृहदर्मम्।महदादीनामपि न। महार्मं- नवार्मं भूतार्ममधिकामं संजीवामं मद्रार्ममश्यामं मद्राश्यामं कज्जलार्मम्।

अन्तोदात्ता एते। न लोपे कृते नवाश्मनोरवर्णान्तत्वमस्तीत्येकं मतम्। नास्तीति चैकम्। आचार्य्यास्तु मद्र प्रतिषेधमपि नेच्छन्ति।

11. भक्ताख्यमाद्युदात्तं स्यात् तदर्थे परे[3]। भिक्षकंसः, भाजीकंसः। भिक्षादयोऽन्नविशेषाः।

12. प्राचां क्रीडायां जीविकायाञ्चाकप्रत्ययान्ते परे पूर्वमाद्युदात्तं स्यात्[4]। यस्य दन्तलेखनेन जीविका स दन्तलेखकः। वस्त्रनिर्णेजकः। क्रीडायां उद्दालक पुष्पमञ्जिका। उदीचान्तु क्रीडायां नायं स्वरः। जीव पुत्रप्रचायिका।

13. निवसद्वचनातिरिक्ते ग्रामे परे घोषादिषु च पूर्वमाद्युदात्तं स्यात्[5]। गल्लगुमः समूहार्थो ग्रामः शब्दः। देवग्रामः। देवस्वामिकः निवासार्थे तु नास्ति। दाक्षिनिवासो दाक्षिग्रामः। घोषादिषु दाक्षिघोषः। दाक्षिकटः। दाक्षिह्रदः।

**घोषो ह्रदः कटः कूटः शाला माला च शाल्मजी।**
**बदरी तृणमश्वत्थः पिशङ्गः पिङ्गलो मुनिः।**
**शिल्पी वृक्षा च रक्षा च वल्लभश्चैवमादयः।**
**शब्दा घोषादयस्तेषु पूर्वेषामाद्युदात्तता॥**

14. कन्थायां नपुंसकयोग्यायां परस्यां चिहणादय आद्युदात्ताः स्युः[6]। चिह्णकन्थम्, मन्दरकन्थम्। चिह्णं चिक्कणं तद्वच्चित्कणं मडरं तथा। पत्टकं कक्कुटं मदुमरं वैडालकर्णकम्। वैडालकर्णि तद्वत् स्यात् वैतुलं चिह्णादिषु। एषामादिरुदात्तः स्यात् कन्थेपरपदेसति।

---

1 अमहन्नवन्नगरेऽनुदीचाम् (6-2-89)

2 अर्मे चाऽवर्ण द्वयच् त्र्यच् (6-2-90) न भूताधिकस जीवमद्राश्माकज्जलम्(6-2-91)

3 भक्ताख्यास्तदर्थेषु (6-2-71)

4 अके जीविकार्थे (6-2-73) प्राचां कीडायाम् (6-2-74)

5 ग्रामेऽनिवसन्तः (6-2-84 घोषादिषु च ( 6-1.-85)

6 आदिश्चिहणादीनाम् (6-2-125)

15. दिवोदासादयोऽप्याद्युदात्ता दैव्याम्[1]। दिवोदासाय गायते। वध्र्यश्वायदाशुषे। लोकभाषायां त्वन्तोदात्तत्वमेव पूर्वपदाद्युदात्तत्वं समासाद्युदात्तत्वं चेत्यविशेषः। आकृतिगणोऽयम्।

16. धर्म्ये परे श्रूयमाणं सप्तम्यन्तं हारिवचनं चाद्युदात्तं स्यात् न तु हरणे[2]। जनपदस्य ग्रामस्य समूहस्य कुलस्य वा सम्बन्धेन कृतनियमः सदाचारो धर्मः। तस्मादनपेतं धर्म्यं तच्चेहाचारनियतं देयं विवक्षितम्। मुकुटे कार्षापणम् हलेद्विपदिका दृषदिमाषक। देयं यः स्वीकरोति स हारीत्युच्यते। याज्ञिकाश्वः। वैयाकरणहस्ती। अस्ति क्वचिदयमाचारः। मुकुटादिषु कार्षापणादि दातव्यम्। याज्ञिकादीनां त्वश्वादिरिति। यत्र त्वाचारवशादवश्यकर्तव्यता न प्रतीयते तत्रेदं नास्ति। स्तम्बेरमः कर्मकर वर्द्धितकः। मूले स्थूलोऽग्रे सूक्ष्मः स्तूपाकारो य ओदनपिण्डः स वर्द्धितको नामभृतिरूपेण कर्मकराय दीयते न त्वयं धर्मनियमः। हरणे तु परे नायं स्वरः। वीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते तद्धरणमित्युच्यते। वाडवहरणम्। वडवाया अयं वाडवः। क्वचिदयमाचारो वीजनिषेकानन्तरं वाडवाय योग्यमसनादि[3] दातव्यं दीयते तद्वाडवहरणम्। हारिस्वरप्राप्तौ कृत्स्वरो न प्रवर्तते। तेन वाडवहार्य्यमित्यत्र पूर्वमाद्युदात्तं स्यादध्यक्षे तु विकल्पेन[4]।

युक्तो नियुक्तः कर्तव्ये तत्परः। गोवल्लवः। अथ विकल्पः गवाध्यक्षः।

18. पात्रे समितादयः पूर्वाद्युदात्ताः स्युः[5]। पात्रेसमिताः। अयं गणः प्रागुक्तः।

19. अणन्ते परे पूर्वमाद्युदात्तं स्यात् नियुक्तश्चेद्गम्यते[6]। अणित्यकारप्रत्ययविशेष संज्ञा। छत्र धारणार्थ नियुक्तः छत्रधारः। नियोगादन्यत्र नास्ति-काण्डलावः।

20. कारभिन्ने त्वणन्ते परे पूर्वमाद्युदात्तं स्याच्छिल्पी चेद्गम्यते[7] संज्ञा वा[8]। तन्तुवायः। नेह कुम्भकारः संज्ञायां तु तन्तुवायो नाम कृमिः नेह रथकारो नाम ब्राह्मणः। शिल्पादन्यत्र नास्ति। काण्डलावः।

---

1 आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् (वा.3840)
2 सप्तमीहारिणौ धर्म्येऽहरणे (6-2-65)
3 योग्यमसूदादि इति मूल ग्रन्थे
4 युक्ते च (6-2-66) विभाषाध्यक्षे (6-2-67)
5 युक्तारोह्यादयश्च (6-2-81)
6 अणि नियुक्ते (6-2-75)
7 शिल्पिनि चाऽकृञः(6-2-76)
8 संज्ञायां च (6-2-77)

21. पाले परे गोतन्तियवा आद्युदात्ता स्युः[1]। यत्रापि न नियुक्तो गम्यते शिल्पी संज्ञा वा तत्रापि यथा स्यात्। गोपालः, तन्तिपालः। तन्तिर्वत्सानां बन्धनरज्जुः। यवपालः।

22. णिन् प्रत्ययान्ते परे पूर्वमाद्युदात्तं स्यादुपमानं तु शब्दार्थप्रकृतावेव[2]। पुष्प हारी। यत्र तु पूर्वपदे उपमानता गम्यते तत्रोत्तरपदं शब्दार्थक धातुवृतमेव णिन्नन्तं गृह्यते। उष्ट्र इव क्रोशति उष्ट्रक्रोशी, ध्वाक्षरावी। धातुरेव यत्रानुपसर्गोऽपि शब्दमभिधत्ते तस्यैवेह णिन्नन्तस्य ग्रहणं न तूपसर्गसम्बन्धेन शब्दार्थत्वे। तेनेह न। गर्दभोचारी। शुद्धश्चरति गत्यर्थो भक्षणार्थिश्च।

23. युक्तारोह्यादयः पूर्वमाद्युदात्ताः स्युः[3]। युक्तारोही आगतरोही, आगतरोधी, आगतयोधी, आगतवञ्ची, आगतनन्दी, आगत प्रहारी। आकृतिगणोऽयम्।

**आगतशब्दोरोहिणिरोधिनियोधिनि च वञ्चनि च।**
**नन्दिनी तथा प्रहारिणि युक्तस्त्वारोहिणि ग्राह्या॥**

24. जेअ प्रत्यान्ते परे दीर्घान्तद्वयक्षरं काश, तुष भ्राष्ट्र वटाद्युदात्ताः स्युः[4]। कुटीजः, काशजः, तुषजः, भ्राष्ट्रजः, वटजः। दीर्घान्तस्य वह्वक्षरत्वे तु नास्ति। आमलकीजः पूर्वपदमुपान्त्योदात्तम्। ह्रस्वान्त द्वयाक्षरसत्वे कृत्स्वरः।

## पूर्वान्तस्वरः

(1) जेऽ प्रत्ययान्ते परे पूर्वं बह्वक्षरमुपान्त्योदात्तं स्यात्[5]। आमलकीजः, उपसरजः स्त्रीगवादिषु पुंसा गर्भाधानाय प्रथमुपसरणमुपसरः।

(2) कुमार्य्यां परस्यां पूर्वमन्तोदात्तं वयसि गम्ये[6]। वृद्धकुमारी। प्रथमं वयश्च पुंसा सहासंप्रयोगश्चेति द्वयं प्रवृतिनिमित्तं कुमारशब्दस्य। तत्र द्वितीये वृद्धादिभिः सामानाधिकरण्यं लभ्यते। तत्रेयं वृद्धापि कुमारीति वदताऽवश्यं वयोऽपि प्रत्याय्यत एवेत्ययमस्तिस्वरः। नेह परमकुमारी। कौमारं वयः पूज्यते न वयोऽन्तरं गम्यते।

---

1 गोतन्तिवयं पाले (6-2-78)
2 णिनि (6-2-79 उपमानं शब्दार्थप्रकृतावेव (6-2-80)
3 युक्तारोह्यादयश्च (6-2-81)
4 दीर्घकाशतुषभ्राष्ट्रवटं जे (6-2-82)
5 अन्त्यात्पूर्वं बह्वचः (6-2-83)
6 कुमार्य्यां वयसि (6-2-95)

(3) उदके परे मिश्रणद्रव्यवचनमन्तोदात्तम्[1]। गुडोदकम्, स्वरेकृतेऽत्रैकादेशः। पदाद्येनानुदात्तेन सहोदात्तैकादेश उदात्तो वा स्वरितो[2]वा विधीयते। अमिश्रणे तु न शीतोदकम्।

आचार्य्योपसर्जनान्ते वासिन्युत्तरपदत्वनिबन्धवृद्धिमदुत्तरपदे ग्रामजनपदाख्यानवचने चानराटे च परे[3]।

(4) दिक् शब्दा अन्तोदात्ता स्युः[4]। पूर्पपाणिनीयाः, पूर्वरौढीयाः, अपरापिशलाः[5] तद्धिते परे यत्रोत्तरपदवृद्धिर्भवति। अपर पाञ्चालकः। ग्रामे- पूर्वेषुकामशमी, अपरकृष्णमृत्तिका। जनपदे पूर्वपञ्चालाः। आख्याने पूर्वयायातम् चा पूर्वनराटम्। दिक् छब्दानां कालवाचित्वेऽप्ययं भवति।

(5) उत्तरपदे परे सर्वमन्तोदात्तं गुणकार्त्स्न्येगम्येऽथोत्तरपदत्वनिबन्धनवृद्धिमदुत्तरपदे च[6]। सर्वश्वेतः सर्वमहान्! द्रव्यकार्त्स्न्ये तु नेष्यते। सर्वसौवर्णः, सर्वराजतः। इह तु कार्त्स्न्याविवक्षणान्नास्ति। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां महत्तरः सर्वमहान्। तद्धिते परे यत्रोत्तरपदवृद्धिर्भवति। सर्वपाञ्चालकः।

(6) गिरिनिकाययोः परयोः पूर्वमन्तोदात्तं संज्ञायाम्[7]। अञ्जनागिरिः, मौण्डिनिकायः असंज्ञायां तु समासान्तोदात्तता परमगिरिः। ब्राह्मणनिकायः।

(7) बिले परें कुसूलकूपकुम्भशालमन्तोदात्तम्[8]। कुसूलविलम्, कूपविलम्, कुम्भविलम्, शालविलम्।

---

1 उदकेऽकेवले (6-2-96)
2 स्वरितो वानुदात्ते पद ादौ (8-2-6)
3 आयार्चोपसर्जनश्चाऽन्तेवासिनि (6-2-104)
4 दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु (6-2-103)
5 अपरापिशालाः इति मूल पाठः
6 उत्तरपदवृद्धौ सर्वं च (6-2-105), सर्वं गुणकार्त्स्न्ये (6-2-93)
7 संज्ञायां गिरिनिकाययोः (6-2-94)
8 कुसूलकूपकुम्भशालं बिले (6-2-102)

(8) पुरे परे हास्तिनफलकमाद्र्देयभिन्नं पूर्वमन्तोदात्तं[1] प्राचामुदीचां त्वरिष्टगौडौ तत्पूर्वकौ च[2]। देवदत्तपुरम् नान्दीपुरम्। नेह हास्तिनपुरं फलकपुरं, मादर्येयपुरम्। उदीचान्तु अरिष्टपुरम् गौडपुरम्। अरिष्टाश्रितपुरं, गौडभृत्यपुरम्। इतोऽन्यत्र नास्ति। शिवपुरम्।

(9) सभायां परस्यां पूर्वमन्तोदात्तं नपुंसकं चेत्[3]। गोपालसभम्, स्त्रीसभम्। नेह राजसभा। रमणीयसभम्, ब्राह्मणकुलमित्यादौ तु नास्ति बहुव्रीहित्वात्।

(10) द्विगौ परे पूर्वमन्तोदात्तं क्रतुवचनं चेत्[4]। गर्गत्रिराषः। क्रतुवाचित्वाभावे नास्ति। विल्वहोमस्य सप्तरात्रं विल्वसप्तरात्रम्। इति पूर्वान्तस्वरः ॥॥

## परादिस्वरः

(1) कुनञ् निपातभिन्नादुत्तराणि[5] चेलखेटकटुककाण्डान्याद्युदात्तानि गर्हायां चीरं चोपमानं चेत्[6]। पुत्रचेलं, नगरखेटम्, दधिकटुकम्, प्रजाकाण्डम्। चेलादि सादृश्येन पुत्रादीनां गर्हा। व्याघ्रादिसमासः। वस्त्रं चीरमिव वस्त्रचीरं कम्बलचीरं। नेह कुचेलं कुचीरम्।

(2) कुनञ् निपातभिन्नादुत्तराणि पललसूपशाकान्याद्युदात्तानि मिश्रणेगम्ये[7]। घृतपललं, घृतसूपं, घृतशाकं। भक्ष्येण मिश्रीकरणे समासः। नेह कुपललम्।

---

1 पुरे प्राचाम् (6-2-99) ना हास्तिनफलकमार्देयाः (6-2-101)
2 अष्टिगौडपूर्वे च (6-2-200)
3 सभायां नपुंसके (6-2-98)
4 द्विगौ क्रतो (6-2-97)
5 अव्यये न कु निपातानामिति वक्तव्यम् (वा. 6-2-2)
6 चेलखेटकटुककाण्डं गर्हायाम् (6-2-126) चीरमुपमानम् (6-2-127)
7 पललसूपशाकं मिश्रे (6-2-128)

(3) कुनञ्निपातभिन्नादुत्तराणि कर्षस्थलसूदकूलान्याद्युदात्तानि संज्ञायाम्[1]। दाक्षिकर्षः, दाण्डायनस्थली, शाण्डिसूदं, दाक्षिकूलं। ग्रामसंज्ञा एताः। नेह-कुसूदम् प्रतिकूलम्।

(4) अकर्मधारयतत्पुरुषे कुनञ् निपातभिन्नादुत्तरपदं राज्यं, वर्ग्यादीनि चाद्युदात्तानि[2]। ब्राह्मणराज्यम् अर्जुनवर्ग्यः, वासुदेवपक्ष्यः वर्ग्यादिर्दिगाद्यन्तर्गणः। दिगादित्वाद्यस्तद्धितः। नेह कुराज्यम्, अराज्यम्। कर्मधारये तु न परमराज्यं, परमवर्ग्यः।

(5) आचार्य्यराज ऋत्विक् संयुक्तज्ञात्याख्य व्यतिरिक्तेभ्यः[3] पुं शब्देभ्यः परः पुत्रः आद्युदात्तः स्यात्[4]। दाशकिपुत्रः, महिषपुत्रः। नेह-आचार्य्यपुत्रः। उपाध्यायपुत्रः। शाकटायनपुत्रः राजपुत्रः ईश्वरपुत्रः। नन्दपुत्रः। ऋत्विक्पुत्रः। याजकपुत्रः। होतृपुत्रः। संयुक्ताः। सम्बन्धिनः श्यालपुत्रः। ज्ञातयो माता पितृसम्बन्धेन बान्धवाः। ज्ञातिपुत्रः, भ्रातुःपुत्रः।

(6) तत्पुरुषे पूर्वपदादुत्तरा नपुंसकयोग्या शालाद्युदात्ता स्यात्। कन्था त्वचिह्णादिभ्यः[5]। कन्था त्वचिह्णादिभ्यः[6]। ब्राह्मणशालम्। नेह ब्राह्मणशाला। कन्था। सौशमिकन्थम्। आह्वरकन्थम्। नेह दाक्षिकन्था। चिहणादिभ्योऽपि न। चिह्णकन्थम् मन्दरकन्थम्। इह चिहणादीनामेव पूर्वपदानामादिरुदात्तः।

**चिहणं चिक्कणं तद्वत्चित्कणं मडरं तथा।**
**पटत्कं कुक्कुटं मदुमरं वैडालकर्णकम्॥1॥**
**वैडालि कर्णि तद्वत्स्यात् वैतुलं चिहणादिषु।**
**एषामादिरुदात्तः स्यात् कन्थे परपदे सति॥2॥**

---

1 कूलसूदस्थलकर्षाः सञ्ज्ञायाम् (6-2-129)
2 अकर्मधारये राज्यम् (6-2-130)
3 नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः (6-2-133) पुत्र पुम्भयः (6-2-132)
4 तत्पुरुषे शालयां नपुंसके (6-2-123)
5 तत्पुरुषे शालयां नपुंसके (6-2-123)
6 कन्था च (6-2-124)

(7) पूर्वपदात्परं कुण्डमालाद्युदात्तं स्याद्वनवचनं चेत्[1]। दर्भकुण्डं वनम्। कुण्डशब्दोऽत्र सादृश्ये। नेह मृत्कुण्डम्।

(8) प्राणिभिन्नषष्ट्यन्तात् पराणि चूर्णादीन्याद्युदात्तानि[2]। मुद्गचूर्णम्, दर्भकाण्डम्, दर्भचीरम्, तिलपल्लम्, मृद्गसूपः। मूलकशाकम् नदीकूलम्। नेह मत्स्यचूर्णम् दत्तकाण्डम्।

**चूर्णकुन्दमतूस्तानि द्राक्षा शाकिन शाटके।**
**चक्थनं चमसी चौलं दलपं करिषं तथा॥1॥**
**काण्डं चीरं पललं सूपं शाकं च कूलं च।**
**अप्राणिनः परेषामेषामाद्यान्युदात्तानि॥2॥**

(9) द्विगैसंख्यावचनात्परेषां[3] कंसमन्थशूर्पपाय्यकाण्डानामादिरुदात्तः स्यात्[4]। द्विकंसः, द्विमन्थः, द्विशूर्पः, द्विपाय्यम्, द्विकाण्डम्। इति परादिस्वराः॥

## अथ परान्तस्वरः

सगतिना सामान्येन कृतविभक्त्या नञा च विभागात् पञ्चधा प्रदर्श्यते।

(1) सोः परेषामन्त उदात्तः स्यादवक्षेपणे गम्ये[5]। अवक्षेपो निन्दा सुप्रत्ययवसितः। सुरत्र पूजायामेव। निन्दा तु वाक्यार्थः। असूयया तथाभिधानात्। यत्र तु निन्दा न गम्यते तत्रायं विधिर्नास्ति। सुवृषणम्।

(2) प्रतेः परेषां श्वादीनामन्त उदातः स्यात्[6]। प्रतिगतोऽशुं- प्रत्यंशुः, प्रत्यर्द्धपुरम्, प्रत्यजिरम् प्रतिजनः, प्रतिराजा। यद्यपि राजान्तः तत्पुरुषः सर्वोऽप्यकारेण समासान्तेन कृतो भवतीत्युक्तम् प्राक्। तथापि लोके दृश्यते। व्यभिचारोऽपि क्वचिच्छब्दविशेषे इति नाक्षेप्या वैयाकरणः। अनिर्वचनीय निमित्तानां व्यभिचाराणामेकान्ततो नियमेन ग्रहीतुमशक्यत्वात्।

---

1 कुण्डं वनम् (6-2-136)
2 चूर्णादिन्यप्राणिषष्ठ्याः(6-2-134)
3 संख्यावचनादुत्परेषां इति मूल पाठः।
4 कंसमन्थशूर्पपाय्यकाण्डं द्विगौ (6-2-122)
5 सोरवक्षेपणे (6-2-195)
6 प्रतेरश्वादयस्तत्पुरुषे (6-2-193)

**अंशुरुष्ट्रो जनो राजा खेटकोऽर्द्धपुराजितरे।**
**कृत्तिका श्रवणं चाद्रा अश्वादय उदाहृताः ॥**

(3) उपात् परेषां द्वयक्षराणां गौरादिभिन्नानामजिनस्य चान्तोदात्तः स्यात्[1]। उपदेवः, उपेन्द्र उपाजिनम्। गौरादीनान्तु नास्ति। उपगौरः। उपतैषः।

**गौरस्तैषस्तैलं लेटो लोटो गुधः कल्पः।**
**पादः कन्था कृष्णो जिह्वा गौरादयः प्रोक्ताः ॥**

(4) उतः परस्य पुच्छस्य विकल्पेनान्त उदात्तः स्यात्[2]। उत्क्रान्तः पुच्छादुत्पुच्छः। यदा तु पुच्छमुदस्यति उत्पुच्छयते इति प्रक्रिया तदापि वक्ष्यमाणे याथादिस्वरे प्राप्ते विकल्पोऽयमादिश्यते।

**कृत्परान्तस्वरः**

(1) गतिकारकोपपदेभ्यः परेषां थाथघञजवित्रकप्रत्यत्यन्तानामन्त उदात्तः स्यात्[3]। थः प्रभृथस्यायोः। अथ- आवसथः। घ- प्रभेदः। अच्- प्रक्षयः। अप्- प्रलवः। इत्रप्रलवित्रम्। क-गोवृषः। क घञजपः कृतामकारविशेषाणां संज्ञाः।

(2) गतिकारकोपपदेभ्यः सूपमानाभ्यां च परस्य क्तान्तस्यान्त उदात्तः स्यात्[4]। पुरुष्टुतः, दूरादागतः, सुकृतम्, शशप्लुतः। सुरित्यनन्तरगतिस्वरवाधनार्थ गतेरेव पुनर्ग्रहणं न तु कर्मप्रवचनीयस्यापि। तेनेह-न तुसुस्तुतं भवता।

(3) गतिकारकोपपदेभ्यः परेषां क्तान्तसंज्ञा शब्दानामचितादिव्यतिरिक्तानामन्त उदात्तः स्यात्[5] न तु कारकादाशिषि[6]। उपहूतः शाकल्पः, परिजग्धः। नेह – आचितम्, आस्थापितम्।

---

1 उपाद्द्वयजजिनमगौरादयः (6-2-194)
2 विभाषोत्पुच्छे (6-2-196)
3 थाऽथघञक्ताजवित्रकाणाम् (6-2-144)
4 सूपमानात्क्तः (6-2-145)
5 संज्ञायामनाचितादीनाम् (6-2-146)
6 कारकाद्दत्तश्रुतयोरेवाशिषि (6-2-148)

**आचितमास्थापितमपि निरुक्त पर्य्याचित्ते च प्रतिपन्नम्।**
**प्रश्लिष्ट परिगृहीतापश्लिष्टोपस्थितोपहितम्॥**

आशिषि यः क्तः प्रत्ययस्तदन्तस्य नास्ति। देवपालितः। पूर्वपदप्रकृतिस्वरः।

(4) प्रवृद्धादीनामन्त उदात्तः स्यात्[1]। प्रवृद्धं यानम्। प्रवृद्धो **वृषलः।** अप्रवृद्धो वृषकृतो रथः। प्रयूता सूष्णवः। आकर्षेऽवहितः। अवहितो भोगेषु। खट्वारुढः। कविशस्तः। इत्यादिराकृतिगणोऽयम्।

(5) कारकादाशीः क्तान्तयोर्दत्तश्रुतयोरन्त उदात्तः स्यात् संज्ञायाम्[2]। देवा एनं देयासुरित्येवं प्रार्थितैर्देवैर्दतो देवत्तः। विष्णुरेवं श्रूयादित्येवं प्रार्थितेन विष्णुना श्रुतो विष्णुश्रुतः। अनाशीः क्तान्ते तु पूर्व पद प्रकृति स्वर एव न त्वयं स्वरः[3]। अनाहतो नदति देवदत्तः। शङ्खविशेषस्य संज्ञेयम्। संश्रुतः सुश्रुत इत्यादौ तु आशिष्यनाशिषि वा पूर्वनियमेनान्तोदात्तं भवत्येव।

(6) कारकात् परस्य क्रीतस्यान्त उदातः स्यात्[4]। पूर्वप्रकृति स्वरता निवर्त्यते। गोक्रीतः।

(7) इत्थंभूतेन कृतमित्येवमर्थे समासे परस्य क्तान्तस्यान्त उदात्तः स्यात्[5]। सुप्तप्रलपितम्, प्रमत्तगीतम्। अस्मान्नियमात् पूर्वप्रकृति स्वरता निवर्त्यते।

(8) कारकात् परेषां भावकर्मानप्रत्ययान्तानां[6] व्याख्यान शयनासन स्थानानां चान्त उदात्तः स्यात्[7]।

कृत्स्वरो निवर्त्यते। अनो भावे- पयः पानं सुखम्। अनः कर्मणि-राजभोजनाः। शालयः। करणाधिकरणादिषु तु छन्दो व्याख्यानम्। राजासनम्, राजशयनम्,

---

1 प्रवृद्धादीनां च (6-2-147)
2 कारकाद्दत्तश्रुतयोरेवाशिषि (6-2-148)
3 तृतीया कर्मणि (6-2-48)
4 मन्क्तिन्व्याख्यानशयना (6-2-151)
5 इत्थंभूतेन कृतमिति च (6-2-149)
6 अनो भावकर्मवचनः (6-2-150)
7 मन्क्तिन्व्याख्यानशयनाऽऽसनस्थनयाजका दिक्रीताः (6-2-151)

अश्वस्थानम्। इत्येषामेव। नेह दन्तधावनम्। भावकर्मणोरपि कारकादन्यतो नास्ति। निदर्शनम्।

(9) कारकात् परेषां मन् क्तिन् प्रत्यान्तानामन्त उदात्तः स्यात्[1]। कृत्स्वरो निवर्त्यते। रथवर्त्म। पाणिनिकृतिः। अकारकात्तु तादि नित् प्रत्ययनिबन्धनोऽनन्तरगतिः प्रकृतिभावः[2]। प्रभूतौ। सङ्गतिः।

(10) कारकात् परेषां याजकादीनामन्त उदात्तः स्यात्[3]। याजकादयो विधितन्त्रे प्रदर्शिताः। ब्राह्मणयाजकः। देवपूजकः। इति कृत्परान्त स्वराः।।

**सामान्यपरान्तस्वराः**

(1) उपसर्गादुत्तरस्य वनस्यान्त उदात्तः स्यात्[4]। प्रवणम्, उपवनम् अतिवनम्, सुवनम्।

(2) उपसर्गादुत्तरस्यान्तः शब्दस्यान्त उदात्तस्या[5]न्न तु विनिभ्याम्[6]। अवान्तः अभ्यन्तः, प्रत्यन्तः। विनिभ्यां तु न्यन्तः व्यन्तः। यकाराकारः स्वरितः।

(3) परेरुत्तरस्याभितो भाविनो मण्डलस्य चान्त उदात्तः स्यात्[7]। उभयतो यस्यास्ति भावः तत्कूलादिकमभितो भावीत्युच्यते तद्धिस्रोतसः पार्श्वद्वयेभवति। प्रतिकूलम्, अनुकूलम्, परिमण्डलम्।

(4) संज्ञायां प्रादस्वाङ्गस्यान्त उदात्तः स्यात्[8]। प्रधनम्, प्रपातः, प्रगुणः। स्वाङ्गत्वान्नेह प्रपदं, प्रगण्डः, पादाग्रं प्रपदम्। कूर्परादूर्ध्वं बाहुभागः, प्रगण्डः।

---

1 मन्क्तिन्व्याख्यानशयनाऽऽसनस्थनयाजका दिक्रीताः (6-2-151)
2 तादौ च निति कृत्यतौ (6-2-50)
3 मन्क्तिन्वाख्यान (6-2-151)
4 वनं समासे (6-2-178)
5 अन्तश्च (6-2-180)
6 न निविभ्याम् (6-2-181)
7 परेरभितोभावि मण्डलम् (6-2-182)
8 प्रादस्वाङ्गं संज्ञायाम् (6-2-183)

(5) निरुदकादीन्यन्तोदात्तानि [1]। निरुदकम् निष्पेषम्, परिहस्तः। आकृतिगणोऽयम्।

(6) अभेरुत्तरस्य मुखस्यान्त उदात्तः स्यात् [2]। अभिमुखम्।

(7) अपादुत्तरेषां मुखस्फिगपूतकुक्षीणामञ्जोऽध्ववीणानाम्नां सीरनाम्नां चान्त उदातः स्यात् [3]। अपमुखम् अपस्फिगम्, अपपूतम्, अपकुक्षिः, अपाञ्जः, अपध्वा, अपवीणा, अपनाम्।

(8) अधेरूपरिस्थस्यान्त उदात्तः स्यात् [4]। अध्यारूढो दन्तोऽधिदन्तः।

(9) अनोः कनीयसः पुरुषस्य चान्वादिष्टस्यान्त उदात्तः स्यात् [5]। अनुगतः कनीयान् अनुकनीयान्। अन्वादिष्टः पुरुषोऽनुपुरुषः। कस्मिंश्चित् कथिते योऽन्यः कथ्यते सोऽन्वादिष्टः।

(10) अतेर्धातुलोपविषयात् परस्यान्त उदात्तः स्यात् [6]। धनमतिक्रान्तोऽतिधनः अतिक्रान्तं वा धनमतिधनम्। अतिशब्दोऽतिक्रान्ताद्यर्थवृत्तिः। तत्र क्रमादेरप्रयोग एव धातुलोपः।

(11) नेरनिधानविषयात् परस्यान्त उदात्तः स्यात् [7]। अत्र अनिधानं प्रकाशनम्। निर्गतं निष्कान्तं वा मूलं निर्मूलम्। बहिर्दृष्टिगोचरतां गतं मूलम्।

---

1 निरुदकादीनि च (6-2-184)
2 अभेर्मुखम् (6-2-185)
3 अपाच्च (6-2-186) स्फिगपूतवीणाऽ जोऽध्वकुक्षिसीरनामनाम च (6-2-187)
4 अधेरूपरिस्थरम् (6-2-188)
5 पुरुषश्चाऽन्वादिष्ट (6-2-190)
6 अतेरकृत्पदे (6-2-191)
7 नेरनिधाने (6-2-192)

## विभक्तिपरान्तवराः

(1) तृतीयान्तादुत्तरपदानामूनार्थनामर्थकलहयोश्चान्त उदात्तः स्यात्[1]। मिश्रस्य त्वनुपसर्गस्यासन्ध्यमिश्र (स्य)[2] माषोनम्, माषविकलम् धान्यार्थः। वाक्कलहः,

तिलमिश्राः। **सोपसर्गत्वान्नेह** **तिलसंमिश्राः** पणबन्धेनैकार्थ्य सन्धिः। तदभिप्राये तु मिश्रशब्दे नास्ति। **ब्राह्मणमिश्रो** राजा ब्राह्मणैः सह संहितः। एकार्थ्यमापन्नः।

(2) सप्तम्यन्तात् परस्य पुण्यस्यान्त उदात्तः स्यात्[3]। अध्ययनपुण्यम्। पूर्वपदप्रकृतिभावो निवर्त्यते। तृतीया विग्रहे तु नायम्। वेदेनपुण्यम्। वेदपुण्यम्।

## नञ् परान्तस्वराः

(1) नञो गुणप्रतिषेधे वर्तमानात् परेषां संपाद्यर्हहितालमर्थक तद्धितान्तानाम[4]। तदर्थक ययत्तद्धितानां चान्त उदात्तः स्यात्[5]।

गुणो हि तद्धितार्थे प्रवृत्तिनिमित्तं संपादितत्वादि विवक्ष्यते। तत्प्रतिषेधो यत्रोच्यते। तत्रायं विधिः। कर्णवेष्टकाभ्यां संपादितं कार्णवेष्टकिकम्। यत् कर्णवेष्टकाभ्यां न संपादितम् तदकार्णवेष्टकिकम् मुखम्। छेदं नार्हति अच्छैदिकः। वत्सेभ्यो न हितोऽवात्सीयः संतापाय न प्रभवति असंतापिकः। यत्र तु न स तद्धितार्थो गुणो न प्रतिषिध्यते तत्र नायम्। गद्र्दभरथमर्हति गाद्र्दभरथिकः। तदन्योऽगाद्र्दाभरथिकः। इह भेदो गम्यते। द्रव्यप्रतिषेधार्थः। ययतौ यौ तद्धितौ तदन्तस्य यथा। पाशानां समूहः पाश्या। तेषामसमूहस्त्वपाश्या। अदन्त्यम्। तदर्थ प्रत्यये तु न। पादार्थमुदकम पाद्यम्। यन्न पादार्थ तदपाद्यम्। गुणप्रतिषेध एवायं नेहदन्त्यादन्यददन्त्यम्। ड्य प्रत्यये तु नास्ति अवामदेव्यम्।

---

1 ऊनाऽर्थकलहं तृतीययाः (6-2-153)

2 मिश्रं चाऽनुपसर्गमसन्धौ (6-2-154)

3 सप्तम्याः पुण्यम् (6-2-152)

4 **नञो गुणप्रतिषेधे सम्पाद्यर्हहिताऽलमर्थास्तद्धिताः** (6-2-155)

5 **ययतोश्चाऽतदर्थे** (6-2-156)

(2) नञो गुणप्रतिषेधे वर्तमानात् परयोरजन्तकान्तयोरन्त उदात्तः स्यादशक्तौ गम्याम् आक्रोशे च [1]। पक्तुमशक्तोऽपचः अविलिखः। अशक्तिः प्रतिपाद्यते अपचो जाल्मः। पक्तुं न शक्नोतीत्येवमाक्रोश्यते। अविक्षिपः। गुणप्रतिषेधादन्यत्र न। अन्योऽयं पचादपचः। नियमे तु अशक्त्याक्रोशयोरनवगमान्न। अपचो दीक्षितः।

(3) नञ् परेषां संज्ञाशब्दानामन्त उदात्तः स्यादाक्रोशे गम्ये [2]। अदेवदत्तः।

(4) नञ् परेषां कृत्योकेष्णुजन्तानामन्त उदात्तः स्याद्विकल्पेन तु तृन्नन्तस्य [3]। कृत्यप्रत्ययाः। अकर्त्तव्यः। उक – अनागामुकः। इष्णुच् - अनलंकरिष्णुः। अनाट्यंभविष्णुः। एषु नित्यम्। अथ विकल्पः – अकर्ता कटम्।

(5) नञ् परेषां चार्वादीनामन्त उदात्तः स्याद्विकलपेन तु शुच्यन्नतीक्ष्णानाम् [4]। अचारुः असाधुः। अथ विकल्पः – अशुचिः, अनन्नम्, अतीक्ष्णम् पक्षेऽव्ययस्वरः प्रकृतिभावात्।

**चारुः साधुर्गृहपतिर्वदान्यौ योधिकिस्तथा।**
**अनङ्गमेजयोऽकस्मादेवमाद्या उदाहृताः॥**

(6) नञ् परयोर्विकारसदृशयोर्व्यस्तसमस्तयोर्वर्तमानादीनां च संज्ञायामन्त उदात्तः स्यात् [5]। अवर्तमानम् अरोचमानम्। वर्तमानम्, वर्द्धमानम्, रोचमानम्, शोभमानम्। क्रीयमाणम्। प्रियमाणम्, त्वरमाणमित्येते वर्तमानादयः।

(7) नञ् परयो राजाह्नोरन्त उदात्तः स्याद्दैव्याम् [6]। अराजा, अनहः। देवानां भाषायामेवायम्। लोक भाषायां तु नञः स्वर एव।

---

1 अच्कावशक्तौ (6-2-157) आक्रोशे च (6-2-158)
2 संज्ञायाम् (6-2-159)
3 कृत्योकेष्णुच्चार्वादयश्च (6-2-160) विभाषा तृन्नन्नतीक्ष्णशुचिषु (6-2-161)
4 कृत्योकेष्णुच्चार्वादयश्च (6-2-160) विभाषा तृन्नन्नतीक्ष्णशुचिषु (6-2-161)
5 वर्त्तमानवर्धमानत्वरमाणाध्रियमाणक्रियमाणरोचमानशोभमाना संज्ञायाम् (वा.)
6 राजाह्नोश्छन्दसि (वा.)

## समासान्तस्वराः

अवशेषे सर्वस्मिन् तत्पुरुषे समासस्यान्त उदात्तः स्यात् [1]। यज्ञश्रियम्। नात्र लक्षणोक्ताः प्रतिपदोक्ता वा केचन पूर्वविधयः प्राप्नुवन्ति। तत्रेदं पूर्वपदत्वोत्तर पदत्वादि विभागे नाव्याकृतावयवस्य समस्तस्यैवान्तोदात्तत्वमादिश्यते।

इत्थं च पूर्व प्रकृतिभावः, परप्रकृतिभावः, उभयप्रकृतिभावः, पूर्वादिः, पूर्वान्तः, परादिः, परान्तः, समासान्तश्चेत्यष्टधा विभक्तं तत्पुरुषस्वरतन्त्रं विनिर्दिष्टम्।

तदित्थं – उपसर्जनसिद्धि, समासान्तः, विकारादेशः, विभक्तिलोपालोपौ, पुंवद्भावः, लिङ्गविधिः, वचनविधिः, स्वरविधिश्चेत्यष्टधा विभक्तं शेषतन्त्रं वृत्तम्।

**॥ इति तत्पुरुषसमासः समाप्तः ॥**



---

1 समासस्य (6-1-223)

# बहुव्रीहिः

अथ बहुव्रीहिः। द्विपदत्वादयं समासशब्दः प्रतिपद्यते। कः समासः। न तावदव्ययीभावोऽव्ययगन्धाभावात्। न वा वहवो व्रीह्यः इति समानाधिकरणस्तत्पुरुषः। एकवचनदर्शनात्। नापि बहूनां व्रीहिरितिव्यधिकरणः। पुंल्लिङ्गदर्शनात् न वा द्वन्द्वः। पुंल्लिङ्गादेकवचनाच्च। तस्मादतिरिक्तोऽयं समासो विज्ञायते। बहवो व्रीहयो यस्य सोऽयं बहुव्रीहिरिति समानाधिकरण लक्षणोवृत्तिमदन्यपदार्थः। स यादृशोऽयं समासस्तादृशः सर्वोऽप्यनेनैव शब्देनोपलक्ष्यते [1]।

बहुव्रीहावन्यपदार्थप्राधान्यमिति प्रायोवादः। सपुत्रा, द्वित्रा, इत्यादौ तद्व्यभि-चारात् उन्मत्तगङ्गमित्याद्यव्ययीभावेऽतिप्रसङ्गाच्च। अथवाऽस्त्येव सपुत्रादावन्यपदार्थः अस्त्येव चोन्मत्तगङ्गमित्यादिरपि बहुव्रीहिः। अव्ययत्वसिद्ध्यर्थं त्वव्ययीभावेऽपि पठ्यते।

बहुव्रीहिरष्टधा – 1. समानाधिकरणबहुव्रीहिः, 2. दिग्बहुव्रीहिः, 3. सहयोग–बहुव्रीहिः, 4. इदंवृत्त (व्यतिहारः) बहुव्रीहिः, 5. संख्याबहुव्रीहिः, 6. क्रियाबहुव्रीहिः 7. अव्ययीभाव बहुव्रीहिः, 8. शेषबहुव्रीहिश्चेति। यत्र समासार्थे वृत्तिमदन्यो वृत्तिमत्पदार्थेनैव विशेषणविशिष्टेन युक्तो गम्यते स समानाधिकरण बहुव्रीहिः। अयमेव युक्तबहुव्रीहिरित्यप्युच्यते। संख्यावृत्तः संख्याबहुव्रीहिः। दिग्वृत्तो दिग्बहुव्रीहिः यत्र वीप्सा शब्दैरिदंवृतमित्यर्थो गम्यते स इदंवृत्त (व्यतिहार) बहुव्रीहिः।. यस्याव्ययीभावत्वमपीष्यते सोऽव्ययीभाव बहुव्रीहिः। यत्र सहशब्दप्रयोगात् वृत्तिमताऽन्यस्य तुल्ययोगिता गम्यते स सहयोग बहुव्रीहिः। यत्राख्यातपदेन समासः स क्रियाबहुव्रीहिः। यत्र तु कश्चनविशिष्य नियमो न प्रदर्श्यते स शेषबहुव्रीहिः। त एते क्रमेणप्रदर्श्यन्ते।

## 1. समानाधिकरण बहुव्रीहिः

समानाधिकरणानां प्रथमान्तानामप्रथमा योग्ये तद्विशिष्टे तदन्यपदार्थे वृत्तिः स बहुव्रीहिः [2]। प्राप्तमुदकं यं स प्राप्तोदको ग्रामः। ऊढो रथो येन स ऊढरथोऽनड्वान्। उपहृतः पशुर्यस्मै स उपहृतपशूरुद्रः। उद्धृतमोदनं यस्मात् तदुद्धृतौदनं पात्रम्। पीतमम्बरं

---

1. शेषो बहुव्रीहिः (2-2-23)
2. अनेकमन्यपदार्थे (2-2-24)

यस्य स पीताम्बरो हरिः। वीराः पुरुषा यस्मिन् स वीरपुरुषको ग्रामः। समासेन समस्यमानान्यपदार्थ समस्यमानार्थविशिष्टो गम्यते।

परस्त्वाह – ''कर्मधारयः संपन्न प्रत्ययार्थवृत्तिर्बहुव्रीहिः।'' तत्पुरुषः समानाधिकरणः कर्मधारयः। स यर्हि संपन्नप्रत्ययस्य तद्धितस्यार्द्धे वर्तते तर्हि बहुव्रीहिरित्युच्यते।

**भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।**
**सम्बन्धेऽस्ति विवक्षायां संपन्नप्रत्ययो भवेत्॥**

त एते सम्पन्नप्रत्ययार्थाः। अस्यास्ति, अस्मिन्नस्तीत्येव, वा संपन्नप्रत्ययार्थः। संपन्नप्रत्ययार्थवृत्तौ कर्मधारयस्यैव संज्ञेतिभावः। यथा पापं दुष्कर्म, तद्वान् पुरुषोऽपीष्यते पापः। एवं पीतं यदम्बरं यद्वान् पुरुषोऽपीष्यते पीताम्बारः। न कर्मधारयात् संपन्नप्रत्ययो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः। प्राप्तेनोदकेन युक्तो ग्रामः प्राप्तोदकवान् इति वक्तव्ये प्राप्तोदक इत्युच्यते। उपहृतपशुमानुपहृतपशुः। वीरपुरुषवान् वीरपुरुषः। यत्र तु क्रियावृत्तस्य समस्यमानार्थत्वमथ तत्कर्तुस्तदपादानस्य वा समासार्थत्वमिष्यते तत्र सति विशेष्य बाधे विशेषणेनार्थ इति न्यायात्तादृशक्रियावैशिष्ट्यमेवैतद्बहुव्रीहि प्रतिपाद्यम्। ऊढरथोऽनडवान्। उढरथवानिति प्राप्तेऽतीतरथवहन क्रियावानित्यर्थो गम्यते पूर्ववृत्तरथवहनक्रियानिवृत्तिवान् वा। कृतकृत्यः कर्तव्यक्रिया कृत्वा निवृत्तिमानित्यर्थः। उद्धृतौदनं पात्रम्। ओदनोद्धारवदित्यर्थः। क्रियाफलवैशिष्टयं वा बहुव्रीह्यर्थः। ऊढरथवानिति प्राप्ते –ऊढरथोऽनड्वान्। रथवहनक्रियाफलभूत श्रमादिमानित्यर्थः। कृतकृत्यवानिति प्राप्ते कृतकृत्यः। कर्तव्य साधनफलभूत सुखादिमानित्यर्थः। एवमन्यत्राऽपि द्रष्ट्व्यम्।

ननु समानाधिकरणानामेवायं समासो विधीयते लोके तु व्यधिकरणानामपि दृश्यते शरजन्मा, अर्धतृतीया, उच्चैर्मुखः, ऊष्ट्रमुखः, कण्ठेकालः, गडुकण्ठः, नीलकण्ठः, दण्डपाणिरिति। शराज्जन्म यस्य सोऽयं शरजन्मा। अर्द्धं तृतीयस्य येषु तेऽर्द्धतृतीया। दण्डः पाणौ यस्य स दण्डपाणिरिति व्यधिकरणं भवति। उक्तं च –

''अवर्ज्यो बहुव्रीहिर्व्यधिकरणोजन्माद्युत्तरपदे''। इति। उच्यते। नायं व्यधिकरणे बहुव्रीहिः। किन्तु समानाधिकरण एवायं पदस्य लाक्षणिकत्वाद व्यधिकरणवद्भाषते। दण्डः पाणिस्थो यस्य स दण्डपाणिः। अथवा दण्डवान् पाणिर्यस्य सोऽयं दण्डपाणिः। कण्ठेस्थ कालो यस्य स कंठेकालः। शरप्रकृतिकं जन्म यस्य सोऽयं शरजन्मा। जन्म शब्दो योनिपरः। शरो जन्म स्थानं यस्य सोऽयं शरजन्मा। उच्चैरित्याद्यव्ययं प्रथमान्तम्। उच्चं मुखं यस्य स उच्चैर्मुखः। उष्ट्रशब्द उष्ट्रमुखपरः।

अवयव धर्मेण समुदायस्य व्यपदेशात्। उष्ट्र इत्युष्ट्रमुखं मुखं यस्य स उष्ट्रमुखः। अथवा उष्ट्रस्य मुखमुष्ट्रमुखम्। उष्ट्रमुखेन तत्सादृश्येन वा मुखावच्छेदेनोपलक्षितः पुरुषोऽप्युष्ट्रमुखः। तथा प्रपतितपर्णः प्रपर्ण इति सिद्धं प्रशब्दस्य पतितार्थत्वात्। अविद्यमानपुत्रोऽपुत्र इति सिद्धं नञो भावप्रतियोग्यर्थत्वात्। एवमन्यत्रापि पूर्वपदस्योत्तर-पदस्य वार्थान्तरे वृत्तेः समानाधिकरण्यमुपपाद्यम्। अधुना समानाधिकरणबहुव्रीहयः परिगणय्य विधीयन्ते। तथा हि –

(1) समानाधिकरणविशेषणानां विशेष्येण बहुव्रीहिरस्यास्त्यस्मिनस्तीति वार्थे। पीतमम्बरं यस्यास्ति स पीताम्बरः। वीराः पुरुषा यस्मिन् सन्ति स वीरपुरुषको ग्रामः। अस्तीति विभक्तिप्रतिरूपकमव्ययं विद्यमानार्थम्। अस्ति क्षीरं यस्या साऽस्ति क्षीराः गौः विद्यमानः क्षीरा। अथेह कस्मान्न भवति पञ्चभुक्क्तवन्तोऽस्येति। अनभिधानात्। उद्देश्यविधेयभावस्योद्बुद्धतयैकार्थीभावालाभाच्च।

(2) अस्य कः सब्रह्मचारीत्यर्थे किं सब्रह्मचारीति बहुव्रीहिः। समाने ब्रह्मणि व्रतचारी सब्रह्मचारी। एक चरणाध्ययनकारित्वात् सहाध्यायी सब्रह्मचारीत्युच्यते। कश्च तव स ब्रह्मचारीत्येवं पृष्टो यथा प्रत्याह। कठ इति एवं खलु दृश्यते लोके किं सब्रह्मचारी त्वमसीत्येवं पृष्टोऽपि नूनं प्रत्याह- कठ इति। तदेतत् नोपपद्यते। अहं कठ सब्रह्मचारीत्येवं प्रतिवचनौचित्येऽपि कस्तव सब्रह्मचारीति प्रश्नेऽहं कठ इत्युत्तरानवक्लृप्तेः। न ह्यन्यत्पृष्टेनान्यदाख्येयम्। अत एव स कठ इत्यपि न प्रतिवचनतात्पर्यम्। किं सब्रह्मचारी त्वमिति पदेन प्रतिवचनस्य प्रत्यगात्मविषयक-त्वौचित्यात्। न चायं व्यधिकरणस्तत्पुरुषः केषां सब्रह्मचारी किं सब्रह्मचारी त्वमसीति। तथात्वे कठानामित्युत्तरवचनापत्तेः। न वा समानाधिकरणस्तत्पुरुषः कः सब्रह्मचारी किं सब्रह्मचारीति। तथात्वे तवेत्युपपदौचित्येऽपि त्वं पदं प्रयोगानैचित्यात्। तस्मादयं वाचनिको बहुव्रीहिः। अथापि कथमिहार्थसङ्गतिरिति चेदग्नौ करवाणि न्यायेन भविष्यति। यथाऽग्नौ करवाणीति प्रश्ने कुर्विति प्रत्याह। कर्तर्यनुज्ञाते कर्माप्यनुज्ञातं भवति यथा वाग्नौ करिष्ये इति प्रश्ने क्रियतामिति प्रत्याह। कर्मण्यनुज्ञाते कर्ताप्यनुज्ञातो भवति। एवमिहापि के सब्रह्मचारिणोऽस्येत्यत्र कठा इत्युक्ते सम्बन्धादेतद्गम्यते नूनमयमपि कठ इति। एवमहं कठ इत्युक्ते गम्यते नूनं तेऽपि कठा इति। तथाचोपपन्नम्। के सब्रह्मचारिणस्तवेत्यभिप्रायेण किं सब्रह्मचारी त्वमिति प्रश्ने अहं कठ इत्युत्तरम्। सम्बन्धाद्गंस्यते। मम सब्रह्मचारिणः कठाः सन्तीति। अपर आह। कीदृश सब्रह्मचारिमानसीति प्रश्न कठ सब्रह्मचारिवानहमित्यभिप्रायेण कठ इत्युत्तरं द्रष्टव्यम्। तात्पर्यानुपपत्या कठ शब्दस्य तादृश सब्रह्मचारिवति लाक्षणिकत्वादिति सर्वं सुस्थम्।

(3) अर्द्धस्तृतीयो येषां तेऽर्द्धतृतीया द्रोणाः इति बहुव्रीहिः। अत्राह- अर्धतृतीया द्रोणा इति सार्द्ध द्रोणद्वयमुच्यते। तत्र द्वौ पूर्णाविकोऽपूर्ण इति भिन्नजातीयस्य तृतीयत्वं नोपपद्यत इति। उच्यते। नेदमेकान्ततोऽभ्युपगम्यते। सजातीयानामेव संख्यापूरकत्वमस्तीति। पुराणपञ्चमा वेदा इत्यवेदस्यापि पुरणस्य वेद संख्यापूरकत्वदर्शनात्। तस्माद्विजातीयेनाप्यर्द्धेन द्रोण संख्या पूरणम् सुस्थम्। पुनराह – तृतीयस्यार्द्धकायत्वात् द्रोणत्वं नास्ति। ततो द्वावेवद्रोणौ। तृतीयश्चैको द्रोणस्यार्धभाग इति स्थिते अर्द्धस्तृतीया द्रोणो येषान्तेऽर्द्धतृतीया द्रोणा इति विग्रहो नोपपद्यत इति। उच्यते मास्तु तदर्द्धस्य द्रोणत्वम्। त्र्यवयवस्तु यः समुदायस्तत्र तृतीयस्यार्द्धात्मकत्वोक्त्या द्वयोः पूर्णात्मकत्वं गम्यते। स पुनः समुदायात्मा समासार्था द्रोणविशेषणं भविष्यति। अथवा समुदाये प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते। पूर्वे पञ्चालाः। उत्तरे पञ्चालाः। तैलं भुक्तं, घृतं भुक्तं, शुक्लो नीलः, कपिलः, कपोतिकेति। एवमयं समुदाये द्रोणं शब्दः प्रवृत्तोऽवयवेष्वपि वर्तते। तथा च येषां त्रयाणां द्रोणानां तृतीयोऽर्द्धात्मकस्तदन्यौ पूर्णात्मकौ तेऽर्द्धतृतीया इति सिद्धम्। पुनराह यद्येवमवयवे समुदाय शब्द इष्यते तत्तर्हि यत्र द्वौ द्रोणावर्द्धं चाढकं तत्रापि स्यादर्द्धतृतीया द्रोणा इति। उच्यते। योऽवयवस्तं समुदायं न व्यभिचरति तत्रैव स वर्तते। अर्द्ध द्रोणो द्रोणं न व्यभिचरति। व्यभिचरति चार्द्धाढकमिति न तत्र स शब्दः। पुनराह- अर्द्धस्तृतीयो द्रोणो येषां द्रोणानामित्यन्यपदार्थो नोपपद्यते। वर्तिपदार्थस्यैव समासार्थत्वाभिमानात्। अर्द्धश्च द्रोणः। त्रित्व संख्यापूरणश्च द्रोणः। यत्पदाभिनेयः समासार्थश्च द्रोणः। इष्यते चान्यपदार्थे बहुव्रीहिः। येषां पदानां समासस्ततोऽनास्य पदस्यार्थोऽन्यपदार्थः। न चान्यपदार्थः कश्चिदिहोपसंगृह्यते तस्माद् बहुव्रीहिर्नोपपद्यत इति। उच्यते अवयवेन विग्रहः। समुदायः समासार्थः। अर्द्धः कश्चिद् द्रोणः। स एव च त्रित्वसंख्यापूरणोऽपि। अथ तस्यार्द्धस्य द्वयोश्च यः समुदायः सोऽन्यपदार्थः। समुदायावयवानामभेदविवक्षा च भेदविवक्षा च दृश्यते संघी भवन्ति ब्राह्मणाः, ब्राह्मणानां संघ इति। तत्रेह भेदविवक्षणाद् अन्यपदार्थत्वमुपपन्नम्। पुनराह यदि समुदायोऽन्यपदार्थस्तत्तर्हि बहुवचनं नोपपद्यते। एकार्था हि समुदाया भवन्ति शतं यूथं वनमिति उच्यते – अनेकेष्वर्थेषु त्रेधा व्यवहारः प्रवर्तते। प्रत्येकं[1] समुदितैः, समुदायेन, चेति। यत्रान्यसाहित्येनान्वयो नापेक्ष्यते तत्र प्रत्येकं निष्ठा। यत्र तु तत्समुदायारम्भक यावदवयवैरितरेतरसाहित्य-सापेक्षैरन्वयोऽपेक्ष्यते तत्र समुदाय विशेषितेष्ववयवेषु निष्ठा। अथ यत्रानुदबुद्धावयवः समुदायोऽपेक्ष्यते तत्रावयवविशेषिते समुदाये निष्ठा एषु प्रथमे द्वितीये चावयवा उदबुद्धाः सन्तीति बहुवचनप्राप्तिः तृतीये तु

[1] 'प्रत्येकैः' इति मूल पाठः।

एकार्थप्राधान्यादेकवचनम्। प्रथमे समुदायोऽनुद्बुद्धः। तृतीयेऽवयवाऽनुद्बुद्धा इतीष्यते तयोर्नित्यम् समुदायावयवभेदः। द्वितीये तु समुदितावयव व्यवहारादिष्यते विवक्षानुरोधेन भेदश्चाभेदश्च। तत्रैह समुदितास्त्रयो द्रोणा एकस्मादर्द्धद्रोणाद्भिद्यन्ते। एकश्चार्द्धद्रोणो वर्तिपदार्थः। त्रयश्च समुदिता द्रोणा अन्यपदार्थाः। अन्यपदार्थबहुत्वाद्बहुवचनमुपपद्यते। पुनराहद्रोणस्यार्द्धः वर्तिपदार्थः। अन्यपदार्थेत्विष्यते बहुव्रीहिः। तदेतेन बहुव्रीहिणा द्रोणार्द्धग्रहणं नोपद्यते। उच्यते। वृत्तिवशादर्थान्तरोपसंग्रहणं बहुव्रीहेः कार्य्यं न तु वर्ति पदार्थ परित्यागेऽप्याग्रहः। दृश्यते तु द्विविधो बहुव्रीहिः। तद्गुणसंविज्ञानश्चातद्गुणसंविज्ञानश्च। शुक्लवाससमानयेति तद्गुण आनीयते। लोहितोष्णीषा ऋत्विजः प्रचरन्तीति तद्गुणाः प्रचरन्ति। अथ दृष्टसागरमानयेति न सागरोऽप्यानीयते। कृतकर्माणं पश्येति न कर्मणि तस्य पश्यन्ति। इह पुनः समुदितास्त्रयोऽन्यपदार्थः। तदन्तप्रवेशाद् वर्तिपदार्थस्यापि संग्रहो वार्तम्। पुनराह ''श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि। युक्तश्छन्दांस्पधीयीत मासान् विप्रोऽर्थपञ्चमान'' इत्यादिषु विग्रहो नोपपद्यते। अर्द्धं पञ्चमो येषां मासानां तानिति वक्तव्यम्। तत्राऽयं पञ्चमो मासःकथमन्येषां चतुर्णा मासानामर्द्धं भवितुमर्हति। कश्चार्धेन मासानां षष्ठीप्रयोजकः सम्बन्धः स्यात्। तदिहावश्यं व्यधिकरणो बहुव्रीहिर्वक्तव्यः। तथा चार्द्धं पञ्चमस्य येषु तानित्यर्थ संगतिर्भवति। उच्यते। नेष्यते व्यधिकरणो बहुव्रीहिः। सिद्धं त्वर्द्धतृतीयान्यदत्रापि अर्द्धमित्यर्धमात्रः पञ्चमो मासो येषां तानिति द्रष्टव्यम्। नित्ययोगे षष्ठी परिच्छेदकभावो भावो वा षष्ठी प्रयोजकः सम्बन्धः मासावयवे च मास शब्दो लोकतः सिद्धः। अथ पौषो वर्तते इति। अथवा न ब्रूमः पञ्चमो मासोर्द्धं येषामिति। किं तर्हि मासस्य पञ्चमं येषां तानिति पश्यामः। कस्याप्यर्थस्य पञ्चमत्वं संख्यापूरकत्वमन्येषां अर्द्धं चतुर्णां पूर्णानां संभवे संभवति। ते चेहार्द्धपञ्चमा मासा इति व्याख्यास्यामः। पुनराह – अर्द्ध हि पञ्चमं नूनमन्येषां चतुर्णामेव स्यात्। तत्रार्थ बहुत्वान्नित्यबहुवचनो बहुव्रीहिः प्राप्नोति। दृश्यते तु क्वचिदेकवचनं प्रयुक्तं तन्नोपपद्यते। ''कर्णोपान्तः कार्योऽर्धपञ्चमे भूसमेन सूत्रेणेति''। उच्यते सत्यं तावदर्द्धपञ्चमं चतुर्णामेव स्यात्। ते तु चत्वारोऽर्थाः क्वचित् समुदितावयवरूपेण ग्रहीतुमिष्यन्ते। क्वचित्पुनरवयवारब्धसमुदायरूपेण। स यत्र समुदायोऽन्यपदार्थः तत्रैकवचनम् न्याय्यम्। अर्द्धमात्रं पञ्चमाङ्गुलं यस्मिन् भागे, अर्द्धाङ्गुलं वा पञ्चमं यस्मिन् प्रदेशे, सोऽयं सार्द्धाङ्गुलचतुष्टयमितः बहुव्रीह्यर्थः। तस्मादुपपन्नः समानाधिकरणो बहुव्रीहिः।

(4) कर्तृवचनानां समानाधिकरणविशेषणानां विशेष्येण बहुव्रीहिस्तत्कर्मार्थे। बहुवचनमतन्त्रम्। प्राप्तमुदकं यं प्राप्तोदको ग्रामः। आगता अतिथयो यमागतातिथिर्ग्रामः। अनेकपदानामपीष्यते बहुव्रीहिः। नित्यप्राप्तोदको ग्रामः। प्राप्तविशिष्टटोदको ग्रामः।

(5) कर्मवचनानां समानाधिकरणविशेषणानां विशेष्येण बहुव्रीहिरन्य-कारकार्थे। ऊढो रथो येन ऊढोरथोऽनड्वान्। दत्तं दानं यस्मै दत्तदानो ब्राह्मणः। उद्धृतः ओदनः स्थाल्या उदृतौदना स्थाली। अपहृतः पशुर्येन यस्मै यस्मिन् यस्माद् यस्य वा स सर्वोऽपीष्यते उदहृतपशुः। अनेकपदत्वेऽपि। ऊढसौवर्णरथः। बहुव्रीहिप्रकरणे प्रथमान्तानामेव सामानाधिकरण्यं तन्त्रम्। तेनेह न वृष्टे देवे गतः।

(6) अव्ययोपमानसप्तमीपूर्वाणां समानाधिकरणविशेषणानां विशेष्येण बहुव्रीहिरस्यास्तीत्यर्थे विशेषणोत्तरपदलोपश्च [1]। उच्चैः संनिविष्टं मुखमस्य उच्चैर्मुखः, नीचैर्मुखः। चिरायप्रवृत्ता कथा यस्य चिरायकथः। अञ्जसां संपाद्याक्रिया यस्य अञ्जसाक्रियः। विभक्तिप्रतिरूपकान्यव्यान्येतानि। उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः, खरमुखः। कण्ठेस्थः कालो यस्य कण्ठेकालः। दण्डः पाणिस्थो यस्य दण्डपाणिः। यद्वा –दण्डस्थः पार्णिर्यस्य स दण्डपाणिः।

(7) समुदायविकारषष्ठीपूर्वाणां समानाधिकरणविशेषणानां विशेष्येण बहुव्रीहिरस्यास्तीत्यर्थे विशेषणोत्तर पदलोपश्च [2]। समाहारश्चूडा, अस्य केशचूडः। सुवर्णविकारो अलङ्कारों यस्य सुवर्णालङ्कारः।

(8) प्रादिपूर्वाणां धातुजानां समानाधिकरणविशेषणानां विशेष्येण बहुव्रीहिरस्येत्यर्थे विशेषणोत्तरपदलोपस्तु विकल्पेन [3]। प्रपतितं पर्णं यस्य प्रपर्णः। प्रपतितपर्णो वा। प्रपलाशः प्रपतितपलाशो वा।

(9) नञ् पूर्वाणामस्त्यर्थानां समानाधिकरणविशेषणानां विशेष्येण बहुव्रीहिरस्येत्यर्थे विशेषणोत्तरपंदलोपस्तु विकल्पेन[4] अविद्यमानः पुत्रोऽस्य अपुत्रः, अविद्यमान पुत्रो वा। अभार्यः, अविद्यमानभार्यो वा। इत्येते समानाधिकरण बहुव्रीहयः।

---

1 सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च।

2 सङ्घातविकारषष्ठयाश्चोत्तरपदलोपश्च

3 प्रादिभ्यो धातुजस्य वाच्यो वा चोतरपदलोपः (वा. 1360)

4 नोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः (वा. 1361)

## 3. संख्या बहुव्रीहिः

(1) अव्ययासन्नदूराधिकानां संख्यया बहुव्रीहिः संख्येयार्थे [1]। दशानां समीपे ये सन्ति ते उपदशाः नव एकादश वेत्यर्थः। आदशतः संख्या संख्येये सिद्धाः। न चेह संख्येयार्थानां मिथः समीपवर्तित्वं तन्त्रम्। संख्या तु कदाचिदपरस्याः समीपवर्तिनी स्यात् किन्तु न तद्वाचकः शब्दो दृश्यते। उपशब्दश्च समीपार्थो धर्मिणं नाभिधत्ते। इष्यते तूपदशशब्देन समीपवर्तिनी दशत्वं संख्या यस्याः संख्यायास्तदवच्छिन्नार्थ ग्रहणं तन्नोपपद्यते। तस्मादयमन्यो नियमः आरभ्यते। तत्रैतया बहुव्रीहिवृत्या बहुसंग्राह्यं संगृह्यते। उक्तं च –

**''शब्दान्तरत्वाद् वाक्येषु विशेषा यद्यपि श्रुताः।**
**वृत्तिशब्दोऽन्य एवायमर्थान्तरनिबन्धनः॥'' इति**

तथा च वृत्तौ तावदुपशब्दः समीपिवचनोदश शब्दः संख्यावचनः क्रियते। ततो व्यधिकरण बहुव्रीहिः। दशत्व संख्यायाः समीपिनी संख्या येषां संख्येयानां त उपदशाः स्युः। समासान्तो वक्ष्यते। एवं दशत्वसंख्यासन्नसंख्यावच्छिन्ना आसन्नदशाः। अदूरदशाः, अधिकदशाः। अथ यत्र संख्या शब्दा संख्येयं संख्यानं च स्वतोऽभिदधते तत्र भवेदस्य बहुव्रीहेर्व्यापारलाघवमित्यन्यदेतत्। उपविंशाः, आसन्नविंशाः, अदूरविंशाः, अधिकविंशाः। विंशतेरधिकं या संख्या तद्वच्छिन्ना इत्यर्थः। अधिका विंशतिर्यासां ता अधिकविंशा गाव इति तु कैयटोक्तमयुक्तम्[2] अन्यपदार्थानवक्लृप्तेः। विंशति संख्या हि कस्यांचिदन्यस्यां संख्यायामेवाधिकारस्यान्नतु गवामन्यपदार्थत्वं युज्यते। किञ्चानिश्चितसंख्या विषय एवायं बहुव्रीहिरिष्यते। निश्चिता तु संख्येतस्मिन् विग्रहे प्रतीयते। गतार्थश्च पूर्वनियमेन समानाधिकरणो बहुव्रीहिः। व्यधिकरणार्थोऽयमारम्भः। एवमुपद्वाविंशाः। आसन्नत्रिंशाः अदूरषट्त्रिंशाः। अधिकचत्वारिंशाः। उपषष्टाः। आसन्नसप्तताः। अदूराशीताः। अधिकनवताः। उपशताः। आसन्नसहस्राः। अदूरायुताः। अधिकनियुताः। बहुगुणशब्दयोरपि संख्याशब्दत्वमिष्यते [3]। उपबहवः। आसन्न बहवः। उपगणाः। आसन्नगणाः।

---

1 संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येय (2-2-25)

2 अधिका विंशतिर्यासां ता अधिकविंशा गाव इति संख्यान वृत्तित्वाद्विंशति शब्दस्य संख्येयमन्यपदार्थ उपधत इति (महाभाष्य-2-2-25)

3 बहुगणवतुडति संख्या (1-1-23)

(2) संख्यानां संख्यया बहुव्रीहिः संशयविकल्पयोर्गुणितके चार्थे[1] द्वौ वा त्रयो वा द्वित्राः। समासान्तो वक्ष्यते[2]। यर्हि संशयोत्र वार्थो न विकल्पः। तर्हि संशयस्यानियतसंख्याविमर्शितया विमर्शविषय बहुत्वसद्भावाद् बहुवचनं न्यायसिद्धम्। अथ यदि द्वित्राणि फलान्यानीयन्तामिति विकल्पोऽर्थो गम्यते न संशयस्तर्हि कदाचिद् द्वयोर्वाचकोऽयं द्वित्र शब्दः स्यात् कदाचिद् वा त्रयाणामित्यवश्यं पक्षान्तरेणार्थद्वित्वात् पक्षे द्विवचनं प्राप्नोति तथाप्यनिर्ज्ञातेऽर्थे बहुवचनं प्रयोक्तव्यम् इति नियमादिह नित्यं बहुवचनम्। वक्तुरप्यत्रैकत्रैव पक्षे निर्भरं नास्तीत्यनिर्ज्ञातार्थता सुवचा। कियदाऽयमानयिष्यतीत्येतदनिर्ज्ञानाच्च। अथवा पक्षे भेदेनापि नायं शब्दो द्वयोरेव वाचकस्त्रयाणामेव वेति शक्यं वक्तुम्। वृत्तौ वार्थान्तर्भावात्। तेन पक्षे विकल्पितः द्विवाचितया द्वयर्थ विकल्पार्थ सापेक्षमर्थबहुत्वं प्रतीयते इति युक्तमत्राऽपि नित्यं बहुवचनम्। त्रिचतुराः। पञ्चषाणि दिवसानि। सप्ताष्टानि। दशद्वादशानि। विंशतित्रिंशानि। त्रिंशच्चत्वारिंशानि। एषु संशयोऽन्यपदार्थः स्याद्विकल्पो वा। अथ यत्र समासार्थसंख्येयविशेषणभूता संख्यैवान्यया संख्यया संख्यायते तत्र गुणितकबहुव्रीहिः। द्विदशाः। द्विगुणितदशत्वसंख्यावच्छिन्ना उच्यन्ते। विंशतिरित्यर्थः। त्रिदशाः त्रिंशदित्यर्थः। कथमर्थ संगतिरिति चेद् व्युत्पत्तिचतुष्ट्यमत्र भवति। एकस्तावदाह –वृत्तौ वायं द्विशब्दः क्रियाभ्यावृत्तिपरः। दश शब्दस्तु यथा सिद्धार्थ एव। तथा च द्विर्दशद्विदशाः द्विगुणिता दशेत्यर्थः। क्रियाभ्यावृत्तिरेवात्र पक्षेऽन्यपदार्थः। नास्ति वान्यपदार्थः। अपर आह – वृत्तावयं दशशब्दो दशदर्थपरः। द्वि शब्दस्तु यथा सिद्धार्थ एवं तथा च द्वौ दशतौ द्विदशाः दशवर्गद्वयमित्यर्थः। वर्ग एवात्र पक्षेऽन्यपदार्थः। नास्ति वान्य पदार्थः। अन्य आह। द्विशब्दो यथा सिद्धार्थः। दश शब्दोऽपि तथा[3] सिद्धार्थः। द्वौ दशेति बहुव्रीहिः। तत्रामी यदि दशेष्यन्ते न तर्हि द्वौ संभवत इत्यन्वयाद्यनुपपत्त्या संख्येयार्थकदशपदार्थेकदेशे दशत्व संख्यायां तदन्वयः। सति विशेष्यबाधे विशेषणे निषेधौ स्त इति न्यायात्। तथा च दशत्व संख्यया परिमाणवन्तो दशपदार्थः। दशत्वसंख्याद्वयेन तु परिमाणवन्तो द्विदशपदार्थ इति सिद्धम्। नास्त्यत्राऽन्यपदार्थः बहुव्रीहिस्तु वाचनिकः। पर आह- द्वि शब्दो यथा सिद्धार्थः। दश शब्दस्तु वृत्तौ संख्यावचनः। तयोर्द्वे विंशति इतिवत् सामानाधिकरण्यम्। उत्तरसंख्यायाः पूर्वसंख्यासंख्येयत्वात्। ततश्च द्वे दशत्वसंख्ये येषां संख्येयानां ते द्विदशाः,

---

1 ति विंशितेर्डिति (6-4-142)

2 बहुव्रीहौ संख्येये डजबहुगणात् (5-4-73)

3 यथा इति मूल पाठः।

विंशतिरित्यर्थः। न्यायसिद्धोऽत्र बहुव्रीहिः। संख्येयानां बहुत्वाद् बहुवचनम्। अथेह कस्मादेकवचनं दृश्यते त्रिणवः स्तोम इति। यावता त्रिगुणितया नवसंख्ययाऽवच्छिन्ना बहवोऽर्थाः स्युः। न चेह सप्तविंशति शब्दवदेकवचनं कल्प्यम्। विंशति शब्दवत् द्विदशशब्दादप्येकवचनप्रसङ्गात्। उच्यते- बहुवचनयोग्यादेव त्रिणव शब्दात् स्तोमे पुनस्तद्धितः प्रत्यय इत्येकवचनं सिद्धम्। यौ द्वौ तौ त्रयो यस्योन्मुग्धस्य स द्वित्रिरित्येवमर्थे तु पूर्वनियमेनैवसिद्धौ बहुव्रीहिः इत्येते संख्याबहुव्रीहयः।

## (3) दिग् बहुव्रीहिः

(1) दिङ्नाम्नो दिङ्नाम्ना बहुव्रीहिस्तदन्तरालेऽर्थे[1]। पूर्वा दक्षिणा, पश्चिमा, उत्तरा इति दिङ्नामानि। दक्षिणस्याः पूर्वस्याश्च दिशोन्तरालं दिग् दक्षिणपूर्वा आग्नेयी। उत्तरपूर्वा ऐशानी। दक्षिणपश्चिमा नैर्ऋती। उत्तरपश्चिमा वायव्या। पूर्व दक्षिणा, पूर्वोत्तरा, पश्चिमदक्षिणा, पश्चिमोत्तरा इत्यप्याहुः। पूर्वपदे पुंवद्भावो वक्ष्यते। प्राची। अवाची। प्रतीची। उदीची – इत्येतेऽपि दिक् शब्दाः। तेषां बहुव्रीहिः प्रायेण न दृश्यते। ऐन्द्री याम्या वारुणी सौम्या इत्येते यौगिका अपि शब्दा दिशि दृश्यन्ते। किन्तु न तेषां दिग्बहुवीहिरित्यावेदयितुं दिङ् नामानीत्युक्तम्। अन्तरालोऽत्रान्य पदार्थः। तत्रोभयोर्दिङ्नाम्नोः समानाधिकरण्यमुपलभ्यते वैयधिकरण्यं चेति वैलक्षण्यम्। या दक्षिणा सा पूर्वा यस्या उन्मुग्धायाः सा दक्षिण पूर्वेत्येवमर्थे तु पूर्वनियमेनैव सिद्धो बहुव्रीहिः। इति दिग् बहुव्रीहिः।

## (4) सहयोग बहुव्रीहिः

सहेत्यव्ययस्य तृतीयान्तेन बहुव्रीहिः संपन्नेऽर्थेः[2]। साहित्यं सह शब्दार्थः साहित्यं तु योगसामान्यमिह विवक्षितम् न तुल्ययोगितैव। तेन तुल्ययोगितया योगमात्रेण वा यत्र तृतीयान्तार्थ संपत्तिदृश्यते तत्र सर्वत्र तृतीयान्तार्थ योगसम्पन्नऽर्थे बहुव्रीहिः प्रवर्तते। सह शब्दस्य चात्र विकल्पेन हलोपो वक्ष्यते[3]। तुल्य योगितया तावत्। पुत्रेण सह गतः इति सपुत्रः सहपुत्रो वा पिता गतः। पुत्रेण सहितो गत इत्यर्थः। अथवा पुत्रेण साहित्यं तुल्ययोगितारूपं यस्य सः सपुत्र इति बहुव्रीहिः। पुत्रतुल्ययोगिता संपन्न इति यावत्। योगमात्रे तु कर्मणा सहितः सकर्मकः, लोम्ना सहितः सलोमकः, अथवा कर्मणा साहित्यं योगरूपं यस्य स सकर्मकः। कर्मयोगसम्पन्न इत्यर्थः। लुप्त हकारस्यैव धातुविशेषे

---

1 दिङ्नामान्यन्तराले (2-2-26)

2 दिङ्नामान्यन्तराले (2-2-26), तेन सहेति तुल्य योगे (2-2-28)

3 वोपसर्जनस्य (6-3-82)

व्यवहारान्नित्यं हलोपः साहित्यं वर्तिपदार्थः। साहित्यसंपन्नोऽन्यपदार्थः। यस्य तु सहितः सह शब्दार्थः, तस्य नास्ति अन्यपदार्थः।

## (5) व्यतिहार बहुव्रीहिः

तृतीयान्तस्य तृतीयान्तेन सप्तम्यन्तस्य सप्तम्यन्तेन च बहुव्रीहिः कर्मव्यतिहारेणेदं कर्मप्रवृत्तमित्यर्थे स चाव्ययः[1]। सति बहुव्रीहौ पूर्वपदान्तस्वरस्यदीर्घः[2]। उत्तरपदान्तस्वरस्येकार इति च वक्ष्यते[3]। अन्योन्याभियोगेन दण्डैः दण्डैरिदं प्रहरणं प्रवृत्तं दण्डादण्डि, यष्टीयष्टि, मुष्टीमुष्टि, बाहूबाहवि, मुसलामुसलि, हस्ताहस्ति। अन्योन्याभियोगेन केशेषु केशेषु इदम् संग्रहणं प्रवृत्तं केशाकेशि। एषु युद्धविषयता गम्यते। अन्योन्याभिभाषणेन कर्णेषु कर्णेषु अयमालापः प्रवृत्तःकर्णाकर्णि।

## (6) अव्यय बहुव्रीहिः

(1) देशेऽन्यपदार्थे पूर्वपदस्य नदीवचनेन नदी शब्देन च बहुव्रीहिः संज्ञायां स चाव्ययीभावः[4]। उन्मत्तगङ्गं नाम देशः, लोहितगङ्गम, पञ्चनदम्, सप्तनदम्, एकनदम्, समासान्तो वक्ष्यते[5]। अव्ययीभावत्वादव्ययत्वम्[6]।

(2) तिष्ठद्‍ग्वादयो बहुव्रीहयोऽव्ययीभाववत्[7]। तिष्ठन्ति गावो यस्मिन् काले स तिष्ठद्‍गुः। दोहनकालः, वहद्‍गुकालः। कालवचनावेतौ। तिष्ठद्‍ग्वादयोऽव्ययीभावे प्रोक्ताः पुनरिह स्मार्य्यते बहुव्रीहित्वाय।

## (7) क्रिया बहुव्रीहिः

(1) आख्यातस्याख्यातेन बहुव्रीहिः सातत्येन तत्क्रियाभिधानप्रयोजके कर्मणि[1]। अश्नीत पिबत इत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता क्रिया।

---

1 तत्रतेनेदमिति सरूपे (2-2-27)

2 अन्येषामपि दृश्यते दीर्घ इत्यनुवर्तते। इति कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घः

3 इच्कर्मव्यतिहारे (5-4-127)

4 अन्यपदार्थे च संज्ञायाम् (2-1-21)

5 नदीपौर्णमास्याग्रहायणीभ्यः (5-4-110)

6 अव्ययीभाश्च (1-1-41)

7 तिष्ठद्गुप्रभृतीनि च (2-1-17)

पचतभृज्जता, खादतमोदता, खादतवमता, आहरनिवपा, आहरनिष्करा, उन्मृजविमृजा।

(2) जहीत्यस्य कर्मणा बहुव्रीहिर्बहुलमाभीक्ष्ण्ये गम्ये कर्तरि चाभिधेये[2] जहि जोडमित्यभीक्ष्णं य उचते स जहिजोडः जहिस्तम्भः।

(3) एहीडादयश्च तत्क्रियाभिधान प्रयोजके कर्मणि[3]। एहि, ईड, इति यस्मिन्कर्मणि तदेहीडम्। एहि यौमीत्येहियवम्। कोष्ठान्निःसारय लोकेभ्यो देहीति तात्पर्येण उद्धर, उत्सृज इति यस्यां क्रियायामभिधीयते सा उद्धरोत्सृजा, उद्धमविधमा, आहारवसनानीति यस्यां क्रियायां सा आहारवसना। भूरिप्रयोगा केचन परिगणय्य दर्श्यन्ते। एहीडम् एहिपचम्। एहिविधसा, अपेहिप्रधसा, एहिवणिजा अपेहिवाणिजा, प्रेहिवाणिजा, एहिस्वागता, अपेहि स्वागता, प्रेहिस्वागता, एहिद्वितीया, अपेहिद्वितीया, प्रेहिद्वितीया, एहिकटा, अपेहिकटा, प्रेहिकटा, प्रेहिकरटा, प्रेहिकर्दमा, आहरकरटा, आहरवसना, आहरवनिता, आहरचेला, उद्धमचूडा, विधमचूडा, पचलवणा, भिन्धिलवणा, कृन्धिविचक्षणाः। उत्पचनिपचा, उत्पतनिपता, उद्धमविधमा, उद्धरोत्सृजा, उद्धरावसृजा, इत्यादि आकृतिगणोऽयम्।

## (8) शेष बहुव्रीहिः

कान्दिशीकादयो बहुव्रीहयः। कां दिशं गच्छामीत्येवं भावयमानो व्याकुलचित्तः कां दिशीवः। अहमहमित्येवमभियोगेन प्रवर्तमाना क्रिया। अहमहमिका। आहोपुरुषिका। यदृच्छा। अवनत भवान सक्थि यस्यामवस्थितौ सा अवसक्थिका। शरीरावयवविशेषस्य संज्ञेयम्। जानुनोरन्तर्हस्तौ यस्य सोऽन्तर्जानुः। नास्ति कुतश्चिद् भयं यस्य सोऽकुतोभयः एकवीरः। नास्ति किञ्चन यस्य सोऽकिञ्चनो दरिद्रः इत्यादि। इति शेषबहुव्रीहिः।

**तदित्थं बहुव्रीहयोऽष्टधा दर्शिताः।**

## अनुविधिः

अथ सप्तबहुव्रीह्याश्रय विधयो भवन्ति।

1. प्रयोगव्यवस्था

---

1 आख्यातमाख्यातेन क्रियासातत्ये (ग.20)

2 जहीत्येतत्कर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति (ग.29)

3 एहीडादयोऽन्यपदार्थे (ग.18)

2. समासान्तः
3. पूर्वविकारः
4. उत्तरविकारः
5. विभक्त्यलोपः
6. पुंवदभावः
7. लिङ्गवचने चेति। तेषां प्रदेशा उच्यन्ते –
1. विशेषणं पूर्वं बहुव्रीहौ। पीतेनाम्बरेण संपन्नः पीताम्बरः [1]।
2. प्रियशब्दः पूर्वमुत्तरं वा बहुव्रीहौ। प्रियगुडः। गुडप्रियः [2]।
3. सर्वनाम संख्ये पूर्वं बहुव्रीहौ। विश्वदेवः विश्वयषाः, द्विपुत्रः, द्विभार्यः [3]। केचित्तु विशेषणत्वादिह सिद्धिं मत्वा सर्वश्वेतो, द्विशुक्ल इत्युदाहरन्ति।
4. सर्वनाम संख्ययोः समवाये संख्यापूर्वं बहुव्रीहौ। द्वयन्यः त्र्यन्यः [4]।
5. संख्यानामल्पीयसी पूर्वं बहुव्रीहौ। द्वित्राः पञ्चषाः [5]।

6. निष्ठान्तं पूर्वं बहुव्रीहावुत्तरं तु जातिप्रहरणकालसुखादिभ्यः [6]। त इति कृत्प्रत्ययविशेषो निष्ठेति संज्ञायते। कृतकृत्यः। गृहीतपुत्रः। जातिवचनात्। प्रहरणवचनात् कालवचनात् सुखादि शब्देभ्यश्च निष्ठान्तं पूर्वं न प्रयुज्यते, सारङ्ग जग्धी, पलाण्डुभक्षिती, वसच्छन्नः, कुण्डकृतः, कुण्डमितः, कुण्डप्रतिपन्नः, उरुभिन्नी, पाणिगृहीती, पाणिगृहीता, सुरापीती, सुरापीता। दन्तो जातो यस्य स दन्तजाता। जातिनियमे व्यभिचारोऽपि दृश्यते। जातदन्तः, कृतकटः पीतोदकः। अथ प्रहरणात् – अस्युद्यतः। खड्गोद्यतः [7]। व्यभिचारोऽपि दृश्यते। विवृतासिः। अथकालात्=मासं जातस्य यस्य स मासजातः, मासजाता, संवत्सरजाता, सुखादिभ्यः सुखजाता, दुःखजाता, अदत्ता। सुप्राप्ता [8] बहुकृता।

---

1 सप्तमीविशेषणे बहुव्रीहौ (2-2-35)
2 वा प्रियस्य (वा.1420)
3 सर्वनामसंख्ययोरूपसंख्यानम् (वा.1419)
4 मिथोऽन्यो: समासे संख्यापूर्वं (वा.5044)
5 संख्याया अल्पीयस्याः (वा.1417)
6 निष्ठा (2-2-36)जातिकालसुखादिभ्यः परा निष्ठा वाच्या (वा.1422)
7 प्रहरणार्थेभ्यः परे निष्ठासप्तम्यो (वा.1425)
8 सुप्राप्ता इति मूलपाठः

**सुखमथ दुःखं कृच्छ्रं तृप प्रसोढं प्रतीपं च।**
**करुणं कृपणमलीकं न सु बहु अस्त्रं च आस्रं च ॥**

7. आहिताग्न्यादिषु निष्ठान्तं पूर्वमुत्तरं वा बहुव्रीहौ [1]। आहिताग्निः अग्न्याहितः। ऊढभार्यः भार्योढः। जातपुत्रः, पुत्रजातः। जातदन्तः, दन्तजातः। जातश्मश्रुः, श्मश्रुजातः। पीततैलः, तैलपीतः। पीतघृतः, घृतपीतः। आकृतिगणोऽयम्।

8. अव्ययमुपमानं च पूर्वं बहुव्रीहौ [2]। उच्चैर्मुखः, अपुत्रः, सपुत्रः, उपदशाः, मृगमुखः। व्याघ्रमुखः [3]। गड्वादियोगेऽपि सप्तम्यन्तस्य परनिपातः गडुकण्ठ [4]। क्वचित् पूर्वनिपात एव वहेगडुः।

10. क्रमवृत्तानां यथा प्राप्तं पूर्वं बहुव्रीहौ। यस्यां क्रियायामश्नीत, पिवतेत्येवं क्रमेण प्रायोऽभिधानं प्रवर्तते सा अश्नीतपिवता। जहितोडः। एहीडम्। इति पूर्वप्रयोग नियमः।

## 2. समासान्ताः

क, इक, अ, अस, अन्,नि, इ – इति सप्त बहुव्रीहौ समासान्तास्तद्धित- प्रत्ययाः बहुव्रीहेः स्वार्थे विधीयन्ते। तेषां प्रदेशा उच्यन्ते।

(1) स्वरादि समासान्तेषूत्तरपदस्यान्त्योऽवर्ण इवर्णो वा लुप्यते बहुव्रीहावुकारात्तु प्रागकारागमः [5]।

## (इ)

(1) उपमानादुत्पूतिसुरभिसुभ्यश्च परस्य गन्धस्य बहुव्रीहिरिकारान्तः स्यात्। तद्गुणसमवायिवृत्तिश्चेत् [6]। पद्मस्येव गन्धोऽस्य पद्मगन्धिः। मत्स्यगन्धिः। सुरभिगन्धिः। सुगन्धिः। पुष्पं सुगन्धि।तत्र गन्धगुणसमवायात्। ननु जलमपि सुगन्धि भवति वायुरपि। गुणसमवायस्तु न तयोरस्ति।

---

1 वाऽऽहिताग्न्यादिषु (2-2-37)
2 नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः (वा. 1361) अव्ययानां च
3 सप्तम्युपमानपूर्वपदस्यचोत्तरपदलोपश्च
4 गड्वादेः परा सप्तमी(वा.1421)
5 यस्येति च (6-4-148) ओर्गुणः (6-4-146) एचोऽयवायावः(6-1-78)
6 उपमानाच्च (5-4-137) गन्धस्येदुत्पूतिसुसुरभिभ्यः (5-4-135)

**"उपलभ्याप्सु चेद्गन्धं केचिद् ब्रूयूरनैपुणाः"**

पृथिव्यामेव तं विद्यादपो वायुं च सांश्रितम्। इति भगवता द्वेपायनेन स्मरणात्। सत्यम्। तथाऽपि गन्धसमवायिन्याः पृथिव्यास्तत्रविभागेनानुपलब्धेस्तेष्वेव सलिलवाय्वादिषु समवायेन गन्धगुणस्योपचार इत्यतस्तत्रापीष्यते सुगन्ध्यादि शब्दव्यवहारः। कस्यचिद् गन्धद्रव्यस्य विभागेन लक्ष्यमाणस्यान्तः पदार्थत्वं तु नेष्यते समासान्तः [1]। शोभना गन्धा द्रव्याण्यस्य सुगन्ध आपणिकः।

(2) पूर्वपदात्परास्याल्पाभिप्रायस्य गन्धस्य बहुव्रीहिरिकारान्त स्यात् [2]। सूपस्य गन्धो लेशो यस्मिन् तद् सूपगन्धि भोजनम् घृतगन्धि।

**"गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः।"** इति विश्वः।

(3) कर्मव्यतिहार बहुव्रीहिरिकारान्तः स्याद्व्ययीभावत्वं चास्य [3]। अत एवाव्ययत्वमपि सिद्धम्। केशाकेशि, दण्डादण्डि, यष्टीयष्टि, बाहूबाहवि। उकारस्य वकारः सन्धिफलम्। ततः प्रागकारागमः [4]।

(4) द्विदण्ड्यादिर्बहुव्रीहिरिकारान्तः स्यात् स चित्संज्ञोऽव्ययीभावत्वं चास्य [5]। द्वौ दण्डौ यस्मिन् प्रहरणे त द्विदण्डि प्रहरणम्। द्विमुसलि। उभाहस्ति। उभयाहस्ति।

**द्वि दण्डि च द्विमुसलि तथा संहतपुच्छ्यपि [6]।**
**एकपद्यादय पद्येवं संपत्ति दिमोष्ठपद्यपि ॥1॥**
**उभाहस्त्युभयाहस्ति उभादन्त्युभया दन्ति।**
**उभाकर्ण्युभयाकर्णि उभापाण्युभया पाणि ॥2॥**
**उभाबाहूभयाबाहु उभाञ्जल्युभयाञ्जलि।**
**निकुच्य कर्ण्यन्ते वसि द्वि दण्ड्मादिः स्मृतो बुधैः ॥3॥**

अव्ययीभावत्वप्रयोजकोऽयमिकारो व्यवहारार्थमिच् शब्देनापि संज्ञयते।

---

1 गन्धस्येत्वे तदेकान्तग्रहणम् (वा.3368)
2 गन्धेस्येत्वे तदेकान्तग्रहणम् (वा.3368), अल्पाख्यायाम् (5-4-136)
3 इच्कर्मव्यतिहारे (5-4-127)
4 ओर्गुणः (6-4-146)
5 द्विदण्ड्यादिभ्यश्च (5-4-128)
6 सच्छ्यपि इति मूल पाठः।

**(नि)**

पूर्वपदात् परस्य जायाशब्दस्य बहुव्रीहिर्न्यन्तः स्याल्लोपस्तु या भागस्य [1]। युवतिर्जाया यस्य युवजानिः। भाषितपुंस्कत्वाद् पुंवद्भावः [2]। जानकीजानिः। वृद्धिकरतद्धितान्तत्वात् पुंवत्वं नास्ति [3]। राधाजानिः। अभाषितपुंस्कत्वात्पुंवत्वं नास्ति।

**(अन्)**

(1) पूर्वपदात् परस्य धनुषो बहुव्रीहिरन्नन्तः [4]स्यात्सलोपश्चाथ संज्ञायां विकल्पेन [5]। शृङ्गस्येदं निर्मितं शार्ङ्गम्। शार्ङ्गधन्वा वासुदेवः। यौगिकोऽयमन्वर्थत्वात्। संज्ञायान्तु शतधन्वा वा शतधनुर्वा। यस्यापि न शतं धनूंषि सोऽपीष्यते। शतधनुरिति। यस्तु –

''धनुर्वंशविशुद्धोऽपि निगुणः किं करिष्यति''। इत्यादिषूकारान्तो दृश्यते धनुशब्दः। तस्येह न ग्रहणम्।

(2) पूर्वपदात् परस्य धर्मस्य बहुव्रीहिरन्नन्तः स्यात् स चित्संज्ञः [6]। कल्याणो यस्य धर्मः स कल्याणधर्मा, शान्तधर्मा। केचित्तु केवलात् पूर्वपदादित्युक्त्वा त्रिपदबहुव्रीहिव्युदासमिच्छन्ति शान्तघोधर्मः। सन्दिग्ध साध्यधर्मेत्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः निवृत्तिधर्मा अनुच्छित्ति धर्मेत्यादिवत्।

(3) सुहरितसोमतृणेभ्य परस्य जम्भस्य बहुव्रीहिरन्वन्तः स्यात् स चित्संज्ञः [7]। जम्भो भक्ष्ये दन्ते च। सुजम्भा। हरितजम्भा, सोमजम्भा, तृणजम्भा। तृणभुक् तृणदन्तो वा। अन्यत्र प्रकृत्या। पतितजम्भः।

(4) दक्षिणादीर्मस्य बहुव्रीहिरनन्तः स्याद् स चित्संज्ञो व्रणं व्याधकृतं चेत् [1]। दक्षिणे शरीरभागे ईमं व्रणं यस्य स दक्षिणेर्मामृगः। व्याधेन कृतव्रणः।

---

1 जायाया निङ(5-4-134) लोपो व्योर्वलि (6-1-66)
2 स्त्रियाः पुंवदभाषितपुंस्काद. (6-3-34)
3 वृद्धिनिमित्तस्य च तद्धितस्यारक्त विकारे (6-3-34)
4 बहुव्रीहिरनन्त इति मूल पाठः।
5 धनुषश्च (5-4-132) वा संज्ञायाम् (5-4-133)
6 धर्मादनिच्केवलात् (5-4-124)
7 जम्भा सुहरिततृणसोमेभ्यः (5-4-125)

**(अस्)**

(1) न सुदुर्भ्यः परयोः प्रजामेधयोर्बहुव्रीहिरसन्तः स्यात् सो चित्संज्ञः[2]। अप्रजाः, सुप्रजाः, दुःप्रजाः, अमेधाः, सुमेधाः, दुर्मेधाः।

(2) बहुप्रजा इति हि दैव्यामेव[3]। बहुप्रजा निर्ऋतिमाविवेश। आर्ष्यां तु भाषायां बहुप्रज इत्येव।

**(अ)**

(1) पूर्वपदात् परयोः सक्थ्यक्ष्णोः स्वाङ्गवाचिनोर्बहुव्रीहिरकारान्तः स्यात् स चित्संज्ञः षित्संज्ञश्च[4]। दीर्घे सक्थिनी यस्य स दीर्घसक्थः। पद्माक्षः, मीनाक्षः। स्त्रियां ङी प्रत्ययः। दीर्घसक्थी। मीनाक्षी। स्वाङ्गत्वाभावे तु दीर्घसक्थि शटकम्। स्थूलाक्षा वेणुयष्टिः। अदर्शनार्थादक्ष्णोऽप्यकारः समासान्तो वक्ष्यते[5]। किन्तु न तस्मात् स्त्रियामी प्रत्ययः।

(2) पूर्वपदात् परस्याङ्गुलि शब्दस्य बहुव्रीहिरकारान्त स्याद्दारुणि स चित्संज्ञाः धित्संज्ञश्च[6]। पञ्चाङ्गुलयो यस्य पञ्चाङ्गुलं दारु। अङ्गुलिसदृशावयवं धान्यादि विक्षेपणकाष्ठम्। स्त्रियां ङी। पञ्चाङ्गुली समित्। दारुणोऽन्यत्र पञ्चाङ्गुलिर्हस्तः। तद्धितार्थ तत्पुरुषेऽप्यङ्गुलि शब्दादकारो वक्ष्यते किन्तु न तस्मात् स्त्रियायी प्रत्ययः। द्वे अङ्गुली प्रमाणमस्या द्वयङ्गुला यष्टिः[7]।

(3) द्वित्रिभ्यां परस्य मूर्घ्नो बहुव्रीहिरकारान्तः स्यात्लोपश्चानः स षित्संज्ञः[8]। द्विमूर्धः, त्रिमूर्धः। स्त्री चेत्। द्विमूर्धी, त्रिमूर्द्धी शाला।

---

1 दक्षिणेर्मा लुब्धयोगे (5-4-126)
2 नित्यमसिच्प्रजामेधयोः (5-4-112) बहुप्रजाश्छन्दसि (वा.)
3 नित्यमसिच्प्रजामेधयोः (5-4-112) बहुप्रजाश्छन्दसि (वा.)
4 बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् (5-4-113)
5 अक्ष्णोऽदर्शनात् (5-4-76)
6 अङ्गुलेर्दारुणि (5-4-114)
7 तत्पुरुषस्याङ्गुले संख्याव्ययादेः (5-4-87)
8 द्वित्रिभ्यां ष मूर्घ्नः(5-4-115), बहुव्रीहौ संख्येये. (5-4-73), तिविंशतेर्डिति (6-4-142) टेः (6-4-155)

(4) अबहुगणान्तः संख्या बहुव्रीहिरकारान्तः स्यात् चित्संज्ञः चतुर्भिन्नसंख्यानां टिलोपश्च विंशतेस्तिलोपश्च। स्वरान्तानामन्त्यस्वरो व्यञ्जनानामन्त्यो व्यञ्जनोदयस्वरश्च टिरुच्यते। उपदशाः। अनोलोपः। उपत्रिंशाः। अतो लोपः। उपविंशाः विंशतेस्तिभागो लुप्यते। उपषष्टाः। इ लोपः। द्वित्रा इलोपः। पञ्चषाणि अटोलोपः। पञ्चसप्तानि अनोलोपः। चतुः शब्दान्तत्वे तु टि लोपो नास्ति। त्रिचतुराः। उपचतुराः। बहुगणयोस्तु समासान्तोऽपि नास्ति उपबहवः। उपगणाः।

(5) नञ् वित्र्युपसुभ्यः परस्य चतुरो बहुव्रीहिरकारान्तः स्यात् स चित्संज्ञः[1]। अद्रष्टा चतुर्णं अचतुराः। विद्रष्टा चतुर्णां विचतुराः। सुद्रष्टा चतुर्णां सुचतुराः[2]। त्रयो वा चत्वारो वा त्रितुराः। चतुर्णां समीपे उपचतुराः[3]।

(6) नञ् सुदुर्भ्यः परयोर्हलिसक्थ्योर्बबहुव्रीहिरकारान्तः स्याद्विकल्पेन स चित्संज्ञः[4]। अहलः। अहलिः। असक्थः, असक्थि। सुहलः, सुहलिः। सुसक्थः, सुसक्थिः।

(7) उपसर्गात्परस्याध्वनो बहुव्रीहिरकारान्तः स्यात्सो चित्संज्ञष्टिलोपश्च न स्वतिभ्यां पूजनार्थाभ्याम्[5]। प्रकृष्टोऽध्वा यस्य प्राध्वो ग्रामः। अपशब्दा तु विकल्पेनायं द्रष्टव्यः। अपाध्वा। अपाध्वः।

पूर्वपदात् परस्यादर्शनस्याक्ष्णोः बहुव्रीहिरकारान्तः स्यात् स चित्संज्ञष्टिलोपश्च न स्वतिभ्यां पूजनार्थाभ्याम्[6]। स्थूलाक्षावेणु यष्टिः। दीर्घाक्षं कपाटम्। स्वतिभ्यां प्रकृत्या। स्वक्षि, अत्यक्षि ।

(8) पूर्वपदात् परस्य नाभिशब्दस्य बहुव्रीहिरकारान्तः स्यात् स चित्संज्ञः संज्ञायाम्[7]।पद्मनाभः, अब्जनाभः, व्रजनाभः। असंज्ञायां प्रकृत्या –गभीरनाभिः।

(9) पूर्वपदात् परेषां पूरप्पथां बहुव्रीहिरकारान्तः स्यान्न स्वतिभ्यां पूजनार्थाभ्याम्[1]। शोभना पूरस्य शोभनपुरः, चतुरस्रपुरः। पूः

---

1 अचतुरविचतुरसुचतुरस्त्री (5-4-77)त्र्युपाभ्यां चतुरोऽजिष्यते (वा.3351)

2 अद्रष्टा चतुर्णा अचतुराः, विचतुराः सुचतराः एतेषां विग्रहे बहुवचन प्रयोगः प्रमादेन सिद्धः बहुव्रीहिसमासे बहुवचनस्य अभावात्

3 अध्वनेर्य इति मूल पाठः।

4 नञ् दुःसुभ्यो हलि. (5-4-121)

5 उपसर्गादध्वनः (5-4-85)

6 अक्ष्णोऽदर्शनात् (5-4-73) न पूजनात् (2-4-69)स्वतिभ्यामेव (वा.)

7 अच्प्रत्यन्ववपूर्वात्सामलोम्नः(5-4-75) इति सूत्रे अच्इति योगविभागात्।

शब्दपर्यायः पुरशब्दोऽप्यस्ति। ततः सिद्धावपि समासान्तविधानं शोभनपूरित्यादि व्यावृत्त्यर्थम्। विमलापं सरः पञ्चापो देशः। समा आपो यस्मिन् तत् समापो देवयजनम्। समीपं प्रतीपं द्वीपमन्तरीपमित्यादिषूत्तरपदादेरकारस्य विकार ईकारः। सखिपथो रम्यपथो देशः। अपथः। स्वतिभ्यां तु प्रकृत्या। सुपूः, अतिपूः, स्वप्, अत्यप्, सुपन्था, अतिपन्थाः।

(10) पूर्वपदात् ऋचो बहुव्रीहिरकारान्तः स्याद्बहुनञ्भ्यामध्येतर्य्येव न स्वतिभ्यां पूजनार्थाभ्याम्[2]। अर्द्धं ऋचो यस्मिन्मन्त्रे अर्द्धर्चो मन्त्रः। अर्द्धर्चं सूक्तम्। न सन्ति ऋचोऽध्येतव्या यस्य सोऽनृचः, बह्वृचः। अनूचो माणवे बह्वृचश्चरणाख्यायामिति भगवान् पतञ्जलिः। अन्यत्र तु अनृक् साम। बह्वृक् सूक्तमित्येव। अनृक्कं बह्वृक्कं वा। स्वतिभ्यां प्रयोगो नास्ति।

(11) पूर्वपदात् परस्य धूः शब्दस्यानक्ष विषयस्य बहुव्रीहिरकारान्तः स्यान्न स्वतिभ्यां[3] पूजनार्थाभ्याम्[4]। राजधुरा। अक्षे तु प्रकृत्या। दृढधूरक्षः। स्वतिभ्यां तु सुधूः, अतिधूः।

(12) संख्यावचनात् कृष्णोदकपाण्डुशब्देभ्यः परस्य भूमि शब्दस्य बहुव्रीहिरकारान्तः स्यात् स चित्संज्ञः[5]। द्वे भूमी यस्मिन् द्विभूमः प्रासादः। पञ्चभूमः। सप्तभूमः। कृष्णभूमः। उदग्भूमः। पाण्डुभूमः।

(13) संख्यावचनात् परयोर्नदीगोदावर्योर्बहुव्रीहिरकारान्तः स्यात् स चित्संज्ञः संज्ञायाम्[6]। पञ्च नद्यो यस्मिन् पञ्चनदो देशः। सप्तगोदावरः।

(14) अन्तर् बहिर्भ्यां परस्य लोम्नो बहुव्रीहिरकारान्तः स्यात् स पित्संज्ञष्टिलोपश्च[7]। अन् भागष्टिः। अन्तर्लोमः, बहिर्लोमः। अनुदात्तोऽयमकार इत्यतः पृथक् संज्ञा।

---

1 ऋक्पूरब्धूः पथामानक्षे (5-4-74)
2 ऋक्पूरब्धूः पथामानक्षे (5-4-74)
3 स्वस्तिभ्यामिति मूल पाठः।
4 ऋक्पूरब्धूः पथामानक्षे (5-4-74)
5 कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते (वा.5046)
6 संख्याया नदीगोदावरीभ्यां च (वा.5047)
7 अन्तर्बहिर्भ्यां च लोम्नः (5-4-117)

(15) प्रत्यन्ववभ्यपरयोः सामलोम्नोर्बहुव्रीहिरकारान्तः स्यात् स चित्संज्ञष्टिलोपश्च [1]। प्रतिसामम्, अनुसामम्, अवसामम्, प्रतिलोमम्, अनुलोमम्, अवलोमम्।

(16) पूर्वपदात् परयोः पूरणप्रत्यान्तप्रमाणशब्दयोः स्त्रीलिङ्गयोर्बहुव्रीहिर – कारान्तः [2]।स्यात् स पित्संज्ञः।

तम, म, थ, इथ, तिथ, तीय, ईय, य, अ –इत्येते संख्यापूरणार्था नवप्रत्ययाः। समासान्तेऽकारे सति स्त्रीप्रत्ययेकारलोपः। कल्याणी पञ्चमी यासां रात्रीणां तः कल्याणी पञ्चमा रात्रयः। स्त्री प्रमाणी यस्य सः स्त्रीप्रमाणः। पूरण्या अप्राधान्ये तु नायमकारः समासान्तः अस्ति। कल्याणपञ्चमीकः पक्षः। अत्र हि रात्रिः पञ्चसंख्या पूरणी भवति। समासार्थस्तु पक्षो न रात्रिः। ततोऽप्रधाना पूरणी।

(17) नक्षत्रवचनात् परस्य नेतृशब्दस्य बहुव्रीहिरकारान्तः स्यात्[3] स पित्संज्ञो दैव्यां त्वन्यतोऽपि [4]। मृगो नेता यासां ता मृगनेत्रा रात्रयो मार्गशीर्षस्य। पुष्यनेत्रा। मघानेत्राः। देवानां भाषायां तु दृश्यते अन्यस्मादप्युत्तरतवे नेतुः। वृहस्पति नेत्राः। सोमनेत्राः।

(18) खुरखराभ्यां परस्य नासिका शब्दस्य बहुव्रीहिरकारान्तः स्याद्विकल्पेन[5] स चित्संज्ञोऽन्यतस्तु पूर्वपदान्नित्यं[6] संज्ञायामसंज्ञायाम् तूपसर्गात्[7]। खुरवन्नासिका यस्य खुरणसः, खरणसः। पक्षे खुरणाः, खरणाः। अन्यस्मान्नित्यम्। द्रुरिव नासिका यस्य द्रुणसः। शुकनसः। संज्ञा ह्येता भवन्ति। उपसर्गात्त्वसंज्ञायामपीष्यते। प्रणसः, उन्नसः। विनसा हतबान्धवेति भट्टिः। एषु नासिका शब्दस्य नस्य भावः प्रागुक्तः।

---

1 अच्प्रत्यन्ववपूर्वात्सामलोम्नः(5-4-75)
2 अप्पूरणीप्रमाण्योः (5-4-116)
3 नेतुर्नक्षत्रे अब्वक्तव्यः (वा.3360)
4 छन्दसि च नुतुरूपसंख्यानम् (वा.)
5 खुरखराभ्यां वा नस् (वा.3363) पक्षेऽजपीष्यते
6 अञ्नासिकायाः संज्ञायां नसं चास्थूलात् (5-4-118)
7 उपसर्गाच्च (5-4-119)

(19) अष्टागवमिति बहुव्रीहिर्गोयुक्तेऽर्थे चित्संज्ञः [1]। अष्टभिर्गोभि युक्तं शकटादिकमष्टागवम्।

(20) संख्यावचनात् परो गौरकारान्तः स्यादुत्तरपदे बहुव्रीहौ स चित्संज्ञः [2]। पञ्चगावो धनं यस्य पञ्चगवधनः।

(21) प्रोष्ठपदादयोऽकारान्ता बहुव्रीहयः स चित्संज्ञः [3]। प्रोष्ठो गौः। तस्यैव पादावस्य प्रोष्ठपदः। अजपदः। एणीपदः। एषु पादस्य पद्भावः। शोभनं प्रातरस्य सुप्रातः। शोभनं श्वोऽस्य सुश्वः। अनयोष्टिलोपः। शोभनं दिवाऽस्य सुदिवः। आलोपः। शारेरिव कुक्षिरस्य शारिकुक्षः। चतस्रोऽस्रयो यस्य चतुरस्रः। अनयोरिलोपः।

**प्रोष्ठपदादय उक्ताः प्रोष्ठपदैणीपदाजपदाः।**
**सुप्रातसुश्वसुदिवाश्चतुरस्रः शारिकुक्षश्च॥**

**(क)**

पूर्वपदात् परेषामुरः, प्रभृतीनामेकवचनान्तानां बहुव्रीहिः कान्तः स्यात् स पित्संज्ञः [4]। व्यूढोरस्कः। महोरस्कः। प्रियसर्पिस्कः। सोपानत्कः। बहुत्वे तु विकल्पो वक्ष्यते [5]।

**उरः सर्पिः पयोः लक्ष्मीर्नौः शालिर्दधिमध्वपि।**
**पुमान् नड्वांश्चोपानदुरः प्रभृतयो मताः॥**

नञ् परार्थस्य बहुव्रीहिः कान्तः स्यात् [6]। अनर्थकम्। अनर्थ इति तु तत्पुरुषः।पूर्वपदात् परस्येन प्रत्ययान्तस्येन भागान्त प्रत्ययान्तस्य वा बहुव्रीहिः कान्तः स्यात् स्त्रियाम् [7]। बहुदण्डिका काशी नगरी। बहुवाग्मिका काशी नगरी। अस्त्रियां तु विकल्पो वक्ष्यते। बहुदण्डी बहुदण्डिको वा ग्रामः।

---

1 गवि च युक्ते (वा.)
2 गौरतद्धितलुकि (5-4-92)
3 सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रेणीपदाजपदप्रोष्ठपदाः(5-4-120)
4 उरः प्रभृतिभ्य कप् (5-4-151)
5 शेषाद्विभाषा (5-4-154)
6 अर्थान्नः (ग.149)
7 इनः स्त्रियाम् (5-4-152)

पूर्वपदात् परेषां नदीसंज्ञकानामृकारान्तानां च बहुव्रीहिः कान्तः स्यात्[1]। अधातुस्थानीयदीर्घेकारोकारान्ता नित्यस्त्रीलिङ्ग नदीसंज्ञकाः। कल्याणपञ्चमीकः पक्षः। बहुसरसीकं स्थानं सराक्षसीका[2] निशा। बहुस्त्रीकं बहुलक्ष्मीकं भाग्यम्। रुग्णतनूको दुर्भगः। बहुश्वश्रूकः। श्रीर्भूरित्यादयो नदी संज्ञका न सन्ति। सुश्रीः। सुभूः। बहुकर्तृकम्। बहुभ्रातृकः। बहुर्भुका।

एतद् व्यतिरिक्तः सर्वोऽपि समानाधिकरण बहुव्रीहिर्विकल्पेन कान्तः स्यान्नतु संज्ञायाम्[3]।

महायशस्कः। महायशाः। अपार्थम् –अपार्थकम्। द्विपुमान् द्विपुंस्कः। स्त्रीलिङ्गाबन्तोत्तरपदकत्वे तु त्रैरूप्यम् क प्रत्ययविकल्पात् के ह्रस्वविकल्पाच्च[4]। बहु मालाकः। बहुमालकः। बहुमालः। कृतविधौ भूरिमाय इति प्रायिकः प्रयोगः। उक्तेषु तु समासान्तस्थानेषु कृतसमासान्ताद्विकल्पविधिना विरतसमासान्ताद्वाऽयं क प्रत्ययो नास्ति। सुगन्धिः, प्रियपथः, अहलिः, शतधनुः। यत्राप्युत्तरपद विकारो विशिष्य विहितस्तत्रापि नायं कः समासान्तः। व्याघ्रपात्। उर्ध्वज्ञुः। श्यावदन्। समानाधिकरणबहुव्रीहेरेवायं कविकल्पविधिः। तेनान्यत्र प्रकृत्या। उपबहवः। उत्तरपूर्वा। सुपुत्रः। अथ संज्ञायामयं समासान्तो नास्ति। विश्वे देवा अस्य विश्वदेवः[5]।

ईयसन्तोत्तरपदको बहुव्रीहिः कान्तो न स्यात्[6]। बहवः श्रेयसोऽस्य बहुश्रेयान्। बहुश्रेयसी।

प्रशंसायां भ्रातृशब्दोत्तरपदको बहुव्रीहिःकान्तो न स्यात्[7]। प्रशस्तो भ्राता यस्य प्रशस्तभ्राता। पूज्यभ्राता। मान्यभ्राता। पण्डितभ्राता। अन्यत्र मूर्खभ्रातृकः। बहुभ्रातृकः। स्वल्पभ्रातृकः।

---

1 नद्यृतश्च (5-4-153)
2 सरासीका इति मूल पाठः।
3 शेषाद्विभाषा (5-4-154)
4 आपोऽन्यतरस्याम् (7-4-15)
5 न संज्ञायाम् (5-4-155)
6 ईयसश्च (5-4-156)
7 वन्दिते भ्रातुः (5-4-157)

स्वाङ्गवाचि नाडीतन्त्रीशब्दोत्तरपदको बहुव्रीहि कान्तो न स्यात्[1]। बहुनाडिः कायः। बहुतन्त्री ग्रीवा। बहुतन्त्रीर्धमनी। स्त्रीप्रत्ययान्तत्वाभावात् ह्रस्वो न। स्वाङ्गादन्यत्र तु को भवत्येव बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा। निप्रवाणिरिति बहुव्रीहिः कान्तो न स्यात्[2]। प्रवाणी तन्तुवायशलाका। निर्गता प्रवाण्यस्य निष्प्रवाणिः पटः। समाप्तवानः। नव इत्यर्थः।

तद्धिता अप्येते स्वार्थिकाः समाससाधारण्यादिहैवोपदिश्यन्ते।

## 3. पूर्वविकारः

(1) पूर्वपदान्त्यस्वरस्य दीर्घः कर्मव्यतिहारबहुव्रीहौ[3]। दण्डादण्डि, मुष्टामुष्टि, मुसलामुसली, केशोकेशि, कर्णाकर्णि। यष्टीयष्टि, मुष्टीमुष्टि, बाहूबाहवि।

(2) लक्षणस्य, विष्टाष्टपञ्चमणिभिन्नच्छिन्निच्छद्रसुवस्वस्तिकातिरिक्त-स्यान्त्यस्वरदीर्घो बहुव्रीहावुत्तरपदे कर्णे[4]। द्विगुणाकर्णः, विष्टादीनान्तु नास्ति – विष्टकर्णः, अष्टकर्णः, पञ्चकर्णः, मणिकर्णः, भिन्नकर्णः, छिन्नकर्णः, छिद्रकर्णः, सुवकर्णः, स्वस्तिकर्णः, लक्षणस्येत्युक्तेर्नेह –शोभनकर्णः।

(3) संज्ञायामष्टनोऽन्त्यस्वरदीर्घो बहुव्रीहावुत्तरपदे[5]। अष्टापदं स्वर्णम् अष्टावक्रः।

(4) अष्टनोऽन्त्यस्वरदीर्घो बहुव्रीहावुत्तरपदे गवे शकटाद्यष्टभि र्गोभिर्युक्तमभिप्रेतं चेत्[6]। गव इति गो शब्दः कृतसमासान्तो निर्दिश्यते। अष्टाभिर्गोभिर्वहनाय योजितं शकटादिकम्-अष्टागवम्।

(5) शुनोऽन्त्यस्वरदीर्घो बहुव्रीहावुत्तरपदेषु दन्तदंष्ट्राकर्णकुन्दवराह पुच्छ पदेषु[7]। श्वादन्तः, श्वादंष्ट्रः, श्वाकर्णः, श्वाकुन्दः, श्वावराहः, श्वापुच्छः श्वापदः।

---

1 नाडीतन्त्र्योः स्वाङ्गे (5-4-159)

2 निष्प्रवाणिश्च (5-4-160)

3 अन्येषामपि दृश्यते (3-2-71) दीर्घ इत्यनुवर्तते। इति कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घः।

4 कर्णे लक्षणस्या. (6-3-115)

5 अष्टनः संज्ञायाम् (6-3-125)

6 गवि च युक्ते (वा.)

7 शुनो दन्तदंष्ट्रकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः (5049)

(6) उभयस्यान्त्यस्वरदीर्घो बहुव्रीहावुत्तरपदेदति [1]। ये के चोभयादतः। ददिति दन्तशब्दः कृतोत्तरविकारः।

(7) भ्रुवि दीर्घोकारस्य ह्रस्वोकारो वा ह्रस्वाकारो वा विकल्पेन बहुव्रीहावुत्तरपदे कुंसे [2]। भ्रुवा कुंसो भाषणं शोभा वा यस्य सः स्त्रीवेशधारी पुरुषो नाट्योक्तौ गणिकाञ्जुका इत्यभिधानम्।

(8) कोरुकारस्याकारो बहुव्रीहावुत्तरपदेऽक्षेऽक्षिणी च [3]। कुत्सिते अक्षिणी अक्षौ वा यस्य स काक्षः।

(9) ईषदर्थे कोरुकारस्याकारो बहुव्रीहावुत्तरपदे [4]। ईषदक्षिणी यस्य स काक्षः। काजलः, कातीरः।

(10) ष्यङः सम्प्रसारणद्दीर्घेकारो बहुव्रीहावुत्तरपदे बन्धौ [5]। कारीषगन्ध्या बन्धुरस्य कारीषगन्धीबन्धुः। तत्पुरुषे तु ष्यङेव श्रूयते। कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः।

(11) ष्यङ्गः सम्प्रसारणाद्दीर्घेकारो विकल्पेन बहुव्रीहावुत्तरपदेषु मातृक मातृमातेषु [6]। कारीषगन्धीमातृकः, कारीषगन्धीमाता, कारीषगन्धीमाततः। पक्षे यथाप्राप्तम्।कारीषगन्ध्यामातृकः, कारीषगन्ध्यामाता, कारीषगन्ध्यामातः। तत्पुरुषे तु कारीषगन्ध्यामातेत्येव।

(12) महतस्तकारस्याकारो बहुव्रीहावुत्तरपदे समानाधिकरणे [7]। महानाशयो यस्य महाशयः, महाभागः, महार्घः, महामूल्यः, महाकायः।

(13) अनखादिस्थस्य नञो नकारस्य स्वराद्विपर्यस्तः परपदस्यादौ स्वरे श्रूयते व्यञ्जने तु लुप्यते [8]। स्वरे तावत् नास्ति अन्तो यस्य अनन्तः, अनादिः, अनीशः, अनङ्गः। अत्र नकारस्य सन्धिफलद्विरूक्तिर्नास्ति। प्रकृतिसिद्धस्य तादृशनान्तपदस्य लोकव्यवहारेऽदर्शनात्। न च वैकारिके कल्पितेऽपि वा तत्प्रवर्तमाने शास्त्रस्य

---

1 छान्दसप्रयोगः।
2 अभ्रकंसादीनामिति वक्तव्यम् (वा.3964) अकारोऽनेन विधीयते इति व्याख्यानन्तरम्।
3 कापथ्यक्षयोः (6-3-104)
4 ईषदर्थे (6-3-105)
5 बन्धुनि बहुव्रीहौ (6-1-14)
6 मात मातृक मातृषु वा (3449)
7 आन्महतः समानाधिकरणजातीययोः (6-3-46)
8 न लोपो नञः(6-3-73)तस्मान्नुडचि (6-3-74)न भ्राण्नपान्न (6-3-75)

लोकसिद्धार्थत्वात्। व्यञ्जने तु अक्रियः, अचेतनः, अदयः, अपुत्रः। नखादिषु तु प्रकृत्या। नास्ति खमस्य नखः, नकुलः, नाकः नपात् -आकृतिगणोऽयम्।

(14) सह शब्दस्य हः परिहीयते बहुलं सहयोग बहुव्रीहौ न तु गोवत्सहलेतर विषयिण्यामाशिषि [1]। पुत्रेण सह सपुत्रः, सहपुत्रो वा। समानार्थोऽपि सह शब्दोऽस्ति। सोदरः, सहोदरः। समानोदर इत्यर्थः एक मातृक इति यावत्। संज्ञायान्तु नित्यमेव [2]। सपलाशम्, सकर्मकः, सलोमकः। आशीर्वचने तु सह शब्दः प्रकृत्याऽवतिष्ठते [3]।स्वस्तिराज्ञे सहपुत्राय सहामात्याय। गोवत्सहल विषयके। त्वाशीर्वादे विलुप्यत एव ह शब्दः। सगवे सवत्साय, सहलाय कृषीवलाय स्वस्ति। बहुव्रीहावित्युक्तेस्तत्पुरुषे सहाध्यायी, सहकारी, सहचरः।

(15) द्वितीये चानुपाख्ये सहशब्दस्य हः परिहीयते नित्यं सहयोग बहुव्रीहौ दैव्याम् [4]। अप्रधाने सहाये द्वितीयशब्दः अनुपाख्यं त्वक्ष्यनुपगतम् [5]। सराक्षसीकानिशा। राक्षसी साक्षादनुपलभ्यमानापि निशयाऽभ्युपपद्यत इव। वैदिक भाषायामेवेदम्। आर्ष्यां तु विकल्प एव।

(16) समानस्य मानः परिहीयते बहुव्रीहावुत्तरपदे मूर्द्धप्रभृत्युदर्कातिरिक्ते दैव्याम् [6]। अनुभ्राता सगर्भ्यः। अनुसखा सयूथ्यः। यो नः सनुत्यः। मूर्द्धादिषु तु समानमूर्द्धा। समानप्रभृतयः, समानोदर्काः। अन्यत्र तु दैव्यां भाषायां सर्वत्र मान लोपः।

(17) समानस्य मानः परिहीयते बहुलं बहुव्रीहावुत्तरपदे धर्मादावार्ष्याम् [7]। सधर्मा, साधर्म्मम्। सरूपः सारूप्यम्। सलोकः, सालोक्यम्। सगतिकाः, सपतिका, सपत्नी, सपक्षः, सज्ञातिः, सजातिः, सजातीय इत्यादि।

**धर्मः पक्षः स्थानं लोको ज्ञातिश्च जातिच।**
**वर्णो रूपं नाम च गोत्रं बन्धुर्वयो नाभिः॥**
**ज्योतिर्जनपदवचनोदरादयोऽपि बहुव्रीहौ।**
**प्रागुपसृष्टान्मानं समानशब्दान्निरस्यन्ति॥**

---

1 वोपसर्जनस्य (6-3-82), अगोवत्सहलेष्विति वाच्यम् (वा.3990)

2 सहस्य सः संज्ञायाम् (6-3-78)

3 प्रकृत्याशिषि (6-3-83)

4 द्वितीये चानुपाख्ये (6-3-80)

5 त्वक्षमनुगतम् इति मूलपाठः।

6 समानस्य च्छन्दस्यमूर्द्धप्रभृत्यु (6-3-84)

7 समानस्यच्छन्द(6-3-84)इति सूत्रे ज्योतिर्जनपद.(6-3-85)

(18) उदकस्य कः परिहीयते बहुव्रीहावुत्तरपदे वाहने [1]। उदकं वाहनं यस्य स उदवाहनः।

(19) कास्तीराजस्तुन्दे नगरे [2]। इषत् तीरमस्यास्तीति कास्तीरं नाम नगरम्। अजस्येव तुन्दमस्य अजस्तुन्दं नाम नगरम्। नगरतोऽन्यत्र कातीरम् अजतुन्दम्।

(20) षषोन्त्य व्यजनस्योत्वं ततः परस्य दतो दस्य डत्वं च [3]। षड् दन्ता यस्य षोड्न। षोडती।

## 4. उत्तरविकारः

(1) सुषमादिषूत्तरपदस्यादेः सस्य षत्वं बहुव्रीहौ [4]। शोभनं साम यस्य सुसमा सुषन्धिः। हरिषेणः।

**सुषमा चाथ निःसामा दुःसामा गौरिषक्थवत्।**
**सुषन्धिश्चाथ निःषन्धिर्दुःषन्धिर्हरिषेणवत्॥**

ईकारान्त नक्षत्रादुत्तरपदस्यादेः सस्य षत्वमेकारपरस्य विकल्पेन[5] बहुव्रीहौ। रोहिणीषेणः। रोहिणीसेनः। रेवतीषेणः। रेवतीसेनः। संज्ञाविशेषा एते।

(2) स्वरान्तः स्थकुपुव्यवधानेऽपि पूर्वपदस्थरेफात् परस्य नसो नस्य णत्वं संज्ञायाम् बहव्रीहौ [6]। द्रुणसः। समासान्तो वक्ष्यते खरणसः, खरणसः, खुरणाः, खरणाः समासान्तो विकल्पते [7]।

स्वरव्यवधानेऽप्युपसर्गस्थरेफात् परस्य नसो नस्य णत्वं बहुलं बहुब्रीहौ [8]। प्रणसः परिणसः। प्रणो मुञ्चतम्। प्रणो नय। क्वचिन्न। प्रनः पूषा।

---

1 पेषंवासवाहनधिषु च (6-3-58)
2 कास्तीराजस्तुन्दे नगरे (6-3-155)
3 षष उत्वं दतृदशधा सूत्तरपदादेष्टुत्वं च धासु वेतिवाच्यम् (वा.4001-4002)
4 सुषामादिषु च (8-3-98) एति संज्ञायामगात् (8-3-99)
5 नक्षत्राद्वा (8-3-100)
6 पूर्वपदात्संज्ञायामगः (8-4-3)
7 खुरखराभ्यां वा नस् (वा.3363)पक्षेऽजीष्यते।
8 उपसर्गाद्बहुलम् (8-4-28)

द्व्यन्तरूपसर्गेभ्यः परस्यापस्याद्यकारः ईकारः [1] स्यादवर्णान्तोपसर्गात्तु विकल्पेन[2] बहुव्रीहावनोस्तूपसर्गादूकारादेशे [3]। अप् इत्यप् छब्दस्य कृतसमासान्त स्यायमादेशः। द्विर्गता आपो यस्मिन् तद् द्वीपम्। अन्तरीपम्, प्रतीपम् समीपम्, नीपम्। अवर्णान्तात् विकल्पः। प्रेणम्, परेपम्, प्रापम्, परापम्। अनोः पूर्वपदत्वे तूकारः स्याद्देशे गम्ये। जलप्रायमनूपं स्यात्। यत्र समासान्तस्तत्रैवायं विधिः। अन्यत्र प्रकृत्या। स्पप् स्वपी।

स्थूलातिरिक्तात् पूर्वपदात् परस्य नासिका शब्दस्य नस् संज्ञायां बहुव्रीहौ [4]। द्रुरिव नासिका यस्य द्रुणसः, खुरणसः, खरणसः। स्थूलात्तु स्थूलनासिकः।

उपसर्गात्परस्य नासिका शब्दस्य नस् बहुव्रीहौ [5]। वेस्तु ख्योवा ग्रो वा विकल्पेन [6]। । उन्नता नासिका यस्य उन्नसः। प्रणसः दुर्णसः, सुनसः वेस्तु विगता नासिका यस्य विख्यः, विग्रः, निनसः।

(4) पूर्वपदात् परस्य दन्तस्य दतृ बहुव्रीहौ स्त्रीसंज्ञायाम् [7]। अयोदती, फालदती, संख्यासुभ्यां परस्य दन्तस्य दद्वयसि बहुव्रीहौ [8]। द्विदन्, चतुर्दन, षड्दन्ता अस्य षोड्न। द्विदती, चतुर्दती, षोड्ती, सुदन्, सुदती। वयसोऽन्यत्र द्विदन्तः करी। सुदन्तः।

श्यावारोकाग्रान्तशुद्धशुभ्रवृषवराहेभ्यः परस्य दन्तस्य दद्विकल्पेन बहुव्रीहौ [9]। श्यावदन् अरोकदन्, कुडमलाग्रदन् शुद्धदन्, शुभ्रदन्, वृषदन्, वराहदन्। पक्षे प्रकृत्या। शयावदन्तः, अरोकदन्तः, कुड्मलाग्रदन्तः, शुद्धदन्तः, शुभ्रदन्तः, वृषदन्तः, वराहदन्तः।

अन्यस्मादप्युत्तरस्य दन्तस्य दद्बहुव्रीहौ दैव्यामेव। उभयोदतः प्रतिगृहणाति। ये के चोभयादतः। आर्ष्यां तु भाषयामुभयतोदन्तः। उभयदन्त इत्यादि।

---

1 द्व्यन्तरूपसर्गेभ्योऽप ईत् (6-3-97)

2 अवर्णान्ताद्वा (वा.5045)

3 ऊदनोर्देशे (6-3-98)

4 अञ्नासिकायाः संज्ञायां नसं चास्थूलात् (5-4-118)

5 उपसर्गाच्च (5-4-119)

6 वेर्ग्रो वक्तव्यः (वा.3363)ख्यश्च (वा.3366)

7 स्त्रियां संज्ञायाम् (5-4-143)

8 वयसि दन्तस्य दतृ (5-4-141)

9 विभाषा श्यावरोकाभ्याम् (5-4-1443), अग्रान्तशुद्धशुभ्रवृष्ज्ञवराहेभ्यश्च (5-4-145)

5. उद्विभ्यां काकुदस्यान्त्यस्वरलोपो बहुव्रीहौ पूर्णात्तु विकल्पेन [1]।

काकुदं तालु। उत्काकुत्, विकाकुत्, पूर्णकाकुत्, पूर्णकाकुदः।

6. पूर्वपदात् परस्य ककुदस्यान्तस्वरलोपोऽवस्थायां बहुव्रीहौ [2]। ककुदं पशुस्कंधः अजातककुत्। पूर्णककुत्।

त्रिककुत् पर्वतसंज्ञायाम् [3]। त्रीणि ककुदान्यस्य त्रिककुत्। ककुदमधस्तनः कूटः।

7. सुदुर्भ्यां हृदयस्य हृद् बहुव्रीहौ मित्रामित्रयोः [4]। सुहृन्मित्रम्, दुर्हृद्-अमित्रः। सौहृदं मैत्री। दौहृदं वैमनस्यम्। अन्यत्र तु सुहृदयः सज्जनः। दुर्हृदयो-दुर्जनः।

8. प्रसंभ्यां जानुनो ज्ञुर्बहुव्रीहावूर्ध्वात्तु विकल्पेन [5]। प्रगते जानुनी यस्य प्रज्ञुः। संज्ञुः, उर्ध्वज्ञुः, ऊर्ध्वजानुः।

9. संख्यासुभ्यां परस्य पादस्यान्त्यस्वरलोपो बहुव्रीहौ [6]। द्विपात्, त्रिपात्, चतुष्पात्, सुपात्। स्त्रियामीप्रत्ययः, पादः पद्भावश्च [7]।द्विपदी, त्रिपदी, चतुष्पदी सुपदी।

उपमानात्परस्य पादस्यान्त्यस्वरलोपो बहुव्रीहौ न तु हस्त्यादिभ्यः [8]। व्याघ्रस्येव पादावस्य व्याघ्रपात्। उपमानादन्यत्र लोमपादः। हस्त्यादिभ्यस्तु हस्तिपादः। कुसूलपादः।

---

1 उद्विभ्यां काकुदस्य (5-4-148) पूर्णाद्विभाषा (5-4-149)

2 ककुदस्यावस्थायां लोपः (5-4-146) त्रिककुत्पर्वते (5-4-147)

3 त्रिककुत्पवर्तते(5-4-147)

4 सुहृद्दुर्हृदौ मित्रामित्रयोः (5-4-150)

5 प्रसंभ्यां जानुनोर्ज्ञुः(5-4-129) उर्ध्वाद्विभाषा (5-4-130)

6 संख्यासुपूर्वस्य (5-4-140)

7 पादोऽन्यतरस्याम् पादः पत्

8 पादस्य लोपोऽहस्त्यादिभ्यः (5-4-138)

हस्तीकुद्दाल कुरुत सुकूल, कशिका अजः।

दासीजाल महेलाश्व कपोल गणिका अपि ॥

कण्डोलकश्च कण्डोलः कटोलश्च कटोलकः।

गण्डोलकश्च गण्डोलो गण्डो हस्त्यादयः स्मृता ॥

स्थूणापद्यादयो बहुव्रीहयः स्त्रियाम् [1]।

स्थूलावत् पादयुक्ता स्थूणापदी

स्थूणापदी कुम्भपदी शकृत्पदी गोधापदी शूलपदी च निष्पदी।

दासीपदी जालपदी तथापदी द्रोणीपदी सूत्रपदी च षट्पदी ॥

ऐकपदी द्विपदी शतपद्यो विष्णुपदी त्रिपदी शितपद्यः।

आर्द्रपदी सुपदी तृणपद्यः कृष्णपदी विपदी गुणपद्यः ॥

अष्टापद्यपि कलसीपदी तथा कुणिपदी द्रुपदी।

मुनिपद्यपि शुचिपद्यपि सूचिपद्यपि च सूकरपदी च ॥

बहुव्रीहावुत्तरपदस्य गोरकारो[2] विलुप्यतेऽनष्टगवे चित्रा गावो यस्य चित्रगु। अष्टागवम् शकटमित्यत्र तु समासान्तोकारे गोरवादेशः सन्धिफलम्।

---

1 कुम्भपदीषु च (5-4-139) एते स्त्रीयामेव निपात्यन्ते।

2 गोकारो इति मूल पाठः।

बहुव्रीहावुत्तरपदस्थस्य स्त्रीप्रत्ययसम्बन्धिनोऽन्त्यस्वरस्य ह्रस्वः स्याद–समासान्ते न तु ईयसन्तोत्तरपदस्थस्य [1]। कृतविद्यः, भूरिमायः, सुप्रज्ञः, अचेतनः, बहुनाडिः, निष्प्रवाणिः। बहुचमुः। स्त्रीप्रत्ययाभावान्न ह्रस्वः। बहुतन्त्रीः, बहुलक्ष्मीः। सुश्रीः। समासान्ते क प्रत्ययेऽपि न ह्रस्वः [2]। कल्याणपञ्चमीकः, बहुसुन्दरीकः।

बहुव्रीहावुत्तरपदस्थस्य स्त्रीप्रत्ययस्यापो विकल्पेन ह्रस्वः स्यात् समासान्ते के। बहुमालकः, बहुमालाकः [3]। कप्रत्ययाभावे तु बहुमालः।

इतोऽन्येपि विकारा वर्णसन्धिकृताः सति निमित्ते सर्वत्र नीयन्ते। बहूदकोदेशः। महोदय।

## 5. विभक्तिलोपालोपौ

(1) अमूर्द्धमस्तकात् स्वाङ्गदकामे परे सप्तम्या अलोपः स्याद् बहुलं बहुव्रीहौ [4]। कण्ठे कालो यस्य स कण्ठेकालः। उरसिलोमा। मूर्द्धमस्तकाभ्यां तु नास्ति मूर्द्धशिखः। मस्तकशिखः। एवं कामेऽपि नास्ति। मुखे कामोऽस्य मुखकामः।

(2) व्यञ्जनाकारान्ताद्बन्धे परे सप्तम्या अलोपः स्याद्विकल्पेन बहुव्रीहौ [5]। स्वाङ्गादस्वाङ्गाद्वेति नाग्रहः। हस्ते बन्धो यस्य हस्तेबन्धः। चक्रेबन्धः चक्रबन्धः।

(3) यासामलोपो विधीयते ततोऽन्यास्तत्र समासे विभक्तयो लुप्यन्ते [6]।

## 6. पुंवद्भावः

(1) एकार्थ्यभाषितपुंस्कस्य स्त्रीवाचिनोऽनूङ पुंवद्रूपमुत्तरपदे स्त्रीलिङ्गे न तु पूरण्यन्ते प्रियादौ वा बहुव्रीहौ [7]। कृता क्रिया येन स कृतक्रियः, स्थितप्रज्ञः चित्रगुः। सती विद्या यस्य स सद्विद्यः। रूपवद्भार्यः, नीलग्रीवः।

---

1 ईयसो बहुव्रीहेर्नेति वाच्यम् (वा.696)
2 न कपि (7-4-14)
3 आपोऽन्यतरस्याम् (7-4-15)
4 अमूर्द्धमस्तकात्स्वाङ्गदकामे (6-3-12)
5 बन्धे च विभाषा (6-3-13)
6 सुपो धातुप्रातिपदिकयोः (2-4-71)
7 स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु (6-3-34)

त्रिपदे तु बहुव्रीहौ चित्रा जरता गौर्यस्येती विग्रहे, तन्व्यौदीर्घेजङ्घे यस्येति विग्रहे द्वैविध्यं पश्यन्ति। चित्राजरतीगुः जरतीचित्रागुर्वा-तन्वीदीर्घाजङ्घ दीर्घातन्वीजङ्घो वा इत्येकं मतम्। नात्र पुंवद्भावः। पूर्वपदस्योत्तरपदपरत्वाभावान्मध्येन (व्यवधानात्)। द्वितीयस्य तु पूर्वपदत्वाभावात्। पूर्वपद शब्दो हि समासस्य प्रथमावयवे रुढश्चरमावयवे तूत्तरपदशब्दः। उत्तरपदपरत्वे तु पूर्वपदस्येष्यते पुंवद्भावः। परस्त्वाह उत्तरपदपरत्वे पुंवद्भावो नियम्यते नतु वा पूर्वपदस्यैवेति नियमः। तस्मादिह साधुर्द्वितीयस्य पुंवद्भावः। चित्राजरद्गुः। जरतीचित्रगुर्वा, तन्वीदीर्घजङ्घः दीर्घातनुजङ्घो वा इति द्वितीयं मतम्। चित्रा जरत्यौ गावौ यस्येति द्वन्द्वगर्भे तु बहुव्रीहौ चित्राजरद्गुः। कर्मधारयपूर्वपदके बहुव्रीहौ चित्रजरद्गुः जरच्चित्रगुर्वा। एकत्र कर्मधारयनिबन्धनः पुंवद्भावोऽन्यत्र बहुव्रीहिनिबन्धनः। कर्मधारयोत्तरपदके तु बहुव्रीहौ चित्रजरद्गवीकः। जरच्चित्रगवीको वा। एवमन्यत्रापि सति सम्भवे विशेषाः समुन्नेयाः।

ऐकार्थ्ये सति भाषितपुंस्कस्येति नियमान्नेह-चित्रा जन्मतारा यस्या सौ चित्राजन्मतारः। नानागुणसमुच्चयवति चित्राशब्दस्य त्रिलिङ्गत्वेऽपि तारकाविशेष नित्यस्त्रीलिङ्गत्वात्। गौरीभार्यः। पार्वतीद्वितीयः। संज्ञात्वादिह सिद्धः प्रतिषेध इति चेत् तर्हि इत्यादि कमुदाहार्य्यम्। भाषितपुंस्कस्येति नियमान्नेह गङ्गाभार्यः, नदीमातृक, लतासीमः, स्थूणाशलाकः। स्त्रीवाचिनः पुंवद्भावो न नपुंसकस्य [1]। बहुरिगृहं स्थानं वा सीमा यस्य तद्बहुरिसीमम्। ग्रामणि कुलं दृष्टिरस्य ग्रामणि दृष्टिः। ऊङन्तस्य न। वामेरुभार्यः। श्वश्रूमातृकः, पङ्गूमतिकः। उत्तरपदस्यान्यलिङ्गत्वेऽपि न। भार्या प्रधानं यस्या सौ भार्याप्रधानः। कल्याणीप्रधानः। संख्याशब्दात् तत्पूरणस्त्र्याख्यार्थाः तम् म, थ, इथ, तिथ, तीय, ईय, य, अ —इति नवैव तद्धित प्रत्यया पूरणी शब्देनाख्यायन्ते। तदन्तोत्तरपदकत्वे नास्ति पुंवद्भावः। कार्तिकी, त्रिंशत्तमी यासां ताः। कार्तिकी त्रिंशत्तमा स्तिथयः। कल्याणी पञ्चमी यासां ताः कलयाणीपञ्चमा रात्रयः। कल्याणि चतुर्थाः। कल्याण्येतावतिथाः। कल्याणी बहुतिथाः। कल्याणीद्वितीयाः, कल्याणीतुरीयाः कल्याणितुर्या, कल्याणीपञ्चदशाः। सर्वत्र समासान्तोअप्प्रत्ययो वक्ष्यते। समासवाच्यत्वाद् यत्र पूरण्याः प्राधान्यं तत्रैवायं प्रतिषेधः। तेन कल्याणपञ्चमीक पक्ष इत्यादौ पुंवद्भावः स्यादेव। अत्र तिरोहितावयव भेदस्य पक्षस्यान्यपदार्थतया पूरण्या रात्रेरप्राधान्यात्। प्रियादिशब्दे चोत्तरपदे प्रतिषेधः। कल्याणीप्रियः सुन्दरीसचिवः।

---

[1] बहु रा धनं यस्य सं बहुरि

**प्रिया मनोज्ञा कल्याणी कान्त क्षान्ता समा स्वसा ।**

**सुभगा दुर्भगा भक्तिः सचिवा चपलाऽबला ।।**

**दुहिता तनया वामा षोडशैते प्रियादयः ।**

**एषूत्तरेषु पुंवत्वं बहुव्रीहौ न जायते ।।**

(2) प्रियादिष्वपि सर्वनाम्नः पुंवत्वं न प्रतिषिध्यते। सर्वप्रियः [1]।

(3) धातुस्थकोपधस्य[2] पूरण्याः संज्ञायाः[3], स्वाङ्ग ङी प्रत्ययस्य[4] जातिस्त्रीप्रत्ययस्य च [5] पूर्वपदस्य न पुंवत्वं बहुव्रीहौ। पाचिकाभार्यः, रसिकाभार्यः, धातुस्थकोपधत्वान्न प्रतिषेधः पाकभार्या यस्य पाकभार्यः, पञ्चमीभार्यः, द्वादशीभार्यः,दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्ति। सुकेशीभार्यः। ङी प्रत्ययस्येत्युक्तेरात्वन्तस्य पुंवत्वं स्यादेव। अकेशभार्यः। शूद्राभार्यः, ब्राह्मणीभार्यः।

(4) वृद्धिनिमित्तेन तद्धितेनारक्तविकारार्थेन वृत्तस्य पूर्वपदस्य न पुंवत्वं बहव्रीहौ [6]। स्त्रुघ्नेभव स्त्रुघ्नी। स्त्रघ्नीभार्यः, माधुरीभार्यः, मैथिलीभार्यः। वृद्धिनिमित्तेने त्युक्तेरिह स्यादेव। मध्यमभार्यः तावद्भार्यः, वैयाकरणभार्यः, सौवश्वभार्यः। तद्धितेनेत्युक्तेः काण्डलावभार्यः। रक्तविकारयोरपि स्यादेव। काषायेन रक्ता काषायी, काषायी कन्या यस्य काषायकन्थः। हेम्नोविकारभूता हैमी मुद्रिका यस्य हैममुद्रिकः।

---

1 सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः (वा.1376)
2 न कोपधायाः (6-3-37)
3 संज्ञायापूरण्योश्च (6-3-38)
4 स्वाङ्गाच्चेतः (6-3-40)
5 जातेश्च (6-3-41)
6 वृद्धिनिमित्तस्य च तद्धितस्यारक्तविका रे (6-3-39)

## (7) लिङ्गवचने

बहुव्रीहिरन्यपदार्थविशेषणं भवतीति विशेष्यनिघ्नान्यस्य लिङ्गवचनानि। महोदरः पुरुषः। महोदरी दरिद्रा। अनुदरा भाग्यवती। महोदरं-पात्रम्। नीलाम्बरो-हलधरः। नीलाम्बरा-गौरी। नीलाम्बरं-छत्रम्। द्वित्राः पुरुषाः। द्वित्राः स्त्रियः। द्वित्राणि दिनानि—

अवान्तरपदलिङ्गं तु प्रकरणान्तराद् विज्ञेयम्।

**॥ इति बहुव्रीहिः समासः समाप्तः ॥**





# स्वरविधिः

अथ बहुव्रीहौ स्वरं वक्ष्यामः। स च 1. पूर्वप्रकृतिभावः 2. परप्रकृतिभावः 3. पूर्वान्तः, 4. परादिः 5. परान्त, 6. समासान्तश्चेति षोढैव। अन्ये स्वरा बहुव्रीहौ न सन्ति। तत्रादौ—

## 1. पूर्वप्रकृतिभावः

बहुव्रीहावुदात्तस्वरितयोगि पूर्वपदं प्रकृतिस्वरं स्यादन्यत्र वक्ष्यमाणात्[1]। समासात् प्रागस्य पदस्य यादृशः स्वरो नियमान्तरेण सिद्धः स एवेदानीं समासेऽप्यव तिष्ठते न तु परिवर्तनेन विकारमाश्रयते इत्यावेदयितुमयं प्रकृतिभावो विधीयते। उदात्तयोगि तावत् सुखप्रियः। दुःखप्रियः। सुखदुःखे अन्तोदात्ते। तेन पूर्वान्तस्वरः सिद्धः। माषप्रियः। तिलप्रियः। माषतिलावाद्युदात्तौ। तेन पूर्वादिस्वरः सिद्धः। स्वरितयोगि तु कार्यप्रियः। हार्य्यप्रियः। अन्तस्वरितं पूर्वपदम् तेन पूर्वान्तः स्वरः सिद्धः। यत्र तु पूर्वपदे उदात्तः स्वरितो वा न दृश्यते तत्र नायम् प्रकृतिभावः। वाप्रियः। चतनुः। समपादः। सर्वानुदात्तानि पूर्वपदानि। प्रियोऽन्तोदात्तः। तनुः पादश्चाद्युदात्तौ। प्रकृतिभावे तु वा प्रियस्यानन्तोदात्तत्वसिद्धावपि चतन्वादीनामन्तोदात्तत्वं न सिद्धयेत्। इष्यते तु सर्वानुदात्ते पूर्वपदे बहुव्रीहेरन्तोदात्तत्वम्। अन्यत्र वक्ष्यमाणादित्युच्यते। तेन यत्र बहुव्रीहौ वक्ष्यमाणैर्नियमैः परप्रकृतिभावो वा पूर्वान्तरादिपरान्त समासान्ता वा प्राप्नुवन्ति तत्रायं पूर्वप्रकृतिभावो न प्रवर्त्तते।

## 2. परप्रकृतिभावः

(1) शितेः परं नित्याबह्वक्षरकं भसद्भिन्नमुत्तरपदं प्रकृतिस्वरं स्यात्[2]।

शितिनखम्। भितिसिन्धुः। अन्तोदात्तौ नखसिन्धू। तेन परान्तस्वरः। सिद्धः। शितिपादः। शित्यंसः। आद्युदात्तौ पादांसशब्दौ। तेन परादिस्वरः सिद्धः।

(2) भसतस्तु नित्याबह्वक्षरत्वेऽपि प्रकृतिभावो नास्ति[3]। तेन शितेराद्युदात्तत्वात् तत्र पूर्वपदप्रकृतिस्वरेण पूर्वादिस्वरः सिद्धः। शिति भसत्। कपोल

---

1 बहुव्रीहौ प्रकृत्या पूर्वपदम् (6-2-1)

2 शितेर्नित्थाऽबह्वच्कबहुव्रीहावभसत् (6-2-138)

3 शितेर्नित्या अभसत् (6-2-138)

ललाटादीनां तु बह्वक्षरत्वात् प्रकृतिभावो नास्ति। शितिकपोलः। शितिललाटः। शिति सागरः। पूर्वपदप्रकृतिस्वरः।

## 3. पूर्वान्तस्वरः

(1) विश्वस्य पूर्वस्यान्त उदात्तः स्यात् संज्ञायां[1] न तु मित्राजिनयोः परत्वेऽनृषि संज्ञायाम्[2]। विश्वकर्मा।विश्वयशाः। विश्वदेवः। द्वितीयोदात्ता एते। मित्राजिनयोः परत्वे तु नायं पूर्वान्तस्वरः। किन्तु संज्ञायां मित्राजिनयोरिति परान्तविधिः। ऋषिस्तु विश्वामित्रः पूर्वान्तविधिना द्वितीयोदात्त एव। यत्र तु संज्ञा न विवक्ष्यते तत्र विश्व शब्दस्याद्युदात्तत्वादाद्युदात्ता इमे स्युः। विश्वे च देवाश्च विश्वेदेवाः। इत्यत्र तु तत्पुरुषस्वरः।

(2) मरुदृधादीनां पूर्वपदस्यान्त उदात्तःस्याद्दैव्याम्। मरुदृधः। आकृतिगणोऽयम्। तत्पुरुषे वक्तव्यमपीदं बहुव्रीहि प्रतिपत्यर्थमुक्तम्। उदराष्वेषु परेषु पूर्वस्य न सुव्यतिरिक्तस्यान्त उदात्तः स्यात् क्षेपे संज्ञायां च[3]। निन्दायां तावत् घटोदरः। महोदरः। कटुकाश्वः। दुष्टाश्वः। चलाचलेषु। संज्ञायां तु वृकोदरः। हर्य्यश्वः। महेषुः। न सुपूर्वत्वे तु सामासान्तोदात्तत्वम्[4]। अनुदरः। सूदरः। अनश्वः। स्वश्वः। सुपूर्वत्वे विपरीतलक्षया निन्दा गम्यते।

(4) बन्धौ परे नदी संज्ञस्यान्त उदात्तः स्यात्[5]। लिङ्गान्त्यदीर्घे कारोकारान्ताः शब्दा नदीसंज्ञाः। गार्गीबन्धुः।

(5) सोपसर्ग निष्ठान्तस्य पूर्वपदस्यान्त उदात्तः स्यात[6]। प्रद्योतपादः।

## 4. अथ परादिस्वरः

(1) उपमानात् संज्ञायां च परेषां कण्ठपृष्ठग्रीवाजङ्घाकर्णश्रृङ्गाणां लक्षणवचनाद्वर्णवचनाच्च कर्णस्यावस्थायां च श्रृंगस्यादिरुदात्तः स्यात्[7]। उपमानात्

---

1 बहुव्रीहौ विश्वं संज्ञायाम् (6-2-106)

2 संज्ञायां मित्राजिनयोः (6-2-165), ऋषिप्रतिषेधो मित्रे (वा.3857)

3 उदराश्वेषुषु (6-2-107) क्षेपे (6-2-108)

4 नञ्सुभ्याम् (6-2-172)

5 नदी बन्धुनि (6-2-109)

6 निष्ठोपसर्गपूर्वमन्यतरस्याम् (6-2-1110)

7 केण्ठपृष्ठग्रीवाजङ्घं च (6-2-114) सञ्ज्ञोपम्ययोश्च (6-2-113) श्रृङ्गमवस्थायां च (6-2-115) कर्णो वर्णलक्षणात् (6-2-112)

गोकर्णः। खरकण्ठः। गोपृष्ठः। अश्वग्रीवः। गोजङ्घः। रुरुश्रृङ्गः। अथ संज्ञायां मणिकर्णः। शितिकण्ठः। काण्डपृष्ठः। सुग्रीवः। नाडीजङ्घः। ऋष्यश्रृङ्गः। अथ लक्षणाद्वर्णाच्च कर्णस्य शङ्कुकर्णः। शुक्लकर्णः। अथावस्थायां श्रृङ्गस्य उद्गतश्रृंगः। द्वयङ्गुलश्रृङ्गः श्रृङ्गोदगमनादिकृतो गवादेर्वयो विशेषोऽवस्था। उपमानादीतरपूर्वपदत्वान्नेह। शोभनकर्णः। स्थूलश्रृङ्गः।

(2) नञः परेषां जरमरमित्रमृतानामादिरुदात्तः[1] स्याद्बहोश्चोत्तरपदार्थ भूमार्थात। अजरः। अमित्रः। अमृतः बहुजरः। बहुमरः। बहुमित्रःबहुमृतः। बहुभिः कारणैर्जरा यस्य बहुजर इत्यत्र तु नास्ति। जरागतबहुत्त्वानुल्लेखात्।

(3) सोः परस्य लोमव्यतिरिक्तमन् प्रत्यान्तस्योषोव्यतिरिक्तास् प्रत्यान्तस्य क्रत्वादीनां दैव्यामेव, त्वाद्युदात्तद्वयक्षरस्य वीरवीर्य्ययो श्वादिरुदात्तः[2] स्यान्न तु कपि[3]। मन्नन्तस्य— सुकर्म्मा। सुब्रह्मा। द्वितीयोदात्तौ। लोम्नस्तु नास्ति। सुलोम। सुनिमित्तेन समासान्तस्वरविधिनान्तोदात्तः। असन्तस्य सुमनाः। सुवर्चाः। सुपेशसः। उषसस्तु नास्ति।

सूषा। क्रत्वादीनाम्-सुक्रतुः। सुदृशीकः। सुप्रतीका। सुप्रतूर्तिः। सुहव्यः। सुभव्यः सुभगः। इति द्वितीयोदात्ता एते। आद्युदात्त द्वयक्षरस्य तु परपदस्य देवानां भाषायामेवाद्युदात्तता। स्वश्वाः। सुरथाः। अश्वरथावाद्युदात्ताविति बहुव्रीहावप्याद्युदात्तौ। सुवीरः। सुवीर्य्यः। आर्ष्यां तु भाषायां सुनिमित्तेन समासान्तस्वरविधिनाऽन्तोदात्ता एते। यत्र कप्रत्ययः समासान्तस्तत्र तु परान्तस्वरविधिनोत्तरपदस्यैवान्तोदात्तत्वं न समासस्य सुक र्म्मकः। सुस्रोतस्कः।

## (5) अथ परान्तस्वरः

(1) इदमेतत्तद्भ्यः प्रथमपूरण्योरुतरपदयोरन्त उदात्तः क्रिया गणने[4]। इदं प्रथममस्य गमनभोजनादेः स इदं प्रथमः। एतत्प्रथमः। तत्प्रथमः। इदं द्वितीयः।

---

1 नञो जरमरमित्रमृताः (6-2-116)

2 बहोर्न बदुत्तरपदभूम्नि (6-2-175)

3 सोर्मनसी अलोमोषी (6-2-117)क्रत्वादयश्च (6-2-118)आद्युदात्तं (6-2-119) वीरवीर्यौ च (6-2-120)

4 बहुव्रीहाविदमेतत्तदभगः प्रथमपूरणयोः क्रियागणने (6-2-162)

एतद्द्वितीयः। तद्द्वितीयः। इदं पञ्चमः। एतच्चतुर्थः। तत्षोडशः। यत्र तु समासान्तः कप्रत्ययस्तत्राप्येतयोरुत्तरपदयोः प्रथमपूरणयोरेवान्त उदात्तो भवति। न तु क प्रत्ययस्य। इदं प्रथमकः। एतत्पञ्चमकः। तत्षष्ठकः। क्रियागणने। विहितत्वात् द्रव्यगणने नास्ति। अयं प्रथमो येषां ते इदं प्रथम लोकाः। यस्योदात्तत्वं विहितं तदितरे तत्पदनिष्ठाः सर्वे स्वरा अनुदात्ता इति वक्ष्यते [1]।

(2) संख्यायास्तनोऽन्तोदात्तः स्याद्दैव्यां तु विकल्पेन[2]। द्विस्तना। चतुस्तना। नित्येमेवेदमृषीनां भाषायाम्। देवानां तु भाषायां विकल्पेन भवति। द्विस्तन करोतीत्यादौ मन्त्रवाक्ये पूर्वपदं प्रकृतिस्वरदर्शनात्।

(3) संज्ञायां मित्राजिनयोरुत्तरपदयोरन्तः उदात्तः[3] स्यान्न तु विश्वामित्रस्य ऋषेः [4]। देवमित्रः। कृष्णाजिनम्। अन्तोदात्तावेतौ। विश्वामित्रस्तु द्वितीयो आद्युदात्तः। संज्ञायाः पूर्वपदभूतस्य विश्वशब्दस्य बहुव्रीहावन्तोदात्तत्वात्।

(4) व्यवायिनः परस्यान्तरस्यान्त उदात्तः स्यात्[5]। वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः। व्यवधायिवचनादनुत्तरत्वे तु नास्ति। आत्मान्तरं। अन्यस्वभाव इत्यर्थः।

(5) आच्छादनेतरजातिवचनात् कालवचनात् सुखादिभ्यश्चोत्तरेषां क्तान्तानामकृतमितप्रतिपन्नानामन्त उदात्तः[6] स्याद्विकल्पेन तु जातस्य[7]। सारङ्ग पक्षिविशेषो भक्षितो येन स सारङ्गजग्धः। मासो ज्ञातस्य यस्य स मासज्ञातः। सुखजातः। दुःखजातः। सुखादयोऽन्यत्रोक्ताः। आच्छादन वाचकात् पर (स्य) नास्ति। वस्त्रछन्नः। पूर्वपदप्रकृतिस्वरत्वादाद्युदात्तोऽयम्। वस्त्रस्याद्युदात्तत्वात्। जातिकालसुखादिभ्योऽनुत्तरत्वान्नेह। पुत्रजातः। पूर्वपदान्तोदात्तोऽयम्। कृतादीनां तु क्तान्तत्वेऽपि नास्ति। कुण्डकृतः। कुण्डमितः। कुण्डप्रतिपन्नः। आद्युदात्तां एते। पूर्वपदप्रकृतिस्वरत्वात् अथ विकल्पः। दन्तजातः। मासजातः। अन्तोदात्तावेतावाद्युदात्तौ वा। दन्तस्य स्वाङ्गतया

---

1 अनुदात्तं पदमेकवर्जम् (6-1-155)
2 संख्यायाः स्तनः (6-2-163)
3 संज्ञायां मित्राजिनयोः (6-2-165)
4 ऋषिप्रतिषेधोमित्रे (वा.3857)
5 व्यवायिनोऽन्तरम् (6-2-166)
6 जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः (6-2-170)
7 वा जाते (6-2-171)

मासस्य च ग्रामादितयाद्युदात्तत्वात्। सुखजातः। दुःखजातः। अजातः सुजातः। बहुजातः।

(6) नञ्सुभ्यां परस्य कृतसमासान्तस्याकृतसमासान्तस्य चोत्तरपदस्यान्त उदात्तः स्यात् कप्रत्यये तु कपः पूर्वस्य दीर्घान्तस्योत्तरपदस्यान्त उदातः स्यात् ह्रस्वान्तस्य तु कपः पूर्वस्यान्त्यान्पूर्व उदात्तः स्यात्[1]। अनूचः समासान्ताकार एवोदात्तः। अव्रीहिः। सुमाषः अन्तोदात्तौ। क प्रत्यये तु अब्रह्मबन्धूकः। अकुमारीकः। उपान्त्योदात्तौ। ह्रस्वान्ते अव्रीहिकः। सुमाषकः। वीकारो माकारश्चोदात्तौ। समासान्ता उत्तरपदावयवा इत्येकं मतम्। समासान्ताः समासावयवा इत्यपरं मतम्। सर्व एव समासान्ता उत्तरपदावयववद् उह्यन्ते। केवलं कप्रत्ययोऽवयववद् भवति। अत एव अज्ञकः, अश्वकः, इत्यत्र ह्रस्वान्तस्य ज्ञपदस्य श्वपदस्य वा अन्त्यात् पूर्वः कश्चिदुदात्तभावी स्वरो न दृश्यते। इत्यगत्या कप्रत्ययविशिष्टस्योत्तरपदस्यान्त उदात्तो विधीयते। तेन तावन्तौदातौ।

(7) बहोरुत्तरपदार्थभूमाभिप्रायात् परस्य कृतसमासान्तस्याकृतसमासान्तस्य चोत्तरपदस्यावयवाभिप्रायगुणादिभिन्नस्यान्त उदात्तः स्यात्[2]। कप्रत्यये तु कपः पूर्वस्य दीर्घान्तस्योत्तरपदस्यान्त उदात्तः स्यात् ह्रस्वान्तस्य तु कपः पूर्वस्यान्त्यात् पूर्वः उदात्तः स्यात्[3]। बह्वृचः। बहुव्रीहिः। अन्तोदात्तौ। क प्रत्यये तु बहुमालाकः। उपान्त्योदात्तः। बहुव्रीहिकः। मध्योदात्तः। उत्तरपदार्थभूमावचनान्नेह। बहुषु मनोऽस्य बहुमानः। पूर्वपदप्रकृतिस्वरः यत्र तु गुणादीनामवयवाभिप्रायाणामुत्तरपदत्वं तत्रापि नास्ति। बहुगुणा रज्जूः। बह्वक्षरं पदम् बह्वध्यायो ग्रन्थः। बहुसूक्तोऽनुवाकः। गुणाक्षरादयो रज्जुपदाद्युत्तरपदार्थावयवतया प्रतीयन्ते गुणादिराकृतिगणः। बहुगुणी द्विज इत्यत्र तु भवत्येवान्तोदात्तत्वम्। अध्ययनश्रुतसदाचारादयो ह्यत्र गुणा न त्ववयवाः।

(8) मुखस्य स्वाङ्गस्योत्तरपदस्यान्त उदात्त[4] स्यान्नत्वव्यय दिक्छब्दमहतस्थूलपृथुगोमुष्टिवत्सेभ्यो[5] विकल्पेन तु निष्ठान्तादुपमानाच्च[6]। गौरमुखी

---

1 नञ्सुभ्याम् (6-2-172), कपि पूर्वम् (6-2-173)

2 बहोर्न वदुत्तरपदभूम्नि (6-2-175) न गुणादयोऽवयवाः (6-2-176)

3 कपि पूर्वम् (6-2-173)

4 मुखं स्वाङ्गम् (6-2-167)

5 नाऽव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः (6-2-168)

6 निष्ठोपमानादन्यतरस्याम् (6-2-169)

देवदत्तः। अन्तोदात्तोऽयम्। अव्ययादिपूर्वास्तु पूर्व पदप्रकृतिस्वरत्वात् पूर्वपदान्तोदात्तः। उच्चैर्मुखः। प्राङ्मुखः। प्रत्यङ्मुखः। महामुखः। स्थूलमुखः। पृथुमुखः। गोमुखः। मुष्टिमुखः। वत्समुखः। गोमुष्टिवत्सपूर्वाणामुपमानलक्षणो विकल्पोऽपि नास्ति। यत्र तु मुखशब्दोऽप्राण्यङ्गवचनस्तत्रापि नास्ति। दीर्घमुखा शाला। अथ विकल्पो निष्ठान्तात्। प्रक्षालितमुखः। उत्तरपदान्तोदात्तो वा पूर्वपदान्तोदात्तो वा। पूर्वपद प्रकृतिस्वरत्वेन गतिस्वरो वा। उपमानात् सिंहमुखः। तुरीयोदात्तो द्वितीयोदात्तो वा।

(9) उपसर्गादुत्तरस्य स्वाङ्गस्य ध्रुवस्यापर्शोरन्त उदात्तः स्यात्[1]। निर्गतं ललाटमस्य निर्ललालटः। निर्गतम् निर्ललाट निर्गतमस्य ललाटं नित्यं तथावतिष्ठते। प्रललाटः। प्रस्फिक्। प्रोदरः। प्रमुखः। अभिमुखः। अपमुखः। ध्रुवमेकरुपम्। अध्रुवत्वान्नेह। उद्वाहुः। ऊर्ध्वो बाहुः क्रियमाणो न नित्यं तथावतिष्ठते। पर्शोस्तु ध्रुवत्वेऽपि नास्ति। विपर्शुः।

(10) उपसर्गादुत्तरस्य वनस्यान्त उदात्तः स्यात्[2]। प्रवणम्। सुवनः। श्रदन्तरोरूपसर्गवद् वृत्तिः। अन्तर्वणो देशः। सर्वसमाससाधारणोऽयं स्वरविधिः। उपवनम्। अनवनम्। अतिवनम्।

(11) उपसर्गादुत्तरस्यान्तः शब्दस्यान्त उदात्तः[3] स्यान्न तु निविभ्याम्[4]। पर्य्यन्तः। समन्तः। निविभ्यां तु न्यन्तः। व्यन्तः। यकाराकारः स्वरितः।

(12) परेरुत्तरस्याभितो भाविनो मण्डलस्य चान्त उदातः स्यात्[5]। उभयतो यस्यास्ति भावः। तदेतत् कूलादिकमभितो भावि परिकूलम्। परिमण्डलम्।

(13) संज्ञायां प्रादस्वाङ्गस्यान्त उदात्तः स्यात्[6]। प्रगुण ऋजुः। स्वाङ्गत्वान्नेह प्रपदम्। प्रगण्डः कूर्परादूर्ध्वं बाहुभागः।

(14) निरुदादीन्यन्तोदात्तानि[7]। निरुदकम्। निरुपमम् निर्मक्षिकम्। निर्मशकम्। निष्फालकम्। निष्कालिकम्। निष्पेषम्। निस्तरीकम्। निस्तरीपम्।

---

1 उपसर्गात्स्वाङ्खगं ध्रुवमस्पर्शु (6-2-177)
2 अन्तः (6-2-179)
3 अन्तश्च (6-2-180)
4 न निविभ्याम् (6-2-181)
5 परेरभितोभावि मण्डलम् (6-2-182)
6 प्रादस्वाङ्गं संज्ञायाम् (6-2-183)
7 निरुदकादीनि च (6-2-184)

दुस्तरीपम्। निरजिनम्। उदजिनम्। उपाजिनम्। परिहस्तः। परिपादः। परिकर्षः। परिकेशः। इत्यादिराकृतिगणोऽयम्।

(15) अभेरुत्तरस्य मुखस्यान्त उदात्तः स्यात्[1]। उपसर्गादुत्तरस्य स्वाङ्गस्येति नियमात् सिद्धेऽस्वाङ्गार्थमध्रुवार्थं चेदं वचनम्। अभिमुखा शाला।

(16) अपादुत्तरेषां मुखस्फिगपूतकुक्षीणामञ्जोऽध्ववीणानाम्नां चान्त उदात्तः स्यात्[2]। मुखादीनामस्वाङ्गार्थमध्रुवार्थं चेदं वचनम्। अपमुखम्। उपस्फिगम्। अपपूतम्। अपकुक्षिःअपाजः। अपाध्वा। समासान्तो विकल्प्यते। अपवीणम्। अपनाम। अपसीरम्। अपहलत्वम्।

(17) अधेरुपरिस्थस्यान्त उदात्[3]। अध्यारुणे दन्तो यस्य सोऽयमधिदन्तः। दन्तस्योपरिजातेन दन्तेनोपलक्षितः इत्यर्थः।

(18) अनोः कनीयसः पुरुषस्य चान्वादिष्टस्यान्त उदात्तः स्यात्[4]। अनुगतः कनीयान् यस्य अनुकनीयान्। अन्वादिष्टः पुरुषो यत्रानुपुरुषः। कश्मिश्चित्कथिते योऽन्य कथ्यते सोऽन्वादिष्टः। अतेर्धातुलोपविषयात् परस्यान्त उदात्तः स्यात्[5]। अतिक्रान्तमतिगतमतिशयितं वा धनं यस्य सोऽयमतिधनः। अति शब्दोऽतिक्रान्ताद्यर्थवृत्तिः। तत्र क्रमादेरप्रयोग एवं धातुलोपः। अतिकारकः। अतिपदा गायत्री। अतिपदाशक्वरी। नेहशोभनो गार्ग्यो यत्र सोऽतिगार्ग्यः। पूर्वस्वरः नेरनिधानविषयात् परस्यान्त उदात्तः स्यात्[6]। अनिधानं प्रकाशनं निर्गतं निष्क्रान्तं वा मूलमस्य निर्मूलम्। मूलस्य बहिर्भावो गम्यते। निधाने तु निहतो दण्डो यस्मिन् निदण्डः। उपसर्गादुत्तरस्य वनस्येत्यारभ्यैकादश सूत्राणि तत्पुरुषाव्ययीभावसाधारणानि। तत्रैषां तत्पुरुषोदाहरण प्राधान्येऽपि संभवमात्र बहुव्रीहावुपन्यासः। इति परान्तस्वराः॥

---

1 अभेर्मुखम् (6-2-185)

2 अपाच्च (6-2-186) स्फिगपूतवीणाऽन्जोऽध्वकुक्षिसीरनामनाम च (6-2-187)

3 अधेरूपरिस्थरम् (6-2-188)

4 अनोरप्रधानकनीयसी (6-2-189) पुरुषश्चाऽन्वादिष्टः (6-2-190)

5 अतेरकृत्पदे (6-2-191)

6 नेरनिधाने (6-2-192)

## 6. अथसमासान्तस्वरः

(1) चित्समासान्तानां बहुब्रीहिणामन्त उदात्तः स्यादन्यत्र प्रतिपदोक्त लक्षणविधनात्[1]। इच्-केशाकेशि। अन्- शान्तधर्म्मा। अस्-सुप्रजाः।सुमेधाः। अ-चक्रसक्थम्। पद्माक्षः। पञ्चाङ्गुलम्। उपदशाः। अचतुराः। अहलः। प्राध्वः। स्थूलाक्षा। पद्मनाभः। पञ्चनदः। प्रतिमासम्। अनुलोमम्। खुरणसः। खरणसः। अष्टागवम्। पञ्चगवधनः। प्रोष्ठपदः। इकः। पञ्चकमासिकः। यत्र तु प्रतिपदोक्तलक्षणः कश्चिदन्यः स्वरो विधीयते तत्रायं चित्स्वरो निवर्तते। यथा गौरसक्थः, इत्यत्र विकल्पेन स्वरविधानादेकस्मिन् पक्षे शेष लक्षणः पूर्वपदप्रकृतिस्वरः।

(2) अक्रान्तात् परस्य सक्थस्यान्त उदात्त स्याद्विकल्पेन[2]। गौरसक्थः। श्लक्ष्णसक्थः। क्रशब्दान्तात् परस्य तु नित्यमन्तोदात्तत्वम्। चक्रसक्थः।

(3) द्वित्रिभ्यामुत्तरेषां पाददन्मूर्द्धमूर्द्धनामन्त उदात्तः स्याद्विकल्पेन[3]। द्विपाद्। त्रिपाद्। द्विदन्। त्रिदन्। द्विमूर्धः। त्रिमूर्धः। द्विमूर्द्धा। त्रिमूर्धा। अन्तोदात्ता एते पक्षे आद्युदात्ताः। यद्यपि नित्यः समासान्त प्रागुक्तस्तथापि क्वचिद् विभाषा समासान्तो भवतीति विज्ञेयम्। समासान्तानां स्वार्थिकतया विनापि तेन प्रयोक्तुं शक्यत्वात्। कृतसनासान्तस्यैव प्रचारबाहुल्यमावेदयितुं तत्र विधौ विकल्पशब्दो नोल्लिख्यते। अथोल्लिख्यतेऽपि क्वचित्तदुभयोर्भूयसाप्रचारं बोधयितुम्। यद्यपि चेह द्विमूर्द्धस्त्रिमूर्द्ध इत्येव लोके भूयसा दृश्यते। अथापि वैदिके व्यवहारे दृश्यतेऽकृतसमासान्तोऽपि। त्रिमूर्द्धानं सप्तरश्मिमित्यादि। तदर्थमिदं पृथग्वचनम्। परान्तप्रकरणे वक्तुमुचितस्यापि मूर्द्धनो मूर्द्धादीनां समासान्तयोग्यानां साहचर्य्यादिहोपन्यासः।

(4) त्रिचक्रादीनामन्त उद्दात्तः स्याद्दैव्यां भाषायाम्[4]। त्रिचक्रेण त्रिबन्धुरेण त्रिवृत्ता रथेन। आर्ष्यां तु पूर्वस्वरता।

(5) पित्समासान्तानां बहुव्रीहिणामन्तोऽकारोऽनुदात्तः स्यादन्यत्र प्रतिपदोक्तलक्षणविधानात्। कल्याणपञ्चमा रात्रयः। मृगनेत्रा रात्रयः। अप्रत्ययः पित्। व्यूढोरस्कः। कप्रत्ययः पित्। यत्र तु विशिष्योदात्तत्वं क्वचिद्विधास्यते तत्र नानुदात्तत्वम्।

---

1 चितः (6-1-163)

2 सक्थं चाऽक्रान्तात् (6-2-198)

3 द्वित्रिभ्यां पाददन्मूर्धसु बहुव्रीहौ (6-2-197)

4 अनुदात्तौ सुप्यतौ (3-1-4)

यथा अज्ञकः। अश्वकः। इत्यादावेकाक्षरेणोत्तरपदेन समासे कप्रत्ययान्तस्यान्तो – दात्तत्वम्।

(6) यत्र प्रतिपदोक्तानां लक्षणोक्तानां वा स्वरविधीनामसंभवः स समासोऽन्तोदात्त स्यात्[1]। समपादः। न चात्र प्रागुक्ताः समासान्तलक्षणाः परान्त परादिपूर्वान्तप्रकृतिभाव लक्षणा वा स्वरविधयः प्राप्नुवन्ति तस्मादयमन्तोदात्तः। इति समासान्तस्वरः।

**॥ इत्थं बहुव्रीहिसमासः समाप्तः ॥**



1 समासस्य (6-1-223)

# तद्धितपरिच्छेदः

## अथ विभक्तितद्धिताः

सुब्विभक्तिप्रातिनिध्येन ये तद्धिता विधीयन्ते तेऽपि विभक्तिसंज्ञा भवन्ति। ताश्च तद्धितविभक्तयश्चतुर्धा– सार्वनामिकाः, दैक्छब्दिकाः, औपपदिकाः सार्वशब्दिकाश्चेति। तत्र सार्वनामिकास्तिस्रः– तृतीया पञ्चमी, सप्तमी च। था थमिति द्वे तृतीये। तसित्येका पञ्चमी। त्र, ह, अ– इति तिस्रः साधारणसप्तम्यः। धुना, र्हि, दि, दा, दानीम् उत्, आरि, समस, द्य, द्यसु, द्युसु एद्युसु, एद्यवि इति कालिकसप्तमस्त्रयोदश [1]। अथ दैक्छब्दिका अपि तिस्रः– प्रथमा, पञ्चमी, सप्तमी च। तस्, अतसु, असु, रि, स्तात, आत्, आ, अहि, एन, लोपश्चेति दशाप्येता प्रथमाश्च पञ्चम्यश्च सप्तम्यश्च। अथौपपदिका– तृतीया, पञ्चमी, षष्ठी, सर्वविभक्तिश्च। अत्र तसित्येका तृतीया च पञ्चमी च षष्ठी च। अतसौ द्वौ सार्वविभक्तिकौ प्रत्ययौ। अथ सार्वशब्दिका तसित्येका सर्वविभक्तिः। तदित्थं त्रयस्त्रिंशदिमाः सर्वा विभक्तयः। तासां प्रदेशाः प्रदर्श्यन्ते।

### 1. सार्वनामिकविभक्तयः

किमिदमेतद्भ्यः परस्यास्तृतीयायास्थं[2] शेषेभ्यस्तु तदादिभ्यः स्था प्रकारे[3] किमिदमेतद्भ्योऽपि थाहेतुप्रकारयोर्दैव्याम् [4]।

**तद्यत्त्यदेतदिदमः किमदोऽन्योभयेतराः।**
**सर्वविश्वे समसिमे नेमैकान्यतरा बहुः ॥1॥**
**डतरान्ता डतमान्ता पूर्वं परमपरमवरमधरं स्वम्।**
**अन्तरमुत्तरदक्षिणमित्येते स्युस्तदादयः शब्दाः [5]॥2॥**

केन प्रकारेण कथम्। क इति किं शब्दः। अनेन प्रकारेण इत्थम्। इदिति इदं शब्दः। एतेन प्रकारेण वा इत्थम्। एतदोप्येदादेशो वक्ष्यते। एभ्योऽन्यस्मात् था प्रत्ययः। तेन प्रकारेण तथा। यथा अमुथा। अन्यथा। उभयथा। इतरथा। सर्वथा। विश्वथा। अन्यतरथा। कतरथा। कतमथा। यतरथा। यतमथा। ततरथा। ततमथा। पूर्वथा।

---

1 'सम्यस्त्रयोदश' इति मूले

2 इदमस्थमुः (5-3-24) एतदो वाच्यः (वा.3235) किमश्च (5-3-25)

3 प्रकारवचने थाल् (5-3-23)

4 था हेतौ च छन्दसि (5-3-26)

5 किं सर्वनामबहुभ्योऽद्व्यदिभ्यः (5-3-2)

परथा। अपरथा। अवरथा। अधरथा। अन्तरथा। उत्तरथा। प्रकारविषयकत्वादन्तरेणापि प्रकारशब्दं तदर्थावगतिः। यथा येन प्रकारेणेत्यर्थः। दैव्यां तु भाषायां किमिदमेतद्भ्योऽपि था दृश्यते। स च हेतौ प्रकारे च। कथा ग्रामं न पृच्छसि। कथा दाशेम। इत्था चन्द्रमसो गृहे। पश्चिशिव त इत्थ भगः। सामान्यस्य भेदको विशेषोऽत्र प्रकारः। बहुभिः प्रकारै भुङ्क्ते इत्येवमुक्ते बहुभिर्विशेषैरित्यवगमात्। सादृश्यं तु न गृह्यते अन्यथा सर्वथेत्यादौ तद्प्रतीतेः। यथा हरिस्तथा हर इत्यादौ तु यत्प्रकारवान् हरिस्तत्प्रकारवान् हर इति बोधने हरे हर सादृश्यं फलतीत्यन्यदेतत्। तस्माद् भेदप्रकार एतैतो थ- थाप्रत्ययौ दृष्टव्यौ।

परे त्वाहुः। एवम् एवा इत्यादिषु दर्शनादम्-इ आ- इत्येते प्रकारार्थे द्वे तृतीयाविभक्ती भवतः। ततः प्राक् संनियोगेन स्वार्थेन थकारः समादिश्यते। कस्माचिच्छब्दादमेव नियम्यते। कस्माचित्वाविभक्तिरैव। इति तृतीया विभक्तिः।

तदादिभ्यः परस्याः पञ्चम्यास्तस् भवति[1] पर्यभिभ्यां च सर्वोभयार्थाभ्याम्[2]। तस्मादिति ततः, यतः, अतः, इतः, कुतः, अमुतः, अन्यतः, इतरतः, उभयतः, सर्वतः, विश्वतः, एकतः, अन्यतरतः, बहुतः, बहुशब्दः संख्यैवेह गृह्यते। नेह बहोः। कतरतः, कतमतः, यतरतः, यतमतः, ततरतः, ततमतः, पूर्वतः परतः, अपरतः, अवरतः, अधरतः, स्वतः, अन्यतरतः, उत्तरतः, दक्षिणतः, परितः, सर्वतः, इत्यर्थः। अभितः, उभयतः, इत्यर्थः। अथ परिषिञ्चतीत्यादौ सर्वतोभावे परिर्दृश्यते। तत्र कस्मान्न तस्। उच्यते। यदि परिषिञ्चतीति क्रियासमासस्तदा समासेन न गतार्थत्वान्न तस्। यदि वाक्यं तदा त्वव्ययत्वादुक्तया तद्धितातिरिक्तया सुब्विभक्त्या गतार्थत्वान्न तस्। यदि तु तद्धित विभक्तेरेवेह विवक्षा क्रियते तर्हि साऽवश्यं प्रयुज्यते। परितः सिञ्चतीति। समानार्थानां समाससुप्तद्धितानां प्रयोक्तृ विवक्षावशंवदेनान्यतमप्रयुक्तेन कृतेऽर्थे तस्प्रयोगा क्षेपो[3] युज्यते। प्रवृत्तिनिमित्तविघातेन तदप्राप्ते। सत्स्वपि समानानेक भृत्येषु न सर्वैरेक हेलया सर्वं स्वामिनः कर्म कर्त्तुं युगपदाक्रम्यते तद्वदिहापि द्रष्टव्यम्। अत एवासौ तस् प्रत्ययो विकल्पेन भवतीति वदन्ति।

परे त्वाहुः। असिति पञ्चमी विभक्तिर्भवति। ततः प्राक् संनियोगेन तकारः समादिश्यते इति पञ्चमी विभक्ति।

इदं भिन्नेभ्यस्तदादिभ्यः परस्याः सप्तम्यास्त्र भवति[4]। हत्विदमोपकिमस्त्र भवति ह भवत्य भवति वा[5] ह तु दैव्यामेव[6]। तस्मिन्निति तत्र। यत्र। अत्र। कुत्र । अमुत्र।

---

1 पञ्चम्यास्तसिल (5-3-7)
2 पर्यभिभ्यां च (5-3-9) सर्वोभयार्थाभ्यामेव (वा.3240)
3 तरप्रयोगाक्षेपो इति मूले।
4 सप्तम्यास्त्रल् (5-3-10)
5 इदमो हः (5-3-11) किमोऽत् (5-3-12)
6 वा ह च छन्दसि (5-3-13)

अन्यत्र। उभयत्र। इतरत्र। सर्वत्र। विश्वत्र। एकत्र। अन्यतरत्र। बहुत्र। कतरत्र। कतमत्र। यतरत्र। यतमत्र। ततरत्रो ततमत्र। पूर्वत्र। परत्र। अपरत्र। अवरत्र। अधरत्र। उत्तरत्र। इतोऽन्यत्र नास्ति। इदम्। इह। किमस्तु कुत्र। कुह। क्व। आर्ष्यां तु कुह शब्दो न प्रयुज्यते। भागवृत्तिकारादयास्त्वार्ष्यां कुत्र शब्दमपि नेच्छन्ति तदयुक्तम्, प्रयोग भूयस्त्वदर्शनात्। प्रयोगाधीनं हि व्याकरणं न व्याकरणाधीनः शब्दप्रयोगः। ततश्च भाषायां शब्दस्यासत्वप्रतिज्ञानं न त्वेवावकल्पते इति द्रष्टव्यम्। इति साधारणसप्तमी।

किं यत्तदन्यसर्वैकेभ्यः परस्याः कालाधिकरणसप्तम्या दा स्यात्[1] तदिदमोर्दा च दार्नीं च[2] र्हि च[3] स्युरिदमो धुना च [4]। कस्मिन् काले कदा। यदा। अन्यदा। सर्वदा। सदा। एकदा। तदस्तु तदा। तदानीम्। तर्हि। तर्ही तिर्दैव्यामेव[5] प्रयुज्यते। आर्ष्यां त्वनद्यतनमात्रे इति भगवान् पाणिनिः [6]। एवमिदमोदाप्रत्ययोऽपि दैव्यामेव। इदा हि व उपस्तुतिम्। आर्ष्यां तु प्रयोगो नास्ति। दानीमादयस्तूभयत्र सन्ति। इदानीम्। एतर्हि अधुना। इमे च दादानीमादयः कालिकप्रत्ययास्त्रादिप्रत्ययापवादेन प्रवर्तन्ते। अनागतमतिक्रान्तं वर्तमानमिति त्रयम्। सर्वत्र च गतिर्नास्तीतिप्रयोगे[7] तु कालस्य देशरूपत्वेनाभिमानात् त्र प्रत्ययः। कालवृत्तित्वाभावेन दाप्रत्ययाप्राप्तेः। अतः एव सर्वत्र देशे इतिवत् सर्वत्र काले इत्यत्रापि न दाप्रत्ययप्रसङ्गः। काले इत्युपादानेन सर्व शब्दस्य तत्र कालार्थकत्वाभावात्। सर्वदा काले इति तु बालाः प्रयुज्ज्यते। अनुवादो वा। यत्र तु कालिकाधिकरणत्वं विवक्षितं तत्रायं दा प्रत्ययः।

परे त्वाहुः– आ इति सप्तमी विभक्तिः। ततः प्राक् संनियोगेन दकार समादिश्यते। अथवा सर्वैकाभ्यामेवायं दकारसमादेशः। किंयत्तदन्येषु तु सन्ति दकारान्ता अप्येते शब्दास्ततः सिद्धम्। ककारात्तावद् अ, अद्, आ, इम्, उ, अव– इत्येवं षट्पदभागाः पर्य्यायेण संनिधाय – क, कद्, का, किम्, कु, कव– इति षट् शब्दान् समानर्थान् नियतप्रयोगान् संपादयन्ति। क कस्मै, कथं, कयेति क शब्दः। क द्रु द्रायप्रचेतसे (ऋक् -मं.1 अ 8 सू. 43 मं-1) कद्व ऋतं कदनृतं क्व प्रत्नाव आहुतिः (1-15-104-4) कद्वदः कदन्नमिति कच्छब्दः कापुरुषः काक्षः, कापथः, कोष्णमिति

---

1 सर्वैकान्यकिंयत्तदः काले दा (5-3-15)

2 तदो दा च (5-3-19) दार्नीं च (5-3-18)

3 इदमोर्हिल् (5-3-16)

4 अधुना (5-3-17)

5 ''तर्ही।तिहिदैव्यामेव'' इति मूले।

6 तयोर्दार्हिलौ च छन्दसि (5-3-20) अनद्यतनेर्हिलन्यतरस्याम् (5-3-21)

7 गतिर्नास्तीदिप्रयोगे इति मूले

का शब्दः। किं किन्नरः किं राजा किं संखा इति किं शब्दः। कुदेशः कुत्र कुह क्व इति कु शब्दः। कवोष्णमिति कवशब्दः। एवं ययदिति ततदिति। अन्य, अन्यदिति शब्दा द्रष्ट्व्याः। ततः परमानिपातोऽयमाधिकरणार्थः सप्तमी विभक्तिः। कदा यदा तदा अन्यदा इति। एवम् अ, इ, इद्, इम, ए, इदम्, इयम्, अयम्, इत्यष्टावेके शब्दाः। अस्मै इह इत्थम्। इमौ, एभिः, इदम्, इयम्, इत्युदाहरणानि। तत्रेच्छब्दाविभिक्तिः। इदा। इदानीमिति आनीम् अत्र तु आ, अन्, ईम्- इति शब्दत्रयसमाहारः। आ विभक्तिः। अनिति ना शब्दः ईमिति निपातो निरर्थकोऽपि सर्वार्थो विववक्षितयावदर्थप्रातिनिध्ये सर्वत्र प्रयुज्यते तेन विकल्पितं व्यतिरिक्तमन्यदा वेत्यादयः शब्दास्तत्राद्याः तथा च तदानीमित्यस्य तस्मिन् काले नत्वन्यकाले इत्येवं निर्धारणायुक्तोऽर्थो लभ्यते। अत एवेदं तद्भ्यामेवानीं प्रयोगो न किंयद्भ्याम्। ततो निर्द्धारणस्यायोग्यत्वात्। अधुना इति त्वदः शब्दस्य तृतीयायां रूपम्।

किंयत्तदेतद्भ्यः परस्या अनद्यतनकालाधिकरणसप्तम्यार्हि स्याद्विकल्पेन [1] यदः संभावनायां दि च [2]। पक्षे किंयत्तदभ्यो दाविधिः समुच्चीयते। कर्हि। कदा। यर्हि यदा। तर्हि तदा। एतर्हि। एतदो दाविधिर्नास्ति। अथ यदो दिप्रत्ययोऽप्यादिश्यते। यदि। तर्हीत्येतत्प्रतिद्वन्द्विभूते विषये यदि शब्दः स्थानं लभते। यर्हि यदि यदेति समानार्थाः।

इदमः परस्याः सप्तम्याः समस् भवति संवत्सरे [3] पूर्वपूर्वतराभ्यां तूदारी [4]। इदम् इस्तस्य च वृद्धिः। ऐषमः। अस्मिन् संवत्सरे इत्यर्थः। परारि। पूर्वतरे संवत्सरे इत्यर्थः।

इदमः परस्याः सप्तम्या द्य भवत्यहनि [5] समानाद् द्यस् [6] उभयाद् द्युस [7], पूर्वापराधरोत्तरोभयेतरान्यतरान्येभ्य एद्युस् [8] परस्मादेद्यवि [9]।

---

1 अद्यतने र्हिलन्यरस्याम् (5-3-21)

2 अपाणिनीयः प्रयोगः। अव्युत्पन्नमव्ययम्

3 सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युपरेद्युरधरद्युरुभयेद्युरुत्तरतेद्युः (5-3-22) इदमः (इश) समसण् (वा.3247)

4 पूर्वपूर्वरतयोः परादेश, उदारी च प्रत्ययौ संवत्सरे (वा.3248)

5 इदमोऽश्भावो द्यश्च (3249)

6 समानस्य सभावो द्युश्चाहनि (वा.3245)

7 द्युश्चोभयाद्वक्तव्यः (वा.3251)

8 पूर्वान्यान्यतरेतरापराधरोभयोभयोत्तरेभ्य एद्युस् 9(वा.3250)

9 परस्मादेद्यव्यहनि (वा.3248)

अस्मिन्नहनि अद्य। अत्र नागोजिभट्टः पुष्येण युक्तः कालोऽयमित्यर्थके अद्य पुष्य इत्यादौ शक्तिमत्प्रधानता। इदमह इत्यर्थेऽप्यद्येत्यन्ये। व्यपदेशिवद्भावेन स प्रयोग इत्यपरे इत्याह। कालविशेषाणां तत्तद्भौतिकावच्छेदेन सिद्धत्वात्। कालस्यान्याकाल-वृत्तित्वचाभिप्रायेण तादृशाः प्रयोगा, न त्वद्य शब्दो लोके वेदे वा क्वचिदप्यसप्तम्यन्तो दृश्यते इति नैरुक्ताः। समानेऽहनि सद्यः। उभयस्मिन्नहनि उभयद्युः। पूर्वस्मिन्नहनि पूर्वेद्युः। अपरेद्युः। अधरेद्युः। उत्तरेद्युः। उभयेद्युः। इतरेद्युः। अन्यतरेद्युः। अन्येद्युः। परस्मिन्नहनि परेद्यवि।

परे त्वाहुः। परेद्यवीति नायं तद्धितः प्रयोगः। अपि तु सप्तम्यन्तस्य परे शब्दस्य सप्तम्यन्तेन द्यविशब्देनाऽयं विभक्त्यलोपी कर्मधारय समासः। प्रकाशाऽर्थोऽयं[1] द्योशब्दो वृत्तिविषये दिवसपरः स्यात् स यावत् ब्रूयात् परस्मिन् दिने इति वाक्येन तावदाह- परेद्यवीति समासेन। एवं दिवसार्थोऽयं सकारप्रत्ययान्तो द्युस् शब्दो द्रष्टव्यः। स चायमधिकरणविभक्त्यर्थप्रधानसत्ववचनो नियतप्रयोगविषयो निपातः। तेनैते विभक्त्य-लोपिनः कर्मधारयाः सप्त भवन्ति। अन्येद्युः। अन्तरेद्युः। इतरेद्युः। उत्तरेद्युः। अधरेद्युः। अपरेद्युः। पूर्वेद्युरिति। अथोभयेद्युरुभयद्युरिति विकल्पेन विभक्त्यलोपः। सद्य इति विद्यमानार्थेन सच्छब्देन समानार्थेन सशब्देन वाऽधिकरणप्रधानक्षणार्थकस्य द्यसित्यव्यस्य समासः। विद्यमाने समये इति वा समाने समये इति वार्थः। अद्य इति त्वस्मिन् द्यवीति समासे पूर्वोत्तरपदयोरप्रथमाक्षरलोपेन सिद्धम्। इति कालाधिकरणसप्तमी।

## 2. दैक्छब्दिकविभक्तयः

दिग्देशकालवर्तिभ्यः परावरोत्तरदक्षिणेभ्यः परासां प्रथमा पञ्चमीसप्तमीनां तस्[2] स्यादतस्तु पूर्वात्[3]। पर[4]- परः परस्मात्। परस्मिन्, वा परतः, परे, परेभ्यः, परेषु वा परतः, परा परस्याः परस्यां वा परतः। परा पराभ्यः परासु वा परतः, परतो ग्रामस्य। तसो योगे षष्ठी । अवरतः, उत्तरतः,दक्षिणतः। पूर्वशब्दादतस् भवति पूर्वस्य च पुरादेशो वक्ष्यते। पुरतः पूर्वतः। अग्रतः संमुखतो वेत्यर्थः। संमुखाग्रपूर्वाणां व्यवहारः संकीर्णतया दृश्यते लोके। दिग्विशेषस्थत्वमेव व प्रवृत्तिनिमित्तीकृत्य प्रवर्त्तमानोऽयं पूर्वशब्दः क्वचिद् वक्तृसम्मुखदेशस्य तत्वाभिमानेनाग्रदेशेऽपि प्रयुज्यते इत्यूहृयम्। पाणिनिस्तु पुरतः शब्दं न स्पष्टमन्वाचष्टे। तेन तदानीमस्य मन्दप्रचारता विज्ञायते। इदानीं तु भूरिप्रचारोऽयम्।

---

1 प्रकाशोऽर्थोऽयं इति मूले।

2 दक्षिणोत्तराभ्यामतसुच् (53-28) विभाषा परावराभ्याम् (5-3-29)

3 अपाणिनीयमेतत्।

4 परे त्वाहु इति मूले।

दिग्देशकालवर्तिभ्यः पूर्वाधरावरपरेभ्यः परासां प्रथमापञ्चमीसप्तमीनामस् स्यात्[1]। परे त्वाहुः। सुब्विभक्तिप्रकरणेऽनकारान्तादस् प्रत्ययो दृष्टः पशोर्दृषद् इति। स इह कतिपयेभ्योऽकारान्तेभ्यः प्रथमासप्तम्यर्थेऽप्यादिश्यते तत्संनियोगेन तेषां व्यञ्जनान्तत्वं च। तत्रापि, असि परे पूर्वाधरावराणां पुर, अथ, अत् इत्यादेशाः। अवरपरयोरन्त्याकार लोप एव वा। तत्रैतदसन्तौ परावरशब्दौ परतः प्रत्ययान्तरसत्वे, उत्तरपदसत्व एव वा प्रयुज्येते[2] प्रायेण। पूर्वं पूर्वस्मात्। पूर्वस्मिन्निति वा पुरो ग्रामस्य। एतत्प्रत्यययोगे षष्ठी। अधरमधरस्मादधरस्मिन्निति वा अथः पटलस्य। अवरमवरस्मादवरस्मिन्निति वा परस्तात्। परः शतं परः सहस्रं परो लक्षम्। परस्परम। अवरस्तात्। पुर उदेति सूर्य्य। पूर्वस्यां दिशि इत्यर्थः। पुरोहितः, अग्रदेशे स्थापित इत्यर्थः। पुरस्तेनोक्तं पश्चादयमागतः। प्रथममित्यर्थः। परस्तादेशः, पृष्ठत इत्यर्थः। यत्र तु द्रव्यवर्तिनः पूर्वाधरावरपराः स्युस्तत्र नाबं विभक्तिप्रत्ययः। पूर्वस्मिन् गुरौ वसति। अधरमधमम्। अवरमवमम्। अह् इत्यूष्मान्तो वृत्तिविषये निकृष्टवचनः। तस्मात्तरतमावातिशायिकौ। पर उत्कृष्टः। इह कस्मान्न भवति। पूर्वस्मिन् देशे वसतीति। नैषः देशः। देशविशेषणमेतत्। देशशब्देनोपात्तस्य देशस्य विशेषकमिदं भवति। तत्र च पूर्वपदार्थे देशोऽर्थोऽनन्तर्भावितः। पुरस्ताद्देशादिति तु दिककालव्यावृत्यर्थ विशेषणशब्दो देशः। यदा दिगादिस्थोऽयं पूर्वदिशब्दो विशेषत्वेन प्रक्रम्यते। दिगादयस्तु विशेषत्वेन तदायं प्रत्ययो भवति।

दिग्देशकालवर्त्तिन ऊर्ध्वात परासां प्रथमापञ्चमीसप्तमीनां रि स्यात्। रौ परौ उर्ध्वस्योपादेशः [3]। ऊर्ध्वमूर्ध्वादूर्ध्वे वा उपरि पर्वतस्य। एतत प्रत्यययोगे षष्ठी। द्विविधाः खलु पूर्वादयः शब्दा भवन्ति दिग्देशकालभागसंज्ञावृत्तयो व्यवस्था शब्दा एके, केवलदिग्छब्दा निरुढसंज्ञाशब्दाश्च द्वितीयाः। तत्र व्यवस्थायां षष्ठ्यन्तपदं पञ्चम्यन्तपदं वाऽवश्यं संनिधत्ते। दिक्छब्दत्वे तु तदपेक्षा नास्ति। परे त्वाहुः लक्षणेत्थंभूताख्यानभागार्थकेन परिशब्देन समुचितस्योतो निपातस्य तकारलोपादुपरि शब्दसिद्धिः। उर्ध्वलक्षणे ऊर्ध्वभूते ऊर्ध्वभागे वा प्रदेशे उत्परीति वक्तुमुपरीति प्रयुङ्क्ते।

दिग्देशकालवर्तिभ्यो दक्षिणोत्तरापराधरेभ्यः[4] प्रथमापञ्चमीसप्तमीनामात् स्यात्। आदिति पञ्चमीविभक्तिः सुब्विभक्तिप्रकरणे दृष्टाः, तस्याः

---

1 पूर्वाधरावराणामसि पुरधवश्चैषाम् (5-3-39)

2 प्रयुज्यते इति मूले।

3 उपर्युपरिष्टात् (5-3-31)

4 पश्चात् (5-3-32) उत्तराधरदक्षिणादातिः (5-3-34)

प्रथमासप्तम्यर्थेऽप्यनुज्ञानमेतत्प्रकरणार्थः। सर्ववचनार्थत्वे च। दक्षिणादुत्तरादग्रामस्य आद्योगे षष्ठी। आकारादौ प्रत्यये परेऽपरस्य पश्चभावः। अपरमपरस्यादपरस्मिन्निति वा पश्चादेतस्य वृत्तस्य।

दिग्देशकालवर्तिभ्यः पूर्वपरदक्षिणोत्तरापरेभ्यः परयोः प्रथमासप्तम्योरास्यादाहि[1] तु दक्षिणोत्तराभ्यां दूरत्वे गम्ये[2]। अस्मिन्नाकारे पूर्वस्य पुरादेशो वक्ष्यते। पुरा। काल एवायं विशेषेण प्रयुज्यते सोऽपि च विप्रकृष्टो विवक्षितः। अत्यन्तदूरवृत्ते पूर्वकाले इति तदर्थः। परा गतः। पलायते। परस्मिन् दूरदेशे गच्छतीत्यर्थः। दक्षिणा ग्रामात्, उत्तरा, एतदाकारयोगे पञ्चमी पश्चा एतस्माद् वृत्तात्। आहि स्याद्दक्षिणोत्तराभ्याम्। दक्षिणा हि वनात्। उत्तरा हि ग्रामात्। आहि योगे पञ्चमी।

दिग्देशकालवर्तिभ्यः पूर्वपरापरावराधरोत्तरदक्षिणेभ्यः परयोः प्रथमा सप्तम्योरेन स्यात् सामीप्ये गम्ये[3]। ग्राममुत्तरेण। पर्वतमुत्तरेण। ग्रामस्य पर्वतस्य वाऽत्यन्तसंनिहितोत्तरभागे इत्यर्थः। अत्रावध्यवधिमतोः सानिध्यं गम्यते। ग्रामं दक्षिणेन पूर्वेणापरेण वा। उत्तरेण ग्रामस्य। एन योगे[4] द्वितीया भवति षष्ठी च[5]।

परे त्वाहुः आ, एन इति द्वे अपि तृतीय सुब्विभक्तिः। आसां प्रयोगविशेषेऽर्थविशेषनियमश्चोपपदे विभक्तिनियमश्चापूर्वोऽर्थः स्यात् स आदेष्टव्य इति।

पश्चा पश्च च दैव्यामेव[6]। नो ते पश्चा। आकारवदकारो विधीयते विभक्तिलोपो वा पश्च हि सः। आर्ष्यां तु पश्चादित्येव प्रयुज्यते।

अञ्चतिवृत्तादिदक्छब्दात् परासां प्रथमापञ्चमीसप्तमीनां लुप्तप्रत्ययः स्यात्[7]। अन्तरेणापि वा विभक्तिस्तदर्थप्रत्ययो भवति। तेनासौ लुप्तप्रत्यय इत्युच्यते। तद्धितविभक्तिलोपे पुंवद्भावः। प्राक् पर्वतात् अवाक् प्रदेशात्। प्रत्यक् वनात्। उदग् ग्रामात्। अञ्चतिवृत्तयोगे पञ्चमी एवं देशे काले च। इति दैक्छब्दिकाः प्रत्ययः।

---

1 दक्षिणादाच् (5-3-36) उत्तराच्च (5-3-38)

2 आहि च दूरे (5-3-37) उत्तराच्च (5-3-38)

3 एनबन्यतरस्यामदूरेऽपञ्चम्याः (5-3-35)

4 योगेन द्वितीया इति मूले।

5 एनपा द्वितीया (2-3-31) एनपा इति योगविभागात्षष्ठ्यपि

6 पश्च पश्चा च छन्दसि (5-3-33)

7 अञ्चेर्लुक् (5-3-30)

असादालुप्तप्रत्ययान्तादिक्दक्छब्दाद्देशे गम्ये तात् स्यादुपरेः स्तात्[1]। स्यात् परातस्तु दैव्यां कात् स्यात्। अस्– पुरस्तात्। अधस्तात्। अवस्तात्। अवरस्तात्। परस्तात्। आत्- दक्षिणात्तात्। उत्तरात्तात्। अधरात्तात्। पश्चात्तात्। आ- दक्षिणातात्। उत्तरातात् पश्चातात्। लुप्तात्- उदक्तात्। प्राक्तात्।

आ पश्चातान्नासत्या पुरस्तादाश्विनायातमधरादुदक्तात् (7-5-72-5) उपरेः स्तात् स्यात्। परा शब्दादाप्रत्ययान्तादपि दैव्यां भाषायां कात् स्यात्। पराकात्। एषा स्या युजाना पराकात् (7-5(75-4) आत एवायं प्राक् ककारो वा तकारो वा सकारतकारौ वा विधीयन्ते। परे त्वाहुः, आके उपाके पराके इत्येदं दृश्यन्ते केचिन्निपात शब्दाः। तत्र पराके इति पराक् शब्दात् सप्तमीवदिहापि पराकशब्दात् पञ्चम्यां पराकाच्छब्दसिद्धिरिति।

## 3. औपपदविभक्तयः

हीयमान पापयोगेऽतिग्रहाव्यथनक्षेपार्थयोगे चाकर्तृतृतीयायास्तस् स्यात्[2]। वृत्तेन हीयते वृत्ततो हीयते वृत्तेन हीनः– वृत्ततो हीनः। वृत्तेन पापः, वृत्ततः पापः। अतिक्रम्य ग्रहोऽतिग्रहः।चारित्रेणातिगृह्यते चारित्रतः। चारित्रेणान्यानतिक्रम्य वर्तते इत्यर्थः। अव्यधनमचलनम्। वृत्तेन न व्यथते, वृत्तो न व्यथते। वृत्तेन न चलतीत्यर्थः। क्षेपो निन्दा। वृत्तेन क्षिप्तः। वृत्ततः क्षिप्तः। वृत्तेन निन्दित इत्यर्थः।

अहीयरुहियुक्तापादाने[3] कर्मप्रवचनीयप्रतियोगे च पञ्चम्यास्तस् स्यात्[4]। अपादाने तावत्– ग्रामादागच्छति। ग्रामतः, नगरतः, देशतः, गृहतः प्रतियोगे प्रद्युम्नः कृष्णतः प्रति। कृष्णतः पाण्डवतः प्रति। हीयरुहिधात्वर्थकृते त्वपादाने नास्ति। स्वर्गाद्धीयते। पर्वतादवरोहति।

रोगवचनादपनयनेऽन्यस्मात्तु व्याश्रये षष्ठ्यास्तस् स्यात्[5]। अपनयनं चिकित्सा। प्रवाहिकातः कुरु। प्रतीकारमस्याः कुर्वित्यर्थः, प्रवाहिकायाः प्रकोपनं करोतीत्यत्र नास्ति चिकित्सार्थाभावात्। व्याश्रये तु सर्वस्मादेव शब्दात्तस् भवति। नानापक्षसमाश्रयो व्याश्रयः। देवा अर्जुनतोऽभवन्। आदित्याः कर्णतोऽभवन्। अर्जुनस्य पक्षे इत्यर्थः।

---

1 दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वसतिः (5-3-27)

2 हीयमानपापयोगाच्च (5-4-47) अतिग्रहव्यथनक्षेपेष्वकर्तरि तृतीया (5-4-46)

3 अपादाने चाहीरुहोः(5-4-45)

4 प्रतियोगे पञ्चम्यास्तसिः(5-4-44)

5 रोगाच्चापनयने (5-4-49) षष्ठ्या व्याश्रये (5-4-48)

भवदादिसंप्रयोगे सर्वासां विभक्तीनां तदादिभ्यः क्वचित् त्रतसौ दृश्यते[1]। भवान् दीर्घायुः। देवानां प्रियः। आयुष्मानिति भवदादयः। तद् यद् एतदित्यादयस्तदादयः। स भवान् तत्र भवान्। ततो भवान्। तं भवन्तं ततो भवन्तं तत्र भवन्तम्। तेन भवता ततो भवता तत्र भवता तस्मै भवते ततो भवते तत्र भवते। तस्माद् भवतः, ततो भवतः, तत्र भवतः तस्मिन् भवति तत्र भवति ततो भवति। स दीर्घायुः, तत्र दीर्घायुः, ततो दीर्घायु। तं दीर्घायुषं तत्र दीर्घायुषम्। ततो दीर्घायुषम्। स देवानां प्रियः, तत्र देवानां प्रियः। ततो देवानां प्रियः। तं देवानां प्रियं तत्र देवानां प्रियं, ततो देवानां प्रियम्। स आयुष्मान्, तत्रायुष्मान् तत आयुष्मान्। तमायुष्मन्तं तत्रायुष्मन्तं तत आयुष्मन्तम्। इत्युपपदविभक्तयः।

## 4. सार्वशब्दिकविभक्तिः

आद्यादिभ्यः सर्वासां विभक्तीनां तस् स्यात्[2]। आदावित्यादितः, मध्यतः, अन्ततः, अग्रतः, पृष्ठतः, पार्श्वतः। आकृतिगणोऽयम्। स्वरेणस्वरतः, वर्णतः, इत्यादि। विवक्षाधीनत्वादिमास्तद्धितविभक्तयः सुब्विभक्तिभिर्विकल्प्यते। इति सार्वशब्दिकविभक्तिः।

इत्थं सार्वनामिकाभिदैकृछब्दिकाभिरोपपदिकाभिः सार्वशब्दिकाभिश्च तद्धितविभक्तिभिः कृतमिदं विधितन्त्रं वृत्तम्। शेषतन्त्रमतः परमुच्यते।

## अनुविधिः

तत्र प्रत्ययविकारः, प्रकृतिविकारः, पुंवद्भावः, लिङ्गवचनादेशः, स्वरविधिश्चेत्येवं पञ्चैते विभक्त्याश्रयविधयो भवन्ति। ते क्रमेण प्रदर्श्यन्ते।

## 5. प्रत्ययविकाराः

ऋचि त्रस्य दीर्घः प्रयुज्यते[3]। यत्रा नश्चक्र। अत्रा ह गोरमन्वत। सामयजुषोर्लोकभाषायां च न दीर्घः। अत्र। यत्र। तत्र। इति प्रत्ययविकारादेशः।

## 6. प्रकृतिविकारः

किमः कु स्यादहत्रेषु परेषु[4] कः स्यात्थंथादार्हिषु[5]। क्व। कुह। कुत्र। कथम्। कथा। कथा। कदा। कर्हि।

1 इतराभ्योऽपि दृश्यन्ते (5-3-14)
2 आद्यादिभ्यः उपसंख्यानम् (वा.3339)
3 ऋचि तुनुघमक्ष
4 कु तिहोः (7-2-104)
5 किम् कः (7-2-103)

इदम् इत् स्यात् थंथोः परयो[1] रि स्यात् तसि हदादानींसमस्सु च परेषु अस्याद्धुनाद्ययोः परयोः, हो त्वेत् स्यात्। समसीकारस्य वृद्धिश्च। थंथोरित्। इत्थम् इत्था। तसादीष्विः। इतः। इह, इदा, इदानीम्। समसि इकारात् प्रागकारद्वयागमः। एषमः। धुनाद्ययोरः। अधुना। अद्या हौ त्वेत् स्यात्। एतर्हि।

परे तुअधुनेत्यदस शब्दादस् भागविकलादुनाप्रत्ययेन समर्थनीयम्। एतर्हीत्येच्छब्दात्। उभयं वेतच्छब्दादेव। न त्विमाविदं शब्दवृत्तावित्याहुः।

एतद् इत् स्यात् थं थोः परयोरस्यात्तसित्रे च हौ त्वेत स्यात्[2]। इत्थम्। इत्था। अतः अत्र। एतर्हि।

परे तु थुमीदम् एव प्रयोगो न त्वेतद इत्याहुः।

अदसोऽमु स्यात् थातसत्रेषु परेषु[3]। अमुथा। अमुतः। अमुत्र।

यत्तत्त्यदां यतत्याः स्युस्थातस् त्र दानीं दा र्हिषु परेषु[4]। यथा यतः। यत्र। यदा। यदानीम्। यर्हि। तथा। ततः। तत्र। तदा। तदानीम्। तर्हि। त्यथा। त्यतः। त्यत्र।

सर्वस्य सः स्याद्विकल्पेन दि परे[5] समानस्य च सः स्याद् द्यसि परे[6]। सर्वदा। सदा। सद्यः।

पूर्वपूर्वतरयो पर्भावः स्यादुदार्य्योः परयो[7]। अव्यवहितातीत वत्सरे। परुत्। एकान्तरितातीतवत्सरे। पुरारि।

पूर्वाधरावराणां पुरधवः स्युरसतसा परत्वेरौ तूर्ध्वस्योपस्यादपरस्य तु पश्च स्यादादापरत्वे[8]। पुरः। अद्यः। अवः पूर्वस्यायं पुरादेशोऽतसि चाकारे च। पुरतः। पुरा। अधराद्वरयोस्तु अतस् प्रत्यय आकारो वा नादिश्यते। उपरि। पश्चात्। पश्चा। पश्च। इति प्रकृतिविकाराः।

---

1 इदम् इश् (5-3-3)
2 एतदो वाच्यः (वा.3235)
3 अदसोऽसोर्दादुदो मः (8-2-80)
4 त्यदादीनामः (7-2(102) अतोगुणे (6-1-97)
5 सर्वस्य सोऽन्यतरस्यां दि (5-3-6)
6 समानस्य सभावो घस् चाहनि (वा.3245)
7 पूर्वपूर्वतरयोः परादेशः, उदरी च प्रत्ययो संवत्सरे (वा 3246)
8 पूर्वाधरावरणामसि पुरधवश्चैषाम् (5-3-39) उपर्युपरिष्टात् (5-3-41), पश्चात् (5-3-32)

## 7. पुंवद्भावः

थातसूत्रलोपेषु पूर्वस्याः स्त्रियाः पुंवद्रूपम्[1]। बह्वीभिः प्रक्रियाभि बहुथा। अपराभिः क्रियाभिरपरथा। यावद् बहवीभ्यस्तावद् बहुतः। अवरस्या अवरतः। उत्तरस्या उत्तरतः। दक्षिणस्या दक्षिणतः। बह्वीषु बहुत्र। उत्तरस्यामुत्तरत्र। प्राची दिग् वा प्राच्या दिशो वा प्राच्यां दिशि वा प्राग् ग्रामात्। प्रत्यग् नगरात्। इति पुंवद्भावः

## 8. लिङ्गवचनादेशः

तद्धितविभक्त्यन्तानां प्रातिपदिकत्वेऽव्ययत्वं तद्धितविभक्त्यानिमित्तोपशमेन सुब्विभक्त्ययोगात् विभक्त्यर्थस्य लिङ्गसम्बन्धायोग्यत्वात्। सर्ववचनसाम्याच्च[2]। यावदसौ ब्रूयात् तस्मिन् तयोस्तेष्विति वा तावद् ब्रूते तत्रेति। न तत्र शब्दा (द्) विभक्त्यन्तरमुत्पादयितुं शक्यते अधिकरणाद्यर्थान्तरानुपस्थानात्। विभक्त्यन्तस्याद्रव्य वचनत्वेनायोग्यत्वाल्लिङ्गसम्बन्धोऽपि नास्ति। अधिकरणत्वमात्रमपेक्षते न संख्याविशेषमित्यतः सर्वेषु वचनेषु त्रादय प्रत्यया एकरूपा भवन्ति। इत्थं चाव्ययत्वं सिद्धम्। तदुक्तम्–

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥** इति लिङ्गवचनादेशः।

## 9. क्वस्वरितम्

थातस्त्रर्हिदिभ्यः पूर्व स्वर उदात्तः स्याच्छेषेऽनुदात्तः[3]। यथा। तथा। कथा। यतः। ततः। कुतः। अतः। बहुतः। अमुत्र। यर्हि। तर्हि। कर्हि। एतर्हि। यदि। तस्प्रत्ययश्चतुर्धा सार्वनामिकश्च दैक्छब्दिकश्च, औपपदिकश्च, सार्वशब्दिकश्चेति। तत्र दैक्छब्दव्यतिरिक्ताः सर्वे तस् प्रत्यया इह गृह्यन्ते। सार्वशब्दिकस्तस् त्र – आदितः। मध्यतः। अन्ततः। अग्रतः। पृष्ठतः। औपपादिकस्तस्– वृत्ततः। ग्रामतः अर्जुनतः। कर्णतः। औपपदिकस्य त्रस्याप्यत्र ग्रहणम्। तत्र।

यथेति सर्वानुदात्तं पादान्ते[4]। तत्रेमिभृगवो यथा। अन्यत्राद्युदात्तैव। यथा नो अदितिः करत्।

---

1 तसिलादिष्वाकृत्वसुचः (6-3-35)
2 तद्धितश्चासर्वविभक्तिः (1-1-38)
3 लिति (6-1-193)
4 यथेति पदान्ते (फिट्सूत्र 4-85)

इदमस्त्वन्वादेशविषयात् परतस्मुदात्तः[1] स्यान्न तु पूर्वस्वरः[2]। इतः। तकाराकार उदात्तः। इकारोऽनुदात्तः। अन्वादेशे त्विदमोऽकारादेशः। अतः सर्वानुदात्तम्[3]। प्रत्ययोदात्तत्वादन्तोदात्तं वा[4]।

अतोऽत्रेति सर्वानुदात्ते स्यातामन्वादेशे[5]। एतस्मिन् ग्रामे सुखं वसामः। अथात्राधीमहे। अतो न गन्तास्मः। अत्रेत्यनुदात्तावकारौ। अत इत्युदात्तावकारो। एतद एवेह सर्वानुदात्तविधिर्न त्विदमद्वत्याहुः। तेनेदमोऽन्वादेशे, अत इत्यन्तोदात्तम्।

थंहदादानींधुना प्रत्यया आद्युदात्ताः स्युः प्रत्ययान्तौ त्वाद्युदात्तौ स्यातां कुहसदौ नित्यं कदातदौ विकल्पेन। इत्थम्। कथम्। इह। सर्वदा। एकदा। अन्यदा। यदा। इदानीम्। तदानीम्। अधुना। थं ह दा उदात्ताः प्रकृतिभागोऽनुदात्तः। तेनैते थंहदा प्रत्यान्ता अन्तोदात्ताः सिद्धाः किन्तु कुह शब्दः सदाशब्दश्च नान्तोदात्तौ। आद्युदात्तयोरेव सर्वत्र प्रयोगात्। कदा शब्दस्तूभयथा प्रयुक्ता दृश्यते। तदा शब्दोऽपि द्विविधोऽस्ति। अन्तोदात्त एकः। आद्युदात्तोऽपर इति कैयटः। दानीं धुनयोराद्यावाकारावुदात्तौ[6]। शेषाअनुदात्ताः।

द्यद्यस्द्युसेद्युसन्ता अन्तोदात्ता, एद्यविसमसुदारयः प्रत्यया आद्युदात्ताः[7]। अद्य। सद्यः। उभयद्युः। पूर्वेद्युः। अन्तोदात्ता एते। परेद्यवि। एकार उदात्तः। ऐषमः। स उदात्तः। परारि, आ उदात्तः।

दैक्छब्दिकतसतससादाह्याकात् प्रत्ययान्तानामन्त उदात्त स्यादाद्युदात्तस्तु पराशब्दः[8]। तस्-परतः। अवरतः। दक्षिणतः। उत्तरतः। अतस्-परतः। अस्-पुरः। अद्यः। अवः। आत्-दक्षिणात्। उत्तरात्। पश्चात्। आहि-दक्षिणाहि। उत्तराहि। आ-पुरा। दक्षिणा। उत्तरा। पश्चा। अन्तोदात्ता एते। पराशब्दस्त्वाप्रत्ययान्तोऽप्याद्युदात्तः[9]।

---

1 परस्तमुदत्तः इति मूले।

2 आद्युदात्तश्च (3-1-3)

3 इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ (2-4-32)

4 अत्र सर्वानुदात्तत्वं चिन्त्यमेव तसिल् प्रत्ययस्य अनुदात्तत्वाभावात्।

5 एतदस्त्रतसोस्त्रतसौ चानुदात्तौ (2-4-33)

6 पाणिनीयस्तु अधुना प्रत्ययः तत्र आद्युदात्तश्च इत्यनेन आद्युदात्तत्वं युक्तम्। धुना प्रत्ययस्वीकारे तु अकारस्याद्युदात्तता नसिद्ध्यति। अत अत्राकास्यानुदात्तता चिन्त्या।

7 आद्युदात्तश्च (3-1-3),

8 आद्युदात्तश्च (3-1-3)

9 निपाता आद्युदात्ताः (फिट्सूत्र 4-80)

रिरिष्टात्तादृभ्यः पूर्वस्वर उदात्तः स्यात्[1]। उपरि। उपरिष्टातापकारा दकार उदातः। पुरस्तात्। परस्तात्। अवरस्तात्। अवस्तात्। अधस्तात्। स्तात् प्रत्ययादयं प्राक्तनोऽकार उदात्तः।

एने लोपे च पूर्वः प्रकृत्या[2]। दक्षिणेन। उत्तरेण। पूर्वेण। प्राक्। प्रत्यक्[3]। अवाक्। उदक्।

यस्योदात्तत्वं विधीयते ततोऽन्ये तत्पदनिष्ठाः सर्वे स्वरा अनुदात्ताः[4]। उदात्तात्परस्याव्यवहितस्यानुदात्तस्य स्वरितत्वं[5], स्वरितात्परेशामनुदात्तानां प्रचितत्व[6] मुदात्तस्वरिताव्यवतिपूर्वस्य त्वनुदात्तस्य सन्नतरत्वम् प्रजायते[7]। प्रचय उदात्तमय एकश्रुतीति पर्य्यायवाचिनः। उदक्तात्। उरुदात्तः। दः स्वरितः। ता प्रचितः। परेद्यवि। पोऽनुदात्तः। रे उदात्ताः द्य स्वरितः। वि प्रचितः। आद्युदातपदपरत्वे तु ताकारो विकारश्चानुदात्ततरः स्यान्न तु प्रचित इति बोध्यम्।

तदित्थं प्रत्ययविकारः, प्रकृतिविकारः, पुंवद्भावः, लिङ्गवचनोद्देशः स्वरविधिश्चेत्येते पञ्चभिः कृतं विभक्तिविशेषतन्त्रं वृत्तम्।

## (ब) परिच्छिन्नप्रत्ययाः

परिच्छेदो मानम्। तच्चतुर्द्धा। संख्या, गुरुत्वम्, आयामः, परिणाहश्च। द्वित्वादयः परार्द्धपर्य्यन्ताः संख्याः। पतनासमवायिकरणं गुरुत्वम्। तद्विपर्य्ययविवक्षया लघुत्वं व्याख्यातम्। ह्रस्वत्वदीर्घत्वादिलक्षणं लम्बनमायामः। अणुत्वमहत्वादि लक्षणं पारिमाण्डल्यं परिणाहः। तत्रायाम-परिणाहौ परिमाणशब्देनाख्यायेते। प्रमाणं तु चक्षुरादिकं ज्ञानजनकं सर्वेभ्योऽप्यतिरिच्यते इति पदार्थनिष्ठानां वैशेषिकाणां समयः। मानं चतुर्द्धा-संख्या, तुला,अङ्गुलिः प्रस्थं च। तत्र वण्टकादिभिः कृतं संख्यामानम्। संख्या सा। गुञ्जादिभिः कृतं तुलायाम्। गुरुत्वं तत्। यवोदरादिभिः कृतमङ्गुलिमानम्। आयामः सः। स द्वेधा– ऊर्ध्वाधरकृतः, तिरश्चीनश्च। खातद्रोणादिभिः कृतं

1 लिति (6-1-193)
2 एनप् पित्वात् अनुदात्तस्तेन प्रकृतेः स्वर एव भवति
3 प्राक्प्रत्यकित्यादौ प्रकृतेरेव अवशिष्टत्वेन स्वरपरिवर्तनं न भवति।
4 अनुदात्त पदमेकवर्जम् (6-1-158)
5 उदात्तानुदात्तस्य स्वरितः (8-4-66)
6 स्वरितात्संहितायामनुदात्तानाम् (1-2-39)
7 उदात्तस्वरितपरस्य सन्नतरः(1-2-40)

प्रस्थमानम्। परिणाह विशेषः सः। परिणाहोऽपि द्वेधा-परिमाण्डल्यं च, परिधिकृतान्तर्व्याप्तिश्च। सर्वं चैतत् प्रमाणं च परिमाणं च इति पदशक्तिनिष्ठानां नैघण्टुकानां समयः। पदनिष्ठानां वैयाकरणानां समये तु स्वल्पमधिकं वेति प्रत्ययनियामकं मानम्। तद् द्वेधा द्रव्यलक्षणं गुणलक्षणं च। आद्यं चतुर्धा-दिग्, देशः,कालः, द्रव्यं च। वामं दक्षिणं वेति प्रत्ययनियामिका दिक्। दूरमन्तिकं वेति प्रत्ययनियामको देशः। भूतं भविष्यचेति प्रत्ययनियामकः कालः। समुदायोऽवयवश्चेति प्रत्ययनियामकं द्रव्यम्। एषु परिच्छेदलक्षणः प्रत्ययो नास्ति। अथ गुणलक्षणं मानं चतुर्द्धा– संख्यानम्, उन्मानम् प्रमाणम् परिमाणं च। एकं बहु वेति प्रत्ययनियामकं संख्यानम्। संख्यैव सा। निमान निमेयलक्षणस्य मूल्यस्य परिच्छेदकत्वे संप्रतिपन्नेऽपि तत्र विशिष्य प्रत्ययो नास्ति। तेनापाततः संख्याने तस्यान्तर्भावः। उच्चं नीचं वेति प्रत्ययनियामकमुन्मानम्। स चोर्ध्वाधरायामः। ह्रस्वं दीर्घं वेति प्रत्ययनियामकं प्रमाणम्। स च तिर्य्यगायामः। पुरुषाद्युन्माने स्वल्पाधिकजलादि संख्याने चायं प्रमाण शब्दो न निराक्रियते। अणुमहदा गुरु लघु वेति प्रत्ययनियामकं परिमाणम्। तदेतत् प्रस्थं च भवति गुरुत्वं च। सादृस्यापि यदि परिच्छेदकत्वमिष्यसे तर्हि परिमाणेष्वेवान्तर्भावः। पूर्वेषु संख्यानोन्मानप्रमाणेष्वपि नायं परिमाण शब्दो निराक्रियते। उक्तं च–

**उर्द्धमानं किलोन्मानं परिमाणं तु सर्वथा[1]।**
**आयामस्तु प्रमाणं स्यात् संख्या भिन्ना तु सर्वतः ॥ इति ।**

एभिः परिच्छेदैः परिच्छेदवत्तु प्रत्ययाः वक्तव्याः। ते चोनविंशतिर्भवन्ति। अ। अति। आवत्। यत्। य। अय। ईय। तीय। तय। मय। म। तम। थ। इथ। तिथ। इन्। दघ्न। द्वयस्। मात्र। इति। एषां प्रयोग नियमाः प्रदर्श्यन्ते–

(1) तदुन्मितेऽर्थे तच्छ्शब्दाद् दघ्नद्वयसमात्राः[2]। ऊरुभ्यामूरुणा वोन्मितमूरुदघ्नं सरसि जलम्। जानुद्वयसम्। कटिमात्रम्। नाभिमात्रोगभीरः खातः। कक्षद्वयसः। चिवुकदघ्नः। दघ्नद्वयसमात्रेषु परेषु सत्सु पदान्तस्य नस्य लोपः। हन्वस्थिमात्रम्।

(2) पुरुषहस्तिभ्यां तदुन्मितेऽर्थे दघ्नद्वयसमात्रा[3] वा णिदकारो वा न तु द्विगोः[4]। यस्मिन् प्रत्यये परे सति प्रकृते आदिस्वरवृद्धिर्भवति[5] स णिदित्युच्यते।

---

1 सर्वतः इति मनोरमादि संभतः पाठः (कान्डान्तात् क्षेत्रे-4-1-23)

2 प्रमाणे द्वयसज्दघ्नञ्मात्रचः(5-2-37)

3 प्रमाणे द्वयसज्दघ्नञ्मात्रचः (5-2-37), पुरुषहस्तिभ्यामण्च (5-2-38)

4 द्विगोर्नित्यम् (वा.3129)

5 ण्यदिस्वरवृद्धिर्भवतीति मूले

पुरुषेणोन्मितं-पुरुषदघ्नम्। पुरुषद्वयसम्। पुरुषमात्रम्। पौरूषं च। ऊर्ध्वविस्तृतदोः पाणि नृमाने पौरुषं त्रिषु[1] दघ्नद्वयसमात्रेषु परेषु सत्सु पदान्तस्य नस्य लोपः[2]। हस्तिदघ्नम्। हस्तिद्वयसम्। हस्तिमात्रम्। हास्तिनं च। द्विगोस्तु नैते प्रत्यया उत्पद्यन्ते। समासेन तदर्थावगतेः। द्विपुरुषमुदकं द्विहस्तिजलम्। उक्ता उन्माने प्रत्ययाः।

(3) तत्प्रमिते तत्परिमिते चार्थे तच्छब्दान्मात्र[3]। तदुन्मिते च मात्रः प्रागुक्तः। तेन संख्यानातिरिक्ते परिच्छेदमात्रे मात्रः सिद्धः। सूच्यग्रमात्रंप्रदेशः। बिन्दुमात्रः। मुष्टिमात्रम्। प्रसृतिमात्रम्। प्रस्थमात्रम्। द्रोणमात्रम्। कुडवमात्रम्। परे तु तत्परिमितमात्रं नेच्छन्ति।

(4) प्रमाणपरिमाणप्रतिपन्नशब्देभ्यस्तु विनापि मात्रप्रत्ययं तदर्थवगतिः[4]। दण्डः। काण्डः। हस्तः। व्यामः। समः। दिष्टिः। प्रादेशः। तालः। गोकर्णः। वितस्तिः। अञ्जलिः। सरत्निः। एवमादयः शब्दाः प्रमाणे प्रसिद्धाः। प्रस्थद्रोणकुडवादयः परिमाणे प्रसिद्धाः। तेभ्यः प्रत्ययलोपः। अन्तरेणापि मात्रादिप्रत्ययं द्रव्यवाचिसामानाधिकरण्येन प्रयोगात् तदर्थावगतेः। समो दिष्टिर्वितस्तिर्वा वस्त्रम्। इयं भूमिरेकः प्रादेशः। सा मूर्तिरिकस्तालः। द्रोणो व्रीहिः। कुडवं धान्यम्। प्रमाणे विशिष्य प्रसिद्ध्यभावेऽपि तत्र प्रतिपत्तिमात्रेण प्रत्ययलोपः। यथा- सर्वान् केशान् समृद्धवृत्यच्छेदयेदङ्गुलिद्वयम्। अङ्गुलिद्वयमात्रमित्यर्थः। ग्रासार्द्ध ग्रासमेकं वा दत्वा भुञ्जीत नान्यथा। ग्रासार्द्धमात्र-मित्यर्थः।

(5) प्रमाणशब्दान्ताद् द्विगोस्तु मात्रो नोत्पद्यते समासेन तदर्थावगतेः[5]। षोडश हस्तप्रमाणो दण्डः काण्डः। तावत्प्रमाणेऽपि काण्डशब्दः सिद्धः। समाहृतौ च द्वौ काण्डौ काण्डप्रमितप्रदेशावेकं क्षेत्रं भवतीति द्विकाण्डं क्षेत्रम्। द्विकाण्डो रज्जुः। अर्थ सौकार्य्याय त्वेतदेवमुच्यते - द्वौ समौ प्रमाणमस्य द्विसमं भूतलम्। त्रिसमम्। द्विदिष्टिः। त्रिदिष्टिः। द्विवितस्तिः। त्रिवितस्तिः।

(6) प्रमाणपरिमाणाभ्यां संख्यायाश्च संशये मात्रो न तु द्विगोः[6]। जानासि कियदेतदिति प्रश्ने- न विशिष्य विजानीमः किन्तु मन्यामहे सममात्रं भवेत्। दिष्टिमात्रं वा प्रस्थमात्रं वा कुडमात्रं वा पञ्चमात्रा स्युर्दशमात्रा वा। सन्दिग्धोमेतदुत्तरमिति मात्रः प्रयुज्यते संशय स्फोटाय। अत एव प्रमाणप्रतिपन्नशब्देभ्योऽपि संशयेऽवगमितव्ये न

---

1 अमरकोशः (2-6-87)

2 नलोपः प्रातिपदिकान्तस्य (8-2-7)

3 प्रमाणेद्वय. (5-2-35)

4 प्रमणे लः (वा.3128)

5 प्रमाणे लो द्विगोर्नित्यम्(वा.3129)

6 प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः (वा.3133)

प्रमाणप्रत्ययलोपः। द्विगोस्तु संशयेऽपि नोत्पद्यते मात्रः। द्विकाण्डं द्वि समम्। प्रकरणादिवशाच्च निश्चय संशयविषयप्रयोगावधारणम्। उक्ताः प्रमाणे प्रत्ययाः

(7) परिमाणार्थकावद्यदन्तात् स्वार्थे द्वयसमात्रौ बहुलम्[1]। तावदित्येव वक्तव्ये तावद्द्वयसं तावन्मात्रं वोच्यते। यावदित्यर्थे यावद्द्वयसं यावन्मात्रम्। कियन्मात्रम्। इयन्मात्रम्।

(8) यत्तदेतच्छब्देभ्यः परिमाणवत्यावत् प्रत्ययष्टिलोपश्च[2]। अद्भागष्टिः यत् परिमाणमस्य स यावान्।तावान्। एतावान्। यावती। तावती। एतावती। याव्।तावत्। एतावत्। मात्रप्रत्ययोऽपि नापोह्यते। यन्मात्रं तन्मात्रमेतन्मात्रम्। आवदन्तेभ्योऽपि मात्रः समुच्चीयते। यावन्मात्रं तावन्मात्रमेतावन्मात्रम्।

(9) युस्मदस्यद्भ्यां वैदिकभाषाविषयाभ्यां सादृश्य परिच्छेदे आवत् प्रत्ययष्टिलोपश्च[3]।

त्वदिति युष्मच्छब्दः। मदिति अस्मच्छब्दः। तयोरद्भागष्टिः। न त्वावानन्यो दिव्यो न पार्थिवो न जानो न जनिष्यते। त्वत्सादृश इत्यर्थः। त्वावतः पुरुवसो। यज्ञं विप्रस्य मावतः। त्वत्सदृशस्य मत्सदृशस्येत्यर्थः।

(10) किमिदंभ्यां परिमाणवति यत्प्रत्ययो मकारादकाराकारलोपश्च[4]। किं परिमाणमस्य स कियान्। इदं परिमाणं यस्य स इयान्। किमती। इयती। कियत्। इयत्।मात्रोऽपि। किं मात्रम्। इदं मात्रम्। मात्रसमुच्चयोऽपि प्रागुक्तः। किन्मात्रम्। इयन्मात्रम्।

(11) संख्यापरिप्रश्ने तु बहुत्वे किमः परिमाणवत्यति प्रत्ययोऽपि मकारेकारलोपश्च्[5]। का संख्या परिमाणं येषां ते कति कियन्तो वा। बहुवचनान्तस्यैव प्रयोगः। परिप्रश्नस्यानिर्ज्ञातविषयकत्वादनिर्ज्ञाते च बहुवचनप्रयोगनियमात्। कति पुत्राः सन्ति। कियन्तो ब्राह्मणाः समायाताः। उक्ताः सामान्यतः परिमाणे प्रत्ययाः।

(12) परिमाणशब्दादिकष्ठ संज्ञः परिमाणवति टिलोपश्चावक्षरवृद्धिश्च[6]। प्रस्थं परिमाणमस्य प्रास्थिको राशिः। द्रौणिकः। कौडविकः। स्त्रियामीकारः। प्रास्थिकी मृत्तिका। वार्षशतिकः। वार्षसहस्रिकः। खारशतिको राशिः। खारसहस्रिको राशिः।

---

1 वत्वन्तात्स्वार्थे द्वयसज्मात्रचो बहुलम् (वा.3134)

2 यत्तदेतेभ्यः परिमाणे वतुप (5-2-39)

3 युष्मदस्मदोः सादृश्ये मतुन्वाच्यः।

4 किमिदम्भ्यां वो घः(5-2-40)

5 किमः संख्यापरिमाणे डति च (5-2-41)

6 तदस्य परिमाणम् (5-1-57)

(13) परिमाणवत्सु संघसूत्राध्ययनवर्गजीविषु स्वार्थे च [1]। शदन्तयाः संख्याया इकष्टिलोपश्च [2] तदाद्यक्षरवृद्धिश्चाथ त्यन्तयाः कस्तदाद्यक्षरवृद्धिश्चाथेतर संख्यायाः को न लोपश्च।

त्रिंशच्चत्वारिंशत पञ्चाशदिति शदन्ता संख्याः। तासामद्भागष्टिः। संघः प्राणिसमूहः। त्रिंशद्भावः श्रेणयो वा परिमाणमस्य स त्रैंशिको गोसंघः। चत्वारिंशिकः। पञ्चाशिकः। त्रिंशदध्यायाः परिमाणमस्य त्रैंशिकः सूत्रग्रन्थः। अध्ययनं शास्त्रविभागः। चत्वारिंशिकमध्ययनम्। पाञ्चाशिको वर्गः। पञ्चाशज्जीवितपरिमाणमस्य पाञ्चाशिकः। त्रायस्त्रिंशिको वर्गः। औनपञ्चाशिकः। त्रैषष्टिकः। षाट्त्रिंशिकः। पाञ्चपञ्चाशिकः। द्वात्रिंशिकः। इत्यादि। स्त्रियामाप्। चौरपञ्चाशिका।

आदशतः संख्याः संख्येये। त्रिंशत्यादयस्तु संख्येये संख्यायां च। तत्र स्वार्थो द्विविधः। संख्येयः संख्या च। तथा चैवं परिमाणवति संख्ये ये संख्यायां वा परिमाणवत्यामेतत्प्रत्ययविधिर्भवति शकुनयः। त्रिंशदित्यर्थः। पञ्चाशिकं परिगणितम्। पञ्चाशत्संख्येत्यर्थः।

''विंशतिषष्टिसप्तत्यशीतिनवतयस्त्वन्ताः। षष्टिर्जीवितपरिमाणमस्य षाष्टिकः। साप्ततिको वर्गः। आशीतिकमध्ययनम्। नावतिकः पक्षिसंघः। आशीतिकं भवति अशीतिसंख्या भवतीत्यर्थः। पाञ्चविंशतिम्। चातुर्विंशतिकम्।

''इतरा संख्याः विंशतेरर्वाचीनाः शतप्रभृतयश्च। तत्र नकारान्तानां नकारलोपः [3]। एवं रेफस्य षत्वं षस्य टत्वं च संधिकार्य्यं द्रष्टव्यम् [4]। पञ्चगावः श्रेणयो वा परिमाणमस्य पञ्चको गोसंघः। अष्टावध्यायाः परिमाणस्य अष्टकं पाणिनीयसूत्रम् अष्टावष्टकानि ऋग्वेदस्याध्ययनानि। अष्टौ पाञ्चिका ऐतरेयब्राह्मणाधीतयः। पञ्चको वर्गः दर्शको वर्गः। पञ्चकाः शकुनयः पञ्चेत्यर्थः। द्विकाः। त्रिकाः। चतुष्कम्। द्विकं त्रिकं पञ्चकं षटकं सप्तकमष्टकमित्यादि।

(14) पञ्चशब्दादत्प्रत्ययो दशशब्दादत्यतौ टिलोपश्च विकल्पेन– परिमाणवति [5] वर्गे।'' पञ्च परिमाणमस्य वर्गस्य पञ्चद्वर्गः। दशपरिमाणमस्य दशद्वर्गो दशतिवर्गः। दशति शब्दः सामसंहितायां मन्त्रविभागे भूयसा दृष्टप्रयोगः। पक्षे क प्रत्ययः प्रागुक्तः। पञ्चको वर्गः। दशको वर्गः।

---

1 संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु (5-1-58) संज्ञायां स्वार्थे प्रत्ययो वाच्यः(वा.3029)
2 तदस्य परिमाणम् (5-1-57)
3 न लोपः प्रातिपदिकान्तस्य (8-2-7)
4 खरवसानयोर्विसर्जनीयः(8-3-15) इदुदुपधस्य चाप्रत्ययस्य (8-3-41) झलां जशाऽन्ते (8-2-39)खरि च (8-4-55)
5 पञ्चद्दशतो वर्गे वा (5-1-60)

(15) सप्तशब्दाद् वैदिकभाषाविषयादप्रत्ययष्टिलोपश्च परिमाणवतिवर्गे[1]। सप्त साप्तानि असृजत्।

(16) त्रिंशचत्वारिंशतोरप्रत्ययष्टिलोपश्चाद्यक्षरवृद्धिश्च परिमाणवतो ब्राह्मणस्य संज्ञायाम्[2]। त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रैंशानि ब्राह्मणानि। चात्वारिंशानि ब्राह्मणानि।

संख्यायां परिमाणवत्यां पङ्क्तिविंशति त्रिंशचत्वारिंशत् पञ्चाशत् षष्टि सप्तत्यशीतिनवतिशतशब्दा निपात्यन्ते[3]।

''पञ्चशब्दात् ति प्रत्ययष्टिलोपश्च। तकारसंनिधानाच्चस्य कत्वं सन्धिकार्य्यम्। पङ्क्तिशब्दोऽयमनेकार्थः। अस्ति क्रमसंनिवेशे– ब्राह्मणपङ्क्तिः पिपीलिका पङ्क्तिः। अस्तिच्छन्दोविशेषे यस्य दशाक्षरापादा यस्य वा पञ्चाक्षरः पञ्चपादास्तदिदं पङ्क्तिच्छन्दः। अस्ति च दशसंख्यायाम्। पङ्क्तिरथो दशरथः। पंञ्चसंख्या द्विगुणिता पङ्क्तिः दशतिरिति त्यन्तो दशदिति तान्तश्च दशभिः परिमिते वर्गे सिद्धौ। तदन्यतरयोगाद् विंशत्यादयः शब्दाः परिमाणतद्धितार्थे समासेन साध्याः। तत्र दशति शब्देन वृत्तौ परिमाणार्थकस्याप्रत्ययस्य कतिपयशब्दभागानां च लोपः प्रायेण। तथा हि–द्वे दशती परिमाणं यस्याः संख्यायाः, सा विंशतिः। तिस्रो दशतयः परिमाणं यस्याः सा त्रिंशत्। एवं चत्वारिंशदादयः। तद्धितप्रत्ययलोपे परवल्लिङ्गस्तत्पुरुष इति स्त्रीलिङ्ता[4]। विंशति शब्दे द्वेर्दकारलोपः। विंशति त्रिंशचत्वारिंशत्सु दशतेर्दकाराद-कारलोपो दकारस्य नकारश्च। पञ्चाशति दशतेर्दकारस्यैव लोपोऽकारस्तु परिशिष्यते त्रिंशचत्वारिंशत् पञ्चाशत्सु दशतेरिकारलोपोऽपि। चत्वारिंशति रेफात्पुरत इकारः पृष्ठस्त्वाकार इत्यागमौ। षष्टिसप्तत्यशीतिनवतिषु दशतेर्दशभागो विलोप्यते। अशीतौ भागस्यापि लोपः, ईकारश्चागमः, षस्य शत्वं विकारश्च[5]। विंशतित्रिंश-चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिषु परिमाणार्थकस्या-प्रत्ययस्येलोपः। शत शब्दे तु दशदशतमः परिमाणं यस्याः संख्यायाः सेत्यर्थे परिमाणार्थकोऽकार-प्रत्ययष्टिलोपश्च। तेन दशदशतमिति प्राप्तम्। आद्यानां त्रमाणामक्षराणां दशदानां विलोपेन शतमित्यवशिष्यते।

---

1 सप्तनोऽ छन्दसि (5-1-61)

2 त्रिंशचत्वारिंशतोर्ब्राह्मणे संज्ञायाम् डण् (5-1-62), टेः (6-4-143) तद्धितेष्वचामादेः (7-2-117)

3 पङ् क्तिविंशतित्रिंशचत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् (5-1-69)

4 परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः (2-4-26)

5 चिकारश्च इति मूले।

अथवा वर्गार्थिकेन दशच्छब्देनैव सर्व इमे साध्याः। द्वौ दशतौ परिमाणं यस्याः संख्यायाः सा विंशतिः। परिमाणार्थक इकारः प्रत्ययः स च विंशति षष्टिसप्तत्यशीतिनवतिषु श्रावी। त्रिंशच्चत्वारिंशत् पञ्चाशत्सु लोपी। स्त्रीत्वमिकार-विधीलोकात् सिद्धम् शतशब्दे पुनरकारः प्रत्ययो नात्र पक्षे टिलोपः। पुराकल्पे हि समस्तपदानां कतिपय वर्णलोपेन शब्दनिर्म्माणप्रक्रिया तन्त्रमासीदिति पश्यन्ति। एतच्चेह व्युत्पत्तिवैशद्या य प्रदर्शितम्। आदशतः संख्याशब्दाः संख्येय एव सिद्धाः। ततः संख्याया भावप्रत्ययेनावगतिः। पञ्चत्वम् चतुष्ट्वम्। विंशत्यादयस्तु शब्दः संख्यायामेव व्युत्पन्नाः। पक्षिणां संख्या विंशतिर्वा त्रिंशद्वा। परिच्छेदे भूयसा प्रतिपन्नाः शब्दा विनापि प्रत्ययं परिच्छेद्ये वर्तन्ते हस्तो दिष्टिर्वितस्तिः प्रादेश इत्यादि यथा। एवं च संख्यायां प्रतिपन्ना अपि शब्दा विनैव प्रत्ययं संख्येये वर्त्तन्ते। विंशतिः पक्षिणः त्रिंशत्पक्षिणं इति संख्येये प्रयुज्यमाना अप्येते विंशत्यादिशब्दा लिङ्गवचने स्वीये न विशेष्यानुरोधाज्जहतीति निसर्गः। शतं ब्राह्मणाः सहस्रं ब्राह्मण्यः विंशत्यादिगतसंख्या-विवक्षायां तु त्रीण्यपि दृश्यन्ते वचनानि शतं शते शतानि चत्वारि पञ्च वा शतानि ब्राह्मणाः। शतादिका परार्द्धपर्यन्ता सर्वापि संख्या शतसहस्रशब्दाभ्यां प्रतिपद्यते। सर्वासामेव संख्यानां दशोत्तरता विभक्तया दशदशद्वर्गरूपत्वानपायात्। तथा च प्रयुज्यतेऽसंख्येयार्थकः शत-शब्दः। यद द्याव इन्द्र ते शतं, शतां भूमीरुतस्युः। न त्वा वज्रिन् सहस्रं सूर्य्या अनु न जातमष्ट रोदसी [1]।

(17) शतिश्च्छन्नन्तेभ्य इन परिमाणवति लोपश्च टेरतेश्च [2]। विंशति परिमाणं येषां ते विंशिनोऽङ्गिरसः। अतेर्लोपः त्रिंशद्दिवसाः परिमाणं येषां ते त्रिंशिनो मासाः। अतो लोपः पञ्चदशिनोऽर्द्धमासाः। अनो लोपः। वैदिक भाषा विषय एवायं प्रयोगविधिरित्याहुः।

(18) पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः स्तोमः। सप्तदशः स्तोमः। एकविंशः स्तोमः। त्रयस्त्रिशः स्तोमः चतुश्चत्वारिंशः[3] स्तोमः। सोमयागेषु छन्दोगैः क्रियमाण पृष्ठवादिसंज्ञिका स्तुतिः स्तोमः। स्तोमसाहचर्याच्च स्त्रियां प्रयोगः सप्तदशी रात्रिः सप्तदशेत्यप्येके स्त्रियामिच्छन्ति। प्रयोगस्तु नोपलभ्यन्ते अयमपि वैदिक भाषा विषय एवेति केचित्। उक्ताः संख्यातः परिमाणे प्रत्ययाः।

---

1 ऋग्वेदसंहिता (8-60-5)

2 शच्छतोर्डिनि (वा.)

3 'चतुश्चारिंशः' इति मूले।

(19) अवयवे या संख्या ततोऽवयविनि तयः [1]। पञ्चावयवा यस्य तत् पञ्चतयं दारु। बहुतयं यूथम्। बहुतयं रूपं चित्र संज्ञम्। संख्याकृतः समुदायोऽत्र विवक्ष्यते तेनैकत्वं सिद्धम्। स्त्रियामीकारः दशतयी (संहिता) ऋग्वेदः।

(20) अवयवे द्वित्रिभ्यामवयविन्ययष्टिलोपश्च विकल्पेन [2]। द्वयोः समुदायो द्वयम्। त्रयाणां समुदायस्त्रयम्। परे तु द्वित्र्योरिकारोऽकार संपुटितो भवतीति पश्यन्ति। द्वयम्। त्रयम्। पक्षे तयः प्रागुक्तः। द्वितयं त्रितयम्। स्त्रियामीकारः। द्वयी त्रयी। द्वितयी त्रितयी।

(21) अवयवे चोभादवयविन्ययष्टिलोपश्च नित्यम् [3]। उभाभ्यां कृतः समुदाय उभयम् स्त्रियामुभयी। उभये देवमनुष्याः। उभयो मणिः।

(22) द्वित्रिभ्यां पुरणे तीयस्त्रे संप्रसारणं च [4]। उत्तरस्वरसहितस्य रेफस्य ऋकारात्मकस्वरतापत्तिः संप्रसारणम्। द्वयो पूरणो द्वितीयः। त्रयाणां पूरणस्तृतीयः।

(23) चतुरः पूरण ईययावाद्यक्षरलोपश्च विकल्पेन [5]। स्वरः शुद्धो यथासंभवं पूर्वेण परेण वा व्यञ्जनेनापि सहितोऽक्षरम्। चतुर्णां पूरणस्तुरीयः। तुर्य्यः। तुर् शब्दो निपातस्तुराषाडादौ दृष्टः। स निपातेन च शब्देन समुचितश्चतुः शब्दो भवति। तस्यायं समुच्चयप्रतिषेधः पूरणप्रत्यय विशेषसंनिधिनिबन्धन इत्येके। पक्षे थप्रत्ययो वक्ष्यते। चतुर्थः।

(24) षट्कतिकतिपयचतुरां पूरणे थः [6]। षष् शब्दोऽयं थप्रत्ययसंनिधाने पदान्तकार्य्यं टवर्ण्यत्वं न लभते। षयोगात्तु मूर्द्धन्यत्वं सन्धिकार्य्यं थस्य। षणां पूरणः षष्ठः। कतिथः। कतिपयथः। चतुर्थः। कतिपयशब्दात् स्त्रीप्रत्ययान्तादपीदमिष्यते तत्स्त्रीप्रत्ययलोपश्च। कतिपयानां पूरणी कतिपयथी।

(25) परिमाणवत् प्रत्ययान्तात्पूरण इथः [7]। यावतां पूरणो यावतिथः। तावतिथः। एतावतिथः। स्त्रीप्रत्ययान्तादपीदमिष्यते तत्स्त्रीप्रत्ययलोपश्च। यावतीनां पूरणी यावतिथी। एतावतिथी।

---

1 संख्यायां अवयवे तयप् (5-2-42)
2 द्वित्रिभ्यां तयस्यायज्वा (5-2-43)
3 उभादुदात्तो नित्यम् (5-2-44)
4 द्वेस्तीयः (5-2-24) त्रेः सम्प्रसारणं च (5-2-55)
5 चतुरश्छयतावद्यक्षरस्यलोपश्च (वा.3158)
6 षट्कतिकतिपयचतुरां थुक् (5-2-51)
7 वत्तोरिथुक् (5-2-53)

(26) बहुपूगगणसङ्घेभ्यः पूरणे तिथः[1]। पूगसङ्घयोरसंख्यात्वेऽवि तिथ प्रत्ययो दृश्यते। गते बहुतिथे काले। पूगतिथः। गणतिथः। सङ्घतिथः। बहुशब्दात् स्त्रीप्रत्ययान्तदपीदमिष्यते। तत्स्त्रीप्रत्ययलोपश्च। बह्वीनां पूरणी बहुतिथी।

(27) असंख्यादेर्नान्तात् संख्याशब्दात् पूरणे मो नलोपश्च। वैदिकभाषाविषयतायां थोऽपि[2]। पञ्चानां पूरणः पञ्चमः। सप्तमः। अष्टमः। नवमः। दशमः। वैदिकभाषायां तु पञ्चमं पञ्चथं च स्यात्। क्वचित्तु संख्यादेरपि थं मप्रत्ययो दृश्यते तुष्टः पिनाकी दशभिः शिरोभिस्तुष्टो न चैका दशमो हि रुद्रः। अतो हनुमान दहतीति कोपात् पङ् क्तेर्हि भेदो न पुनः शिवाय। अशुद्धमेवैतत्। एकाद्देशम इति द्विदकारपाठो वा।

(28) संख्यादेः संख्याशब्दात् पूरणेऽकारष्टिलोपश्च[3]। एकादशानां पूरण एकादशः। द्वादशः। त्रयोदशः। षोडशः। अष्टादशः। स्त्रियामीकारः। एकादशी। षोडशी। इत्यादि।

(29) विंशतेः पूरणेऽकारोऽतिलोपश्च विकल्पेन[4]। संख्यादेरसंख्यादेर्वा सामान्येमायं विधिः। विंशते पूरणो विंशः। एकविंशः। द्वाविंशः। त्रयोविंशः। अष्टाविंशः। पक्षे तमो वक्ष्यते[5]। विंशतितमः इत्यादि।

(30) त्रिंशदादिभ्यः शतात् प्राक् पूरणेऽकारष्टिलोपश्च न त्वसंख्यापूर्वात् षष्ट्यादेः विकल्पेन[6]। अद्भागष्टिः। स्वरान्तेषु त्वन्तिमः स्वर एव टिः त्रिंशः। द्वात्रिंशः। चत्वारिंशः। अष्टाचत्वारिंशः। पञ्चाशः। पञ्चपञ्चाशः। षष्टिसप्तत्यशीतिनवति-शब्देभ्यस्तु शुद्धेभ्यो नास्त्यकारः। संख्यापूर्वत्वे तु भवत्येव एकषष्ठः द्वाषष्ठः। द्वासप्ततः। सप्तसप्ततः। चतुरशीतः। षडशीतः। पञ्चनवतः। षण्णवतः। पक्षे तमो वक्ष्यते।

(31) सर्वेभ्यस्तु विंशत्यादिभ्यः संख्याशब्देभ्यः पूरणे तमः। विंशतेः पूरणो विंशतितमः। एकविंशतितमः। त्रिंशत्तमः। षट्त्रिंशत्तमः। चत्वारिशत्तमः। अष्टाचत्वारिंशत्तमः। पञ्चपञ्चाशत्तमः। षष्ट्यादभ्यः श्चतुर्भ्यशुद्धेभ्यस्तमो नित्यः अकारस्य प्रतिषेधात्। अन्यतस्तु पूर्वेणाकारेण समुचयाद्विकल्पितः। षष्टितमः।

---

1 बहुपूगगणसङ्घस्य तिथुक् (5-2-52)

2 नान्तादसंख्यादेर्मट् (5-2-49) थट् च छन्दसि (5-2-50)

3 तस्य पूरणे डट् (5-2-48) टेः (6-4-143)

4 ति विंशतेर्डिति (6-4-142)

5 विंशत्यादिभ्यस्तमडन्यतरस्याम् (5-2-56)

6 षष्ट्यादेश्चासंख्यादेः (5-2-58)

द्वाषष्टितमः। सप्ततितमः। द्वासप्ततितमः। अशीतितमः। षडशीतितमः। नवतितमः। पञ्चनवतितमः। शतादिभ्योऽप्यकारः प्रतिषिद्धः। तमस्तु स्यादेव। शतस्य पूरणः शततमः। एकशततमः। सहस्रतमः। पञ्चसहस्रतमः। अयुततमः इत्यादि।

(32) मासार्द्धमाससंवत्सरेभ्यश्च पूरणे तमः [1]। नैते संख्यावचनाः अथापि संख्यागर्भितार्था भवन्ति। तेनैतदुच्यते प्रसङ्गात्मासस्य पूरणस्त्रिंशत्तमो दिवसो मासतमः। संक्राति दिनात् प्राक्तनो दिवसो वा। चतुर्थः सप्ताहो मासतमः। द्वितीयः पक्षो मासतमः। पञ्चदशो दिवसोऽर्द्धमासतमः। द्वादशो मासः संवत्सरतमः। त्रिंशत्युत्तरषट्षष्टितमो दिवसः संवत्सरतमः उक्ताः संख्यातः पूरणे प्रत्ययाः।

(33) संख्येयस्यैकजातीयत्वे शते सहस्रोवाऽधिकवत्यर्थेऽधिकात् शतिशच्छन्नन्तात् संख्याशब्दादकारोलोपस्तु टेरतेश्च [2]। शन्नन्तो दशन् शब्दस्तत्र अन्भागष्टिस्तस्य लोपः। शदन्ताः स्त्रिंशचत्वारिंशत् पञ्चाशच्छब्दाः। तत्र अद्भागष्टिस्तस्य लोपः। शत्यन्तस्तु विंशतिशब्दस्तस्यातेर्लोपः एकादश अधिका अस्मिन् सन्तीत्येकादशं शतं सहस्रं वा। षोडश वर्षाण्यधिकानि अस्मिन् सन्तीति षोडशं वर्षशतमजीवन्महिदास ऐतरेयः। त्रिंशदधिका अस्मिन् त्रिंशं शतम् द्वात्रिंशं शतम् चत्वारिंशं सहस्रम्। अष्टाचत्वारिंशं सहस्रम्। पञ्चाशं शतसहस्रम्। चतुष्पञ्चाशं सहस्रम्। शतसहस्रयोरेवाधिकवत्त्वेऽयमकारः। अन्यत्र तु वाक्यमेव। षोडश कार्षापणा अधिका अस्यां कार्षापणत्रिंशति सन्तीति। यत्र तु शतसंख्येयमधिकसंख्यासंख्येयं च भिन्नजातीये भवतस्तत्राप्ययमकारो नास्ति [3]। एकादश माषा अधिका अस्मिन् कार्षापणशते सन्ति। उक्ताः संख्यातोऽधिके प्रत्ययाः।

(34) निमेयस्यैकभागत्वे यद्यन्यस्यानेके भागा निमानमिष्यते, तत्र तद्गुण संख्याशब्दान्मयो निमेये [4]।

एको राशिस्तन्दुलस्य निमेयत्वेन कल्पितः। माषाणां पुनर्द्वौ राशी निमानत्वेन। तत्रैवं सति, कथ्यते- इदं तन्दुलं माषाणां द्विमयम्। द्विगुणमाषविनिमेयमित्यर्थः। यवानां द्वौ भागौ यद्येकस्योदश्विद्भागस्य निमानमिष्यते तर्त्तार्ह द्विमयमुदश्विद् यवानाम्। द्विगुणयवक्रेयमित्यर्थः। एकगुणो व्रीहिर्निमेयः। ततश्चतुर्गुणस्तु तिलानिमानम्। तेन तिलानां चतुर्म्मयः स व्रीहिः चतुर्गुणतिलदानेन लभ्य इत्यर्थः।

---

1 नित्यं शतादिमासार्धमाससंवत्सराच्च (5-2-57)

2 तदस्मिन्नधिकमिति दशान्ताड्डः (5-2-45) शतासहस्रयोरेवेष्यते (वा.3141)

3 प्रकृतिप्रत्ययार्थयोः समानजातीयत्वमेवेष्यते (वा.3140)

4 संख्यायाः गुणस्य निमाने मयट् (5-2-47)

यदि कस्यचिद्द्रव्यस्यैकेन भागेनानेकैर्वा समानावयवैभर्गैः परिच्छेदः प्रकल्प्यते तत्तर्हि ते गुणा उच्यन्ते। गुणेषु या संख्या तत् एवायं मयो न तु द्रव्य संख्यातः। यथैकगुणं सुवर्णद्रव्यं षोडशगुणेन रजतद्रव्येण निमायते इति रजतानां षोडशमयं सुवर्णमिति शक्यते वक्तुम्। षोडश संख्याया रजतगुणनिष्ठत्वात्। यत्र तु द्वौ कार्षापणौ निमानमस्य ब्रीहेस्तत्रायं द्विमयो व्रीहिः कार्षापणयोरिति नेष्यते प्रयोगः। न हि कार्षापणस्य द्वौ भागौ निमानं किन्तु द्वौ कार्षापणाववेति द्रव्यगतैव सा संख्या, न तु गुणगता। अत द्वौ ब्रीहियवौ निमानमस्योदश्वित इत्यादिष्वपि वाक्यमेव न त्वत्र द्विशब्दान्मय प्रत्ययः। एवं निमेयभागसंख्यापेक्षया निमानभागसंख्या यदाधिका भवति तदैवायं मय प्रत्ययो न त्वन्यधात्वे। तेनैको यवभागो निमानमस्योदश्विद्भागस्येत्यत्र मयो नास्ति। निमेयगुणस्त्वेक एवापेक्ष्यते। द्वयोर्बहुषु वा निमेयगुणेषु विवक्षितेषु न प्रत्ययः। त्रयो यवानां भागा निमानं द्वावुदश्वितो निमेयाविति। संख्या च समानैवात्र विवक्षिता। तेनाध्यर्द्धादिशब्देभ्योऽपि न प्रत्ययोत्पत्तिः। एवं यत्रापि निमेयनिमानभावो नोपपद्यते तत्रापि नायं प्रत्ययः। यथा द्वौ गुणौ क्षीरस्य, एकस्तैलस्य। तदेवं द्विगुणं क्षीरं पच्यते तैलेन।

निमानं मूल्यम्। किं पुनरिह निमानं किं निमेयम्। यावता उभयं त्यज्यते सत्यमेवैतत्। क्वचित्तु काचित्प्रसृततरा गतिर्भवति। तद्यथा-समाने त्यागे धान्यं विक्रीणीते, यवान् विक्रीणीते, न कश्चिदाह- कार्षापणं विक्रीणीते इति।

अथवा, येनाधिगम्यते तन्निमानम्। यदधिगम्यते। तन्निमेयम्। उक्तः संख्यातो निमाने प्रत्ययः। इति परिच्छिन्न प्रत्ययाः॥

## (स) भावकर्मप्रत्ययाः

एतस्मिंश्च भावे प्रत्यययायितव्ये प्रत्यया वक्तव्याः। ते च दश-त्व, त, इमन्, उमन्, य, एय, ईय, अ, अक, न इति। तद्द्रव्ये यादृशभाववैशिष्ट्यं वा बोधयितुं कश्चन शब्दः प्रवर्तते तं प्रवृत्तिनिमित्तं भावविशेषमेव वा कर्मविशेषमपि वा प्रत्याययितुं तच्छब्दादेते प्रत्यया भवन्ति। एष्वाद्याश्चत्वारः प्रत्यया भावमात्रे विधीयन्ते। इतरे तु भावे कर्म्मणि चेति विशेषः। तेषां प्रयोगनियमाः प्रदर्श्यन्ते।

त्वतौ तु सामान्यतः सर्वत्र विधीयेते। इमन्नादिप्रयोगविषयतायामपि च प्रायेण तौ न प्रत्याख्यायेते। इमन्नादीनां तु मिथः सति संभवे द्वयोस्त्रयाणां वा समावेशश्च प्रतिवन्दिता चेत्युत्तरत्र प्रदर्शयिष्यते।

त्वतयोः संयोगे प्रकृत्यन्ताकारेकार्लोपः [1]। इमनः संयोगे प्रकृतेष्टिलोपः [2]। यादीनां स्वरान्तस्य पूर्वाणां पञ्चानां संयोगे प्रकृत्यन्ताकारेकारलोपः [3]। प्रकृत्यन्तोकारात्तु प्रागकारागमः। इति भाववचनाश्रयविधयो भवन्ति।

**(1) सर्वस्मादेव शब्दात् त्वतौ भावे [4]।**

यस्मादिमन्नादयः प्रत्यया न प्रसज्जन्ते ततः सर्वस्मादेव नित्यं त्वतौ भवतः। यस्मात्तु इमन्नादयः प्रत्यया विकल्प्यन्ते ततः पक्षान्तरे त्वतौ भवतः सामान्यविधिश्चायं परिशेषविधिश्च। त्वान्तं नित्यनपुंसकलिङ्गम् [5]। तान्तं नित्यस्त्रीलिङ्गमावन्तम् [6]। गोर्भावो गोत्वम्। पशुत्वम्। मनुष्यत्वम्। घटत्वं कर्मत्वं विद्वत्वम् महत्वं तत्वम् सत्वम्। गोता, पशुता, मनुष्यता। घटता, कर्मता, विद्वत्ता, महत्ता, तत्ता, सत्ता।

**(2) महदादिभ्यो वर्णवाचिभ्यश्च विकल्पेनेमन् भाव [7]।**

**महदाशु स्वादु साधु बाल पाका अकिञ्चनः।**
**होड वत्सौ मन्द चण्डौ खण्ड दण्डौ वृषस्तथा॥1॥**
**चतुर्दशैते युज्यन्ते त्वतेमन् प्रत्ययैस्त्रिभिः।**
**ऋजुर्लघुस्तनुरणुः पटुरित्यत्वतेमभिः॥2॥**
**आम्रताम्रौ शुक्रवुक्रवक्राः शीतोष्णपण्डिताः।**
**लवणे मधुरो मूर्खो मूकश्च वधिरः स्थिरः॥3॥**
**जडश्च जवनः कृष्टः संमतिः संमना अपि।**
**वियातश्च विलातश्च विमति र्विमना अपि॥4॥**
**विशारदस्तथेत्येते युज्यन्ते यत्वतेमभिः।**
**त्रिचत्वारिंशदाख्यातास्तदित्थं महदादयः॥5॥**

इमनः संयोगे प्रकृतेष्टिलोपः [8]। तेन महत्याद्भागस्य लोपः समनो विमनसोरस्भागस्य। अन्यत्रान्त्यस्वराणाम्। पक्षान्तरे महदादिष्वाद्येभ्यश्चतुर्दशभ्य-

---

1 त्वतलोः परयोः अकारेकारलोपस्तु न दृश्यते। पुंवद्भावस्तु कुत्रचिद् दृश्यते।
2 टेः (6-4-155)
3 यस्येति च (6-4-148)
4 तस्य भावस्त्वतलौ (5-1-119)
5 त्वान्तं क्लीबम् (लि.120)
6 तलन्तं स्त्रियाम् (लि.17)
7 पृथ्वादिभ्य (5-1-122) वर्णदृढादिभ्यः (5-1-123)
8 टेः (6-4-155)

स्त्वतौ स्याताम्। तेन त्रयः प्रत्ययाः फलिताः। महिमा महत्वं, महता। स्वादिमा, स्वादुत्वं, स्वादुता। चण्डिमा, चण्डत्वं, चण्डता। ऋज्वादिभ्यस्तु पञ्चभ्योऽप्रत्ययो णिद्वक्ष्यते। त्वतौ च सामान्यौ। तेन चत्वारः प्रत्ययाः। ऋजिमा, आर्जवम्, ऋजुत्वं, ऋजुता। लघिमा, लाघवम्, लघुत्वम्, लघुता। वालपाकहोडवत्सेभ्योऽपि वयोलक्षणमप्रत्ययं केचिदिच्छन्ति। तेनैषामपि चत्वारि रूपाणि। वत्सिमा वात्सं, वत्सत्वं, वत्सता। होडिमा हौडं, होडत्वं, होडता। वाल शब्दाद् य प्रत्ययोऽपि। तेन पञ्चरूपाणि। वाल्यं, वालं वालिमा, वालत्वं, वालता वा। ततश्चतुर्विंशतेराम्रादिभ्यो णिद्वक्ष्यते। त्वतौ च सामान्यौ। तेन चत्वारः प्रत्ययाः। शीतिम शैत्यम्, शीतत्वं, शीतता। मधुरिमा, माधुर्य्यम्, मधुरत्वं, मधुरता। विमनिमा, वैमनस्य, विमनस्त्वं, विमनस्ता। लवण शब्दो यदि क्षारवचनस्तदो त्वतावेव लवणत्वं, लवणता। यत्र सौन्दर्य्ये गौणः प्रयोगस्तत्र येमन्प्रत्ययावेव लावण्यं, लवणिमा। इति व्यवस्थितो विकल्पः।

वर्णवाचिभ्योऽपि यत्वतेमन् प्रत्ययैश्चतुर्धा रूपाणि। नीलिमा, नैल्यं, नीलत्वं, नीलिता। शुक्लिमा, शौक्ल्यं, शुक्लत्वं, शुक्लता। शुच्यवदातादयो यदि विशुद्धिवचना इष्यन्ते तर्हि नेमन् प्रत्ययः।

(3) ऋजुशब्दस्य तु वैदिकभाषाविषयस्येमन् प्रत्यय सति ऋकारस्य रो विकल्पेन [1]। रजिमा। ऋजिका वा।

(4) पृथुमृदुभृशकृशदृढपरिवृढेभ्यो विकल्पेनेमन् भावेरश्चऋकारस्य [2]। पक्षान्तरे पृथुमृदुभ्याम प्रत्ययो णिद्वक्ष्यते [3]। त्वतौ च सामान्यौ। तेन चत्वारः प्रत्ययाः। पृथोर्भावः प्रथिमा, पार्थवं, पृथुत्वं, पृथुता। म्रदिमा, मार्द्दवम्, मृदुत्वं, मृदुता। भृशादिभ्यो यप्रत्ययो णिद्वक्ष्ये [4]। त्वतौ च क्रशिमा, कार्श्यम्, कृशत्वं, कृशता। द्रढिमा, दार्ढ्यं दृढत्वं, दृढता।

(5) ऊरुगुरुक्षिप्रक्षुद्रबहुलदीर्घह्रस्वः प्रियस्थिरेभ्यो विकल्पेनेमन् भावे वरगरक्षेपक्षोदवंहद्रघह्रसप्रस्थाश्चादेशाः [5]।

पक्षान्तरे त्वतौ। उरुगुरुभ्यामप्रत्ययोऽपि णिद्वक्ष्यते। उरोर्भावो वरिमा, औरवम्, ऊरुत्वम्, उरुता। गरिमा, गौरवं, गुरुत्वं, गुरुता। क्षेपिमा, क्षिप्रत्वं, क्षिप्रता। क्षोदिमा, क्षुद्रत्वं,

1 र ऋतो हलादेर्लघोः (6-4-161)

2 पृथ्वादिभ्य इमनिज्वा (5-1-122) पृथुमृदुभृशकृशदृढपरिवृढानामेव रपरत्वम् (वा.4211)

3 इगन्ताच्च लघुपूर्वाद् (5-1-131)

4 गुणवचनब्राह्मणादिभ्यः कर्मणि च (5-1-124)

5 प्रियस्थिरस्फिरोरुबहु. (6-4-157)

क्षुद्रता। वंहिमा, बहुलत्वं, बहुलता। द्राघिमा, दीर्घत्वं, दीर्घता। ह्रसिमा, ह्रसत्वं ह्रस्वता। प्रेमा, प्रियत्वं, प्रियता। स्थेमा, स्थिरत्वं, स्थिरता। यप्रत्ययोऽपि वक्ष्यते। स्थैर्य्यम्।

(6) बहोर्भावे विकल्पेनोमन्नकारलोपश्च [1]। अकारे लुप्ते वकारहकारयोः संयोगाद् भूभावः सन्धिकार्य्यम्। बहोर्भावो भूमा, बहुत्वं बहुता च।

(7) आम्रादिभ्यो वर्णवाचिभ्यश्च भावे विकल्पेन यः स्यादादिस्वरवृद्धिश्च [2]।

**आम्रताम्रौ शुक चुक्र वक्राः शीतोष्णपण्डिताः।**
**लवणो मधुरो मूर्खो मूकश्च वधिरः स्थिरः ॥1॥**
**जडश्च जवनः कृष्टः संमतिः संमना अपि।**
**वियातश्च विलातश्च विमति र्विमना अपि ॥2॥**
**विशरदो भृशकृशौ दृढः परिदृढो वृढः।**
**आम्रादय इमेऽन्येऽपि सुमना दुर्म्मना भगः ॥3॥**
**रसो लसो वह वुधा चतुराः संगतः कतः।**
**लवणश्चेत्यतो वृत्तिविशेषे यो न तु त्वतौ ॥4॥**

यप्रत्ययसंयोगे प्रकृत्यन्ताकारेकारलोपः। पक्षान्तरे त्वतेमन् प्रत्ययाः [3]। जाड्यं, जडिमा, जडत्वं, जडता। पाण्डित्यं, पण्डितिमा, पण्डितत्वं, पण्डितता। मौर्ख्यं, मूर्खिमा, मूर्खत्वं, मूर्खता। सौमनस्यम्, दौर्मनस्यम्। भाग्यम्। रास्यं क्रीडा विशेषः स्त्रीबहुलः। लास्यं नृत्यम्। लावण्यं सौन्दर्य्य विशेषः। रसादीनां इत्थं प्रत्ययान्तानामेवार्थविशेषे वृत्तेर्न तदर्थविषयतायामेभ्यस्त्वतौ भवतः इत्याह पाणिनिः। वर्णवाचिभ्यस्तु श्वैत्यम्। शावल्यम्। उक्ताः केवल भावे प्रत्ययाः।

(8) गुणवचनात् कर्म्मणि नित्यं भावे तु विकल्पेन यः स्यादादिस्वरवृद्धिश्च [4]। प्रकृत्यन्ताकारेकारलोपः। पक्षान्तरे त्वतौ सामान्यौ। मूढस्य भाव कर्म वा मौढ्यम्। धार्ष्ट्यम्। कार्पण्यम्। दैन्यम्। धैर्य्यं, शौर्य्यम्। औदार्य्यम्। सामग्रयम्। स्त्रियां सामग्री। आनुपूर्व्यम्।आनुपूर्वी। याथार्थ्यम्। सादृश्यम्। सादेश्यम्। नैराश्यम्। प्रातिनिध्यं, सांनिध्यम्। सामीप्यम्।

---

1 बहोर्लोपो भू च बहोः (6-4-158)
2 वर्णदृढादिभ्यः ष्यञ च (5-1-123)
3 यस्येति च (6-4-148)
4 गुणवचनब्राह्मणादिभ्यः कर्मणि च (5-1-124)

(9) राजपतिभावलोमरुपकूलविधान्तेभ्यः कर्मणि नित्यं भावे तु विकल्पेन यः स्यादादिस्वरवृद्धिश्च [1]।

आधिराज्यं, स्वराज्यं, वैराज्यं, सार्वराज्यम्। आधिपत्यं, गाणपत्यं, सैनापत्यम्। त्रैभाव्यं, द्वैभाव्यं, ऐकभाव्यं, मान्यभाव्यं, ताथाभाव्यम्। भावशब्दात्तादिह स्वार्थे प्रत्ययो द्रष्टव्यः। अन्यत्वम`वान्यभाव्यम्। आनुलोम्यं प्रातिलोम्यं वैलोम्यम्। सारूप्यं, वैरूप्यं, तादृरूप्यम्। आनुरूप्यम्, आभिरूप्यम्, प्रातिरूप्यम्। आनुकूल्यं, प्रतिकूल्यम्। एकविध्यं, द्वैविध्यं, वैविध्यं, नानाविधमित्यादि।

**(10) चतुर्वर्णादीनां स्वार्थे यः स्यादादिस्वरवृद्धिश्च [2]।**
**चतुर्वर्णं च मणिकं तदर्थ मितिहोपया।**
**त्रिलोकी त्रिस्वरं सेना षड्गुणं चतुराश्रमम्॥1॥**
**अनन्तरं सर्वविद्यः समीपं सन्निधिः सुखम्।**
**मङ्गलं शीघ्रमित्याद्याश्चतुर्वणादयो मताः॥2॥**

चत्वारो वर्णाश्चातुर्वण्यम्। माणिक्यम्। तादर्थ्यम्। ऐतिह्यम्। औपम्यम्। त्रैलोक्यम्। त्रैस्वर्य्यम्। सैन्यम्। षाड् गुण्यम्। चातुराश्रम्यम्। आनन्तर्य्यम्। सर्वविध एव सार्वविद्यः। यकारे परे यकारलोपः [3]। सामीप्यम्। सान्निध्यम्। सौख्यम्। माङ्गल्यम्। शैघ्र्यम्। कालुष्यमित्यादि।

(11) सर्ववेदसर्वविद्यचतुर्वेदचतुर्विद्यानां स्वार्थे यः स्यादुभयपदादिस्वरवृद्धिश्च [4]। सर्वे वेदाः सर्ववेदाः। तानधीते सर्ववेदः। स एव सार्ववैद्यः। सर्वविद्यो वा सार्ववैद्यः। चतुरो वेदानधीते चतुर्वेदः। स एव चातुर्वैद्यः। चतुर्विधो वा चातुर्वैद्यः। वेदश्च विद्या चेत्येकार्थौ।

(12) सुभगदुर्भगयोः कर्मणि नित्यं भावे विकल्पेन यः स्यादुभयपदादिस्वर वृद्धिश्च [5]। सौभाग्यं, दौर्भाग्यम्।

(13) अनीश्वरात् कर्मणि नित्यं भावे तु विकल्पेन यः स्यादादिस्वरवृद्धिरूत्तरपदे नित्या पूर्वपदे तु विकल्पेन [6]। आनैश्वर्य्यम्। अनैश्वर्य्यं वा।

---

1 पत्यन्तपुरोहितादिभ्यो यक् (5-1-128)
2 चतुर्वर्णादीनां स्वार्थे उपसंख्यानम् (वा.3091)
3 हलो यमां यमि लोपः (8-4-64)
4 चतुर्वेदस्योभयपदवृद्धिश्च (ग. सू. 93)
5 तस्मै हितम् (5-1-5)हृद्भगेति. (6-3-19)
6 गुणवचनब्राह्मणादिभ्यः कर्मणि च (5-1-124)

(14) ब्राह्मणादिभ्यः कर्मणि नित्यं भावे तु विकल्पेन यः स्यादादिस्वरवृद्धिश्च।

**ब्राह्मणा माणव वाडव धूर्त सहायाभिरूप शौटीराः।**
**अक्षेत्रज्ञ विशस्ति प्रशस्ति दायाद् कवि चोराः ॥1॥**
**बहुभाषी संभाषी संवादीस्तेन संवेशी।**
**कापुरुषो दुःपुरुषो नटो विघाती च शीर्षघाती च ॥2॥**
**परमस्थो विषमस्थो मध्यस्थो वा समस्था वा।**
**उपराधय अपराध्य आराध्य वा विराध्य वा ॥3॥**
**क्षेत्रज्ञश्च कुतूहल कुशलौ चपलश्च निपुण पिशनौ च।**
**विषम विपात निपाता राजोचित वालिशाः दूतः ॥4॥**
**अलसो गडुलः कुटिलः समः समानः प्रवीण भग निश्नाः।**
**नीरोगश्चारोगस्तरूणस्तलुनानृशंसौ च ॥5॥**
**धर्मिक कर्मिक चर्मिक वर्मिक पर्षिक मजानिकोऽञ्जनिकः।**
**अञ्जलिक शिलिक मूलिक तिलकाविक चूडिक प्रतिकाः ॥6॥**
**आस्तिक नास्तिक पथिक ग्रामिक मृषिकं च सारथिस्तद्वत्।**
**छत्रिक पुत्रिक सूत्रक सूत्रिकमथ सुतिकं तद्वत् ॥7॥**
**सुहित पुरोहित नागर शाक्वर संरक्ष वाल मन्दाश्च।**
**खण्डिक दण्डिक पिण्डिकमित्यादिर्ब्राह्मणादिगणः ॥8॥**

ब्राह्मणस्य भाव कर्म वा ब्राह्मण्यम्। चौर्य्यम्। वैषम्यम्। राज्यम्। काव्यम्। औचित्यम्। स्त्रियामौचिती। शीलशब्दस्य भावकर्मवचनान्तस्य स्त्रियामेव प्रयोगः [1]। शैली।

(15) न पूर्वकयोर्यथातथयथापुरयोः कर्मणि नित्यं भावे तु विकल्पेन यप्रत्ययस्तदुभयपदादिस्वरवृद्धिश्च पर्य्यायेण [2]। अशब्दो नशब्दो वा निषेधार्थको नञ्संज्ञः। अयथातथाभावः– आयथातथ्यम्। आयाथातथ्यम्। आयथापुर्य्यम्। आयाथापुर्य्यम्।

(16) अर्हतः कर्मणि नित्यं भावे तु विकल्पेन यः स्यात्तकारात् प्राङ् नकारागमश्चादि स्वरवृद्धिश्च [3]। आर्हन्त्यम्। स्त्रियामार्हन्ती।

---

1 "ब्राह्मणादेराकृतिगणत्वात् लिङ्गस्य च लोकाश्रयत्वात्। वाचस्पत्यये तु स्वार्थे ष्यञ्" इत्युक्तम्।

2 यथातथायथापुरयोः पर्यायेण (7-3-31)

3 अर्हतो नुम् च (वा.3092)

(17) साक्षिणः कर्मणि नित्यं भावे तु विकल्पेन यः स्याट्टिलोपश्च [1]। साक्षिणः कर्म भावो वा साक्ष्यम्।

(18) दूतसखिवणिग्भ्यः कर्मणि नित्यं भावे तु विकल्पेन यः स्यात् [2]। दूत्यम्। सख्यम्। वणिज्या। वणिज्याशब्दे स्त्रीत्वमादन्तत्वं च स्वभावात् [3]। दूतवणिक् छब्दयोः ब्राह्मणादित्वाद णिदपि यकारो भवति। दौत्यम्। वणिज्यम्। यद्यपि प्राचां गणपाठे दूतशब्दो न दृश्यते तथापि ब्राह्मणादेराकृतिगणत्वात् प्रयोग दर्शनाच्च ब्राह्मणादित्वमभ्युपगम्यते।

(19) स्तेनात् कर्मणि नित्यं भावे तु विकल्पेन यः स्यान्नकाराकारलोपश्च [4]। स्तेनश्चोरः। तस्य भावं कर्म वा स्तेयम्। ब्राह्मणादित्वाणिदपि यकारः। स्तैन्यम्। त्वतौ च सामान्यौ। स्तेनत्वम्। स्तेनता।

(20) कपिज्ञात्योः कर्मणि नित्यं भावे तु विकल्पादेयः स्यादादिस्वरवृद्धिश्च [5]। अन्त्येकारलोपः। कापेयं कपित्वं कपिता। ज्ञातेयं ज्ञापित्वं ज्ञातिता। इह नायमेयः प्रत्ययो नापि प्रकृत्यन्तेकारलोपः, किन्तु य प्रत्यये प्रकृते स्वरयोः प्रागकारागमः इति मतम्।

(21) ऋत्विग् विशेषादकारान्तात् कर्मणि नित्यं भावे तु विकल्पादीयः स्यात् [6]। अच्छावाकस्य भावः कर्म वा अच्छावाकीयम्। मैत्रावरुणीयम्। ऋकारान्ते भ्यस्तु होत्रादिभ्योः प्रत्ययो वक्ष्यते। होत्रमौद्गात्रमित्यादि।

(22) ऋत्विग्वचनात्तु ब्रह्मशब्दात् कर्म्मणि भावे वा त्व एव नत्वन्यः प्रत्ययः [7]। सर्वविद्य ऋत्विग् ब्रह्मा। तस्य भावः कर्म वा ब्रह्मत्वमित्येव। यस्तु ब्राह्मणवचनो ब्रह्मशब्दः ततस्त्वतौ भवतः। ब्रह्मत्वं ब्रह्मता वा।

(23) प्रागभृज्जातिवचनात् कर्मणि नित्यं भावे तु विकल्पादप्रत्ययः स्यादादिस्वर वृद्धिश्च [8]। अप्रत्ययसंयोगे प्रकृत्यन्ताकारेकारलोपः। उकारात्तु प्रकृत्यन्तात् प्रागकारागमः। आश्वम्। औष्ट्रम्। गाद्र्दभम्। पाशवम्।

---

1 दिगादिभ्यो यत् (4-3-54)
2 सख्युर्यः (5-1-126) दूतवणिग्भ्यां च
3 माधवस्तु वणिज्या शब्दः स्वभावात्स्त्रिलिङ्गः। भाव एव चात्र प्रत्ययो न तु कर्मणि इत्याह।
4 स्तेनाद्यन्लोपश्च (5-1-125)
5 कपिज्ञात्योर्ढक् (5-1-127)
6 होत्राभ्यश्छः (5-1-135)
7 ब्रह्मणस्त्वः (5-1-136)
8 प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽ (5-1-129)

(24) वयोवचनात् कर्मणि नित्यं भावे तु विकल्पादप्रत्ययः स्यादादिस्वरवृद्धिश्च [1]। कौमारम्। कैशोरम्। यौगण्डम्। शैशवम्। वालतरूणयोस्तु य प्रत्ययः प्रागुक्तः। बाल्यम्। तारुण्यम्।

(25) लघुपूर्वकनामिस्वरान्तात् कर्मणि नित्यं भावे तु विकल्पादप्रत्ययः स्यादादिस्वरवृद्धिश्च [2]।

इ उ ऋ – इति नामिनः स्वराः। तत्रेकारस्य लोपः। मौनम्। युवतेर्भावो यौवतम्। क्वचिन्न। कवेर्भावः कर्म वा काव्यम्। ब्राह्मणादित्वाद्यप्रत्ययः [3]। कवित्वं कविता वा। उकारात् प्रागकारगमः। पार्थवम्, मार्दवम्। प्राणवम्, पाटवम्। आर्जवम्। पक्षे त्वतेमन् प्रत्यया उक्ताः [4]। ऋकारस्य रः [5]। पितुर्भावः कर्म वा पैत्रम्। दौहित्रम्। विमतेर्वैमतं, संमतेः सांमतम्। आभ्यां येमन् प्रत्ययौ त्वतौ चेति पञ्चधा रूपाणि। वैमत्यं, विमतिमा, विमतित्वं, विमतिता। सांमत्यं, संमतिमा, संमतित्वं, संमतिता। नामिस्वरस्य लघुपूर्वकत्वाभावात् पाण्डवतिपाण्डवादिभ्यो नायमप्रत्ययः।

(26) अशुचेः कर्मणि नित्यं भावे तु विकल्पादप्रत्ययः स्यादादिस्वरवृद्धिरुत्तरपदे नित्या पूर्वपदे तु विकल्पेन [6]। आशौचम्, अशौचम् वा।

(27) हायनान्तात् कर्मणि नित्यं भावे तु विकल्पादप्रत्ययः स्यादादिस्वरवृद्धिश्च [7]। द्वैहायनम्। त्रैहायनम्। चातुर्हायनम्।

(28) कुतुकादिभ्यः कर्मणि नित्यं भावे विकल्पादप्रत्ययः स्यादादिस्वरवृद्धिश्च [8]।

**कुतुक कमण्डल कटुका स्थविरः परिव्राजकः श्रमण वृषलाः।**
**पत्तिगणक रथगणकौ सुहृदयदुर्हृदय यजमानाः ॥1॥**
**क्षेत्रज्ञश्च कुतूहल कुशलौ चपलश्च निपुण पिशुनौ च।**
**सुस्त्री दुःस्त्री कुस्त्री अध्वर्युः सुष्ठु दुष्ठु वधूः ॥2॥**

---

1 प्रागभृज्जातिवयोवचनोद्गात्रादिभयोऽ (5-1-129)
2 इगन्ताच्च लघुपूर्वात् (5-1-131) तद्धितेष्वचामादेः (7-2-117)
3 गुणवचनब्राह्मणादिभ्यः कर्मणि च (5-1-124)
4 पृथ्वादिभ्य इमनिज्वा (5-1-122)
5 र ऋतो हलादेर्लघोः (6-4-161)
6 नः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् (7-3-30)
7 हायनान्त. (5-1-1-130)
8 हायनान्त. (5-1-130)

**मन्त्रे दुर्भग सुभगावनृशंसश्चेति कुतुमाद्याः ।**
**क्षेत्रेज्ञाद्याः षडिमे कुतुकादौ ब्राह्मणादौ च ॥3 ॥**

कौतुकम्। स्थाविरम्। याजमानम्। आध्वर्य्यम्। सौष्टवं दौष्टवम्। (सौहृदयं दौर्हृदयम) सुभगदुर्भगशब्दाभ्यां वैदिकभाषायामेवायमप्रत्ययः [1]। महते सौभगाय दौर्भगम्। यप्रत्ययस्तूभयपदवृद्धिमान् लोके च वेदे च। सौभाग्यं। दौर्भाग्यम्। क्षेत्रज्ञादिभ्यः षड्भ्योऽनृशंसाच्च ब्राह्मणादित्वाद् यप्रत्ययोऽपि। क्षेत्रज्ञं क्षैत्रज्ञ्यम्। कौतूहलं कौतूहल्यम्। कौशलं कौशल्यम्। चापलं चापल्यम्। नैपुणं नैपुण्यम्। पैशुनं पैशुन्यम्। आनृशंसमानृशंस्यं च। कुतुक कुतूहलयोः स्वार्थेऽयमप्रत्ययः। तदुक्तम्। कौतूहलं कौतुकं च कुतुकं च कुतूहलम्– इति।

(29) होत्रादिभ्यः कर्मणि नित्यं भावे तु विकल्पादप्रत्ययः स्यादादिस्वरवृद्धिश्च [2]।

**होतोद्गातोन्नेता प्रतिहर्त्ता च प्रशस्ता च।**
**सुभ्राता दुभ्राता भ्राता हर्त्ता सुहृच्च दुर्हृच्च ॥1 ॥**
**एत होत्रादिगणे युवा च सब्रह्मचारी च।**
**शब्दास्त्रयोदश स्युर्येषामप्रत्ययो भावे ॥2 ॥**

ऋकारस्य रेफः सन्धौ। होतुर्भावः कर्म वा हौत्रम्। औद्गात्रम्। सौभ्रात्रम्। दौभ्रात्रम् (सौहृदं दौर्हृदम्) यौवनम्। अकोऽपि युव शब्दाद्वक्ष्यते। यौवनकम्।

(30) सुहृद्दुर्हृदोः [3] कर्मणि नित्यं भावे तु विकल्पादप्रत्ययः स्यादुभयपदादिस्वरवृद्धिश्च [4]। सौहार्द्दम्। दौहार्द्दम्।

(31) पुरुषहृदयक्षोत्रियेभ्यः कर्मणि नित्यं भावे तु विकल्पादप्रत्ययः [5]। स्यादादिस्वर वृद्धिश्चाथ क्रमादन्त्याकारस्यायभागस्येयभागस्य लोपश्च [6] न तु समासे। पुरुषस्य भावः कर्म वा पौरुषम्। अलोपः। हृदयस्य हार्द्दम्। अयलोपः। श्रोत्रियस्य श्रोत्रम्। इयलोपः। समासे तु पुरुषहृदयोस्त्वतावेव [7]। सत्पुरुषत्वं सत्पुरुषता, सहृदयत्वं सहृदयता।

---

1 प्राणभृज्याति. (5-1-129) सूत्रे उद्गात्रादिषु सुभग शब्द पाठाद अत्र प्रकरणे ग्रन्थकृता स्वरस्य चिन्ता न कृता।

2 प्राणभृज्याति (5-1-129)

3 सद्ददुर्हृदोः इति मूले।

4 हायनान्त (5-1-130)हृदभगसिन्ध्वन्ते पूर्वपदस्य च (7-3-19)

5 हायनान्त(5-1-130)इत्यण् गुणवचनब्राह्मणादिभ्यः (5-1-124) इति ष्य

6 हृदयस्य हृल्लेखः वा शोक ष्य रोगेषु श्रोत्रियस्य यलोपश्च (वा.3093)

7 पुरुसासो (ग.सू. हृदयासे (ग.सू.))

(32) यशब्दान्ताद् गुरुपोत्तमात् कर्मणि निम्यं भावे तु विकल्पादक प्रत्ययः। स्यादादिस्वरवृद्धिश्च[1]। अन्त्याकारलोपः प्रागुक्तः। रमणीयस्य भावो रामणीयकम्। आभिधानीयकम्। साहायकम्[2]। सहायशब्दाद् यप्रत्ययोऽपि ब्राह्मणादित्वात्। साहाय्यम्।

(33) द्वन्द्वसमासान् कर्मणि नित्यं भावे तु विकल्पादकप्रत्ययः स्यादादिस्वरवृद्धिश्च[3]। स्त्रियामयं स्वभावात्। शैष्योपाध्यायिका। पैतापुत्रिका।

(34) मनोज्ञादिभ्यः कर्मणि नित्यं भावे तु विकल्पादकप्रत्ययः स्यादादिस्वरवृद्धिश्च।

**शब्दा मनोज्ञात् कल्याणाप्रश्यपुत्र बहुलाद्याः।**
**शतपुत्र सारपत्रामुष्यकुलामुष्य पुत्र युव चोराः ॥1॥**
**अभिरूप प्रियरूपच्छात्र श्रोत्रिय कुपुत्र कुलपुत्राः।**
**धूर्त्तो ग्रामकुलालो ग्रामकुमारश्च सुकुमारः ॥2॥**
**मेधावि विश्वदेवच्छान्दस चोरा युवा चेति।**
**ग्रामाद्य पुत्रषण्डौ एते षड्विंशतिर्बोध्या ॥3॥**

मानोज्ञकम्। वैश्वदेवकम्। आमुष्यपुत्रकम्। आभिरूपकम्। अभिरूपशब्दाद् यप्रत्ययोऽपि रूपान्तत्वात्। आभिरूप्यम्। तथा च प्रयोगः अर्चकस्य तपोयोगादर्चनस्यातिशायनात्। आभिरूपाच्च विम्वानां देवः सानिध्यमृच्छति।

(35) गोत्रचरणाभ्यां कर्मणि नित्यं भावे तु विकल्पादकोऽप्रत्ययलोपश्चादिस्वरवृद्धिश्च श्लाघात्याकारतदवेतेषु[4]। स्त्रियामयं स्वभावात्। गार्ग्यस्य भावो गार्गिका। गार्गिकया श्लाघते। गार्ग्यत्वेन विकत्थते इत्यर्थः। गार्गिकयाऽत्याकुरुते। गार्ग्यत्वे नाधिक्षिपतीत्यर्थः। गार्गिकामवेतः। गार्ग्यत्वं प्राप्तोऽवगवान् वा। काठिकया श्लाघतेऽत्याकुरुते वा। काठिकामवेतः। प्राणभृज्जतिलक्षणस्त्वकारो गोत्रचरणाभ्यां नेष्यते।

(36) स्त्रीपुंसाभ्यां कर्मणि नित्यं भावे तु विकल्पान्नः स्वरवृद्धिश्च[5]। स्त्रीणां कर्म स्त्रैणम। पुंसां पौस्नम्। भावे तु पक्षे त्वतौ भवतः[6]। स्त्रैणं, स्त्रीत्वं स्त्रीता। पौस्नम्, पुंस्त्वं, पुंस्ता। इति भावकर्मप्रत्ययाः॥

---

1 योपधाद् गुरुपोत्तमाद् वु (5-1-132)

2 सहायाद्वा (वा.3094)

3 द्वन्द्वमनोज्ञादिभ्यश्च (5-1-133)

4 गोत्रचरणाच्छलाघात्याकारतदवेतेषु (5-1-134)

5 स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् (4-1-87)

6 तस्य भावस्त्वतलौ (5-1-119)

## (द) स्त्रीप्रत्ययाधिकारः

लिङ्गव्यवस्थायामितरभाषापेक्षया संस्कृतभाषायां वैलक्षण्यं प्रतीयते। इतरा हि भाषा व्यवहारदृष्ट्या प्रवृत्ता इत्यतस्तासु सर्वास्वेव प्रायेण लोक प्रसिद्धपुमाद्यर्थानुरोधकल्पितान्येव शब्दजाते लिङ्गानि– पुंचेतनवाचकाः पुंलिङ्गाः, स्त्रीचेतनवाचकाः स्त्रीलिङ्गा, अचेतनवाचकास्तु नपुंसकलिङ्गा इति। न त्वेवं संस्कृतभाषायाम्। तद्भाषाभाषिणो हि पुराकल्पे परीक्षादृष्ट्या प्रवर्तमाना आर्य्याः पश्यन्ति प्रत्यर्थं लिङ्गसाङ्कर्य्यम्। चेतना जडा वा सर्व एवार्थाः पुंस्त्रीनपुंसकप्रत्ययाः सन्तीतिनैकान्ततोऽचेतनेषु नपुंसकत्वमेवाध्यवसातुं युज्यते। श्रूयते हि जडजातेष्वपि स्त्रीपुंभावो यथा– "आपो योषा अग्निर्नृषा" इति वृक्षादि स्थावरेष्वपि काश्चित् पुंजातीयान् कांचिद्वा स्त्रीजातीयानध्यवस्यन्ति कुशलाः। प्राणिजातेष्वपि च पशु मृगपक्षि कृमिकीटसरीसृपेषु स्त्रीपुंलक्षणानि प्रत्यर्थं भिद्यन्ते। तस्मान्नैकान्ततो लोकप्रसिद्धस्य श्मश्रुलोमादेः स्तनकेशादेर्वा पुंस्त्रीव्यवहार प्रवृत्तिनिमित्तत्वं शक्यमध्यवसातुम्। अनैकान्तिकत्वात्। तस्मादवश्यं किञ्चित् सर्वानुगतमेकलक्षणं वाच्यम्। तच्च–

**संस्त्यानप्रसवौ लिङ्गमास्थेयावर्थसंगतौ।**
**स्त्रीत्वं गुणानां संस्त्यानमर्थे पुंस्त्वं प्रवृत्तयः[1] ॥**

संस्त्यानं संघातः। प्रसवः प्रवर्तना। यत्र किञ्चिदागत्य संहन्यते सा स्त्री। तत्र गुणानामेकत्तापत्तिरेव स्त्रीत्वम्। यस्तु स्वावयवप्रसङ्गेन परं कस्मैचित् परिणामाय प्रवर्तयति स पुमान्। तत्र प्रवर्तनाकृतिमत्वमेव पुंस्त्वम्। लौकिक समयेऽपि कस्यचिदेकस्य शुक्रशोणितलक्षणस्यार्थस्य संस्त्यानसंबन्धादेवं स्त्रीत्वं तत्प्रसूतिसम्बन्धादेव च पुंस्त्वमास्थीयमानं दृष्टम्। परीक्षकसमये तु यदेव किञ्चित् स्वीयं परत्र गर्भाय प्रसूयते तदेव शुक्रं भवति। अतः सर्वत्रैव स्वांशप्रवर्तनादिलक्षणाविशिष्टव्यापारवत्वं पुंस्त्वम्। अथ निर्व्यापारत्वेऽपि तद्व्यापारफलग्राहित्वं स्त्रीत्वमिति निष्कर्षः। यद्यपि चान्योन्यस्मिनन्नन्योन्यांशसमर्पक्त्वं भूयसाऽनुभूयते तथापि वैशेष्यस्तु तद्वादः प्रवर्तते ततः पुंविवक्षायां पुंलिङ्गः शब्दः स्त्रीविवक्षायां स्त्रीलिङ्गोऽनुभयविवक्षायां नपुंसकलिङ्ग इति विवेच्यम्। विवक्षा च शब्दभेदाद् व्यवस्थिता।

अथवा सर्वा एवैता मूर्त्तयो दृश्यन्ते। ताश्च गुणसमुदायो द्रव्यमिति कृत्वा शब्दस्पर्शरूपरसगन्धाख्यानां पञ्चानां शब्दस्पर्शरूपाख्यानां त्रयाणामेव वा गुणानां

---

1 संस्त्यानप्रसवा लिङ्गमास्थेयौ स्वकृतान्ततः।
संस्त्याने स्त्यायतेर्ड्रट् स्त्री सुतेः सप् प्रसवे पुमान्॥ (महाभाष्यम्-4-1-3)

संमूर्छनेनैकत्र समवायात् सर्वा एवैताः संपिण्डितस्वभावश्चक्षुर्गोचराः सन्तीति मूर्तयः कथ्यन्ते। तस्मात् सर्वत्रैव गुणानां संस्त्यानमस्तीत्यविशेषात् सर्वत्रोपपन्नं स्त्रीत्वम्। एवं प्रवृत्तिरप्याविर्भावतिरोभावस्थितिलक्षणा सर्वत्रैव नित्या। न खलु कश्चिदप्यर्थः स्वस्मिन्नात्मनि मुहूर्त्तमप्यवतिष्ठते। वर्द्धते वा। यावदनेन वर्द्धितव्यमपायेन वा युज्यते। तदित्थमुभयोरेव निमित्तयोः सर्वत्र सत्वेऽपि शब्दतस्तद्विवक्षाधीना शाब्दलिङ्गव्यवस्था द्रष्टव्या। नहि कोऽपि शब्दो वाच्यगतानशेषानेव गुणानेकोऽभिधत्ते। सत्स्वप्यनेकेषु वाच्य गुणेषु कांश्चिदेवादाय शब्दस्तमर्थमभिधत्ते इति दृश्यते शाब्दः स्वभावः। तथा च संस्त्यानलक्षणस्त्रीत्वविवक्षायां स्त्रीलिङ्गशब्दः। प्रवृत्तिलक्षणपुंस्त्वविवक्षायां पुंल्लिङ्गं, उभयविवक्षायां तु नपुंसकमिति निष्कर्षः सिद्धः।

तत्र पुंस्त्वं नपुंसकत्वं च कारकविभक्तिस्वरूपगम्ये भवतः। स्त्रीत्वं पुनस्त्रेधा– व्यवस्थागम्यं, प्रकृतिगम्यं प्रत्ययगम्यं च। सन्ति केचन स्त्रीलिङ्गाः शब्दा यत्र स्त्रीत्वप्रत्ययापनक्षमं न किञ्चित् प्रकृतौ चिह्नं दृष्टं नापि वा ततस्तद्बोधनार्थं कश्चित् प्रत्ययः समादिश्यते। तत्र व्यवस्थागम्यमेव स्त्रीत्वं भवति। यथा स्वस्रादयः सप्त शब्दा युस्मदस्मदौ षट्संज्ञकाश्चेति। तत्र स्वस्रादयो नित्यस्त्रीलिङ्गः। अन्ये सर्वलिङ्गसाधारणाः इति विशेषः। स्वस्रादयो वक्ष्यन्ते। त्वं युवां यूयम्, अहम् आवां वयमित्यादीनि युष्मदस्मदो रूपाणि। पञ्च षट् सप्तेत्यादयः संख्यावचनाः षट्संज्ञकाः।

अन्ये च केचन सन्ति स्त्रीलिङ्गाः शब्दाः- यत्र प्रकृत्यं शत्येव स्त्रीत्वावबोधनक्षमत्वं दृश्यते तत्र प्रकृतिगम्यं तत्। सन्ति हि कतियतितति शब्दान् यतिपति शब्दौ च विहायान्ये सर्वेति प्रत्ययान्ताः भावार्थकनिशब्दान्ताश्च कतिपये शब्दाः स्त्रीलिङ्गाः। न च तेभ्योऽन्ये स्त्रीप्रत्यया विधीयन्ते। तिन्यादिभिः प्रकृतिभागैरेव स्त्रीत्वावगमात् ते च लिङ्गानुशासनप्रकरणे वक्ष्यन्ते।

अथ सन्ति केचन शब्दाः स्त्रीलिङ्गा ये तच्छब्दसमवधानेन व्याक्रियमाणैः प्रत्ययविशेषैः स्त्रीत्वमवगमयन्ति। ते च शब्दा अनेकधा स्त्रियामवतार्यन्ते– शाब्दस्त्रीत्वात्, दाम्पत्यपुंयोगात्, अपत्यपुंयोगात्, अनुबन्धपुंयोगात्, जातियोगाद् गुणयोगाद्वा। तत्र तेषां स्त्रीप्रत्ययानां प्रतिपत्त्यर्थमिदं प्रकरणमारभ्यते।

आ, ई, री, नी, आनी, आयनी, आयी, आवी, ऊ– इत्येते नवैव प्रत्ययाः नामविशेषादुत्तरं प्रयुज्यमानाः स्त्रीत्वं प्रत्याययन्ति। तत्र क्रमेणैषामेकैकस्य प्रयोग नियमाः प्रदर्श्यन्ते।

## 2. आ प्रत्ययः

(1) अकारान्तादाकारोऽनुदात्तोऽन्येस्त्रीप्रत्ययविधिर्न चेत्।[1] रमा। गङ्गा। ध्रुवा। सामान्यविधिरयं शेषविधिर्वा। यत्र क्वचिदुत्तरे स्त्रीप्रत्यया निषिध्यन्ते अन्यस्वरान्तात्त्वाकार नास्ति।

(2) सपूर्वात् पादाद् ऋच्याकारोऽनुदात्तः पाहृस्वत्वं च[2]। द्वौ पादौ यस्यां सा द्विपदा ऋक्। एकः पादो यस्यां सैकपदा ऋक्। पादशब्दपर्य्यायवाची पदशब्दोऽप्यस्ति तेन यद्यपि सिद्धमेतत्। तथापि पादशब्देन समासे द्विपादा ऋगिति न व्याहार्य्यामित्यावेदयितुमिदमुक्तम्।

(3) स्रुवादिष्वाकारोऽनुदात्तो व्यञ्जनान्ताद् विकल्पेन [3]।

**स्रुवा स्रुचा रुचा वाचा ऋचा क्रु चा गिरा धुरा।**
**रुषा तृषा त्विषा भासोष्णिहा च समिधा क्षुधा ॥1॥**
**ककुभा च प्रतिपदा संपदा विपदाऽऽपदा ॥**
**निशा दिशा देवविशा रूजेत्याद्याः स्रुवादयः ॥2॥**

पक्षे– स्रुप्। स्रुक्। रुक्। वाक्। ऋक्। क्रुङ्। ग्रीः। धूः। रुद् त्विट्। भाः। उष्णिक्। समित्। क्षुत्। ककुप्। प्रतिपत्। संपत्। विपत्। आयत्। निट्। दिक्। देवविट्। रुक्। स्रुवादिराकृतिगणः।

(4) मन्नन्तादन्नन्ताद्बहुव्रीहेश्चाकारोऽनुदात्तष्टिलोपश्च विकल्पेन [4]। अन् भागष्टिः। सीमा सीमे सीमाः। बहुयज्वा बहुयज्वे बहुयज्वाः। बहुराजा बहुराजे बहुराजाः। पक्षे सीमा सीमानौ सीमानः। बहुयज्वा बहुयज्वानौ बहुयज्वानः। बहुराजा बहुराजानौ बहुराजानः। उपधालोपिनोऽन्नन्तादीकारोऽपि वक्ष्यते। बहुराज्ञी बहुराज्ञ्यौ।

अयं स्त्रीप्रत्ययाकार आप् शब्देन व्यवहर्तव्यः।

### आवाश्रयविधिः

(1) सत्याकारे प्रकृत्यन्तस्या क प्रत्ययस्यानाशीररर्थस्याद्यकार इकारतां याति [5]। कारिका। सर्विका। आशिषि तु जीवका भवका [6]।

---

1 अजाद्यतष्टाप् (4-1-4)
2 टाबृचि (4-1-9)
3 अजादिगणपाठात् अथवा भागुरि मतेन आप्सिद्धिः।
4 डाबुभाभ्यामन्यतरस्याम् (4-1-13)
5 प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः (7-3-44)
6 आशिषि वुनश्च न (वा.4528)

(2) तद्धित क प्रत्यययात् पूर्वस्य प्रकृत्यकारस्य चेकारः [1]। मामिका। नरिका। दाक्षिणात्यिका। इहत्यिका [2]। देवदत्तिका। भीमसेनिका।

(3) उत्तरपदलोपे तु नेकारः[3]। देवका । भीमका। तद्धित क प्रत्ययादित्युक्तेर्बहुब्रीहि क प्रत्ययात् पूर्वस्य नेकारः। बहुपरिव्राजका।

(4) यत्तदोर्नेकारः[4]। यका सका। यकां तकाम्।

(5) क्षिपकादीनां नेकारः[5]। क्षिपका। ध्रुवका। कन्यका। चटका। चरका। करका। सेवका। अवका। लहका। अलका। एडका। आकृति गणोऽयम्।

(6) तारका ज्योतिषि[6]। अन्यत्र तारिका।

(7) वर्णका तान्तवे[7]। अन्यत्र वर्णिका।

(8) अष्टका पितृदैवत्ये [8]। अन्यत्र अष्टिका।

(9) वृन्दारका वा वृन्दारिका वा [9]।

(10) प्राचां भाषायां शकुना वर्तका वर्त्तिका तूदीचाम् [10]।

**देशेऽस्मिन् भारते वर्षे शरावत्यास्तु योऽवधेः।**
**देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः॥**

(11) स्वार्थिकात् क प्रत्ययात् पूर्वस्य यकारात् ककराद्वा धात्वनवयवादुत्तरस्याकारस्योदीचामिकारो न प्राचाम् [11]। आर्य्यिका चटकिका–

---

[1] मामकनरकयोरूपसंख्यानम् (वा.4524)
[2] त्यक्त्यपोश्च (वा.4525)
[3] उत्तरपदलोपे न (वा.4529)
[4] न यासयोः (7-3-45)
[5] क्षिपकादीनां च न (वा.4530)
[6] तारका ज्योतिषि (वा.4531)
[7] वर्णका तान्तवे (वा.4532)
[8] अष्टका पितृदेवत्ये (4534)
[9] सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम् (वा.4535)
[10] वर्तका शकुनौ प्राचाम् (वा.4533)
[11] उदीचामातः स्थाने यकपूर्वायाः (7-3-46)

इत्युदीच्यानाम्। आर्य्यकचटकका– इति प्राच्यानाम्। यकारककारयोर्धात्ववयवत्वे तु सर्वेषामिकार[1]। शुभ्रयिका। सुनयिका। सुपाकिका।

(12) स्वार्थकप्रत्ययात् पूर्वस्य भस्त्रेषाजाज्ञाद्वास्वानामकारस्योदीचामिकारो न प्राचाम्[2]। भस्त्रिका, निर्भस्त्रिका, एषिका, अजिका, ज्ञिका, द्विके, निःस्विका इत्युदीच्यानाम्। भस्त्रका, निर्भस्त्रका, एषका, अजका, ज्ञका, द्वके निःस्वका **इति प्राच्यानाम्।**

**(13) क प्रत्ययात्** पूर्वस्य नित्यस्त्रीलिङ्गविहितस्त्री प्रत्ययाकारस्य त्वाकारोऽकार इकारो वा[3]। गङ्गाका। गङ्गका। गङ्गिका। अखट्वाका। अखट्विका।

**(3) ई प्रत्ययोऽकारान्तात्**

(1) ईकारे सति सर्वत्र प्रकृत्यन्ताकारलोपो वक्ष्यते[4]।

**(क) जातिवचनात्**

(1) अनित्यस्त्रीलिङ्गाज्जातेरयकारोपधादीकारः[5]।

**आकृतिग्रहणाजाति–र्लिङ्गानां च न सर्वभाक्।**
**सकृदाख्यातनिर्ग्राह्या–गोत्रं च चरणानि च[6]॥**
**प्रादुर्भाव विनाशाभ्यां सत्वस्य युगपद् गुणैः।**
**असर्वालिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥**

अनुगतसंस्थानव्यङ्ग्या जातिरित्येकं लक्षणम्। तटी। कुमारी। असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद् व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरिति लक्षणान्तरम्। ब्राह्मणी। वृषली। सर्वलिङ्गत्वाद्गुणजातौ नेकारः। शुक्ला। कृष्णा। असर्वलिङ्गत्वेऽपि सकृदाख्यातनिर्ग्राह्यत्वाभावान्नेह-देवदत्ता। अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिवद् व्यवहर्त्तव्यः। औपगवी। कठी बह्वृची। उत्तरलक्षणाभ्युपगमे तु कुमारत्वं न जातिः। कुमारशब्दस्य प्रवृत्तिनिमित्तं प्रथमं वयो वा पुंसा सहासंप्रयोगो वा, सर्वथापि तस्य

---

1 धात्वन्तयकोस्तु नित्यम् (वा.4536)

2 भस्त्रैषाजाज्ञाद्वास्वा न पूर्वाणामपि (7-3-47)

3 अभाषितपुंस्काच्च (7-3-48)

4 यचि भम् (1-4-18), यस्येति च (6-4-148)

5 जातेरस्त्रीविषयादयोधात् (4-1-63)

6 महाभाष्यम् (4-1-63) तत्र गोत्रं च चरणै सह इति पाठः। द्वितीयं लक्षणमपि तत्रैव।

बहुव्यक्तिव्यापित्वेऽपि गुणसमानाधिकरण्येऽपि द्रव्यस्यान्तं यावदनुपलब्धेः। जातिलक्षणाभावान्नेह– मुण्डा। नित्यस्त्रीत्वान्नेह- बलाका। योपधत्वान्नेह– क्षत्रिया।

(2) यकारोपधत्वेपि हयगवयमुकयमनुष्यमत्स्यानामीकारः उदात्तः [1]। हयी। गवयी। मुकयी। मनुष्यमत्स्ययोर्यकारोऽपि लुप्यते। मनुषी। मत्सी। गौरादित्वाच्च सिद्धमेतत्।

(3) नित्यस्त्रीत्वेऽपि पाककर्णपर्णपुष्पफलमूलवालोत्तरपदादोषधिजातेरिकार उदात्तः [2]। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोवाली। औषधिजातयश्चैताः।

(4) अञ्चूत्तरपदक सत्काण्डप्रान्तशतैकपूर्वात् पुष्पादोषधिजातेर्नेकारः [3]। प्राक्पुष्पा। प्रत्ययक्पुष्पा। सत्पुष्पा। काण्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एकपुष्पा।

(5) त्रिश्वेतसंभस्त्राजिनशणपिण्डस्थिरपूर्वकात् फलादोषधिजातेर्नेकारः [4]। त्रिफला श्वेतफला। संफला। भस्त्रफला। भस्त्राकारस्य ह्रस्वत्वं संज्ञायां वक्ष्यते। अजिनफला। शण्फला। पिण्डफला। स्थिरफला।

(6) नञ्पूर्वान्मूलादोषधिजातेर्नेकारः [5]। निषेधार्थकोऽयं शब्दो नशब्दो वा नञ् शब्देनोच्यते। अमूला।

(7) अमहत्पूर्वाच्छूद्राच्च जातेर्नेकारः [6]। शूद्रत्वाजातिविशिष्टा स्त्री शूद्रा। महत्पूर्वत्वे त्वीकारो भवत्येव। महाशूद्र त्वजातिविशिष्टा महाशूद्री। पुंयोगे तु महत्पूर्वत्ये चामहत्पूर्वत्वे च नित्यमीकारः [7]। शूद्रस्य स्त्री शूद्री। महाशूद्रस्य स्त्री महाशूद्री।

**''शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरेव च।**
**आभारी तु महाशूद्री जातिपुंयोगयोः समा॥''** [8]

(8) अजादिभ्यो नेकारः [9]।

---

1 योपधप्रतिषेधेहयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः (वा.2495)
2 पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च (4-1-64)
3 सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् (वा.1496)
4 सम्भस्त्राजिनशणपिण्डेभ्यः फलात्ः(वा.2499)
5 मूलान्नः (वा.2500)
6 शूद्रा चामहत्पूर्वा जातिः (वा.2400-2401)
7 पुंयोगादाख्यायाम् (4-1-84)
8 अमरकोशः (मनुष्यवर्गः-13)
9 अजाद्यतष्टाप् (4-1-4)

**अजा चाश्वा च चटका मूषिका कोकिलैडका।**
**दंष्ट्रेत्यजादयोऽन्येऽपि जातावाकार भागिनः ॥**

### (ख) वयोवचनात्

(1) वयसो वार्द्धक्यभिन्नादीकारोऽनुदात्तः[1]। कुमारी। किशोरी। तरुणी। तलुनी। वधूटी। चिरण्टी[2]। वार्द्धक्यवयोवचनत्वान्नेह। वृद्धा। स्थविरा। पलिता। पलित शब्दस्य पक्षे पलिक्नीति वक्ष्यते।

**(2) कन्यादिभ्यो वयोवचनेभ्यो नेकारः[3]।**
**कन्या, बाला वत्सा होडा मन्दा विलाता च।**
**पाकेति, सप्त हित्वा प्रथमवयोवाचकादी स्यात् ॥**

(3) हायनान्तात् संख्यादिबहुव्रीहिरीकारोऽनुदात्तो वयसि गम्ये[4]। द्विहायनी बाला। त्रिचतुर्भ्यां हायनस्येकारे णत्वं भवति[5]। त्रिहायणी। चतुर्हायणी। वयसोऽन्यत्र– द्विहायना त्रिहायना चतुर्हायना शाला।

### (ग) गुणवचनात्

(1) चण्डादिभ्यो विकल्पेनेकारः उदात्तः[6]।

**चण्डोदारा विकटा विशङ्कटा वा विशाला वा।**
**कमलजाराल कृपणा कल्याणा वा पुराणा वा ॥1 ॥**
**भरुजा ध्वजा च तद्वन्नद्यर्थे चन्द्रभागा वा।**
**ङ्यन्ता अपि दृश्यन्ते प्रयुज्यमानाः क्वचित्त्वेते ॥2 ॥**

(2) उपाध्यायाद्विकल्पेनेकारो उदात्तो गुणयोगे[7]। या स्वयमेवाध्यापयति सा उपाध्यायी उपाध्याया।

### (घ) स्वाङ्गवचनात्

(1) द्वयक्षरमसंयोगोपधमुपसर्जनं यत् स्वाङ्गं तदन्ताद् विकल्पेनेकार[8]। उदात्तो दिक्पूर्वपदात्वनुदात्तः[1]। केशानतिक्रान्ता अतिकेशी अतिकेशा वा माला। निष्केशी

---

1 वयसि प्रथमे (4-1-20)
2 वयस्यचरम इति वाच्यम् (वा.2435)
3 कन्याया न "कन्यायाः कानीन च (सू.1119) इति निर्देशात्। अन्येषां अजादिगणे पाठात् टाप्।
4 दामहायनान्ताच्च (4-1-27)
5 त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम् (वा.5038) वयोवाचकस्यैव हायनस्य ङीब्णत्वं चेष्यते (वा.244)
6 बह्वादिभ्यश्च (4-1-45)
7 मातुलोपाध्याययोरानुग्वा (4-1-49) या तु स्वयमेवाध्यापिका तत्र वा ङी ष् वाच्यः
8 स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् (4-1-54)

यूका। इति तत्पुरुषकृतोपसर्जनम्। चन्द्रमुखी चन्द्रमुखा- इति बहुव्रीहि कृतोपसर्जनम्। द्व्यधिकाक्षरत्वे संयोगोपधत्वे चाकार एव। सुजघना। सुगुल्फा। उपसर्जनाभावान्नेहशिखा।

**अद्रवं मूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।**
**अतत्स्थं तत्र दृष्टं च तस्य चेत् तत्तथा युतम्॥**

सुस्वेदा, बहुकफा- द्रवत्वात्। सुज्ञाना, सुबोधा-अमूर्त्तत्वात्। श्लक्ष्णमुखा दीर्घमुखा शाला-अप्राणिस्थत्वात्। सुशोफा-विकारजत्वात्। सुकेशी सुकेशा वा रथ्या। अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात्। सुस्तनी सुस्तना वा अर्चा- प्राणिवत् प्राणिसदृशे स्थितत्वात्।

(2) त्र्यक्षरत्वेऽपि नासिकोदरयोरूपसर्जनयोरन्तत्वे विकल्पेनेकारः उदात्तो दिक्पूर्वपदत्वे त्वनुदात्तः [2]। तुङ्गनासिकी तुङ्गासिका। सहोदरी, सहोदरा भगिनी। प्राङ्नासिकी उदङ्नासिकीत्यादौ त्वनुदात्तः ईकारः।

(3) संयोगापधत्वेप्योष्ठजङ्घादन्तकर्णश्रृंङ्गपुच्छेभ्योऽङ्गगात्रकण्ठेभ्योश्चोप–सर्जनेभ्यो विकल्पेनेकारः उदात्तयो दिक्पूर्वपदेभ्यस्त्वनुदात्तः [3]। बिम्बोष्ठी, बिम्बोष्ठा। सुजङ्घी, सुजङ्घा। सुदन्ती, सुदन्ता। लम्बकर्णी, लम्बकर्णा। दीर्घश्रृंङ्गी, दीर्घश्रृंङ्गा। सुपुच्छी, सुपुच्छा। अङ्गगात्रकण्ठेभ्यो नोक्तः पाणिनिनेकारः। प्रयागास्तु दृश्यन्त इति सांप्रदयिकाः [4] स्वाङ्गी, स्वाङ्गा। हेमगात्री, हेमगात्रा। कम्बुकण्ठी, कम्बुकण्ठा।

(4) कवरमणिविषशरोपमानपूर्वात् पुच्छान्नित्यमीकारः उदात्तः दिक्पूर्वपदत्वे त्वनुदातः [5]। कवरपुच्छी। मणिपुच्छी। विषपुच्छी। शरपुच्छी। उलूकपुच्छी। गोपुंच्छीत्यादि ।

(5) उपमान् पूर्वात् पक्षाच्च नित्यमीकार [6]। उलूकपक्षी मयूरपक्षी शाला।

(6) सहनञ् विद्यमानपूर्वात्तु स्वाङ्गान्नेकारः [7]। सकेशा, अकेशा, विद्यमान केशा। सहनासिका, अनासिका, विद्यमाननासिका। सदन्ता, अदन्ता, विद्यमानदन्ता।

---

1 दिक्पूर्वपदान्ङीप् (4-1-60)
2 नासिकोदरोष्ठजङ्घादन्तकर्णश्रृङ्गाच्च (4-1-55)
3 नासिकोदरौष्ठ (4-1-55) पुच्छाच्च (वा.2489)
4 अङ्गगात्रकण्ठेभ्योऽपि वक्तव्यम् (वा.)
5 कबरमणिविषशरेभ्यो नित्यम् (वा.2490)
6 उपमानात्पक्षाच्च पुच्छाच्च (वा.2491)
7 सहनञ्विद्यमानपूर्वाच्च (4-1-97)

(7) संज्ञायां तु नखमुखाभ्यां नेकारः [1]। शूर्पणखा गौरमुखा।

(8) क्रोडादिभ्योऽपि नेकारः [2]। अश्वानामुरः क्रोडा। कल्याणक्रोडा। क्रोडादयस्तु घोणा वालो नालो गलो गुदश्च भगः।

गोखा[3] शिखा नखः खुर उखा शफः शुक्रः कर भुजाश्चान्ये।

**(ङ) वर्णवचनात्**

(1) वर्णादनुदात्तान्तादीकार उदात्तः [4]। कल्माषी। सारङ्गी। **मध्योदात्तावेतौ** [5]। उदात्तान्ते तु नेकारः। कृष्णा। कपिला। स्वरप्रक्रिया वक्ष्यते।

(2) पिशङ्गशोणयोर्विकल्पेनेकारः उदात्तः [6]। पिशङ्गी। पिशङ्गा। शोणीत्येव प्राच्यानाम्। शोणेत्येवोदीच्यानाम् [7]।

(3) तोपधात्तु वर्णादनुदात्तान्तादीकारोऽनुदात्तो विकल्पेन तो नश्च [8]। एनी। एता। रोहिणी। रोहिता। उदात्तान्ते तु नेकारः। श्वेता। असिता [9]। असितशब्दस्य पक्षेऽसिक्नीति वक्ष्यते। अवदातशब्दस्तु न वर्णवाची किन्तु विशुद्धवाची।

**त्रीणि यस्यावदातानि विद्या योनिश्च कर्म्म च।**
**एतच्छिवे विजानीहि ब्राह्मणाग्रयस्य लक्षणम्।।**[10]
**इत्येवं व्यवहारात् अतो नेकारः। अवदाता।**

अवदातं सिते पीते विशुद्धे प्रवरेऽपि चेति विश्वकोशे–

अवदातं तु विमले मनोज्ञे सितयीतयोरिति हेमचन्द्रीये चान्यत्र चैवम्। दर्शनाद्वर्णवाचित्वाभिमाने तु अजादिष्ववदातशब्दो द्रष्टव्यः। तेनावदाता इत्येव।

---

1 नखमुखात्संज्ञायाम् (4-1-58)
2 न क्रीडादिबह्वचः (4-1-56)
3 अयं शब्दः क्रोडादिगणे न दृश्यते।
4 अन्यतो ङीष् (4-1-40)
5 लघावन्ते द्वयोश्च बह्वषो गुरुः(फि.42)
6 पिशङ्गादुपसंख्यानम् (वा.2455)
7 शोणात्प्राचाम् (4-1-43)
8 वर्णादनुदात्तात्तोपधात्तो नः (4-1-39)
9 असितपलितयोर्न (वा.2453)
10 महाभाष्यम् (4-1-48)

(4) नीलात् प्राण्योषध्योर्नित्यं संज्ञायां तु विकल्पेनेकारः उदात्तः [1]। नीली औषधिः। नीली गौः। संज्ञायां तु नीली नीला वा। अन्यत्र नीलैव।

## (च) निष्ठाप्रत्ययान्तात्

(1) करणपूर्वात् क्रीतान्तादुदात्त ईकारो न सर्वत्र [2]। वस्त्रेण क्रीता वस्त्रीक्रीती। क्वचिन्न-धनक्रीता।

(2) करणपूर्वान्निष्ठान्तादुदात्त ईकारोऽल्पत्वे [3]। अभ्रेणाल्पाल्पं लिप्ता अभ्रलिप्ती द्यौः। सूर्य्यविलिप्ती द्यौः।

(3) स्वाङ्गजातिपूर्वान्निष्ठान्तादन्तोदात्ताद्बहुव्रीहेरीकारः उदात्तः [4]। उरुभिन्नी। स्वाङ्गजाति पूर्वत्वोक्तेर्बहुनञ्सुकालसुखादिपूर्वत्वे सति नेकारः। बहुक्रीता। अकृता। संकृता। मासजाता। वत्सरजाता। सुखादयो नामधातौ तात्करणिकप्रक्रियामुक्ताः। सुखजाता। दुःखजाता। क्षिप्रजाता। इत्यादि। बहुव्रीहिस्वरेणान्तोदात्ता एते।

(4) जातान्तान्नेकारः [5]। दन्तजाता। स्तनजाता।

(5) पाणिगृहीती भार्य्यायाम् [6]। इहापीकार उदात्तः। यस्या अग्निसाक्षिपूर्वकं पाणिग्रहणे कृतं सा पाणिगृहीती। यस्य यथाकथञ्चित् पाणिर्गृह्यते पाणिगृहीता सा भवति।

(6) अस्वाङ्गजातिपूर्वात्तु तस्माद्विकल्पेनेकारः स चोदात्तः [7]। सुरापीती, सुरापीता। अन्तोदात्तत्वान्नेह-वस्त्रच्छन्ना।

(7) प्रबद्धविलून्यादिषु वहुलमीकारः स्यात् संज्ञायां वेदे च [1]। प्रबद्धविलूनी। प्रबद्धविलूना।

---

1 नीलादोषधौ (वा.2456)प्राणिनि च (2458) संज्ञायां वा (2457)
2 क्रीतात्करणपूर्वात् (4-150)
3 क्तादल्पाख्यायाम् (4-1-51)
4 बहुव्रीहेश्चान्तोदात्तात् (4-1-52) जातिपूर्वादिति वक्तव्यम् (वा.2484)
5 जातान्तान्न (वा.2479)
6 पाणिगृहीती भार्यायाम् (वा.2480)
7 अस्वाङ्गपूर्वपदाद्वा (4-1-53)

## (छ) प्रकीर्णप्रत्ययान्तात्

(1) एयतय द्वयसदघ्नमात्रवरेकेकायनप्रत्ययेभ्योऽनुपसर्जनेभ्य ईकारोऽनुदात्तः [2]। सौपर्णेयी। पञ्चतयी। ऊरुद्वयसी। उरुदघ्नी। उरुमात्री। दाक्षायणी। इत्वरी। ईश्वरी आक्षिकी। लावणिकी। शाक्तीकी। याष्टीकी। गार्ग्यायणी। दाक्षायणी। उपसर्जनत्वान्नेह।

(2) अनुपसर्जनात् ख्युन्नणञ्टकञ्नञ्स्नञ्[3] ईकारानुदात्तो [4]। आढ्यसुभगस्थूलपतितनखगात्रप्रियेषु पूर्वेषु करोतेरभूततद्भावेऽर्थेऽनप्रत्ययो भवति ख्युन् संज्ञः पूर्वत्र च द्वितीयैकवचनश्रवणम्। तस्मादीकारः। आढ्यंकरणी सुभगंकरणी इत्यादि। ऐन्द्री। औत्सी। कुरुचरी। यादृशी। स्त्रैणी। पौंस्नी।

## (ज) गोत्रप्रत्ययान्तात्

(1) अपत्यार्थक य प्रत्ययान्ताद् गर्गादेरीकारोऽनुदात्तस्तत्र यलोपश्चोदीचाम्[5]। अत्र यप्रत्यये आदिस्वरवृद्धिर्दृश्यते। गर्गस्यगोत्रापत्यं गार्ग्यः। स्त्री चेद् गार्गी। वात्स्यः। वात्सी।

**गर्गो वत्स मनोऽवटाः शठशकौ शङ्केकसंस्कृत्यजाः।**
**वृक्षागस्ति पुलस्तिरैभचमसाः विश्वावसुर्व्याघ्रपात्॥1॥**
**वाजासे विदभृद्धनञ्जय भिषग् भिष्णक् तिथिक्षानडुद्।**
**गोकक्षोक्थ कुटीगु घूम महितागस्त्यास्तथाकुण्डिनी॥2॥**
**याज्ञवक्कः पर्णवल्कः कण्वः शाण्डिलमुद्गलौ।**
**भडितो भण्डितो दल्भः स्थूरो मुसलपिङ्गलौ॥3॥**
**चुलुकोलूक चणकाश्चेकितोऽथ चिकित्सितः।**
**रहुगणो वृषगणोऽभयजातो विरोहितः॥4॥**
**जरमाणो जतूकर्णी जमदाग्निः पराशरः।**
**शर्कराक्षः पूतिमाषोऽग्निवेशः कृष्णमन्त्रितौ॥5॥**
**वोधो मधुः करुकतो वृहदग्नि सुलाभिनौ।**
**एकलूः पिप्पलूस्तद्वदिन्द्रहूरथ देवहूः॥6॥**

---

1 बहुलं संज्ञाछन्दसोरिति वक्तव्यम् (वा.)

2 टिड्ढाण द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः (4-1-15)

3 ख्युन्नण षटक नञ्स्नञ् इति मूले।

4 नञ्स्नञीकख्युंस्तरूणतलुनानामुपसंख्यानम् (वा.2425)

5 यञ्श्च (4-1-16) हलस्तद्धितस्य (6-4-150)

**स्यादेण्काऽप्यररका गोलन्दाश्मरथा विति।**
**एभ्यो गोत्रयञन्तेभ्यो ई तथा आयनी स्त्रियाम्॥7॥**

व्याघ्रपाच्छब्दे यञि पा ह्रस्वत्वं च। वैयाघ्रपदी। गर्गादित्वाभावान्नेह देवस्यापत्यं दैव्या[1]। आम्वष्ठ्या सौवीर्य्या। आवत्या कौसल्या। आजाद्या। कौरव्या। नैषध्या। कारीषगन्ध्या। कौमुदगन्ध्या। वाह्या। पौणिक्या। भौणिक्या क्रौड्या। भौज्या। सात्यमुग्र्या इत्यादि।

(2) ष्यन्तादावट्याच्च नेकारः [2]। पूतिमासस्य गोत्रापत्यं स्त्री पौतिमाष्या। शार्कराक्ष्या। तैतिक्ष्या। वाक्ष्या। अवटस्य गोत्रापत्यमावट्यः। स्त्रीचेदावट्या। इत्थं उदीच्या भाष्यन्ते। प्राच्यानां त्वायनी प्रत्ययो वक्ष्यते। गार्ग्यायणी। वात्स्यायनी। पौतिमाष्यायणी। शार्कराक्ष्यायणी। आवट्यायनी।

(3) गोत्रप्रत्ययान्तादाङ्गिरसवचनाद् वतण्डादीकारोऽनुदात्त प्रत्ययलोपश्चादेरवृद्धिश्च [3]। द्वौ हि वतण्डौ स्मर्य्येते। आङ्गिरसश्चानाङ्गिरसश्च। तत्राङ्गिरसस्य गोत्रापत्यं वातण्ड्यो वा वातण्डो वा। स्त्री चेद् वातंड्यायनी वा वातण्डी वा। एकत्र लोहितादित्वादायनीप्रत्ययः। अन्यत्राणन्तत्वादीकारः।

(4) तद्राजप्रत्ययान्ताज्जनपदवचनादकारान्तादवन्तिकुन्तिभ्यां चेकारोऽनुदात्तः प्रत्ययलोपश्चादेरवृद्धिश्च [4]। शूरसेन देशीया स्त्री शूरसेनी।मद्री।अवन्ती कुन्ती।

(5) न प्राच्यभर्गादीनामादेरवृद्धिः।[5]पाञ्चाली। वैदर्भी। मागधी। आङ्गी। वाङ्गी। इति प्राच्याः। भार्गी। कारुषी। कैकयी।

**भगः कुरुषः सुस्थालः साल्व कश्मीर केकयाः।**
**उरः कौरव्य इत्येते भर्गादय उदाहृताः॥**

केचित्तु मद्रस्यापि भर्गादित्वमिच्छन्ति। माद्री। केकयशब्दस्य तु नेच्छन्ति। केकयी। कैकेयी शब्दस्तु प्रमादापतितः। इतरेषां तु गोत्राप्रत्ययप्रत्ययान्तानां जातिवद् व्यवहारोपगमादीकारो द्रष्टव्यः। औपगवी।

---

1 अनपत्याधिकारस्थान्न ङीप्=(वा.2426)
2 षाद्य श्चात्वाच्यः (वा.2505)
3 सारङ्गरवाद्यो ङीन् (4-1-73)लुक्स्त्रियाम् (4-1-109)
4 इतो मनुष्यजातेः (4-1-65) स्त्रियामवन्तिकुन्तिकुरु. (4-1-176) अतश्च (4-1-177)
5 न प्राच्यभर्गादियौधेयादिभ्यः (4-1-178)

### (झ) दाम्पत्त्य पुंयोगात्

जायापत्योरभेदाभिमानादेकस्तयोः शब्दोऽनुवर्तते। तत्र यावदेष शब्दः स्त्रियां प्रयुज्यते तत्रासौ स्त्रीप्रत्ययेन युज्यते। अत एव दाम्पत्य पुंयोगस्तत्र स्त्रीप्रत्ययनिमित्तम्।

(1) दम्पतीवचनात्[1] स्त्रियामीकार उदात्तः [2]। गोपस्य स्त्री गोपी।

(2) पालकान्तान्नेकारः [3]। गोपालकस्य स्त्री गोपालिका। अश्वपालिका।

(3) सूर्य्यादिवतायां नेकारः[4]। सूर्य्यस्य स्त्री देवता सूर्य्या। अदेवतायां तु भवत्येव। सूरी कुन्ती। मानुषीयम्।

(4) अजादिभ्यो नेकारः [5]। अजा चाश्वा च चट्का मूषिका कोकिलैडका।
कनिष्ठा मध्यमा ज्येष्ठा पुंयोगेऽप्यापमर्हति॥

### (ञ) द्विगुसमासात्

(1) द्विगोरीकारोऽनुदात्तः[6]। पात्रादिभिन्नाकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः। त्रयाणां लोकानां समाहारः त्रिलोकी। पञ्चमूली। अजादेः स्वार्थवृत्तेरीकारो निषिध्यते। उपसर्जनत्वेतु द्विगुत्वात् प्राप्तः स्यादेव। पञ्चाजी। यदि तु कश्चिद् द्विगुरेवाजादौ पठ्येत तर्हि ततोऽपीकारो निषिद्धयते। त्र्यनीका सेना।

(2) प्रमाणार्थक पुरुषान्ताद् द्विगोर्विकल्पेनेकारोऽनुदात्तस्तद्धितलोपे [7]। द्वौ पुरुषौ प्रमाणमस्याः सा द्विपुरुषी द्विपुरुषा वा परिखा।

(3) अपरिमाणान्ताद् विस्ताचितकम्बल्यान्ताच्च द्विगोर्नेकारस्त-द्धितलोपे [8]। द्वौ पुरुषौ प्रमाणमस्याः साद्विपुरुषी द्विपुरुषा वा परिखा।

पञ्चभिरश्वैः क्रीता पञ्चाश्वा। अत्र क्रीतप्रत्ययलोपः। द्वौ विस्तौ पचति द्विविस्ता। द्व्याचिता। द्विकम्बल्या परिमाणान्तत्वे[9] तु स्यादेव। द्व्याढकी। तद्धितलोपाविषयेऽपि स्यादेव पञ्चानामश्वानां समाहारः पञ्चाश्वी। द्विविस्ती।

---

1 दाम्पत्यवचनात् इति युक्तः पाठः दम्पती शब्दस्य द्विवचनान्तत्वात्।
2 पुंयोगादाख्यायाम् (4-1-48)
3 पालकान्तान्न (2461)
4 सूर्याद्देवतायां चाब्वाच्यः (वा.2471)
5 अजाद्यतष्टाप् (4-1-4)
6 द्विगोः (4-1-21)
7 पुरुषात्प्रमाणेऽन्यतरस्याम् (4-1-24)
8 अपरिमाणबिस्ताचित. (4-1-12)
9 परिणान्तत्वे इति मूले

(4) क्षेत्रार्थत्वे काण्डान्ताद्[1]द्विगोर्नेकारस्तद्धितलोपे[2] द्वे काण्डे प्रमाणमस्या द्विकाण्डा क्षेत्रभूमिः। अत्रप्रमाणप्रत्ययलोपः। क्षेत्रादन्यत्र द्विकाण्डी रज्जुः।

## (च) शब्दविशेषेभ्यः

(1) केवलमामकभागधेयपापापर समानार्य्यकृतसुमङ्गलभेषजेभ्यः ईकारोऽनुदात्तः संज्ञायां वेदे च [3]। केवली। मामकी। भागधेयी। पापी। अपरी। समानी। आर्य्यकृती। सुमङ्गली। भेषजी। अन्यत्र केवला। मामिका। अपरा। समानेत्यादि।

(2) कुण्डगोणस्थलभाजनागकालनीलकुशकामुककबरेभ्योऽमत्रावपना-कृत्रिमाश्राणास्थौल्य-वर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेष्वीकार[4]उदात्तः [5]।

कुण्डी अमत्रं, कुण्डान्या। गोणी आवपनं, गोणान्या। स्थली अकृत्रिमा, स्थलान्या। भाजी श्राणा[6]भाजान्या। नागी स्थूला, नागान्या। गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणम्। सर्ववाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम्। काली वर्णः। कालान्या। नीली अनाच्छादनम्। नील्या रक्ता शाटी तु नीला। कुशी अयोविकारः। कुशान्या। कामुकी मैथनेच्छावती, कामुकान्या। कवरी केशवेशः। कबरा चित्रा।

(3) गौरादिभ्य ईकार उदात्तः [7]।

**गौरी च पेशी सलदी सनन्दी काकादनी पापडशी[8]अलिन्दी।**
**पुटी सृपाटी पटरी च भृङ्गी गवादनी चानडुही च श्रृङ्गी॥1॥**
**कोशातकी आमलकी हरीतकी कोष्ट्री करी प्रत्ययवरोहिणी शुनी।**
**पण्डी च पिण्डी पिटकी पटी कठि पूपी च सूपी पृथिवी मही मठी॥2॥**
**द्रोणी द्रुणी च लवणी हरिणी च तूणी नोटी नटी च सुषमी सुषवी च टोटी।**
**ऋष्यी वृषी च वृहती महती च विम्बी सोमी शमी च वदरी कदरी मसूरी॥3॥**
**मङ्गली पिङ्गली सुन्दरी कन्दरी पोतरी पाटनी पातनी शातनी।**

---

1 काण्डान्तत्वादिति मूले
2 काण्डान्तात् क्षेत्रे (4-1-23)
3 केवलमामकभागधेयपापापर. (4-1-30)
4 केशवेष्वीकार इति मूले
5 जानपदकुण्डगोणस्थलभाजनागकालनील.(4-1-42)
6 अयं काशिकावृत्तौ न दृश्यते गौरादिगणे।
7 षिद्गौरादिभ्यश्च (4-1-41)
8 अयं काशिकावृत्तौ न दृश्यते गौरादिगणे।

सल्लकी वल्लकी भौरिकी भौलिकी शुष्कुली निष्कली पुष्कली पुष्करी ॥4॥
आरटी आढाकी आपकी पारकी घातकी साल्वकी मालकी मालती।
अण्डरी मण्डली मन्थरी काकणी एषणी रोहिणी गौतमी रेवती ॥5॥
जल्पाकी भिक्षाकी कुट्टाकी नर्तकी खनकी
लुण्टाकी च वराकी रजकी रजिका तु केषांचित् ॥6॥
दात्री नेत्री शस्त्री योत्री योक्री तथामत्री।
छत्री पत्री सेत्री धात्री च रात्री च ॥7॥
आष्ट्री भ्राष्ट्री वैष्ट्री गात्री हात्री धरित्री स्त्री।
नद्ध्रीत्याद्याः केचित् त्रान्ता ईकारभागिनोऽन्येपि ॥8॥
प्राणन्ती नन्दन्ती जवन्ती चापि रोहन्ती।
भासन्ती च वसन्ती तथा जयन्ती तरन्ती च ॥9॥
साधन्ती गडयन्ती सुमण्डयन्ती च नन्दयन्ती च।
अर्थविशेषे स्त्रीत्वं भजन्ति चेदाप्नुवन्ति हीकारम् ॥10॥
मेथी मेधी मेदी छेदी सूदी च वेतसी अतसी।
शष्कण्डी च शिखण्डी भाण्डी पाण्डी च लोहाण्डी ॥11॥
गुर्दी गुर्दी कुवली केवाली तेजनी रजनी।
तरुणी तलुनी विकली कली च यूथी च यूषी च ॥12॥
शर्कारी तर्कारी कल्माषी कर्करी कवरी।
उभयी गवयी मुकयी हयी हृदी मानुषी मात्सी ॥13॥
सूत्री शूर्पी सूर्मी सौधर्मी पिप्पली गडुली।
आपच्चिकी च उणकी मूलाटी सेचनी यानी ॥14॥
आल्वी आलब्धी आलक्षी आलजी आर्दी।
आस्तरणी अधिकरणी अधिकारी देहली देही ॥15॥
औदगाहमानी भौलिङ्गी आश्वत्थी आग्रहायणी
मातामही अयः स्थूणी अनड्वाही पितामही ॥16॥
अन्येऽप्येवं विधा ज्ञेया आनन्दीत्येवमादयः।
गौरादि संज्ञया ख्याताः शब्दा आकृति लक्षणाः ॥17॥

(ई) ईकारान्तात् (जातिगोत्राभ्याम्)

इकारान्तान्मनुष्यजातेरीकार उदात्तः [1]। दक्षस्यापत्यं दाक्षिः। स्त्री चेदौदमेयी। अमनुष्यजातेस्तु नेकारः। तित्तिरिः।

**(ख) इ प्रत्ययात्**

चातुरर्थिके प्रत्ययान्तादीकारः उदात्तः [2]। सौतङ्गमी। मौनिचिती।

**(ग) ईकारान्तात् प्राण्यङ्गवचनादुदात्त ईकारो विकल्पेन [3]। कटिः कटी। श्रोणिः श्रोणी।**

**(घ) निष्ठाप्रत्ययात्**

(1) क्तिन्नर्थभिन्नात् कृदिकारादीकारो विकल्पेन [4]। रात्रिः। रात्री। शकटीः। शकटी। तरणिः तरणी। सरणिः सरणी। क्तिनर्थात्तु न गतिः, मतिः, अजननिः।

(2) पद्धत्यादिभ्यः ईकारो विकल्पेन [5]। पद्धतिः पद्धती।

**पद्धतिरङ्कतिरञ्चति रहंति वहती अहिः कपिर्यष्टिः।**
**शस्त्रे शक्तो राती राधि शाधिश्च शारि वारि मुनि॥**

(3) युवतेरनुदात्त ईकारो विकल्पेन। युधातोरन्नति प्रत्ययाभ्यां युवयुवति शब्दौ संपद्येते। युवा पुरुषः, युवतिः स्त्री। यौवनं। यौवतं वाद्वितीयं वयः। तद्योगादिमौ शब्दौपुंसिस्त्रियां च क्रमेण प्रवर्तेत। तत्र युवतेरीकारोऽपि स्वार्थे प्रयुज्यते। युवतिः युवती।

(4) सख्युरीकार उदात्तः [6]। सखा पुरुषः। सखी स्त्री।

## ई प्रत्यय उकारान्तात्

**(गुणः)**

(1) उकारान्तादसंयोगोपधाद् गुणवचनादुत्तदुकारो विकल्पेन [1]। मृद्वी, मृदुः। पट्वी, पटुः। पृथ्वी पृथुः। बह्वी बहुः [2]। संयोगोपधत्वान्नेह पाण्डुः [3]। द्रव्यवचनत्वान्नेह-आखुः।

---

1 इतो मनुष्यजातेः (4-1-65)
2 इञ् उपसंख्यानमजात्यर्थम् (वा.)
3 इतः प्राण्यङ्गात् (वा.)
4 कृदिकारादक्तिनः (ग-50)सवतोऽक्तिन्नर्थादित्येके (ग-51)
5 हिमकाषिहतिषु च (6-3-54)
6 सख्यशिश्वीति भाषायाम् (4-1-62)

**सत्वे निविशतेऽपैति पृथग् जातिषु दृश्यते।**
**आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः ॥1॥**
**उपैत्यन्यद्4 जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि।**
**वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः ॥2॥**[5]

(2) खरोर्नेकारः[6]। खरुः पतिम्बरा कन्या।

**शब्दः**

अशिशोरीका रः उदात्तः[7]। नास्ति शिशुर्यस्याः सा अशिश्वी।

## ई–ऋकारान्तात्

(1) ऋकारान्तादीकारो उदात्तः[8]। कर्त्री। धर्त्री। भर्त्री। हर्त्री।

(2) स्वस्रादिभ्यो नेकारः[9]। स्वसा।

**स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।**
**याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥1॥**

नैतेषु प्रकृत्यंशः प्रत्ययांशो वा शाब्दं लिङ्गमस्ति। अपि त्वार्थं लिङ्ग व्यवस्थामात्रगम्यं भजमानाः स्वतन्त्रा एवैते शब्दाः स्त्री व्यक्तिविशेषे रुढाः प्रयुज्यन्ते।

ई-व्यञ्जनान्तात्– च त द न हावन्तेभ्योऽयनीकारो भवति पञ्चस्थानः।

**(च)** अञ्चूत्तरपदादीकारोऽनुदात्तः[10]। प्राची। प्रतीची। अवाची। उदीची। समीची। सध्रीची। पराची। अनूची। वाची।

**(त)** प्रत्ययादन्तादीकारोऽनुदात्तः[1]। अदिति प्रत्ययः प्रत्ययभागो वा विवक्षितः। भवन्ती पचन्ती। भवती, जगती। बृहती, महती। धातोरतस्तु नेकारः। उखासृत् पर्णध्वत्[2]।

---

1 वोतो गुणवचनात् (4-1-44)
2 बह्वादिभ्यश्च (4-1-45)
3 खरुसंयोगोपधान्न (वा.2460)
4 उपैत्यद् इति मूले।
5 महाभाष्यम् (4-1-44)
6 सख्यश्विवीति भाषायाम् (4-1-62)
7 संख्यशिश्वीति भाषायाम् (4-1-62)
8 ऋन्नेभ्यो ङीप् (4-1-5)
9 न षट्स्वस्रादियः (4-1-10)
10 उगितश्च (4-1-6)

(द) संख्यापूर्वकात् पादाद् उदात्त ईकारो विकल्पेन पादस्य पच्च तदा[3]। एकपदी द्विपदी त्रिपदी चतुष्पदी। पक्षे एकपात्। द्विपात्। त्रिपात्। चतुःपात्। बहुपात्।

(न)

1. नकारान्तादीकारो उदात्तः[4]। दण्डिनी। भामिनी। कारिणी।

2. मन्नन्ताद्वन्नन्ताच्च नेकारः[5]। सीमा। सीमानौ। सीमानः। दामा। दामानौ। दामानः। अवावा। अवावानौ। अवावानः सहयुध्वा। सहयुध्वानौ। सहयुध्वानः।

3. अन्नन्ताद् बहुव्रीहेरपि नेकारः[6]। बहुयज्वा। बहुयज्वानौ। बहुयज्वानः। मन्नन्तादन्नन्ताच्चाकारः प्रागुक्तो विकल्पेन। सीमा। सीमे। सीमाः। बहुयज्वा। बहुयज्वे। बहुयज्वाः।

4. उपधालोपिनस्त्वनन्ताद् बहुव्रीहेरनुदात्त ईकारो विकल्पेन[7]। स्यान्नित्यं तु संज्ञायां। बहुराज्ञी। पक्षे- प्रागुक्तः आकारो विकल्पेन। बहुराजा। बहुराजे, बहुराजाः। पक्षान्तरे- बहुराजा, बहुराजानौ, बहुराजानः।

5. संज्ञाशब्दे वैदिकशब्दे च तत्र नित्यमीकाराऽनुदात्तः[8]। सुराज्ञी नाम नगरी। वैदे शतमूर्द्धी।

(ह)

(1) वाहन्तादुदात्त ईकरो विपर्य्ययश्च वास्वरयोरुकाराकारयोः[9]। दित्यौही। प्रष्ठौही। विश्वौही।

(2) अनडुहश्चेकार उदात्तस्तदा हकारात् प्रागाकारो विकल्पेन[10]। अनडुही। अनड्वाही। एतावन्त ईकारादेशाः उक्ताः।

---

1 धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव इति नियम्यते।
2 धातोश्चेदुगित्कार्य तर्ह्यञ्चतेरेव इति नियम्यते।
3 पादोऽन्यतरस्याम् (4-1-8)
4 ऋन्नेभ्यो ङीप् (4-1-5)
5 मनः (4-1-11)
6 अनो बहुव्रीहेः (4-1-12)
7 अन उपधालोपिनोऽन्यतरस्याम् (4-1-28)
8 नित्यं संज्ञाछन्दसोः (4-1-29)
9 वाहः (4-1-61)
10 अनुडुहः स्त्रियाम् आम् वा (वा.4378)

## री–नकारान्तात्

रीकारे सति सर्वत्र प्रकृत्यन्तनकारलोपो वक्ष्यते। घोषेतरवर्णान्ताद्धातोर्विहितो यो वन्प्रत्ययस्ततो रीकारोऽनुदात्तः[1]। जित्वरी, अतिजित्वरी। सुत्वरी, अतिसुत्वरी। धीवरी, बहुधीवरी। पीवरी, अतिपीवरी। शीवरी, अतिशीवरी। शर्वरी शक्यरी। अतिसृत्वरी, अतिधृत्वरी। अतिक्षित्वरी, बहुस्रावरी। बहुधीवरीत्यत्र बहुधीवेत्यपि। साधुः। अन्नन्तबहुव्रीहि निबन्धना कारविकल्पात्। शर्वरीत्यत्र वन् प्रत्ययः शृधातुविहित इति रीकारः सिद्धः। घोषान्तधातुविहितत्वान्नेह-सहयुध्वा। अत्यध्वा। अतिपद्वा। अतिरुह्वा। ओणतेर्वनि अवावा[2]।

2. घोषान्तविहितत्वेऽपि प्रेत्वर्प्रशत्वनो रीकारोऽनुदात्त[3]। ईर गतौ कम्पने च। प्रेत्त्वरी। शद् शातने। प्रशत्वरी।

3. यज्वनस्त्वीकाररीकारौ विकल्पेन[4]। यज्वनी यज्वरी।

4. अर्वादिभ्यो न रीकारः[5]। अत्यर्वा। सुपर्वा। अतियूनी। शुनी। निःशुनी मघोनी।

**अर्वा पर्वा च मघवा श्वा युवेत्येवमादयः।**
**नैते भजन्ति रीकारं स्वार्थे चाप्युपसर्जने॥1॥**

एवावन्तो रीकारादेशा उक्ताः।

**(नी)**

(1) नीकारे सति सर्वत्र प्रकृत्यन्तस्वरलोपो वक्ष्यते[6]। असितपलिताभ्यां नीकारोऽनुदात्त ककारश्च तकरस्य[7]। असिक्नीति वैदिकं नाम नद्याश्चन्द्रभागयाः। पलिक्नीति वृद्धायाचक्षते वेदे।

किञ्च असिक्नी स्यादवृद्धा या प्रेष्याऽन्तः पुरचारिणी इति[1]। कोशादवृद्धा प्रेष्या कृष्णकेशत्वमुपलक्ष्यासिक्नीत्याख्यायते।

---

1 वनो र च (4-1-7)
2 वनो न हश इति वक्तव्यम् (वा.2405)
3 छान्दसत्वात् ङीब्रौ
4 बहुलं छन्दसि ङीब्रौ वक्तव्यौ
5 पाणिनेस्तु अव्युत्पन्नानीमानि प्रतिपादिकानीति
6 पत्युर्नो इति इकारस्य नकारादेशः
7 छन्दसि क्नमेके (वा.2454)

(2) दाम्पत्यपुंयोगे पत्युर्नीकारोऽनुदात्त[2]।

पति शब्दोऽयमैश्वर्यवाची दम्पत्योश्चाभेदेनाधिकरणोपचारः। तत्र पुंसि पतिशब्दः प्रयुज्यते। स्त्रियां तु तत्प्रयोगे नीकारो भवति। पत्नी। परे त्वाहुः। अन्योन्यकार्य्यस्यान्योन्यस्मिन्नधिष्ठातृत्वं विवक्ष्यते। तेनायमस्याः पतिः। भार्य्यानुबन्धियावत्कार्य्यप्रभुत्वात्। एवमियमस्य पत्नी। भर्त्रनुबन्धियावत्कार्यप्रभुत्वात्। अथवाऽधिकारः पतित्वम्। भद्रस्य पत्नी। भद्रेण सहाधिकारीणीत्यर्थः। कस्मिंश्चित्कर्मणि द्रव्ये वा भद्रस्य यावानधिकारः, तेनैवाधिकारेणाधिकारवतीति यावत्।

3. सपूर्वात् पत्युरनुदात्तो नीकारो विकल्पेन[3]। गृहस्य पतिः गृहपतिः, गृहपत्नी। दृढः पतिर्य्यस्याः सा दृढपतिः, दृढपत्नी। वृषलपतिः, वृषलपत्नी। स पूर्वत्वाभावे तु नास्ति। गवां पतिः स्त्री।

4. सपत्न्यादिषु नित्यं नीकारोऽनुदात्तः[4]। समानः पतिर्यस्याः सा सपत्नी। समान शब्दो वृत्तौ स शब्देन परिणमते। एकपत्नी। वीरपत्नी।

**समान एको वीरः पिण्डो भ्राता च पठ्यते।**
**भद्रः पुत्रः सपत्न्यादौ दासस्तुच्छन्दसि स्मृतः॥1॥**

5. गर्भवत्यामन्तर्वतो नीकारोऽनुदात्तः[5]। अन्तरस्यां गर्भोऽस्तीति अन्तर्वत्नी गर्भिणी। गर्भसंयोगादन्यत्र तु वत् प्रत्ययोऽपि नास्ति। अन्तरस्यां शालायामस्तीति वाक्यमेव प्रयुज्यते।

6. जीवद्भर्तृकायां पतिमतो नीकारोऽनुदात्तो वकारश्च मकारस्य[6]। पतिवत्नी। भर्तृसंयोगादन्यत्र तु प्रत्ययात् संबन्धादीकारः प्रागुक्तः ''प्रथते त्वया पतिमती पृथिवी।''

7. वैदिके त्वीकारनीकारौ विकल्पेन[1]। सान्तर्वती देवानुपैत्। अन्तर्वत्नी वा। पतिवती तरुणवत्सा। पतिवत्नी वा।

---

1 अमरकोशः (2-6-18)
2 पत्युर्नो यज्ञसंयोगे (4-1-33)
3 विभाषा सपूर्वस्य (4-1-34)
4 नित्यं सपत्न्यादिषु (4-1-35)
5 अन्तर्वत्पतिवतोर्नुक् (4-1-32)
6 अन्तर्वत्पतिवतोर्नुक् (4-1-32)

8. ऊधोऽन्ताद् बहुव्रीहे उदात्तनीकारष्टिलोपश्च[2]। ऊधस्यस्भागष्टिः। कुण्डवदूधो यस्याः सा कुण्डोध्नी। द्व्यूध्नी। अत्यूध्नी[3]। बहुव्रीहेरन्यत्र नास्ति। ऊधोऽतिक्रान्ता अत्यूधाः।

9. दामान्तात् संख्यादिबहुव्रीहेर्नीकारोऽनुदात्तष्टिलोपश्च[4]। दामन्यन् भागष्टिः द्विदाम्नी। संख्येतरपूर्वत्वे त्वाकारो विकल्पेनोक्तः। उद्दामा, उद्दामे। एतावन्तो नीविषया उक्ताः।

## आनी

1. आनीविधौ प्रकृत्यन्त न लोपो वक्ष्यते। ब्रह्मेन्द्रवरुणभवशर्वरुद्रमृडेभ्य आनी दाम्पत्यपुंयोगे[5]। ब्रह्मणः स्त्री ब्रह्माणी। इन्द्रस्य स्त्री इन्द्राणी। भवानी। शर्वाणी। रुद्राणी। मृडानी। पुंयोगादन्यत्र तु ब्राह्मी। ऐन्द्री। वारुणी।

2. हिमारण्याभ्यामानी महत्वे[6]। महाहिमं हिमानी। हिमानी हिमसंघातः। महारण्यमरण्यानी।

3. दोषे यवादानी[7]। दुष्टो यवो यवानी। जात्यन्तरमेतत्।

4. यवनाल्लिप्यामानी[8]। यवनानि यवनलिपिः। भगवतां पाणिनिकात्यायनपतञ्जलीनां समयेष्विह देशे यवनदेशीयानां लिपि प्रचारिताऽऽसीत् सा केवलं यवनानीत्युच्यते स्म। अर्थतस्तु भाषा वा चिकित्सा यैव काचिद्यवनसम्बन्धितयोपगृहीता स्यात् सा सर्वापि यवनानी वक्तव्या।

---

1 अन्तर्वत्पतिवतोस्तु मतुब्वत्वे निपातनात् गर्भिण्यां जीवपत्यां च वाच्छन्दसि नुग्विधिः (काशिका 4-1-32)

2 उधसोऽनङ (5-4-131)बहुव्रीहेरुधसो ङीष् (4-1-25)

3 सङ्ख्याव्ययादेर्ङीप् (4-1-26)

4 दामहायनान्ताच्च (4-1-27)

5 इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् (4-1-49)

6 हिमारण्ययोर्महत्वे (वा.2472)

7 यवाद्दोषे (वा.2473)

8 यवनाल्लिप्याम् (वा.2474)

5. मातुलोपाध्यायाभ्यामुदात्तान्त आनी विकल्पेन पुंयोगे[1]। मातुलस्त्री मातुलानी, मातुली च। उपाध्याय स्त्री-उपाध्यायानी, उपाध्यायी च। यातु स्वयमेवाध्यापिका तत्र विकल्पेनेकारः प्रागुक्तः[2]। उपाध्यायी उपाध्याया।

6. आचार्यादानी पुंयोगे णत्वाभावश्च[3]। आचार्य्यस्त्री आचार्य्यानी। स्वयं व्याख्यात्री त्वाचार्य्या।

7. अर्य्यक्षत्रियाभ्यामानी स्वार्थे विकल्पेन[4]। अर्य्याणी अर्य्या। श्वामिनी वैश्या वा इत्यर्थः। क्षत्रियाणी क्षत्रिया। पुंयोगे त्वर्य्यी क्षत्रियीति केचित्।

8. वैदिके मुद्गलादानी[5]। रथीरभून्मुद्गलावनी। इत्यानी विषया उक्ताः

## आयनी

1. आयनी विधौ सर्वत्र प्रकृत्यन्तस्वरलोपः[6]। लोहितादेरपत्यार्थक य प्रत्यान्तादायनी सर्वदेशे[7]। लोहितस्य गोत्रापत्यं लौहित्यः। स्त्री तु लौहित्यायनी।

**लोहितः संशित कपि कत तण्ड वतणुश्च गण्डु मण्डू च।**
**तृक्षतरुक्ष तलुक्षा ऋक्षो मङ्क्षुश्च कत्थकः कथकः ॥1॥**
**सूनु मयानी मनु तनु जिगीष्वलिगु लिङ्गु वल्गु स्यात्।**
**गहलु शङ् कुर्वभुः शकल इमे लोहिताद्याः स्युः ॥2॥**
**कपि वोधावाङ्गिरसौ सिद्धि वतण्डं त्वनाङ्गिरसम्।**
**वभ्रः कौशिक उक्तो मधुरपि तु ब्राह्मणः पठितः ॥3॥**

मधुवोधौ गर्गादि। काप्यायनी। कात्यायनी। ताण्ड्यायनी। वाताण्ड्यायनी। वाभ्रव्यायणी। कात्थक्यायनी।

2. गर्गादेरपत्यार्थकयप्रत्यययान्तादायनी प्राच्यानाम्[8]।

---

1 इन्द्रवरुणभवशर्व (4-1-49)
2 या तु स्वयमेवाध्यापिका तत्र. वा ङीष् वाच्यः (वा.)
3 आचार्यादणत्वं च (वा.2477)
4 अर्यक्षत्रियाभ्यां वा स्वार्थे (वा.2478)
5 मुद्गलच्छन्दसि लिच (वा.)
6 यस्येति च (6-4-148)
7 लोहितादिकतन्तेभ्यः (4-1-18)
8 प्राचां ष्फ तद्धितः (4-1-17) आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् (7-1-3) षिट्गौरादिभ्यश्च (4-1-41)

अस्य भरतखण्डस्य पूर्वदक्षिणप्रदेशवासिनः प्राच्याः। पश्चिमोत्तरप्रदेशवासिन उदीच्याः। शरावती नदी च तेषां मध्ये मर्य्यादा। प्राच्यानामुदीच्यानां च भाषा व्यवहारे क्वचिद्विभेदा लक्ष्यन्ते, यथा गर्गस्य गोत्रापत्यं गार्ग्यः। स्त्री चेद् गार्ग्यायणी। इति प्राच्या भाषन्ते। उदीच्यानां तु प्रागुक्त ईकारः। गार्गी। अवट शब्दे तु प्राच्यानामावट्यायनी। उदीच्यानां त्वावट्या। ईकारप्रतिबन्धेनाकारविधानात्। व्याघ्रपाच्छब्दे यञि पाद्दस्वत्वम्। वैयाघ्रपद्यायनी प्राकृत्यन्तोकारात् प्रागकारागमः। वैश्वावसव्यायनी गर्गादयः प्रागुक्ताः।

3. कौरव्या माण्डूकासुरिभ्य आयनी [1]। कौरव्यायणी। माण्डूकायनी। आसुरायणी। इत्यायनी विषया उक्ताः।

## आयी, आवी

1. आयी विधावावी विधौ च सर्वत्र प्रकृत्यन्तस्वरलोपः [2]। कुसितकुसिदाग्नि पूतक्रतु वृषाकपिभ्य आयी दाम्पत्यपुंयोगे [3]। कुत्सित स्त्री कुसितायी। कुसिदायी। अग्नायी। पूतक्रतायी। वृषाकपायी।

2. मनोरायी आवी च विकल्पेन दाम्पत्य पुंयोगे। मनोः स्त्री-मनायी, मनावी, मनुश्च। इत्यायीविषयां आवी विषयाश्चोक्ताः।

ई, री, नी, आनी, आयनी, आयी, आवी– इत्येते सप्तस्त्रीप्रत्यया ङी शब्देन व्यवहर्तव्याः।

## (:) ऊ

1. श्वसुरादूकार पुंयोगे लोपश्चान्त्यस्वरयोः। श्वसुरस्यस्त्री श्वश्रूः [4]।

2. पङ्गोरुकारः। पङ्गूः [5]।

3. कद्रु कमण्डलु गुग्गुलु मधु जतु पतयालुभ्य ऊकारः संज्ञावैदिकशब्दयोः [6]। कद्रूः। कमण्डलूः। गुग्गुलूः। मधूः।जतूः। पतयालूः।

4. वाह्वन्तात् संज्ञायामूकारः [7]। भद्रवाहूः [1] संज्ञाभावे तु वृत्तबाहुः।

---

1 कौरव्यमाण्डूकाभ्यां च (4-1-19)
2 यस्येति च (6-4-148)
3 पूतक्रतोरै च (4-1-36) वृषाकप्यग्निकुसितकुसिदानामुदात्तः (4-1-37)
4 श्वसुरस्योकाराकारलोपश्च (वा.5039)
5 पङ्गोश्च (4-1-68)
6 संज्ञायाम् (4-1-72)
7 बाह्वन्तात्संज्ञायाम् (4-1-67)

5. उपमानपूर्वपदादूरुत्तरपदादूकारः। करभोरुः। रम्भोरुः[2]।

6. सह सहित संहित शफ लक्षण वामेभ्यः ऊकारोरुकारः[3]। सहेते इति सहौ ऊरू यस्याः सा सहोरूः। विद्यमानाबूरू यस्याः सा वा सहोरुः। उत्कृष्टोरुरित्यर्थः। हितेन सह उरु यस्याः सा सहितोरुः। सहितौ मिलितौ वोरु यस्याः सा वा सहितोरुः। शफोरुः। लक्षणोरुः। वामोरुः।

7. उकारान्ताज्जातेरयकारोपधादूकार[4]। ब्रह्मबन्धूः। वीरबन्धूः। अलावूः। कर्कन्धूः। यकारोपधत्वान्नेह-अध्वर्युः।

8. तद्राजयप्रत्ययान्ताज्जनपदवचनात् कुरोः स्त्रियां तद्राजप्रत्ययलोपः ऊकारश्चोदात्तः[5]। कुरुदेशीयस्यापत्यं स्त्री कुरुः।

9. अमनुष्यप्राणिजातेरज्ज्वादिभ्यश्च नोकारः[6]। कृकवाकुः। रज्जुः। हनुः। रज्वादिराकृतिगणः।

**अयं स्त्रीप्रत्ययोकार ऊङ्शब्देन व्यवहर्तव्यः।**
**अ, इ, उ, ऋ, च, त, द, न हानामेको वर्णोऽन्तगो भवेद् यस्य।**
**तस्मादा, ई, री, नी, आनी आयनी तथाप्यावयू॥1॥**
**जातिर्वयो गुणः स्वाङ्ग वर्णो निष्ठा च प्रत्ययः।**
**गोत्रं दाम्पत्यपुंयोगे द्विगुः शब्द इति स्थितः॥2॥**

1. ईविधौ प्रकृत्यन्ताकारलोपः स्यात्[7], सूर्यागस्त्यमत्स्यमनुष्याणां गोत्र-प्रत्यान्तानां चेविधौ प्रकृत्यन्तयकाराकारलोपः स्यात्[8]। तटी। किशोरी। पुराणी। चन्द्रमुखी। कल्माषी। वस्त्रक्रीती। पञ्चतयी। गोपी। त्रिलोकी। मामकी। सूरी। अगस्ती। मत्सी। मनुषी। गार्गी।

---

1 बाह्वन्तात्संज्ञायाम् (4-1-67)
2 उरुत्तरपदादौपम्ये (4-1-69)
3 संहितशफलक्षणवामादेश्च (4-1-70), सहितसहाभ्यां चेति वक्तव्यम् (वा.2503)
4 ऊङुतः (4-1-66)
5 स्त्रियामवन्ति (4-1-76), ऊदृतः (4-1-66)
6 अप्राणिजातेश्चारज्ज्वादीनामुपसंस्यानम् (वा.2502)
7 यस्येति च (6-4-148)
8 सूर्यागस्त्ययोश्छे च ङ यां च (वा.4199) मत्स्यस्य ङ्याम् (4198)

2. आव्याय्यायनीनीविधिषु प्रकृति टिलोपः स्याद्दूर्जनम्[1]। आवी। आयी। आयनी। नी। एषां विधयः प्रकृति टिलोपकरा भवन्ति। स्वरान्तेष्वन्त्यः स्वरष्टिः। व्यञ्जनान्तेष्वन्त्य स्वरव्यञ्जनं टिः। मनावी। मनायी। आसुरायणी। पत्नी। ऊधस्। कुण्डोघ्नी। दामन् द्विदाम्नी। अतस्तु टेर्लोपो नास्ति। अन्तर्वत्नी। पतिवत्नी।

3. आनी री विध्योः प्रकृत्यन्तनकारलोपः स्यात्। ब्रह्मन्-ब्रह्माणी। जित्वरी। धीवरी। इति ङ्याश्रयविधयः॥ इति प्रकृतिविकाराः



1 पाणिनेस्तु नकारस्यैव रेफः।

# नामधातुप्रक्रियापरिच्छेदः

अथ नाम्नः ततो यया प्रक्रियया धातुत्वमुपचर्यते सा नामधातु प्रक्रिया भवति। तत्र क्रियाविशेषार्थबुबोधयिषया नामोत्तरं प्रत्ययविशेषः समासज्यते, तदनुबन्धेन च कश्चित्प्रकृतिविकारादिः समादिश्यते। सेयमर्थादिविभागात् षोढ़ा–1. तदिच्छा, 2. तदिवाचारः, 3. तदभूतभावः, 4. तत्क्रियाख्यानम्, 5. स्वार्थिकः, 6. प्रत्ययापत्तिश्च, इति। षट्स्वप्येतासु प्रक्रियासु विधीयमानः प्रत्ययो द्वेधैव-यकारश्च इकारश्च। एताभ्यामन्ते कृताभ्यां नाम्नो धातुत्वं भवति। अयम् यकारः क्यसंज्ञः क्रियते, इकारस्तु णिसंज्ञो व्यवहारार्थम्। तत्रापि यस्मिन्सति परस्मैपदविभक्तयः प्रादुर्भवन्ति स यकारः क्यच्संज्ञः स्यादिकारस्तु णिच्संज्ञः। अथ यस्मादात्मनेपदविभक्तयः स्युः स यकारः क्यङ्संज्ञः स इकारस्तु णिङ्संज्ञः। क्वचित्पुनः स यकार इकारो वा न प्रयुज्यते अथापि तदर्थो गम्यते। तत्र परस्मैपदं चेत् क्यज्लोप इत्युच्यते, आत्मनेपदं चेत् क्यङ्लोप इति। तदित्थमत्र प्रत्ययाः षोढा विभज्य नीयन्ते–1. णिच्, 2. णिङ्, 3. क्यच, 4. क्यङ्, 5. क्यजलोपः, 6. क्यङलोपश्चेति। तदिच्छायां क्यजेवैकः तदिवाचारे क्यङ्क्यचौ क्यङक्यचोलोपौ च, तदभूतभावे क्यङक्यचौ, तत्क्रियाख्यान- स्वार्थिकयोः क्यङ् क्यचौ णिङ्णिचौ च, प्रत्ययापत्तौ तु णिच् केवलमित्येवं रूपेण प्रत्यया अधिक्रियन्ते। तत्रादौ–

## तदिच्छा

भवत्विति चित्तवृत्तिरिच्छा। सा द्वैधा ममेदं भवत्विति कर्मणः स्वीयत्वसापेक्षा स्वीया। तस्येदं भवत्विति कर्म्मणः परकीयत्वसापेक्षा परकीया। तत्र स्वीया तदिच्छेतत्प्रकरणार्थ इत्यार्षीभाषानियमः। दैव्यां तु भाषायामुभयी। सा चेयमिच्छा सामान्यरूपा क्वचिदर्थः। क्वचित्पुनः शब्दविशेषे लालसा पिपासा वुभुक्षादिविशेषरूपा विषयी भवतीति वोध्यम्।

इच्छायां विशेषभूतं कर्मणामैव क्यच्संनियुक्तमिच्छावृत्तिको धातुर्भवति। ततो विशुद्धधातुवदाख्यातविभक्तयः कालादिसंबन्धात् यथायथं नेयाः।

तदिच्छाक्यचः प्राक्छब्दभेदेन- आ, ई, उ, न्, त्, अस्, काम- इत्येषा-मन्यतमः संनियुज्यते क्वचिद्वाशुद्धः क्यच् प्रयुज्यते। तेनास्य क्यचोऽष्टौ रूपाणि सिद्ध्यन्ति–

1. यति, 2. आयति, 3. ईयति, 4. ऊयति, 5. न्यति, 6. स्यति, 7. अस्यति, 8. काम्यति

एषु 'अती'[1]- त्याख्यातविभक्तिभागः। यकारपर्यन्ताश्च धातुकरण-प्रत्ययभागाः। तेषां प्रदेशाः प्रदर्श्यन्ते–

1. यदात्मनः किञ्चिदिच्छति तद्वचनादिच्छायां क्यच स्यात्[2]।

2. परस्यापि यदिच्छति तद्वचनाच्च दैव्यां भाषायाम्[3]।

3. तत्रोवर्णान्तादूयः स्यात्[4],कण्ठतालुमूर्द्धस्वरान्तान्नान्ताच्चेयः स्याद्[5], बुभुक्षागर्धविषयाभ्यामशानाधनाभ्यामायः स्यात्[6], सन्ध्यक्षरान्ताद् व्यञ्जनान्ताच्चयः स्यात् न त्वव्ययाच्च मान्ताच्च[7]।

(1) लृकारान्तः शब्दो नास्तीति परित्यक्तस्तद्विधिः। प्राचां तु मतत्रयमत्र पश्यामः। समानाक्षरान्ताद् गोशब्दान्नान्ताच्चायमिच्छाक्यच् स्यान्नेतरेभ्यः इत्येकम्[8]। सन्ध्यक्षरभिन्नाः सर्व स्वराः समानाक्षराणि, तेभ्यः क्यजिष्यते। सन्ध्यक्षरेषु गोशब्दादेव नान्येभ्यः। व्यञ्जनान्तेषु नान्तादेव नान्येभ्यः। इत्येवमेके पश्यन्ति।

(2) मान्ताव्ययवर्जं सर्वेभ्योऽयमिच्छाक्यच् स्यादिति द्वितीयम्। अव्ययं तावत् स्वरान्तं वा स्याद् व्यञ्जनान्तं वा न ततः क्यजिष्यते। मकारान्तात् त्वनव्ययादपि नास्ति अन्यस्मात्तु स्वरान्ताच्च व्यञ्जनान्ताच्चायमविशेषात् क्यजिति पश्यन्ति।

(3) अप्रतिषिद्धं सर्वेभ्यः- इति तृतीयम्। इष्यतेऽयमव्ययाच्च मकारान्ताच्च। प्रयोगानुपलब्धिस्तु न शक्यमनीश्वरेण पारयितुमिति पश्यन्ति।

एषु द्वितीयं मतमेव साधीयो बहुसंमतत्वादिति स्थितम्। आत्मनो मधु इच्छति–मधूयति। शीधूयति। त्रपूयति। जतूयति। तनूयति।

---

1 अन्तीति मूल पाठे
2 सुप आत्मनः क्यच (3-1-8)
3 छन्दति परेच्छायां क्यच् वक्तव्यः (वा.)
4 अकृत्सार्वधातुकयोर्दीर्घः/ रीङृतः (7-4-25)
5 क्यचि च (7-4-33)
6 अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु (7-4-34)
7 मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच् न (वा.)
8 अधिकरणप्रधानयोरप्यनयोराधेये यदा वृत्तिस्तदा कर्मत्वम्, गो. समानाक्षरान्तादित्येके इति पदमञ्जरी टीकायाम् महाभाष्ये च (3-1-8)

अ आ कण्ठस्वरः। पुत्रीयति, घटीयति, मालीयति, शालीयति। इ ई तालुस्वरः। कवीयति, मतीयति, उन्नतीयति, महीयति। ऋ ॠ मूर्द्धस्वरः। कर्त्रीयति, भर्त्रीयति, दुहित्रीयति, स्वस्रीयति। नकारान्तात् क्यच् चिकीर्षायां नकारो लुप्यते ततः कण्ठतालुस्वरान्तत्वादीयः [1]। राजीयति, तक्षीयति।

अशनाधनशब्दौ यदि बुभुक्षादिविषयौ स्यातां तदा तत् ईयापवादेनायो विधीयते। धनमिच्छति धनायति। गर्द्धते। अशनमिच्छति अशनायति, बुभुक्षते। अन्यत्र तु धनीयति अशनीयतीत्येव।

सन्ध्यक्षरान्तात्- गव्यति, नाव्यति, अवावौ क्ये वक्ष्येते [2]। व्यञ्जनान्तात् त्वामिच्छति त्वद्यति, मद्यति। युष्मानिच्छति युष्मद्यति, अस्मद्यति। गीर्य्यति, पूर्य्यति। दिवमिच्छति दिव्यति, अदस्यति, वाच्यति, समिध्यति।

मकारान्तात् क्यज्नास्ति। कमिच्छति, इदमिच्छति। अव्ययादपि न। स्वरिच्छति, उच्चैरिच्छति, पुनरिच्छति, पृथगिच्छति। ईषदिच्छति, स्वस्तीच्छति। ये तु गवेतरसन्ध्यक्षरान्तान्नकारेतरव्यञ्जनान्ताच्च न क्यजिति पश्यन्ति तेषां समये नाव्यति त्वद्यतीत्यादीनामपि [3] नासीत् प्रचारः। समयान्तरे तु दृश्यन्ते स्मामीषा-मल्पीयांसः प्रयोगा इत्यनुविधीयन्ते।

अश्वाद्याभ्यामायः स्यादन्यतस्त्वकारान्तात् पुत्रादिवर्जितात् कवेश्च यः स्याद्दैव्यां भाषाम् [4]।

अश्वायन्तो मघवन्। अश्वमिच्छन्त इत्यर्थः। आत्मनोऽश्वमिच्छति अश्वायति मा त्वा वृका अघायवो विदन्। अघेच्छाव इत्यर्थः। परस्याघमिच्छति अघायति। न कश्चिदात्मनोऽघमेषितुमर्हति। अतोऽत्रान्तरेणापि तृतीयपदप्रयोगं परेच्छा गम्यते। राज्ञः पुत्रमिच्छतीत्यादौ त्वन्तरेण राजादिपद्प्रयोगं परसम्बन्धो न गम्यते। तस्माद-गमकत्वादसामर्थ्याच्च परेच्छायां न क्यच्। आर्ष्यान्तु भाषायां परेच्छायामघशब्दादपि न क्यजिति भगवन्तौ पाणिनिपतञ्जली अभिप्रेतः। प्रयोगास्तु दृश्यन्ते स्मृत्यादिषु–

''अघायुरिन्द्रियारामो मोघं पार्थ स जीवति'' [5] इत्यादयः अन्यस्मात् त्वकारान्ताद् य एव न त्वीयः। संस्वेदयुः, मित्रयुः। अध्वर्युः, पृतन्युः। कविमिच्छति

1 न क्ये (1-4-15), नलोपः प्रतिपदिकान्तस्य (8-2-8), क्यचि च (7-4-33)

2 वान्तो यि प्रत्यये (6-1-69)

3 त्वद्यतीत्यादिनामपि इति मूल पाठः

4 अश्वाघस्यात् (7-4-37) न छन्दस्यपुत्रस्य (7-3-34)

5 अपत्रादीनामिति वाच्यम् (वा.) कव्यधरप्रतन्यर्चि लोपः (7-4-39)श्रीमद्भगवद्गीता (3-46)

कव्यति। अध्वर्यादिषु टिलोपो वक्ष्यते। पुत्रादीनां तु केषांचिदकारान्तानां दैव्यां भाषायामपीय एव भवति। पुत्रीयन्तः सुदानवः। जनीयन्तो न्यग्रवः। पुत्रं जनमिच्छन्त इत्यर्थः। पुत्रादिराकृतिगणः।

5. यजुर्वेदे काठके देवसुम्नाभ्यामायः[1]। देवायन्तो यजमानाः। सुम्नायन्तो हवामहे। कठशाखीयैर्व्यवहृतायामेव भाषायामयमायः प्रयुज्यते। तदितरैर्व्यवहृतायां तु दैव्यां भाषायां य प्रत्यय एव। देवान् जिगाति सुम्नयुः, देवयुः। आर्ष्यां तु सुम्नीयति देवीयति- इत्येव।

6. उदकात् पिपासायां न्यः[2] स्यादश्ववृषाभ्यां मैथुनेच्छायां[3] क्षीरलवणयो लालासायां स्यः[4] स्यादन्येभ्यस्तु सर्वेभ्यो लालसायामस्यः स्यो वा स्याताम्[5]। उदकं पातुमिच्छति-उदन्यति। कलोपो वक्ष्यते। यत्र त्वपिपासमान एवोदकमिच्छति तत्रोदकीयति इत्येव। अश्वं मैथुनायेच्छति-अश्वस्यति वडवा, वृषस्यति गौः। अन्यत्राश्वीयति वीरः, वृषीयति कृषीवलः। अत्यर्थमिच्छा लालसा। क्षीरस्यति बालः। लवणस्यति उष्ट्रः। लालसा गम्यते। अन्येभ्योऽस्यः स्यश्च। दध्यस्यति, दधिस्यति। मध्वस्यति, मधुस्यति। लालसातोऽन्यत्र त्वीयादिरेव। क्षीरीयति। लवणीयति। दधीयति, मधूयति।

7. वृषरिष्टाभ्यां न्यः स्याद् द्रविणदुष्टाभ्यां स्यः स्याद्दैव्यां भाषायाम्[6]। वृषमिच्छति वृषण्यति। रिष्टमिच्छति रिषण्यति। टलोपः। द्रविणमिच्छुद्रविणस्युः। दुष्टमिच्छुर्दुरस्युः। अदैव्यां तु भाषायां वृषीयति, रिष्टीयति, द्रविणीयति, दुष्टीयतीत्येव।

8. क्यजर्थे काम्यः स्यात् सर्वेभ्यः[7]। आत्मनः पुत्रमिच्छति-पुत्रकाम्यति, धनकाम्यति, सुखकाम्यति, स्त्रीकाम्यति, त्वत्काम्यति, मत्काम्यतीत्यादि। मान्तादव्यायाच्च नायं निषिध्यते। किं काम्यति, स्वः काम्यति। इतीदं तदिच्छा विधितन्त्रं, शेषतन्त्रमतः परमुच्यते।

---

1 देवसुम्नयोर्जुसि काठके (7-4-38)
2 अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु (7-4-34)
3 अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि (7-1-15), अश्ववृषयोमैथुनेच्छायाम् (वा.)
4 क्षीरलवणयोर्लालसायाम् (वा.)
5 सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ (वा.)
6 द्रुरस्युद्रविणस्युर्वृषण्यतिरिषण्यति (7-4-36)
7 काम्यच्च (3-1-9)

प्रकृतिविकारो गणप्रक्रिया उपसर्गपृथक्करणं साधनादिविचारः स्वरविधिश्चेत्येते तदिच्छाश्रयविधयो भवन्ति। तत्रादौ–

## प्रकृतिविकारः

1. ऊये आये च परे प्रकृत्यन्तस्वरस्य परसंयोगाद्दीर्घ एकादेशः स्यात्। मधूयति, भानूयति, पङ्गुयति, कुरूयति। इह पूर्वपरयोः स्वरयोरेक उकारः [1]। अशनायति धनायति इहाकारः [2]।

2. ईप्रत्यये परे प्रकृत्यन्तस्य ऋकारस्य रेफः[3], कण्ठ्यस्वरस्य[4] लोपस्तालुस्वरस्य तु परसंयोगाद्दीर्घ एकादेशो[5]नान्तस्य टिलोपः स्यात् [6]।

भर्त्रीयति, नेत्रीयति, आनन्दीयति, शोभीयति, कीर्तियति[7], महीयति, राजीयति, तक्षीयति।

3. ये प्रत्यये परे, प्रकृत्यन्तस्यौकारस्याव् स्यादोकारस्य त्वव् स्याद्[8] गिर्पुरादीनामुपधादीर्घादयः प्रयोगादुन्नेयाः [9]।

गव्यति, नाव्यति, गीर्य्यति, पूर्य्यति।

4. न्यप्रत्यये परे उदकस्य को लुप्यते[10] रिष्टस्य टकारः [11]। उदन्यति, उदन्युः, उदन्या पिपासा। इह कस्य लोपः। रिषण्यति। इह षकारटकाराकाराणां संघातादृकारमात्रनिवृत्तिः।

5. स्यप्रत्यये परे दुष्टस्य षटयोः स्थाने रप्रतिपत्तिः स्यात् [12]।

दुरस्यति, दुरस्या, दुरस्युः।

---

1 अकृत्सार्वधातुकयोर्दीर्घः (7-4-25)
2 अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु (7-4-34)
3 रीङ् ऋतः (7-4-27)
4 क्यचि च (7-4-33)
5 अकृत्सार्वधातुकयोर्दीर्घः (7-4-25)
6 न क्ये (1-4-15), लोपः शाकल्यस्य (8-3-19)
7 कीर्तियतीति मूले।
8 वान्तो यि प्रत्यये (6-1-79)
9 हलि च (8-2-77)
10 अशनायोदन्यधनाया. (7-4-34)
11 दुरस्युद्रविणस्यूर्वृषण्यतिरिषण्यति(7-4-36)
12 दुरस्युद्रविणस्यूर्वृषण्यतिरिषण्यति(7-4-36)

6. काम्यप्रत्यये परे प्रकृत्यन्तस्यानव्ययविसर्गस्य तकारस्थानीयस्य तकारः स्याद्वर्णात् परत्वे[1], स्वरान्तरात्तु परत्वे षकारः स्यात्[2]।

यशस्काम्यति, पयस्काम्यति, सर्पिष्काम्यति, धनुष्काम्यति। अव्ययस्य तु विसर्ग एव न तु सकारः षकारो वा[3]। स्वः काम्यति, प्रातः काम्यति, उच्चैः काम्यति, नीचैः काम्यति, बहिः काम्यति। यस्तु विसर्गः सकारजो नास्ति नासौ विकुरते-अहः काम्यतिः गीः काम्यति, पूः काम्यति। रेफजोऽयं विसर्गः[4]।

7. वृषरिष्टाभ्यां न्यस्य ण्यभावः षकारात् परत्वात्[5]। वृषण्यति, रिषण्यति। प्रत्ययविकारोऽयं प्रकृतिसम्बन्धादापन्नः। इति प्रकृतिविकारादेशः।

## गणप्रक्रिया

1. क्यजन्तादत्यादिविभक्तयो भवत्यादिवत् यथानियमम्[6]। क्यजन्तात् परस्मैपदानि भवन्ति। सार्वधातुके लकारा यथा–

| | | | | |
|---|---|---|---|---|
| लट् | = | पुत्रीयति | पुत्रीयसि | पुत्रीयामि |
| लेट् | = | पुत्रीयाति | पुत्रीयासि | पुत्रीयामि |
| लोट् | = | पुत्रीयतु | पुत्रीय | पुत्रीयानि |
| लङ् | = | अपुत्रीयत् | अपुत्रीयः | अपुत्रीयम् |

आर्द्धधातु के लकारा यथा–

| | | | | |
|---|---|---|---|---|
| लिट् | = | पुत्रीयाञ्चकार | पुत्रीयाञ्चकर्थ | पुत्रीयाञ्चकार |
| लुट् | = | पुत्रीयिता | पुत्रीयितासि | पुत्रीयितास्मि |
| लृट् | = | पुत्रीयिष्यति | पुत्रीयिष्यति | पुत्रीयिष्यामि |
| लिङ् | = | पुत्रीय्यात् | पुत्रीय्याः | पुत्रीय्यासम् |
| लुङ् | = | अपुत्रीयीत् | अपुत्रीयीः | अपुत्रीयिषम् |
| लृङ् | = | अपुत्रीयिष्यत् | अपुत्रीयिष्यः | अपुत्रीयिष्यम् |

---

1 सोऽपदादौ (8-3-38)
2 इणः षः (8-3-39)
3 अनव्ययस्येति वाच्यम् (वा.4902)
4 काम्ये रोरेवेति वाच्यम् (वा.)
5 द्रुरस्युद्रविणस्यु. (7-4-36)
6 सनाद्यन्ता धातवः (3-1-32), शेषात्कर्तरि परस्मैपदम् (1-3-78)

2. व्यञ्जनात् परस्य काम्यभिन्नस्य क्यचो लोपः स्यात् विकल्पकेनार्धधातुके[1]।

| | | | | | |
|---|---|---|---|---|---|
| लिट् | = | समिधाञ्चकार | लिङ् | = | समिध्यात् |
| लिट् | = | समिध्याञ्चकार | लिङ् | = | समिध्यात् |
| लुट् | = | समिधिता | लुङ् | = | असमिधीत् |
| लुट् | = | समिध्यिता | लुङ् | = | असमिध्यीत् |
| लृट् | = | समिधिष्यति | लृङ् | = | असमिधिष्यत् |
| लृट् | = | समिध्यिष्यति[2] | लृङ् | = | असमिध्यिष्यत् |

इति गणप्रक्रिया

## उपसर्गपृथक्करणम्

स्वरसंहिताङ् भिन्नोपसर्गपूर्वाणामुपसर्गेतरभागस्यैव क्यच्प्रकृतित्वं नामधातोश्च तदुपसर्गपूर्वत्वनियमः स्वरविधौ तूपसर्गाणां पराङ्गवद्भावः[3]।

यथानुभवसंस्कारविहारादीनामुपसर्गविशिष्टानां विशिष्टार्थबोधकत्वेऽपि धातुत्वमुपसर्गरहितभागस्यैवेष्यते अत एव ततः प्रागडागमादिगणकार्याणि। भवन्ति– अन्वभवत् व्यवहरदित्यादि। एवमेवेह नामधातूनामप्यनुभवीय संस्कारीय विहारीयादीनामुपसर्गरहितभागस्यैव नामधातुत्वमिष्यते न तद्विशिष्टभागस्य। तेन लुङ्,लङ्, लृङक्ष्वडागमस्तदुपसर्गात् परतोनेयः। अन्वभवीयत्, समस्कारीयत्, व्यहारीयत्, अवाधानीयत्, व्यज्ञानीयत्, प्रण्यधानीयत्, समानकर्तृकयोर्द्वयोः क्रिययोः पूर्वकालार्धवृत्तादस्मान्नामधातो ल्यबेव न क्त्वा। अव्ययपूर्वकत्वात्। अनुभवीय्य, संस्कारीय्य, विहारीय्य, अवधानीय्य, प्रणिधानीय्य। यत्र त्वाङुपसर्गः स्वरसन्धिनापहृतात्मरूपः प्रयुज्यते तत्र तद्विशिष्टस्यैव धातुत्वमीष्यते[4]। तेनाङ् प्रागडागमः। अव्ययपूर्वत्वाभावाच्च न ल्यप्। अ ऊढः - ओढः। तमैच्छत्– औढीयत्। तमेयित्वा- ओढीयित्वा। स्वरविधौ तूपसर्गविशिष्टस्यैव धातुत्वमिष्यते। धातुस्वरूपे तदन्तर्भावस्येष्टत्वात्। तेनानुभवीयति विहारीयति इत्यादावन्वादि यदादुत्वरत्वेऽप्या-

---

1 क्यस्य विभाषा (6-4-50)

2 समिधिष्यति, असमिधिष्यत् इति मूल पाठः।

3 उपसर्ग-समानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते इति नियमात्।

4 उस्योमाङ्क्ष्याटः प्रतिषेधः (वा.3636)

घातनिघातत्वं नास्ति। अनूप, प्रतीप, समीप, सुखदुःखादिषु तु नैवमुपसर्गपृथक्करणम्। क्रियायोगाभावेन तत्रैतेषामन्वादीनामुपसर्गत्वाभावात्।

## अथ साधनादिविचारः

क्यजन्तस्य धातोः कानि साधनानि भवन्तीत्यत्रोच्यते। भावः कर्ता चेति द्वयं न तु कर्मापि। अकर्मकत्वात्। ननु चायमिषि सकर्मको यस्यायमधे क्यज् विधीयते। सत्यम्। अभिहितं तु तत् कर्मान्तर्भूतं धात्वर्थः संपन्नः न चेदानीमन्यत् कर्मास्ति येनायं क्यजन्तो नामधातुः सकर्मकः स्यात्। कथं तर्ह्ययं सकर्मको भवति–''अपुत्रं पुत्रमिवाचरति पुत्रीयति माणवकमिति''अस्त्यत्र विशेषः। द्वे ह्यत्र कर्मणीउपमानकर्म चोपमेयकर्म च। तत्रोपमान कर्मान्तर्भूतम्, अथोपमेयेन कर्मणा सकर्मको भवति। तद्यथा- अपि काकः श्येनायते इति। अत्र द्वौ कर्तारो- उपमानकर्त्ता चोपमेयकर्ता च। तत्रोपमानकर्तान्तर्भूतः, उपमेयकर्त्रा सकर्तृको भवति अयं तर्हि कथं सकर्मको भवति-''मुण्डयति माणवमिति'' अत्रापि द्वे कर्मणी भवतः-सामान्यं च विशेषश्च। तत्र सामान्यं कर्मान्तर्भूतम्, विशेषकर्मणा सकर्मको भवति। इह त्विषिरेककर्मैव। तस्मिन्नतर्भूते। पुनरयमन्यकर्मालाभादकर्मको नामधातुर्भवति। पुत्रो मे स्यादित्येवमयमात्मनः पुत्रमिच्छति पुत्रीयति, सुखीयति। ममायं देवदत्तः पुत्रो भवत्वित्येवं कृत्वा तं देवदत्तमात्मनः पुत्रमिच्छतीत्यर्थं तु नेष्यते क्यच्प्रयोगः। तेन देवदत्तं पुत्रीयति- इत्येवं सकर्मकत्वं नाशङ्क्यम्।

''अथ जिज्ञास्यते - इष्टः पुत्रः, इष्यते पुत्रः। - इत्येवमादौ क्यचा भवितव्यं न वा। अत्र केचित् तावदाहुः - न भवितव्यम्। स्वशब्देनोक्तत्वात्। अपरे त्वाहुः - भवितव्यम्। धात्वर्थे ह्ययं क्यच् विधीयते। स च धात्वर्थः केनचिदेव शब्देन निर्देष्टव्य इति इह भवन्तस्तावदाहुः- न भवितव्यमेवेति। समानार्थेन हि वाक्येन भवितव्यं प्रत्ययान्तेन च। यश्चेहार्थो वाक्येन गम्यते– ''इष्टः पुत्रः, इष्यते पुत्रः'' इति नासौ जातुचित् प्रत्ययान्तेन गम्यते[1]। तस्मादगमकत्वात् प्रत्ययो नास्ति। इह तावत् कर्मप्रत्ययो दृश्यते। क्यजन्तात् त्वकर्मकत्वात् कर्मप्रत्ययो न संभवति। तस्माद्वाक्येन समानार्थत्वासंभवाच्च प्रत्ययो नास्ति।

इति साधनादिविचारः इति तदिच्छाविचारः॥

---

1 महाभाष्यम् (3-1-8)

## अथ तदिवाचारः

तत्सादृश्येन चेष्टनं तदिवाचारः। इवाचारे विशेषणभूतं कर्तृपदं कर्मपदमधि करणपदं वा प्रत्ययसंबन्धादिवाचारवृत्तिको धातुर्भवति। ततो विशुद्ध धातुवदाख्यात-विभक्तयः कालादिसम्बन्धात् यथायथं नेयाः।

तदिवाचारक्यङ्क्यचोः प्राक्छब्दभेदेन- आ, ई, ऊ, इत्येशामन्यतमः संनियुज्यते, क्वचिद्वा शुद्धौ क्यङ्क्यचौ प्रयुज्येते। अथवा क्वचित् तयोलोपो विधीयते। तेनैतयोः क्यङ्क्यचोर्दशरूपाणि सिध्यन्ति–

| | | | | | |
|---|---|---|---|---|---|
| 1. | अते | 2. | यते | 3. | आयते |
| 4. | ईयते | 5. | ऊयते | 6. | अति |
| 7. | यत्ति | 8. | आयति | 9. | ईयत्ति |
| 10. | ऊयति | | | | |

एषु 'अते' इत्येवं भागा आत्मनेपदाख्यातविभक्तयः। ततः प्राक् तु यकारपर्यन्ता भागा क्यङ्गे द्रष्टव्याः। यत्र तु यकारपर्यन्तः प्राग्भागो नोपलभ्यते स क्यङ् लोपप्रदेशः। तैश्चैर्भियकारपर्यन्तैभगैरन्तेकृतैः सद्भिर्नामजा धातवः संपाद्यन्ते। सर्वे च ते धातवस्तदिवाचारेऽर्थे कृतवृत्तयो भवन्ति- यथा राजसदृशाचरणे राजायधातुः स्याद्राजानिति नान्त धातुर्वा लुप्तयान्तः। पुत्रदृशाचरणे पुत्रीयधातुः। नदीसदृशाचरणे नदीय धातुः। भानुसदृशाचरणे भानूयधातुः गोसदृशाचरणे गव्यधातुः। किन्तु नाविशेषं सर्वेभ्यो नामभ्यः सर्वे ते यकारपर्यन्ताभागा संनियुज्यन्ते अपि तु शब्दविशेषसापेक्षा धातुकरणविशेषा भवन्तीत्यतस्ते प्रदेशाः प्रदर्श्यन्ते।

1. इवाचरतीत्यर्थे कर्तुरूपमानात् क्यङ् स्यात्[1]। क्यज्लोपो वाऽवगल्भक्लीवहोडेभ्यस्तु क्यङ् स्यात् क्यङ् लोपो वा[2]।

2. श्रुतक्यजन्ताल्लुप्तक्यजन्ताच्च परस्मैपदं[3] श्रुतक्यङ्न्ताल्लुप्त-क्यङ्न्तात्त्वात्मनेपदम्[4]।

3. अवर्णान्तादायः इवर्णान्तादीयः, ऊवर्णान्ताद्वयः, सन्ध्यक्षरान्ताद् व्यञ्जनान्ताच्च यः स्यात्[5], सकारनकारान्ताभ्यां सनलोपात् स्वरान्तवत्[1]।

---

1 कर्तुः क्यङ सलोपश्च (3-1-11)
2 आचारेऽवगल्भक्लीबहोडेभ्यः क्विब् वा वक्तव्यः (वा.)
3 शेषातकर्तरि परस्मैपदम् (1-3-78)
4 अनुदात्तङित आत्मनेपदम् (1-3-12)
5 अकृत्सार्वधातुकयोः दीर्घः (7-4-25) वान्तो यि प्रत्ययः

तदित्थं धातवः संपद्यन्ते। कृष्णाय-कृष्ण इवाचारे। कवीय- कविरिवाचारे। गुरुय- गुरुरिवाचारे इत्यादयः। कृष्णायते - कृष्ण इवाचरति। मालायते - मालेवाचारति। कवीयते - कविरिवाचरति। स्त्रीयते, गुरुयते, कुतूयते, गव्यते, नाव्यते, त्वद्यते, मद्यते, युष्मद्यते, अस्मद्यते। सलोपः। ओजायते, अप्सरायते। नलोपः - राजायते। पन्थेव - पथीनती, मथीनति, ऋभुक्षीणति।

अवगल्भादिभ्यः क्यङ् च क्यङ्लोपश्च। अवगल्भायते। क्लीबायते विक्लीबायते, होडायते, विहोडायते। इति वा। अवगल्भते, क्लीवते, विक्लीवते, होडते, विहोडते इति वा। अवगल्भा, विक्लीवा, विहोडा- इति धातोर्पुनर्नामकरणम्।

4. इवाचरतीत्यर्थ कर्मणोऽधिकरणाच्चोपमानात् क्यच् स्यात् [2]।

5. कण्ठतालुमूर्द्धस्वरान्तान्नान्ताच्चेयः स्यात् [3], सन्ध्यक्षरान्ताद् व्यञ्जनान्ताच्च यः स्यान्नत्वव्ययाच्च मान्ताच्च [4]।

ततो विष्णूयादयो धातवः संपाद्यन्ते। विष्णूयति द्विजं विष्णुमिवाचरति। भानूयति स्फटिकम्। पुत्रीयति छात्रम्। वारीयति क्षीरम् पित्रीयति गुरुम्। राजानमिवाचरति राजीयति जामातरम्।गामिवाचरति गव्यति। नाव्यति, त्वद्यति, मद्यति। समिध्यति, दृषद्यति।

अधिकरणाच्चैतदेवं विज्ञेयम्। प्रासादे इवाचरति प्रासादीयति – भिक्षुः। कुट्यामिवाचरति कुटीयति प्रासादे भिक्षुः। इतीवाचारविधितन्त्रम्, शेषतन्त्रमतः परमुच्यते –

प्रकृतिविकारः, पुवंद्भावः, गणप्रक्रिया, उपसर्गपृथक्करणम्, स्वरविधिश्चेत्येते तदिवांचारप्रत्ययाश्रयविधयः। तत्रादौ –

## प्रकृतिविकारः

1. स्वरादौ प्रत्यये परे प्रकृत्यन्तस्वरस्य परसंयोगाद्दीर्घ एकादेशः [5]। पर्वतायते, नदीयते, वधूयते।

2. यप्रत्यये परे प्रकृत्यन्तस्यौकारस्याव् स्यादोकारस्य त्वव् स्याद् [6] गिरपुरादीनामुपधादीर्घादयः प्रयोगादुन्नेयाः [1]। गव्यते, नाव्यते, गीर्य्यते, पूर्य्यते।

---

1 कर्तुः क्यङ् (3-1-11) न क्ये (1-4-15), न लोपः प्रतिपदिकान्तस्य (8-2-7)
2 अधिकरणाच्चेति वक्तव्यम् (वा.) उपमानादाचारे (3-1-10)
3 अकृत्सार्वधातुकयोर्दीर्घः (7-4-25)
4 मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच् न (वा.)
5 अकृत्सार्वधातुकयोर्दीर्घः (7-4-25)
6 वान्तो यि प्रत्यये (6-1-79)

3. इवाचरतिप्रत्यये चिकीर्षिते प्रकृत्यन्तयोर्नकारसकारयोलोपः स्यादोजोऽप्सरो भिन्नानां विकल्पेन [2]।

नलोपे कृतेऽवर्णान्तत्वादायः, इवर्णान्तत्वादीयः प्रवर्तते। राजयते, व्योमायते, दण्डीयते, चक्रीयते। एवं सलोपेऽपि। ओजायमानं योऽहिं जघानओजायते, अप्सरायते। इतरेषान्तु सान्तानां विकल्पेन सलोपः। यशायते, यशस्यते। विद्वायते। पयायते, पयस्यते।स्रोतायते, स्रोतस्यते। विद्वस्यते। इह तावन्मतत्रयमाचक्षते। सर्वेषां सान्तानामविशेषेणं नित्यं सलोपः- इत्येकम्। ओजोऽप्सरसोरेव नित्यमन्येषां तु विकल्पेन सलोप इति द्वितीयम् [3]। दैव्यामेवायमोजसः सलोपः। आर्ष्यान्त्वप्सरस एव नौजसः। 'ओजस्यते' इत्यस्यैवेष्टत्वादिति तृतीयम्। एषु द्वितीयं कात्यायनमतमेव साधीय इति स्थितम्।

4. अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्यज्लोप [4]। इदमिवाचरति- इदामति। कीमति। राजानति। पथीनती। इति प्रकृतिविकारः।

## अथ पुवंद्भावः

1. अनित्यस्त्रीलिङ्गानां प्रत्ययस्थकोपधातिरिक्तानां स्त्रीप्रत्ययलोपात् पुवंद्भावः स्यात् क्यङि परे।

कुमारीवाचरति कुमारायते [5]। लोपो द्विविधो लोके दृष्टो - व्यापत्या चाभिभवेन च। यत्रापहाराद् वस्तुनोऽसद्भावः प्राप्तस्तत्र व्यापत्तिलोपः। यथा शुष्के सरसि जललोपः। यत्र तु सत एव वस्तुनो निमित्तान्तरप्रत्यासत्त्या तदनुपलब्धिः प्रसज्जते तत्राभिभवलोपः। यथा दिने तारकादिज्योतिषाम्। तत्राभिभवे निमित्तापाये नैमित्तिकापायो लोके दृष्टः। अत एव स्त्रीप्रत्ययाहारे तन्निमित्तकृतः प्रकृतिविकारः सर्वोऽपि निवर्तते। पुंवदयं स्वरूपं प्रत्यापद्यते। एनीव एतायते,श्येनीव श्येनायते। हरितवर्ण विशिष्टा स्त्री हरिणी- सेवाचरति हरितायते। या तु हरिणस्त्री हरिणी तत्र न। हरिणीयते। सपत्नी शब्दे त्रेधा सिद्धिः। सपत्नायते, सपत्नीयते, सपतीयते। गुर्वीव गुरूयते। युवतिरिव युवायते। पट्वी मृद्व्याविव पट्वीमृदूयते। यद्युपधायां

1 हलि च (8-2-77)
2 न क्ये (1-4-15) न लोपः प्रातिपदिकान्तस्य (8-5-7)कर्तुः क्यङ सलोपश्च (3-1-11)
3 सलोपो वा (वा.) ओजसोरप्सरसोर्नित्यम् (वा.)
4 अनुनासिकस्य क्विझलोः क्ङिति (6-4-15)
5 क्यङ्मानिनोश्च (6-3-39)

प्रत्ययावयवः ककारः श्रूयते तर्हि पुंवद्भावो न प्रवर्तते[1]। पाचिकायते। ककारस्य प्रत्ययानवयवत्वे तु भवत्येव। काकीवाचरति काकायते। पिकायते। नित्यस्त्रीप्रत्यान्तानां पुवंद्भावो नास्ति। अक्षौहिणीयते। इति पुंवद्भावः।

## गणप्रक्रिया

1. क्यङि क्यङ्क्यचोलोपे च भवत्यादिवदत्यादिविभक्तयो यथानियमम्[2]।

2. श्रुतक्यजन्ताल्लुप्तक्यजन्ताच्च परस्मैपदं[3]श्रुतक्यङन्ताल्लुप्तक्यङन्ताच्चात्मनेपदम्[4]।

3. परस्मैपदत्वे त्यन्ताः प्रत्ययाः आदिश्यन्ते[5] आत्मनेपदत्वे तु तेऽन्ताः[6] क्यंङ्क्यचोलोपे सति विकरणाकारे परे प्रकृत्यन्ताकारलोपः स्यात्[7]।

अ इवाचरति अति, अत, अन्ति।

अतु, अताम्, अन्तु। आत्, आताम्,आन्। एत, एताम्। ऐयुं। आर्द्धधातुके- औ, अतुः, उः। इता, इतारौ, इतारः। इष्यति, इष्यतः, इष्यन्ति। यात्, यास्ताम् यातुः। ऐत्, ऐष्टाम्, ऐषुः ऐष्यत, ऐष्येताम्, ऐष्यन्। क इव- कति। चकाविति हरदत्तः। चकेति माधवः[8]। स्व इव स्वति सस्वौ वा, सस्व वा स्वामास, - स्वाञ्चकारेत्यपि केचिदाहुः, तदनादेयम्[9]। मालेव मालाति मालाञ्चकार। अमालात्। अमालासीत्। कविरिव कवयति। आशीर्लिङि कवीयात्। लुङि - अकवीदिति कैयटादयः। अकवायीदिति माधवः[10]। विरिव वयति। विवाय, विव्यतु, विव्युः। अवयीद्वा- अवायीद्वा। श्रीरिव श्रयति। शिश्राय, शिश्रियतुः शिश्रियुः। द्रुरिव द्रवति, अद्रावीत्।

---

1 न कोपधायाः (6-3-37)
2 सनाद्यन्ता धातवः (3-1-32)
3 शेषात्कर्तरि परस्मैपदम् (1-3-78)
4 अनुदात्तङित्त आत्मनेपदम् (1-3-12)
5 लः परस्मैपदम् (1-4-99)
6 तङानावात्मपनेपदम् (1-4-100)
7 अतो गुणे (6-1-97)
8 अतो लोपः सर्वत्र। अयं व्यल्लोप इत्यादिना वृद्धिं बाधते। माधवीयाधातुवृत्ति, पृ.622
9 अनेकाचत्वाभावादिति भावाः।
10 सिचि वृद्धिः परस्मैपदेषु (7-2-1) इत्यत्र धातोरित्यनुवर्त्य धातोरेव यो धातुरिति व्याख्यानान्नामधातोर्न वृद्धिरिति कैयटादयः। माधवस्तु नामधातोरपि वृद्धिमिच्छति (सिद्धान्तकौमुद्याम्)

भूरिव-भवति बुभाव। अभावीत्। पितेव पितरति आशिषि पित्रियात्। द्यौरिव द्यवतीति दीक्षितः देवतीति माधवः। इति क्यज्लोपः।

अवगल्भां चक्रे। विक्लीनां चक्रे विहोडां चक्रे इति क्यङ्लोपः। क्यङन्तात् क्यजन्ताच्च सर्वा गणप्रक्रिया भ्वादिवन्नेया।

## उपसर्गपृथक्करणम्

1. स्वरसहिताङ्भिन्नोपसर्गपूर्वाणामुपसर्गेतर भागस्यैव क्यङादि-प्रकृतित्वं [1]। नामधातोश्च तदुपसर्गपूर्वत्वनियमः स्वरविधौ तूपसर्गाणां पराङ्गवद्भावः नामधातोश्च तदुपसर्गपूर्वत्वनियमः स्वरविधौ तूपसर्गाणां पराङ्गवद्भावः। अवागल्भत। अवागल्भिष्ट। व्यरुद्धायत। संप्रत्ययन्नायत। विजगल्भायत। समाधीयत। अवगल्भ्य-अवगलभाय्य। विरुदाय्य। यत्र त्वाङुपसर्गः स्वरसन्धिनापहृतात्मरूपस्तत्र न। औढायत। ओढायित्वा। स्वरविधौ तूपसर्गविशिष्टस्यैव धातुत्वम्। तेनावगल्भत इत्यादाववादि पदादुत्तरत्वाभिमानेनाख्यातनिघातत्वं नास्ति। अनूपसूखादिषु तु नोपसर्ग पृथक्करणमुपसर्गाभावात्। इतितदिवाचारप्रत्ययः।

## अथ तदभूतभावः

अतस्य तद्भावसंपत्तिरभूतभावः। पूर्वमसतो यस्यायमुत्तरो भावस्तद्वाचकं नामपदमभूत[2] भाविकप्रत्ययविशिष्टं सदभूतभाववृत्तिको धातुर्भवति। ततो विशुद्धधातु-वदाख्यातविभक्तयः कालादिसम्बन्धात् यथायथं नेयाः। अस्मिन्नभूतभावे भवति करोति युक्तान्नामपदात् च्विस्तद्वितो नामकरणः संविहितः। इह भवत्यर्थान्तर्भाविण धातुकरणप्रत्यययोगात् तदर्थवृत्तिको धातुः संपाद्यते स यावता ब्रूयात्- लोहितभवतीति, तावदेवैतदाह - लोहितायतीति। प्रागलोहितः, सन् पश्चाल्लोहितो भवतीत्युभयोस्तयोरर्थः।

तद्भूतभावक्यङ्क्यचोः प्राक्शब्दभेदेन - आ - ई- इत्येषामन्यतमः संनियुज्यते तेनैतयोः क्यङ्क्यचोश्चत्वारिरूपाणि भवन्ति –

1. आयते 2. आयति 3. ईयति 4. ईयते

एषु 'अते' 'अती' त्येवमुत्तरभागा आख्यातविभक्तयस्ततः प्राक् तु यकारपर्यन्ताभागाः क्यङ्क्योचोर्द्रष्टव्याः। एभिस्तु यकारपर्यन्तोर्धातुकरणैरन्तेकृतैः

---

1 उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते इति।

2 नामपदमाभूत इति मूले

सद्भिर्नाम्नां धातवः संपद्यन्ते तदभूतभावार्थाः। यथा अभृशस्य च भृशभावे भृशाय धातुः। अश्यामस्य श्यामसंपत्तौ श्यामाय धातुः। तत्रैते धातुकरणा नाविशेषं सर्वेभ्यो नामभ्यो विधीयन्ते अपि तु क्वचिदायः क्वचिदीयः क्वचिदात्मनेपदान्येव क्वचिदुभयानीत्येवं विशेषपरामर्शे ते प्रदेशाः प्रदर्श्यन्ते–

अतत् तद्भवतीत्यर्थे डाजन्ताल्लोहितादेश्च क्यच्क्यङौ स्यातां[1] क्यङेव तु भृशादिभ्यः[2]।

अवर्णान्तादाय इवर्णान्तादीयो व्यञ्जनान्तात्तु व्यञ्जनलोपात् स्वरान्तवत्[3]। क्यजन्तात् परस्मैपदं क्यङन्तादात्मनेपदम्।

अव्यक्तशब्दानुकरणशब्दात् तद्धितो डाच् प्रत्ययो विधीयते[4]। तस्याख्यातप्रयोग योग्यतायै धातुत्वार्थमयं प्रत्ययः क्रियते। पटपटायति, पटपटायते। मटमटायति, मटमटायते। चटचटायति, चटचटायते। धकधकायति, धकधकायते। दमदमायति, दमदमायते। मनमनायति, मनमनायते। हिनिहिनायति, हिनिहिनायते। कुरुकुरायति, कुरुकुरायते। कुतुकुतायति, कुतुकुतायते। अथ लोहितादयः-

**लोहितः श्याम धूमाश्च मूर्छा निद्रा च चर्म च।**
**गवो हर्षः सुखं दुःखं नित्यं च करुणा कृपा॥1॥**
**फेनदासौ मद्रनीलौ हरितश्चरितस्तथा।**
**लोहितादयआख्याता भवन्त्यन्येऽपि केचन॥2॥**

मूर्छानिद्रा गर्वादयो वृत्तिविषये तद्वति वर्तन्ते[5]। लोहितायति, लोहितायते। स्त्रीप्रत्ययान्तादप्यस्मात् प्रत्ययौ[6]भवतः। लोहिनीयति, लोहिनीयते। श्यामायति, श्यामायते। धूमायति, धूमायते। मूर्छायति, मूर्छायते मूर्छया युज्यते। निद्रायति, निद्रायते निद्रया युज्यते। चर्मायति, चर्मायते। गर्वायति, गर्वायते। हर्षायति, हर्षायते। सुखायति, सुखायते। दुःखायति, दुःखायते। करुणायति, करुणायते। कृपायति, कृपायते। गर्वादिना युज्यते इत्यर्थः। फेनायति, फेनायते। दासायति, दासायते। मद्रायति, मद्रायते। नीलायति, नीलायते। हरितायति, हरितायते। चरितायति, चरितायते। इत्येवं

---

1 लोहितादिडाजभ्यः क्यष् ()3-1-13
2 लोहिताडाज्भ्यः क्यष्वचनम् भृशादिष्वितराणि (वा.1829, 30)
3 अकृत्सार्वधातुकयोर्दीर्घः (7-4-25)
4 अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् (5-4-57)
5 वर्तते इति मूले
6 प्रत्ययौ इति मूल पाठेः।

द्वैविध्यं प्रयोगेषु पश्यति भगवान् पाणिनि। भगवान् पतञ्जलिस्त्वाह- लोहितादेवेकस्मात् क्यच्क्यङौ भवतः श्यामादिषु तु परस्मैपदप्रयोगो न कुत्रापि दृश्यते तसमात्तेभ्यः क्यङेवेति [1]। ग्रन्थेष्वपि नेदानीं परस्मैपदं प्रयुक्तमुपलभ्यते। किन्तु लोकव्यवहारेऽवश्यमासन्नविशेषणोभयपदप्रयोगापदप्रयोगाः पाणिनि समये दृष्टा इति विज्ञायते। ततः क्रमेण तु पतञ्जलिसमयं यावदात्मनेपदिनः प्रचारातिशयेन दृढमूलामापन्ना व्युच्छिनाश्च परस्मैपदिन इति गम्यते।

भृशादिभ्यस्तु नित्यमात्मनेपदप्रयोगा एवोपलभ्यन्ते–

**भृशो मन्दोत्सुकौ शीघ्रः शश्वच्चपलपण्डिताः।**
**अण्डरोऽप्यजरो रोहद् रेहद् वेहद् भ्रमत् तथा॥1॥**
**उन्मना अप्यभिमना दुर्मणाः सुमना अपि।**
**शुचिवचः शुधिर्वचः सुरजा रह ओजसी॥2॥**
**भृशादय इमे ख्याता भवन्त्यन्येऽपि केचन [2]।**

अभृशो भृशो भवति भृशायते। दिशि मन्दायते तेजो दक्षिणस्यां वेरपि [3]। उत्सुकायते शीघ्रायते। शश्वदादिनामोज आदीनां च व्यञ्जनान्तानामन्त्यव्यञ्जनलोपा [4]। क्यङि भवति। शश्वायते सातत्येन [5]भवतीत्यर्थः। चपलायते, पण्डितायते। अण्डरो मुष्कः। अण्डरायते, अजरायते। अरोहन् रोहन् भवति - रोहायते। नैर्घृण्यते[6] वा भिक्षाभिषवधर्मे वा रहसि वा रेहच्छब्दः। रेहायते। गर्भोपघातिनी वेहत्। वेहायते। अभ्रमन् भ्रमन् भवति भ्रमायते। उन्मानायते। अभिमनायते, दुर्मनायते, सुमनायते। शुचिवर्चायते, शुचीयते, वर्चायते। सुरजायते, रहायते। ओजः शब्दस्येह तद्वति वृत्तिः सामर्थ्यात्। ओजायते इति विधितन्त्रं शेषतन्त्रमतः परमुच्यते।

प्रकृतिविकारो गणप्रक्रिया उपसर्गपृथकक्करणं स्वरविधिश्चेत्येते अभूतभावाश्रयविधयः। तत्रासौ नियमो विधितन्त्रे प्रदर्शितः।

---

1 लोहितडाज्भ्यः क्यष्वचनम्, भृशादिष्वितराणि (वा.1729-30)

2 अण्डर अजर, भ्रमत, सूरजा, रोहद, शुचि एतेशब्दाः काशिकावत्तौ न सन्ति। वृहत्, निषत् अधर, शुधि इम अधिका वृत्तौ,

3 रघुवंश चतुर्थसर्ग— 49

4 सतत्येन इति मूले।

5 नोर्घण्ये इति मूले

6 अवर्णान्तित्वादय. इति मूले

## अथेहादौ प्रकृतिविकारः

अतस्य तद्भवतौ क्यङि चिकीर्षिते व्यञ्जनान्तानां व्यञ्जनलोपः स्यात्। सन्ति भृशादिषु सकारतकाराद्यन्ताः शब्दाः[1]। तेषामन्त्यव्यञ्जनलोपात् स्वरान्तत्वे। जातेऽवर्णान्तत्वादायः[2] प्रत्ययो भवति। ओजायते दुर्मनायते, रोहायते, शश्वायते। इति प्रकृतिविकारः ॥

## गणप्रक्रिया

क्यङ् क्यचोर्भवत्यादिवदन्यादिविभक्तयो यथानियमम्। क्यजन्तात्परस्मैपदम्। तत्रादौ–

सार्वधातुके –

| | | | | |
|---|---|---|---|---|
| लट् | = | लोहितायति | लोहितायसि | लोहितायामि |
| लेट् | = | लोहितायाति | लोहितायासि | लोहितायामि |
| लोट् | = | लोहितायतु | लोहिताय | लोहितायानि |
| लङ् | = | अलोहितायत् | अलोहितायः | अलोहितायम् |
| लेङ् | = | लोहितायेत् | लोहितायेः | लोहितायेयम् |
| लोङ | = | लोहितायात् | लोहितायाः | लोहिता(याम्) |

आर्धधातुके -

| | | | | |
|---|---|---|---|---|
| लिट् | = | लोहितायांचकार | लोहितायांचकर्थ | लोहितायांचकार |
| लुट् | = | लोहितायिता | लोहितायितासि | लोहितायितास्मि |
| लृट् | = | लोहितायिष्यति | लोहितायिष्यसि | लोहितायिष्यामि |
| लिङ् | = | लोहिताय्यात् | लोहिताय्याः | लोहिताय्यासम् |
| लुङ् | = | अलोहितायीत् | अलोहितायीः | अलोहितायिष्यम् |

लोहितांचकारेत्यत्र लोहितायां बभूव, लोहितायामासेत्याद्यपि द्रष्टव्यम्। लोहितायांचकरेत्यत्र लोहितायां चकारेत्यपि जायते। अथ क्यङन्तादात्मनेपदम्। तत्र–

---

1 भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः (3-1-12)

2 अवर्णान्तत्वादय इति मूलेः

**सार्वधातुके–**

| | | | | |
|---|---|---|---|---|
| लट् | = | लोहितायते | लोहितायसे | लोहिताये |
| लेट् | = | - | - | - |
| लोट् | = | लोहितायताम् | लोहितायस्व | लोहितायै |
| लङ् | = | अलोहितायत | अलोहितायथाः | अलोहिताये |
| लेङ् | = | लोहितायेत | लोहितायेथाः | लोहितायेय |
| लोङ् | = | - | - | - |

**आर्धधातुके –**

| | | | | |
|---|---|---|---|---|
| लिट् | = | लोहितायांचक्रे | लोहितायांचकृषे | लोहितायांचक्रे |
| लुट् | = | लोहितायिता | लोहितायितासे | लोहितायिताहे |
| लृट् | = | लोहितायिष्यते | लोहितायिष्यसे | लोहितायिष्ये |
| लिङ् | = | लोहितायिषीष्ट | लोहितायिषीष्ठाः | लोहितायिषीय |
| लुङ् | = | अलोहितायिष्ट | अलोहितायिष्ठाः | अलोहितायिषि |
| लृङ् | = | अलोहितायिष्यत | अलोहितायिष्यथाः | अलोहितायिष्ये |

लोहितायांचक्रे इत्यत्र लोहितायांबभूवे, लोहितायामासे इत्याद्यपि द्रष्टव्यम्। इति गणप्रक्रिया।

## उपसर्गपृथक्करणम्

1. स्वरसंहिताङ् भिन्नोपसर्गपूर्वाणामुपसर्गेतरभागस्यैव क्यङादिप्रकृतितत्वं[1] नामधातोश्च तदुपसर्गपूर्वत्वनियमः स्वरविधौ तूपसर्गाणां पराङ्गवद्भावः।

उत्सुकायते, उद्सुकायत। उन्मनायते, उदमनायत अभिमनायते, अभ्यमनायत दुर्मनायते, दुरमनायत। सुमनायते, स्वमनायत्। सुरजायते, स्वरजायत। उत्सुकाय्य, उन्मनाय्य, अभिमनाय्य, दुर्मनाय्य, सुमनाय्य। यत्रास्य नामधातोश्चिकीर्षितप्रयोगश्चिकीर्षितस्तत्राप्येतमव्ययभागं परित्यज्य द्वित्वादिविधिर्भवति। अभिमिमनायिषते। अनुन्मना अप्युन्मना भवितुमिच्छति उन्मिमनायिषते। यत्र त्वाङुपसर्गः

---

1 उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते इति।

स्वरसन्धिनापहृतात्मस्वरूपस्तत्र नोपसर्गपृथक्करणम्। तेन औजायित्वा, आण्डरायित्वेत्यादौ न ल्यप्। सुखदुःखयोस्तु नोपसर्गपृथक्करणम्, तत्र सुदुरोः प्रकृत्यर्थविशेषणत्वात्। तेनासुखायत, अदुःखायत्, सुखायित्वा, दुःखायित्वा, इ त्येवरूपाणि।

स्वरविधौ तूपसर्गविशिष्टस्यैव धातुत्वमिष्यते न तु द्वित्वल्यबादिविधिवत् तदुपसर्गविकल्पस्य। तत्रैतेषां पराङ्गवद्भावस्येष्टत्वात्। तेनाभिमनायते सुमनायते इत्यादौ अभ्यादिपदादुत्तरत्वेऽप्याख्यातनिघातत्वं नास्ति अविशेषेऽपि क्वचिदेषामुप-सर्गाणां प्रत्ययार्थविशेषणत्वं क्वचित्त प्रकृत्यर्थ विशेषणत्वमिति वैचित्र्ये तत्र भवन्तो वैयाकरणं नासूयितव्याः। अनिर्वचनीयवैचित्र्याया लोकप्रवृत्तेरनुसारेण तत्प्रवृत्तेः। लोके वेदे च दृष्टानुविधिः प्रवर्तते - इति बोध्यम्। इत्यभूतभावप्रत्ययाः।

## अथ तत्करणम्

यतस्तस्यार्थस्य करणं प्रत्यायते स तत्करणप्रत्ययः। करणं चेह क्रियासामान्यम्। न च क्रियासामान्यमेवेहार्थः शक्यं प्रयोगेष्वर्धापयितुम्। अपि तु प्रकृतिभूतनामार्थसमुचितास्तत्र तत्र तास्ताः विशेषस्याः क्रिया एवोपगम्यन्ते सामर्थ्यात्। यथा - शरीरे वस्त्रं करोतीत्युक्ते समाच्छादनं गम्यते विपाशं करोतीत्यावक्षाणः[1] पाशाद्विमुञ्चतीत्यर्थं गमयति। नमः करोतीत्युक्त्वा पूजां दर्शयति। आत्मनि सुखं करोतीत्युक्ते अनुभवतीत्येवार्थो भवति। शब्दं करोतीत्युक्ते उत्पादयतीति गम्यते। तपः करोतीत्येवार्थं वक्तुं तपश्चरतीत्याह। तदेवं तत्र तत्र विशेषार्थोपलम्भेऽप्यन्ततः क्रियासामान्यमेवार्थं नानारूपेण क्रोडीकरोतीति विपश्यन्तः सामान्येनास्य धातुकरणस्य तात्करणिकत्वमाचक्षते। तस्य च कुत्र कीदृशो विशेषार्थ इत्यभिदर्शयितुं प्रदेशाः प्रदर्श्यन्ते।

किञ्च – क्यङ्, क्यच्, णिङ णिच् - इति चत्वारस्तत्करणिकाः प्रत्ययाः भवन्ति। तेषां संयोगान्नामपदानि तत्तत् क्रियाविशेषार्थव्रत्तयो धातवः संपद्यन्ते। ततो विशेषधातुवदाख्यातविभक्तय कालादिसम्बन्धात् यथायथं नेयाः। तत्र क्यङ् क्यचोः प्राक्शब्दभेदेन - आ-ई - ऊ–इत्येषामन्यतमः संनियुज्यते। तेनैतयोः क्यङ्क्यचोरष्टौ रूपाणि-

1. यते 2. आयते 3. ईयते 4. ऊयते - इति क्यङ 5. यति 6. आयति 7. ईयति 8. ऊयति - इति क्यचः।

---

[1] आचक्षाणः

तत्रैर्भियकारपर्यन्तैर्धातुकरणैरन्तेकृतैः सद्भिर्नाम्नां धातवो भवन्ति तत्कारणार्थाः। यथा शब्दकरणे शब्दायधातुः। आश्चर्यकरणे चित्रीयधातुः। अथ णिङ्-णिचौ नामेकारावन्ते कृतावपि नाम्नां धातुत्वं प्रयोजयतः। यथा हस्तनिक्षेपे हस्ति धातुः। मुण्डकरणे मुण्डिधातुः। तौ सार्वधातुकेष्वकारपूर्वो प्रयुज्येते आर्द्धधातुकेषु तु शुद्धौ। तयोराख्यातविभक्तिसंनिधाने स्वरूपं यथा–

अयते इति णिङः।

## अयति इति णिचः

तदित्थं दशरूपाणि तात्करणिकस्य भवन्ति तेषां प्रदेशाः प्रदर्श्यन्ते-

1. शब्दादिभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात्[1]।

**शब्दोऽप्यं[2] भ्रं मेघो, नीहारः सुदिनदुर्द्दिने कण्वम्।**
**कलहो वैरं शीका, प्रुष्टा प्लुष्टा तथाऽट्टाऽटा॥1॥**
**कोटा पोटा सोटा शब्दाः शब्दादयः प्रोक्ताः।**
**सप्तदशैते गणिता एभ्यः क्यङ् स्यात् करोत्यर्थे॥2॥**

शब्दं करोति शब्दायते। शब्दयतीति वक्ष्यमाणो णिजपि नापोद्यते[3]। अभ्रायते, मेघायते, नीहारयते, सुदिनायते, दुर्द्दिनायते[4]। कण्वं पापम् कण्वायते, कलहायते, वैरायते, शीकायते, प्रुष्टायते, प्लुष्टायते, अट्टायते, अटायते, कोटायते पोटायते सोटायते।

2. चित्रात् करणे क्यङ् स्यादाश्चर्यविषयतायां स चेकारपूर्वः प्रकृति टिलोपश्च[5]। चित्रीयते - विस्मयते इति वा, विस्मापयति इति वा। चित्रयतीति वक्ष्यमाणो णिजपि नापोद्यते। अथवाऽनाश्चर्यविषयतायां णिजित्याहुः।

---

1 शब्दवैकरलहाभ्रकण्वमेघेभ्यः करणे (3-1-17) अराट्टाशीकाकोटापोटासोटाकष्टाग्रहणं कर्तव्यम् (वा.)

2 "शब्दोऽप्याभ्रं" इति मूले।

3 तत्करोति तदाचष्टे (ग.सू. 204)

4 सुदिनदुर्दिननीहारेभ्यश्च (वा.1736-37)

5 नमोवरिवश्चित्रङ क्यच् (3-1-19)

3. कर्मणो रोमन्थाद्हनुचालनेन वर्तने[1], फेनो[2]ष्मवाष्पेभ्य उद्वमने[3], दैव्यां तु – तपश्चरणे क्यङ् स्यात्[4]।

करोति विशेषा एवैतेऽर्थाः रोमन्थादिशब्दसंनियोगात्छब्दान्तरेण निर्दिश्यन्ते उद्गीर्णस्यावगीर्णस्य वा मन्थो रोमन्थः। रोमन्थं वर्तयति रोमन्थायते वृषभः। चर्वितस्याकृष्ट पुनश्चर्वणमिह रोमन्थपदार्थः। अथेह नास्ति क्यङ् कीटो रोमन्थं वर्तयति। अपानप्रदेशान्निसृतं द्रव्यमिह रोमन्थः। तदश्नातीत्यर्थः इति कैयटः। वर्तुलं करोतीत्यन्ये। इतस्ततस्तदन्तः स्वसंचारेण व्यतिव्यस्तं करोतीत्यर्थ इति परे। फेनमुद्वमति फेनायतेऽपस्मारी। ऊष्मायते[5] संवृतं स्थानम् वाष्पायते जलाशयः। तपश्चरति तपस्यते इति दैव्यामेवायं प्रयुज्यते इति पतञ्जलिः। तपस्यते लोकजिगीषुरग्नेः[6]। पुराणग्रन्थे त्वार्ष्यामपि तपस्यमानशब्दः प्रयुक्तो दृश्यते स वैदिक एव शब्दः स्यात्। भाषान्तरेऽपि भाषान्तरशब्दप्रवेशेन वाग्व्यवहारस्य सांप्रदायिकत्वात्। अथवा पतञ्जलिमपेक्ष्य तेऽर्वाचीनाः प्रयोगाः स्युः। कालभेदेन भाषायामावापोद्वापानुवृत्तिदर्शनात्।

4. सुखादिभ्यः कर्मभ्यः स्वगतसुखादिवेदनायां क्यङ् स्यात्[7]। वेदनाऽनुभवो ज्ञापनं वा।

**सुखं दुःखं कृच्छ्रमस्रं करुणं कृपणं तथा।**
**सोढं तृप्रमलीकं च प्रतीपं च सुखादयः ॥1॥**

सुखं वेदयते सुखायते, दुःखायते। कृच्छ्रं कष्टम् – कृच्छ्रायते। अस्रमश्रु वा रुधिरं वा अस्रायते। करुणं शोकः करुणायते। कृपणं कृपणायते। सोढम् सहनम् सोढायते। तृपं दुःखम् तृप्रायते। अलीकमनृतम् अलीकायते। प्रतीपं प्रतिकूलं प्रतीपायते। परनिष्ठसुखादिवेदनायां तु नास्ति। सुखं वेदयते प्रसाधको देवदत्तस्य।

5. कष्टादिभ्यः कर्मभ्यः कण्वचिकीर्षायां क्यङ् स्यात्[8]।

---

1 कर्मणोरोमन्थतपोभ्यां वर्तिचरोः (3-1-15) हनुचलने इति वक्तव्यम् (वा.1762)

2 ''फेनेष्मवाष्पेन्य'' इति मूले

3 बाष्पोष्मभ्यामुद्वमने (3-1-16), फेनाच्चेति वाच्यम् (वा.1764)

4 तपसः परस्मैपदं च (वा.)

5 ''उष्मायते'' इति मूल पाठेः

6 महाभाष्य (3-1-15)

7 सुखादिभ्य कर्तृवेदनायाम् (3-1-18)

8 सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् (वा.1761)

**कष्ट कृच्छ्रं गहनं कक्षं सत्रं च कष्टादि।**
**एते कदा च वृत्तौ पापेनार्थेन चैकार्थाः॥**

कष्टायते कृच्छ्रायते। स तथा कर्तुमिच्छति येनास्य मम वा क्लेशो भविष्यति। गहनमतिजटिलम्। तन्निर्धाराय क्लेशो भवति। कक्षं कण्टकतृणकुशादिपर्याकुलो वनप्रदेशः। तत्र संचरतः क्लेशो भवति एकादशदिनावरैः सहस्रपरमैरनेकदिवसैः साध्या बहुसंभारा यागाः सत्राणि। तत्कुर्वतोऽपि प्रयासवाहुल्येन भूयान् क्लेशोऽनुवर्तते। स सक्लेश इहोपमानेन लक्ष्यते। गहनायते, कक्षायते, सत्रायते। तथा तथा कर्तुमिच्छति येनैवमेवंविधक्लेशानुरुपाः क्लेशा अनुभूयमानाः स्युरित्याशयः।

6. कष्टादिभ्यश्चतुर्थीविषयेभ्यः क्रमणे क्यङ् स्यात्[1]। क्रमणमनार्जनं तदुन्मुखत्वमुत्साह इति नार्थान्तराणि। उक्ताः कष्टादयः। कष्टाय कर्मणे क्रामति - कष्टायते। कष्टं कर्तुमुत्सहते इत्यर्थः। कृच्छ्रायते, गहनायते, कक्षायते, सत्रायते। अत्र कक्षं सत्रं वा कर्तुमुत्सहते इत्यावेदयितुमिष्यते। यथाऽऽम्बरेण सत्रं साध्यते तथा आऽऽडम्बरवत् कर्मायं कर्तुमिच्छतीत्यर्थः। इत्थं चैते पूर्वैः समानार्था एव सिद्ध्यन्ति प्रक्रियामात्रं तु भिद्यते - इति पुनरुक्तिः। इति क्यङ् - विधिः।

7. तपश्चरणे, नमसः पूजाकरणे, वरिवसस्तु सपर्यापरिचर्य्याकरणे क्यच् स्यात्[2]। चरणं चारित्रमाचारः शीलमित्यनर्थान्तरमित्येके। चरणमनुष्टानं कर्मेत्यनर्थान्तरमिति परे। तपश्चरति तपस्यति, तपस्यते - इति देवभाषायामुक्तम्। तपस्यतीत्यार्षी भाषा। नमस्यति पूजयतीत्यर्थः। वरिवस्यति। सेवते परिचरति वा। नम इति गतिर्भवति नमस्यायां क्रियायाम्। अतो नमस्यानुरोधिनी द्वितीयाविभक्तिः प्रवर्तते न तु नमः पदयोगनिवन्धना चतुर्थी नमस्यति देवान्। वरिवस्यति गुरुन्। नमस्यति देवाय, वरिवस्यति गुरवे इति चतुर्थी तु देवमनुकूलयितुमभिवन्दते, गुरुमनुकूलयितुं शुश्रूषते - इत्येवं नमस्यावरिवस्यायोरितरक्रियार्थत्वे द्रष्टव्या। इति क्यज्विधिः।

8. चीवरात् समर्जनसम्वरणयो,र्भाण्डात् समाचयने, परिपुच्छविपुच्छोत्पुच्छेभ्योऽसने[3], स्वाङ्गवचनस्तु निरसने णिङ् स्यात्[4]।

---

1 कष्टाय क्रमणे (3-1-14)

2 तपसः परस्मैपदं च (वा.1766), नमोवरिवश्चित्रङ क्यच् (3-1-19)

3 पुच्छभाण्डचीवराण्णिङ (3-1-20) चीवरादार्जने परिधाने च (वा.1745) भाण्डात्समाचयने (वा.1744) पुच्छादुदसने व्यसने पर्यसने च (वा.1746)

4 णिङ् ङ्गान्निरसने (ग.सू.209)

चीवराण्यर्जयति, परिधत्ते वा संचीवरयते भिक्षुः। ननु प्रत्ययार्थविशेषणं समुपसर्गः पठ्यते। तस्य च प्रकृत्या सह भूयः प्रयोगो न प्राप्नोति। उक्तार्थानामप्रयोगात्। सत्यम्। अस्त्यत्र विशेषः। यत्रैकेन विशिष्टे प्रत्ययार्थे उत्पद्यते तत्राप्रयोगो न्याय्यः। इह पुनरनेकेन। भवति हि चीवरं करोत्यात्मने चीवरयते इत्यनर्जने चापरिधाने चेदृश प्रयोगः। तत्र चीवरयते इत्युक्ते संदेहः स्यात्। स भेदन्यार्थं[1] प्रतिपद्य प्रतिपिपादयिषितादर्थात् प्रच्यवेतेत्यसन्देहार्थमुपसर्गः प्रयुज्यते। एवमेवोत्तरत्रापि। भाण्डानि समाचिनोति संभाण्डयते राशीकरोतीत्यर्थः। अथ प्रकृत्या सह पठिता अप्येते परि, वि, उद्-इत्येते उपसर्गाः प्रत्ययार्थविशेषणतया नेयाः। स यावद् ब्रूयात् - पुच्छादुदसने व्यसने, पर्यसने चेति तावदेवैतदुच्यते - उत्पुच्छ, विपुच्छ परिपुच्छेभ्योऽसने इति। तेषां प्रत्ययार्थ विशेषणतया प्रकृतिविशेषणत्वाभावे सिद्धेऽपि असन्देहार्थं ते प्रकृत्या सह प्रयुज्यन्ते। पुच्छमुदस्यति - उत् पुच्छयते। पुच्छं व्यस्यति विपुच्छयते पुच्छं पर्यस्यतिपरिपुच्छयते। विविधं विरुद्धं वा क्षेपणमिह व्यसनम्। अथवा न केवलं पुच्छादेवायम्। अपि तु सर्वस्मादेव स्वाङ्गवचनान्निरसने णिङ् द्रष्टव्यः। हस्तौ निरस्यति हस्तयते, पादयते। अनेन सिद्धेऽप्युदाद्युपसर्गसंनियोगनियमार्थं पुच्छस्य पृथगुपदेश इति वोध्यम्। इति णिङ् विधिः।

9. पाशाद् विमोचने[2], तूस्ताद् विहनने[3], रूपाद्दर्शने, लोम्नोऽनुमार्जने[4], वस्त्रात् समाच्छादने[5], वृतादभोजनतन्निवृत्योर्णिच् स्यात्[6]। पाशं विमुञ्चति विपाशयति। तूस्तानि विहन्ति वितूस्तयति तूस्ताः जटी भवन्तः केशाः। रूपं पश्यति रूपयति। लोमान्यनुमर्ष्टि अनुलोमयति। वस्त्रेणावृणुते संवस्त्रयति देहम् शरीरं वा। वस्त्रं गृह्णाति संवस्त्रयति। व्रतं नियमग्रहणम्। स यदि नियमो भोजनविषयो वा भोजननिवृत्तिविषयो वा स्यात् तदा णिच् प्रवर्तते। अद्यत्वे स पयोव्रतयति। पय एवोपयोक्ष्यामीति नियमयति। स लवणं व्रतयति। व्रतेन लवणं गृह्णाति। लवणं न भोक्ष्यामीति प्रतिषेधार्थनियमेन वर्त्तते इत्यर्थः। अद्यासौ व्रतयति, भोजनं न करिष्यामीति नियमं गृह्णाति प्रकरणादर्थविशेषे तात्पर्यग्रहः।

---

1 ''नेदन्यार्थं'' इति मूले।

2 सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् (3-1-15)

3 मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् (3-1-21)

4 वस्त्रात्समाच्छादने (वा.5061)

5 वस्त्रात्समाच्छादने (वा.5061)

6 व्रताद्भोजनतन्निवृत्योः (5060)

10. वीणाया उपगाने, सेनाया अभियाने, तूलादनुकोषणे, श्लोकादुपस्तवे, चूर्णादवध्वंसने, वर्मणः सन्नहने, णिच्स्यात्[1]।

वीणाया उपगायति उपवीणयति। सेनया अभियति अभिषेणयति। तूलेनानुकुष्णति अनुतूलयति तृणाग्रम्। तूलेनानुघट्टयति - इत्यर्थः। श्लोकैरूपस्तौति उपश्लोकयति। चूर्णादवध्वंसने अवचूर्णयति। वर्मणा संनह्यति संवर्मयति।

11. हलादिभ्यो ग्रहणे, मुण्डादिभ्यः करणे, णिच् स्यात्[2]।

**हलिः कलिः कृतं वर्णस्त्वक् च हल्यादयो मताः**
**मुण्डः श्लक्ष्णं च लवणं मिश्रं मुण्डादयस्तथा।**

महद्धलं हलिः। हलिं गृह्णाति हलयति। कलिं गृहणाति कलयति। कृतं कृतयति वर्णं वर्णयति। त्वचं त्वचयति। आकृतिगणोऽयम्। मुण्डं करोति मुण्डयति माणवकम्। श्लक्ष्णयति वस्त्रम्। लवणयति व्यञ्जनम्। मिश्रयत्यन्नम्। आकृतिगणोऽयम्।

अत्रेदं विचार्य्यते। मुण्डयति माणवकं मिश्रयत्यन्नमित्यादिषु सकर्मकत्वं न युज्यते।

**धातोरर्थान्तरे वृत्तेर्धात्वर्थनोपसंग्रहात्।**
**प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया॥**

इत्यभियुक्तै समयकरणात्। दृश्यते हि मुण्डं करोति मुण्डयतीत्येवं धात्वर्थे कर्मान्तर्भावः। उच्यते। अत्र हि द्वे कर्मणी भवतः - सामान्यं च विशेषश्च। तत्र सामान्यकर्मान्तर्भावेऽपि विशेषकर्मणां सकर्मकत्वं भवति। अत्राह। सामर्थ्ये हि वृत्तिं प्रवर्तते। सापेक्षं चासमर्थं भवतीत्यत्रभवन्तो वदन्ति। दृश्यते चात्र सामान्यस्य कर्मणो विशेषापेक्षा उभयोविशेष्यविशेषण भावापन्नत्वात्। तथा चात्र वृत्या न भवितव्यम्। उच्यते। नात्रोभौ करोतियुक्तौ मुण्डो माणवकश्च। तदा खलु वृत्तिः[3]। नहि माणवकत्वं क्रियते। यदा चोभौ युक्तौ तदा खलुवृत्तिर्न प्रवर्तते। यथा वलीवर्दं करोति मुण्डं चैनं करोति। इह तु मुण्डः करोति युक्तः। माणवकस्तु मुण्डयतियुक्तः। मुण्डविशिष्टेन करोतिना तमाप्तुमिच्छति तस्माददोषः। अत्राह कामं तर्हि अनेनैव क्यजपि कर्तव्यः। माणवकं मुण्डमिच्छतीति, मुण्डीयतीति स्यात्। इहापि नोभाविषियुक्तौ - मुण्डो

---

1 सत्यापपाशरूप (3-1-15)

2 मुण्डमिश्रश्लक्ष्णलवण (3-1-21),हल्यादिभ्यो ग्रहणे (वा.5062)

3 नात्रोभो करोति युक्तौ तदा खलु वृत्ति मुण्डो माणवकश्च। इति मूले।

माणवकश्च। मुण्डः केवलमिषि युक्तः। माणवकस्तु मुण्डीयति युक्तः स्यात्। उच्यते। उभावत्रेषियुक्तौ पश्यामः। मुण्डं माणवकं च। न ह्यसौ मौण्ड्यमात्रेण संतोषं करोति, माणवकस्थमसौ मौण्ड्यमिच्छति तेनेह वृत्तिर्न भवति। अत्राह-इहापि तर्हि न प्राप्नोति मुण्डयति माणवकमिति न ह्यसौ मौण्डमात्रेण संतोषं करोति, किं तर्हि माणवकस्थमसौ मौण्ड्यं निवर्तयति। तस्मादत्राप्युभौ करोतियुक्तौ पश्यामः। उच्यते। नेदमुभयं युगपद् भवति - वाक्यं च प्रत्ययश्च। यदा वाक्यं न तदा प्रत्ययः। यदा प्रत्ययः सामान्येन तत्र तावद्वृत्तिर्भवति। निर्वृत्तायां वृत्तौ तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः। ''मुण्डयति कं? माणवकमिति'' न तदा जातः संस्कारो निवर्तते। अत्राह कामं तर्हि – ''मुण्डीयति। कं माणवकमिति'' क्यजपि कस्मान्न स्यात्। उच्यते। एवं तर्हि नात्र व्यापारोऽनुगन्तव्यः। गमकत्वादिह वृत्तिर्भविष्यति–मुण्डयति माणवकमितीति। अथायं क्यच् तु नैवं भविष्यति - अगमकत्वात्। इह हि नूनं समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च। यश्चेहार्थो वाक्येन गम्यते। महान्तं पुत्रमिच्छति, माणवकं मुण्डमिच्छति- इति। नासौ जातुचित् प्रत्ययान्तेन गम्यते- महान्तं पुत्रीयति, माणवकं मुण्डीयतीति। तस्मादेतत्प्रतिपद्यामहे- अगमकत्वात् तत्र क्यजवृत्तिर्नास्तीति। अथ यत्र गमकत्वं तत्र नासौ वृत्तिर्निवार्यते मुण्डयति माणवकमिति।

वेदार्थसत्येभ्यो नित्यं[1]। कथादिभ्यस्तु विकल्पेन तत्करणे तदाख्याने च णिच् स्यादाप् चैनस्य णिचः प्राक्।

वेदं करोत्याचष्टे वा वेदाययति, अर्थापयति, सत्यापयति। कथादिभ्यस्तु शाकटायने भगवानपि पश्यति न त्विमे भगवन्तः पाणिन्यादयः। कथापयति, गणापयति, स्वरापयति, कलापयति। वण्टापयति, कुमारापयतीत्यादि। अन्यतरस्यां तु प्रयुक्तौ कथयति, गणयतीत्यादि।

सर्वप्रातिपदिकेभ्यस्तत्करणे तदाख्याने च णिच् स्यात्[2]। सार्वशब्दिके णिचि कृते प्रकृतेः पुंवत्वटिलोपादयो वक्ष्यन्ते एनीमाचष्टे करोति वा एतयति। पटु पटयति।

सर्वप्रातिपदिकेभ्यस्तृतीयासमर्थेभ्योऽतिक्रमणे णिच् स्यात्[3]। अश्वेनातिक्रामति-अश्वयति। हस्तिनाऽतिक्रामति - हस्तयति। टिलोपः।

---

1 सत्यापपाशरूप. (3-1-15) वेदार्थसत्येभ्य आपूग् वक्तव्यः(वा.)

2 तत्करोति तदाचष्टे (ग.सू.204) णाविष्ठवत्

3 तेनातिक्रामति (ग.सू.205)

कर्तृकरणात् तृतीयासमर्थात् सर्वधात्वर्थ णिच् स्यात्[1]। कर्तुर्व्यापारार्थं यत् साधनं तत् कर्तुकरणं खड्गदण्डादि। असिना हन्ति - असयति। खड्गयति। दण्डेन पीडयति - दण्डयति। कसयति। लक्ष्ये लक्षणं प्रवर्तते न तु लक्षणमस्तीति लोकप्रयोगमनुरुद्ध्यापि यथेच्छं लक्ष्यमुद्भावयितुं युक्तम्। शास्त्रस्य सिद्धान्वाख्यानत्वात्। तस्मान्न लोकमर्यादोल्लङ्घनीयेत्येष पर आदेशः शास्त्राणाम्। चक्षुषा पश्यतीत्यादौ तु नास्ति णिच्। चक्षुरादेरकर्तृकरणत्वात्।

**श्वेताश्वादश्वतराद् गालोडितादाह्वरकाच्च सर्व।**
**धात्वर्थं णिङ्णिचौ स्यातामश्वतरेतकलोपश्च॥**

श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते श्वेतयति वा। अश्वलोपः अश्वतरमाचष्टे तेनातिक्रामति वा अश्वयते अश्वयति वा। तरलोपः गाडोलितं वाचां विमर्शः। गालोडयते गालोडयति। इति लोप॥ अह्वरयति आह्वरयते वा। कलोपः॥ णिच् प्रकरणे णिङ प्रवेशो वैकल्पिकत्वात्। इति णिज्विधिः।

## अथानुविधिः

तात्करणिके णौ प्रकृतेष्टिलोपः स्यात्[2], सार्वशाब्दिके तु णिचि प्रकृतेरिष्ठवत् कार्याणि बहुलम्[3]।

णाविति णिङ् णिचोः सामान्यग्रहणम्। तत्करणार्थप्रकरणे यद्यप्यर्थान्तरे तदाख्यानादौ णिजिष्यते अथाप्यत्र टि लोपो नेतव्यः[4]। टिलोपाच्चेकारान्ताः धातवः सम्पद्यन्ते - तत्र तावदात्मनेपदिनः –

| | |
|---|---|
| संचीवरि | चीवरसंवरणे तदर्जने च |
| सेभाण्डि | भाण्डसमाचयने |
| परिपुच्छि | पुच्छपर्य्यसने |
| • उत्पुच्छि | पुच्छोदसने |

---

1 कर्तृकरणात्धात्वर्थ (ग.सू. 207)
2 तत्करोति तदाचष्टे (ग.सू.204)
3 प्रातिपदिकात्धात्वर्थे बहुमिष्ठवच्च (ग.सू. 203)
4 आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकम् (वा.1766)

हस्ति हस्तनिरसने

पादि पादनिरसने - इत्यादयः

**अथ परस्मैपदिनः –**

विपाशि पाशविमोचने

संवस्त्रि वस्त्रसमाच्छादने

व्रति भोजनतन्निवृत्त्योः

वीणि वीणोपगाने

सेनि सेनाभियाने

तूलि तूलानुघट्टने

वर्म्मि वर्म संनहने

हलि हलग्रहणे

मुण्डि मुण्डितकरणे - इत्यादयः।

**अथोभयपदिनः –**

श्वेति श्वेताश्वसंवाहनादिषु

अश्वि अश्वतरसंवाहनादिषु

गालोडि वाग्विमर्शने

आह्वरि आह्वरकक्रियायाम्।

अथ सर्वप्रातिपदिकेभ्यः सर्वधात्वर्थे वा विधीयमानो णिच् सार्वशाब्दिकः। तत्र सति प्रकृतेस्तानि कार्याण्यतिदिश्यन्ते यानि प्रकृतेरिष्ठप्रत्ययपरत्वे दृष्टानि[1]। तद्धितोऽयमि[2]ष्ठोऽतिशायनेऽर्थ व्याख्यातः[3]। तत्र च सति नाम्नीस्टिलोपस्तृलोपो, विन् लोपो, मतुलोपो यणादिलोपश्चाम्नायन्ते। प्रस्थस्फादाद्यादेशा विधीयन्ते। रभावश्च। पुवंद्भावश्च प्रवर्तते। अथ पदकार्य प्रतिषिध्यते। तान्येतानि सर्वाणि कार्याणि यथायथमिहातिदिश्यन्ते। तत्रादौ टिलोपः।

---

1 प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च (ग.सू.203)इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभाव टिलोपविन्मतुब्लोपमणादिलोपप्रस्थस्फाद्यादेशम्भसंज्ञास्त-द्वण्णावपि स्युः।

2 तद्धितोऽभिष्ठो इति मूले।

3 अतिशायने तमबिष्ठनौ (5-3-55)

पटं आचष्टे पटं वा करोति पटयति। लुङि ''अपीपटत्'' इत्येके। ''अपपटत्'' इत्यन्ये। स्वश्वं स्वश्वयति। स्वाशश्वत्। इहोपसर्गपृथक्करणम्। ऊढिं करोति - ऊढीयति। लुङि तु ''औजिढद्'' इत्येके। ''औडिढत'' इत्यन्ये। ऊढम् - ऊढयति। 'औ -जढद्' - इति वा, 'औडढद्' - इति वा। महान्तं करोति- महयति। विद्वांसं करोति विद्वयति। टिलोपे सति स्वरपरत्वाभावान्न संप्रसारणमित्येके। अन्ये त्वाहुः- टिलोपे कृते सति संप्रसारणे वृद्धयावादेशौ भवतः विदावयति। परे त्वाहुः- संप्रसारणानन्तरं टिलोपः। विद्यति। ब्रह्माणं ब्रह्मयति।

## अथ टिलोप प्रतिषेधः

प्रकृतेरेकस्वरकत्वे टिलोपो न प्रवर्तते[1]। श्वानं शुनयति। संप्रसारणम्[2]। परे त्वाहुः - इष्टवटिटलोपप्रतिषेधेऽपि नान्तत्वनिवन्धनष्टिलोप न प्रतिषिध्यते। तेन टिलोपानन्तरं[3] संप्रसारणवृद्धयावादेशेषु शावयतीति रूपं युक्तम्। भुवं भावयति अबीभवत्। भ्रुवं भ्रावयति। अबुभ्रबत्। श्रियं श्राययति अशिश्रयत्। गां गावयति अजूगवत्। स्वं स्वापयति। अवर्णान्तत्वाणिच्याप्। त्वां त्वापयति मां मापयति - इत्याहुस्त्वमशब्दाभिमानिनः। वस्तुतस्तु त्वच्छब्दो मच्छब्द इति कृत्वा त्वादयति मादयतीति युक्तम्। युवामावां वा युष्मयति, अस्मयति। स्रजं स्रजयति असिस्रजत्। पयः पययति। अपययत्। अव्ययानां त्वेकस्वराणामपि टिलोपो न प्रतिषिद्धयते स्वः स्वयति। 'असिस्वद्' इत्येके असस्वाद्' इत्यन्ये। प्रातः - प्रातयति। अप्रपतत्।

## अथाञ्चतिवृत्तानाम्

उपसर्गपृथग्भावेनैकस्वरत्वाट्टिलोपाभावः[4]। उदञ्चम् 1. उदीचयति। उदैचिचत्। प्रत्यञ्चं 2. प्रतीचयति। प्रत्यचिचत्। सम्यञ्चं, 3. समीचयति। सम्यचिचत्। तिरसस्तूपसर्गसमानापकारत्वाभावादपृथग्भाव इत्यतष्टिलोपादञ्चेरपहारः। तिर्य ञ्चं, 4. तिराययति। अतिरिरायत्। एवं सध्र्यञ्चं, 5. साध्राययति, अससध्रायत्। विष्वद्रयञ्च, 6. विष्वद्राययति। अविविष्वद्रायत्। देवद्रयञ्चं, 7. देवद्राययति। अतिदेवद्रायत्। इह प्रकृतिप्रत्ययापत्या कारकपृथग्भावो नास्ति। कृत् प्रत्यय श्रवण एव

---

1 प्रकृत्यैकाच् (6-4-163)
2 श्वयुवमघोनामतद्धिते (6-4-133)
3 नस्तद्धिते (6-4-144)
4 प्रकृत्यैकाच् (6-4-163)

तस्येष्टत्वात् 'देवाञ्चनमाचष्टे देवमञ्चयतीत्येवं तु भवत्येव। अदद्रयञ्चम्, 8. अदद्रायययति। अददद्रायत्। अदमुयञ्चम्, 9. अदमुआययति। अददमुआयत्। अमुमुयञ्चम्, 10. अमुमु आययति। अमु आययत्।

## अथ तृलोपः

कर्तारं करोति - कारयति। संहर्तारं - संहारयति। धर्तारं- धारयति नेतारं - नाययति। गन्तारं- गमयति। द्रष्टारं- दर्शयति। धातारं- धाययति।

## अथ विन्लोपः

स्रग्विणं- स्रजयति। असस्रजत्। इत्वमभ्याशे वर्ज्यते। मेधाविनं मेधापयति। यशस्विनं यशसयति। ओजस्विनं -ओजसयति। तरस्विनं - तरसयति। मनस्विनं - मनसयति। पयस्विनं - पयसयति। पयस्विनी च - पयसयति। अपपयसत्।

## अथ मतोर्लोपः[1]

गोमन्तं - गवयति। अजुगवत्। इह नाभ्याशेदीर्घः। श्रीमन्तं श्रीमती वा श्रययति। अशिश्रयत्। लक्ष्मीवन्तं - लक्ष्मयति।

धनवन्तं धनवतीं वा
मधमन्तं मधुमतीं वा
तद्वन्तं तद्वतीं वा

## यणादिलोपः

स्थूलं स्थवयति। अतुस्थवत्। शब्दविशेषे क्वचिदनादेशोऽपि दृश्यते इत्यावेदयितुं बहुलमित्युच्यते। यथा - स्थूलयतीत्यपि प्रयुज्यते। दूरं दवयति। अदुदवत्। दूरयति। बाहुलकत्वात्। युवानं यवयति। अयुयवत्। कनयतीत्यप्यन्यतरस्यां प्रयुक्तौ वक्ष्यते। ह्रस्वं- ह्रसयति। क्षिप्रं- क्षेपयति। क्षुद्रं - क्षोदयति।

## अथ प्रस्थाद्यादेशाः

प्रियं प्रापयति। अपिप्रयत्। स्थिरं स्थापयति। अतिस्थपत्। इह षत्वं नास्ति। स्थायतीति धात्वन्तरम्। स्थिरयतीति बहुलवचनान्नेयम् स्फिरं स्फापयति। अपिस्फपत्।

---

[1] मतोलोपः इति मूले।

उरुं वरयति वारयति वेति माधवः प्राह[1]। अवीवरत्। बहुलं वंहयति। बहुलयतीति बहुलवचनात्। गुरुं गरयति। अजीगरत्। वृद्धं - वर्षयति ज्यापयति वा। अववर्षत्। अजिज्यत्। तुप्रं त्रपयति। अतित्रपत्। दीर्घं द्राघयति।अदद्राघत्। वृन्दारकं - वृन्दयति। अववृन्दत्। युवानं - कनयति। अल्पं वा - कनयति। अचीकनत्। अन्तिकं नेदयति। अनिनेदत्। बाढं साधयति अससाधत्। बहून भावयति। बहयतीत्येव-रूपमिति कैयटः। प्रशस्यं - प्रशस्यति। अत्र तु श्रज्यौ न भवतः। नामधातुप्रत्ययप्रकरणे सोपसर्गाणामुपसर्गपृथक्करणस्य प्रायिकत्वात्। तेन द्वित्वादिकमपि नोपसर्गमपेक्ष्यते। प्राशशस्यत्।

### अथ रभावः

पृथुं प्रथयति 'अविप्रथद्' - इत्येके। 'अपप्रथद्' - मृदुं, म्रदयति। अपम्रदत्। भृशं भ्रशयति। अवभ्रशत्। कृशं क्रशयति। अचक्रशत्। दृढं द्रढयति। अदद्रढत्। परिवृढं परिव्रढयति। पर्य्यवव्रढत्।

### पुंवद्भावः

एतवर्णा एनी। तां करोति - एतयति। श्येनी श्येतयति। लोहिनी। लोहितयति। दरदोऽपत्यं- दारदः। स्त्री तु दारत्। तां दरदं करोति- दारदयति। यत्र त्वपत्यप्रत्ययो न क्रियते तत्र दरदं करोति- दरदयतीत्येव।

इति तत्करणप्रत्ययाः

## स्वार्थिकप्रत्ययाः

सन्ति केचन शब्दाः संस्तुता नामसु च धातुषु च। उभयथा हि ते शक्यमुपपादयितुं- नामतश्च धातुतश्चेति। तदुभयलक्षणाक्रान्तत्वात्। क्रिया तावत् द्विधा गृह्यते साध्यावस्थया च सिद्धांवस्थया च। आरम्भादूर्ध्वमपवर्गात्- प्राक् स्वरूपं - गृह्णन्ति पूर्वापरीभूता भवदवस्था क्रिया साध्या। आरब्धापवृक्ता उपक्रमादिसंस्थानपर्य्यन्तकृतावयवा मूर्ता सत्वभूता तु सिद्धा। तयो साध्यावस्थामेवाभिदधाना केचन शब्दाः धातव उच्यन्ते ते ह्याख्यातविभक्तिं

---

1 उरोः वरयति। वरयति इत्यादौ बहुलग्रहणात् ''अङ्गवृत्त'' इति वा उपधावृद्धिर्न भवति। इत्येव साम्प्रतम् माधवीया धातुवृत्ति पाठः। वारयति इत्यत्र तुं वृद्धिश्चिन्त्य (प्र.सं 616)

प्रयोजयन्ति। कालपुरुषाद्यन्वयस्वाभाव्यात् अथ सिद्धावस्थामेवाभिदधाना केचन शब्दाः प्रातिपदिकान्युच्यन्ते[1] तानि च कारकविभक्तिं प्रयोजयन्ति। क्रियान्वयिस्वाभाव्यात्। क्वचित्पुनर्धातवोऽपि तां सिद्धावस्थामभिदधते यदि नामकरणो भावार्थः प्रत्ययः संनिधत्ते पाकः पक्तिर्व्रज्या संपदित्यादिषु। एवं क्वचिद् प्रातिपदिकान्यपि सिद्धावस्थक्रिया-वचनानि क्रियोपसर्जनकारकवचनानि वा कानिचित् साध्यावस्थामभिदधते यदि धातुकरणः स्वार्थिकः प्रत्ययः संनिधत्ते। खेलायति, कण्डूयति, भिषजयति, इरस्यतीत्यादिषु। येऽपि तु शुद्धं द्रव्यवचना गुणवचना वा शब्दाः प्रसिध्यन्ति - आररोषसादयः सुखदुःखमेधादयो वा तेऽप्यनित्यपदार्थत्वादवश्यं प्रयुक्तव्यापारगृहीतस्वरूपाः क्रियापूर्वकाः एवार्हन्ति भवितुम्। तत्रैतेषां येयमुत्पत्तिकालिका स्वरूपग्रहणावस्था, तामुपलक्ष्याप्यभिधातुं प्रवर्तन्ते केचन शब्दा यद्यसौ धातुकरणः स्वार्थिकः प्रत्ययः संनिदध्यात्। अरर्यति, उषस्यति, सुख्यति, मेधायतीत्यादि[2] यद्यपि सर्वाणि नामानि धातुजान्येवेत्याहुः। सर्वाणि वा सत्वानि क्रियापूर्वकाण्येव प्रतिपद्यन्ते। तथापि केषांचिदेवेत्थमुभयावस्थाभिधानस्वाभाव्यं न सर्वेषाम्। त एते परिगण्यन्ते। मह्यादयः, सुखादयः, कण्ड्वादयः संग्रामादयश्चेति। एतेऽपि न युगपदुभयावस्थामभिधत्ते - किन्तु यदा सत्वरूपतदर्थ-विवक्षा स्यात् तदा सिद्धार्थत्वान्नामत्वम्। अथ तदा क्रियमाणक्रमवद्रूपतदर्थविवक्षा स्यात् तदा साध्यर्थत्वाद्धातुत्वमित्येवं विवक्षावशादुभयत्र प्रवृत्तिर्द्रष्टा कण्डूयतीति हि क्रिया कुर्वाणे प्रयुज्यते। अस्ति मे कण्डूरिति तु वेदनमात्रस्य सानिध्ये। तस्मादुभयं कण्ड्वादीनि - धातवश्च प्रातिपदिकानि च। तत्रापि केचिदभिव्यक्तनामलक्षणाः, केचिद्वाभिव्यक्तधातुलक्षणाः। केषांचिद् भूयसा नामस्वेव संस्रवः, केषांचिद्वा धातुष्वेवेति प्रयोगतारतम्याद् वैलक्षण्यं भासते इत्यन्यदेतत् तेभ्यश्च साध्यार्थविवक्षायामाख्यातविभक्तेः प्रयुयुक्षायां प्रथमं तावदिकारो यकारो वा धातुकरणः समुत्पद्यते। ए नातिरिक्तमर्थं प्रतिपादयतीतिस्वार्थिकः परिभाष्यते - इति मतं भगवता पाणिनिशाकटायनादीनाम्। चन्द्रादयस्तु कण्ड्वादीनाममीषां नामत्वमभिप्रेत्य करोत्यर्थे तमिकारं यकारं वा धातुकरणमाचक्षते। न स्वार्थे। तथा च भिषजिति भैषज्यार्थः। भिषज्यति - चिकित्सां करोतीत्यर्थः। सुखे सुख शब्दः। सुख्यति सुखमनुभवतीत्यर्थः। इत्येवं रूपेण सर्वत्र चन्द्रार्थः। भिषजिति चिकित्सिकार्थः भिषज्यति - चिकित्सको

---

1 'नुच्यन्ते' इति मूले।

2 'मेधायतीत्याति' इति मूले।

भवतीत्यर्थः। सुखवति सुखशब्दः सुख्यति सुखीभवतीत्यर्थः – इत्येवं सर्वत्र पाणिन्यर्थः। फलतस्तु विशेषो नास्तीति भगवान् पाणिनिः प्रमाणम्। अथैतयोर्यकारेकारयोः प्रदेशाः प्रदर्श्यन्ते –

1. स्वार्थकुर्वद्रूपतायां मत्यादिभ्यः क्यङ्, सुखादिभ्यः क्यच्, कण्ड्वादिभ्यः क्यङ्क्यचौ भवतस्तत्र च सति प्रकृत्यन्तस्य ह्रस्वाकारस्य लोपः[1]। स्यचित्राकारस्येकारो नामिस्वरस्य तु दीर्घः।

क्यङन्तादात्मनेपदं क्यजन्तात् परस्मैपदं। तत्रात्मनेपदिनो मह्यादयो यथा–

1. मही प्रतिष्ठायां वृद्धौ पूजायां वेत्येके। ईकारान्तः। महीयते, प्रतितिष्ठति-प्रतिष्ठितो भवति, यशसा वर्द्धते, पूजामधिगच्छतीति वार्थः।

2. हृणी रोषणे लज्जायां च। ईकारान्तः हृणीयते। रोषेण प्रवर्तते लज्जते वा।

3. चित्र आश्चर्ये। अकारान्तः। चित्रीयते आश्चर्यं भावयतीत्यर्थः।

4. दुवस् - संदीपने। सान्तः। समिधाग्निं दुवस्यते। संदीपयति। दुवस्युः। संदीपयितुमिच्छुः। दैवीविषयोऽयम्।

5. वेट्ल - जीवने। टलयोः संयोगः। आकारान्तः। वेटलायते - इत्याह कश्चित्। अथ सुखादयस्तत्र ह्रस्वाकारान्ता।

1. सुख, दुःख - तत्क्रियायाम्। अलोपः। सुख्यति। दुःख्यति। सुखी भवाति, दुःखी भवतीत्यर्थः। सुखयति, दुःखयति, इति स्वार्थिकेन तात्करणिकेन च सुखायते दुःखायते, इति तात्करणिकेन, सुखायति, दुःखायतीत्यभूत[2]भाविकेन चैतस्य पर्यायितायां समुच्चयो द्रष्टव्यः।

2. मृग - अन्वेषणे। मृग्यति। मृगयते - इतिवक्ष्यते।

3. उरण - उरण्यति सादिनम्

4. पुरण - गतौ। पुरण्यति

5. चरण, वरण, गतौ। चरण्यति, वरण्यति।

6. चुरण - चौर्ये गतौ चेत्येके। चुरण्यति चोरयति, चोरवद्गच्छतीति वा।

7. तरण - गतौ। तरण्यति।

8. तुरण - त्वरायाम् धारणपोषणयोरित्यन्ये। तुरण्यति।

---

1 अतो लोपः (6-4-48)

2 दुःखायतीत्याभूत. इति मूले।

9. भरण - धारणषोषणयोः भरण्यति -

10. भुरण- प्रहरणधारणयोः। भुरण्यति-युध्यते, धारयति वा। धारणपोषणयोरिति दीक्षितः।

11. अगद् - नीरोगत्वे। अगद्यति। आरोग्यमधिगच्छति।

12. इषुध - इषुध्यति

13. मगध - परिवेष्टने, नीचदास्ये च। मगध्यति। परिवेष्टते। परिवेष्टितो भवति वा नीचदासादिवृत्तिमनुतिष्ठतीति वा दास्ये नीच शब्दमपि कश्चिदभिप्रैति तदज्ञानात्।

14. पुष्प - संतोषे। पुष्प्यति।

15. कुषुभ-क्षेपे। कुषुभ्यति। क्षिपतीत्यर्थः। स्वदेहश्रयां परकर्तृकां निरोधक्रियामनुभवतीत्यर्थमाहुः।

16. अरर - आराकर्मणि। आरा प्रतोदः। तत्पर्यायवचनोऽयमररशब्दो यज्ञाङ्गवचनो वारणार्थो वा अरर्य्यति।

अम्वर, संवर संवरणे। संभरणे इति दीक्षितः। अम्वर्यति। संवर्य्यति। संवृणुते इत्यर्थः। अम्धर इति केचित्। अम्धर्यति।

सपर - पूजायाम्। सपर्य्यति।

समर - रणक्रियायाम्। समर्यति।

खेल - स्खलनविलासयोः। खेल्यति।

## दीर्घाकारान्ताः

लेखा रेखा - श्लाघासादने रेखाकरणे च। लेखायति रेखायति। विशिष्टगणनायां, रेखाङ्क्तिो भूत्वा श्लाघामासादयति। रेखां करोति वा।

वेटा, लोटा इति - वामनः पठति। वेटायति लोटायति। वेटालाटेत्येवमेकं केचित् पठन्ति। वेटालाट्यति।

मेधा – आशुग्रहने। मेधायति।

गोधा – गोधायति। अयं धातुश्चन्द्रेण पठ्यते।

इला – शब्दे इलायति।

एला, केला विलासे। एलायति। केलायति विलासयतीत्यर्थः।

खेला – स्खलने विलासे च। खेलायति स्खलति विलसति वा।

लेला – दीप्तौ। लेलायति वह्निः। इतस्ततो दीप्तिं प्रयोजयतीत्यर्थः।

वेला – कालविशेषे। वेलायति। समयो भवतीत्यर्थः।

## ह्रस्वोकारान्तः

वल्गु – पूजायां माधुर्ये च वल्गूयति।

## जान्ताः

भिषज् – चिकित्सायाम्। भिषज्यति। चिकित्सते।

भिष्णज् – उपसेवायाम्। भिष्णज्यति। भिष्णुज् इति पाठान्तरम्। भिष्णुज्यति

इरज् – ईर्ष्यायाम्। इरज्यति।

## टान्ताः

लिट् – अल्पकुत्सनयोः लिट्यति।

लाट् – जीवने लाट्यति।

लेट् लोट् – धौर्त्य पूर्वाभावे स्वप्ने च। लेट् दीप्तौ च।

वेट् – धौर्त्ये स्वप्ने च। वेट्यति। केचित्तु 'वेद' इत्यकारान्तं दकारोपधमाहुः। वेद्यति। माया प्रपञ्चमाचरतीत्यर्थः।

अस् – उपतापे। अस्यति।

इरस् इमस्– ईर्ष्यायाम्। इरस्यति। इमस्यति।

ईयस् – ईर्ष्यायाम्। ईयस्यति।

इयस् – इशैश्वर्ययोः। इयस्यति। प्रभवति।

उरस् – बलग्रहणे उरस्यति बली भवति।

उषस् – प्रभातीभावे उषस्यति रात्रिः।

मनस् – अवबोधने मनस्यति

तन्तस्, पम्पस् – दुःखे। तन्तस्यति, पम्पस्यति। दुःखायते।

तिरस् – अन्तर्द्धौ। तिरस्यति अन्तर्हितो भवति।

पयस् – प्रसृतौ पयस्यति प्रसरति पयस्यति गौः। पयः प्रसृते इत्यर्थ।

द्रवस् – परितापपरिचरणयोः। द्रवस्यति।

संभूयस् – प्रभूतभावे। संभूयस्यति सस्यं वर्षति पर्जन्ये प्रभूतं भवतीत्यर्थः। इहोपसर्गपृथक्भावो नास्ति। असंभूयसीत्।

## अथ कण्ड्वादयः

कण्डू – गात्रविघर्षणे दीर्घोकारान्तः कण्डूयति कण्डूयते। अङ्गं नखादिना कर्षतीत्यर्थः।

मन्तु – अपराधे रोषे च वेमनस्ये च। ह्रस्वोकारान्तः मन्तूयति। मन्तूयते।

असु – उपतापे, मानसे च। असूयति, असूयते।

इर् – ईर्ष्यायाम्। रान्तः। उपधादीर्घः। ईर्य्यति ईर्य्यते।

गदगद् – वाकस्खलने। अकारान्तः अलोपः। गद्गद्यति, गद्गद्यते।

वेटला – धौर्त्ये। आकारान्तः। वेटलायति, वेटलायते।

2. करणे सङ्ग्रामादिभ्यो णिङ् स्यात्, सूत्रादिभ्यो णिच् स्यात्, तत्र च सति प्रकृतन्त्यस्य ह्रस्वाकारस्य लोपः स्यात्।

णिङ्न्तादात्मने पदं णिजन्तात्परस्मैपदम्।

## संग्रामादयो यथा–

1. संग्राम – युद्धे। अकारान्तः। संग्रामं करोति संग्रामयते। नेहोपसर्गपृथग्भावः। अससंग्रामत, संग्रामयित्वा।

2. शूर, वीर -विक्रान्तौ। शूरयते, वीरयते। नेह विरुपसर्गः। अविवीरयत वीरयित्वा।

3. स्थूल – परिवृंहणे। स्थूलयते। अतुस्थूलयत।

4. अर्थ – उपयाञ्चायाम्। अर्थयते आर्तथत।

5. सत्र – सन्तानक्रिययाम्। सत्रयते। अससत्रत।

6. गर्व – माने। गर्वयते - अजगर्वत।

7. ग्रह – ग्रहणे। गृह्यते। अगृहयत। अजगृहत।

8. मृग – अन्वेषणे। मृगयते। अमृगयत। अममृगत। मृग्यतीत्युक्तम्।

9. पद् – गतौ। पदयते।

**सूत्रादयो यथा –**

1. सूत्र – वेष्टने। सूत्रयति। असुसूत्रत्। व्याकरणस्य सूत्रं करोति- व्याकरणं सूत्रयति। इह वाक्ये षष्ठी, उपपन्ने च प्रत्यये द्वितीया। केनैतदेवं भवति। योऽसौ सूत्रव्याकरणयोरभिसंबन्धः स उत्पन्ने प्रत्यये निवर्तते। अस्ति च करोतेर्व्याकरणेन सामर्थ्यमिति कृत्वा द्वितीया प्रवर्तते। एवमन्यत्राप्येवं विधे द्रष्टव्यम्।

2. मूत्र – प्रस्रवणे। मूत्रयति। अमुमूत्रत्।

3. रुक्ष – पारुष्ये। रुक्षयति। अरुरुक्षत्।

4-5. पार,तीर – कर्मसमाप्तौ। पारयति। अपपारत्। तीरयति। अतितीरत्।

6. पुट – संसर्गे। पुटयति। अपुपुटत्।

7-8. सुख, दुःख – तत्क्रियायाम्। सुखयति। असुसुखत्। दुःखंयति। अदुदुःखत्

9. रस – आस्वादनस्नेहनयोः। रसयति। अररसत्।

10. रुप – रुपक्रियायाम्। रुपयति। अरुरुपत्।

11. वर्ण – वर्णक्रिया, विस्तार, गुणवचनेषु। सुवर्ण वर्णयति विशिष्टवर्णं करोति।

कथां वर्णयति। विस्तृणाति। हरिं वर्णयति स्तौति।

12. पर्ण – हरितभावे। पर्णयत्यसौ वृक्षः। अपपर्णत्।

13. कर्ण – भेदने। कर्णयति स्तम्भकाष्ठम्। अचकर्णत्।

14. छिद्र – करणभेदने। छिद्रयति, अचिछिद्रत्।

15. अन्धः – दृष्ट्युपघाते। अन्धयति। आन्दधत्।

16-17. अङक, अङ्ग – पदे लक्षणे च। अङ्कयति। आञ्चकत्। अङ्गयति, आञ्जगत्।

18. मिश्र – संपर्के। मिश्रयति।

19. स्तोम – श्लाघायाम्। स्तोमयति। अतुस्तोमत्।

20. दण्ड – दण्डनिपाते। दण्डयति। अददण्डत्।

21. चित्र – आलेख्यकरणे, अद्भुतदर्शने च। चित्रयति-अचिचित्रत्।

22. व्यय – वित्तसमुत्सर्गे।व्ययति। अवव्ययत्।

23. तुत्थ- आवरणे। तुत्थयति। अतुतुत्थत्।

24. छेद - द्वेधीकरणे। छेदयति। अचिच्छेदत्।

25. छद- अपवारणे। छदयति अचच्छदत्।

26. व्रण - गात्रविचूर्णने। व्रणयति। अवव्रणत्।

27. लाभ- प्रेरणे। लाभयति। अललाभत्।

28. हिन्दोल -प्रेङ्खणे। हिन्दोलयति। अजिहिन्दालत्।

आकृतिगणोऽयम्। अन्येषामपि तत्करणे णिजन्त धातुत्वेनोपलब्धेः। यथा– आन्दोल, प्रेङ्खोल, प्रेङ्ख, विडम्ब, अवधीर- इत्यादीनाम् - आन्दोलयति, प्रेङ्खोलयति, प्रेङ्खयति, विडम्बयति, अवधीरयति-इत्यादयः प्रयोगा भवन्ति तेषां न सार्वशब्दिकेन णिचा कृतार्थता शङ्क्या। नियमेनोपसर्गपृथक्कारापत्तेः। इह पठितास्तूभयथेष्यन्ते। नामानि चैतानि धातवश्च। यदि नामानि ततस्तत्करणेऽर्थे यप्रत्यय इप्रत्ययो वा तदन्तानां च महीय, हृणीय, चित्रीय, सूत्रिमूत्र्यादीनां धातुत्वम्। अथ धातवः ततः स्वार्थे यप्रत्यय इप्रत्ययो वा तदन्तानां च धातुत्वं दैवसिद्धम् प्रत्ययस्य स्वार्थकत्वात् क्रियावचनत्वरूपस्य धातुलक्षणस्यानपायात्। ननु नामत्वपक्षे द्रव्यरूपं सूत्रं सूत्रशब्देनोच्यते। ततो णिचि कृते सत्वभावातिवर्तनात् करोत्यार्थभिधायी[1] सूत्रशब्दः संपद्यते इति सिद्यति परार्थाभिधायित्वम्। धातुत्वपक्षे तु विशिष्टक्रियावचनोऽयं सूत्रिर्धात्वन्तरमेव स्यात् तत्र सति परार्थाभिधानं वृत्तिरिति वृत्तित्वमत्र व्याहन्येतेति चेन्नैषः दोषः। नामत्वाभिमानरूपपक्षान्तरेण तत्सिद्धेः। एवं च सति पुरायुगे ये वृद्धा नामत्वमेषामभ्यमन्यन्त तेषामस्ति तत्रोपसर्गगन्ध इति पृथक्भावेन तेषां योगः क्रियते– प्रेञ्चुरवोलत्, प्रेञ्चरवत्, व्यडडम्बत्। अवादिधीरत्। आन्दोल्य, प्रेङ्खोल्य, प्रेङ्ख, विडम्ब्य, अवधीर्य्य "इतीव धारामवधीर्य्य मण्डलीक्रिया श्रियामण्डि तुरङ्गमैर्महीʼʼ इति नैषधः[2]इत्यादि ये तु वृद्धा धातुत्वमेवैतेषां पश्यन्ति रुप तेषां दृष्टावखण्डा - एते धातवो भवन्ति न त्वत्रोपसर्गगन्धो युज्यतेऽवधारयितुमिति। नोपसर्गपृथक्करणम्। तेन- अपिप्रेङ्खोलत्, अपिप्रेङ्खत् अविविडम्वत्, आववधीरद् - आवबधीरदिति बोपदेवेन

1 करोत्यर्थभियायी इति मूले।

2 नैषधीयचरितम् (1-72)

प्रयुक्तम्। आन्दोलयित्वा, प्रेङ्खोलयित्वा, प्रेङ्खित्वा, विडम्बित्वा अवधीरयित्वेत्यादयस्तेषां प्रयोगाः। तदित्थमुभयथा प्रयोगदर्शनात् द्वैविध्यमेषामस्यां भाषायां सिद्धम्।अथ केषुचित् पुनः संग्रामादिषु धातुत्वदृष्टिः प्रवला भवति अससंग्रामत् असंभूयसीत्, असंवर्यत्, अवीरयत्, अविव्ययत्–इत्येवं रूपं प्रयोगभूयस्त्वादिति नित्यं तत्रोपसर्गपृथक्करणप्रतिषेधादैकविध्यं सिद्धम्। इति स्वार्थिकप्रत्ययाः॥

## अथ प्रकृतिप्रत्ययापत्तिः

धातोर्नामकरणप्रत्यययोगात् धातुजनामसिद्धिर्भवति तत्रास्य नामकरणप्रत्ययस्य लोपादेशान्नामत्वव्याघाते पुनः स्वरूपेण धातोरवस्थानं प्रकृतिप्रत्यापत्तिरित्युच्यते। अयमप्येकः प्रकारो नामजधातुसंपादनस्य तत्प्रदेशाः प्रदर्श्यन्ते।

1. आख्यानाद् कृदन्तात् तदाख्याने णिच् स्यात् कृल्लोपः प्रकृतिप्रत्यापत्तिः कारकपृथकभावश्च[1]।

आख्यानमिह वृत्तम्। कंसवधं नामाख्यानमाचष्टे कंसं घातयति। शिशुपाल घातयति। रावणं घातयति। मारीचं घातयति। कंसस्य वधः कंसवधः वध इति हन्तिवृत्तः। कृत्प्रत्ययसंनियोगेन हनो वधादेशः। स कृतो लोपे प्रकृतिं प्रत्यापद्यते। ततो णिचि घातयति इति रूप सिद्धि। यथा चोपसर्गपृथग्भावस्तत्र तत्र नामधातुप्रकरणे व्याख्यातः, तथैवेह कारकपृथग्भावोऽनुज्ञायते। समस्ताख्यानपदान्तर्भूतं कारकपदं कृल्लोपे सति पृथग्भवति तस्माच्चेदानीं णिजन्तेन सामर्थ्योपगमात् तदनुकूला विभक्तिर्द्वितीया प्रवर्तते षष्ठी प्रवर्तकस्य कृतो लोपात्तन्निवृत्तेः तेन कंसवध इति समस्तस्य षष्ठी साधनस्य कंसस्य समासविनिवृत्तौ द्वितीयान्तत्वसिद्धिः। कंसं घातयति पौराणिकः। बलिबन्धमाचष्टे वलि बन्धयति। कुरुयुद्धमाचष्टे कुरुं योध्यति। अयमाचष्टे केवलं न त्वसौ चिरहतं कंसं प्रयोजयति हन्तुं न वासौ साम्प्रतं हन्तुमुद्यतो दृश्यते। तस्माद सिद्धे णिच्प्रत्ययेऽयमपूर्वो विधिः।

इह यान्येतानि संज्ञाभूतानि आख्यान्यैतिहासिकसमयप्रसिद्धानि पारिजातहरणो-षाहरण-सुभद्राहरण, चीरहरणादीनि, अन्धकवध, त्रिपुरवध तारकावध्वादीनि जानकीपरिणय, गौरीपरिणयादीनि वा भवन्ति, नैकान्ततस्तेभ्य एवायं णिचप्रत्ययः क्रियते अपितु क्रियाख्यानमात्रादेवायमिष्यते णिच् प्रत्ययश्च प्रत्यया। तेनेहापि भवति- राजागमनमाचष्टे राजानमागमयति देवतापूजनमाचष्टे देवतां पूजयति। व्रतादेशनमाचष्टे व्रतमादेशयति। गुणकीर्तनमाचष्टे गुणं कीर्तयतीत्यादि।

---

1 आख्यानात्कृतस्तदाचष्टे कृल्लूक् प्रकृतिप्रत्यायापत्तिः प्रकृतिवच्च कारकम् (वा. 1766)

ऐतिहासिकोपाख्यानादपि कर्मोपपदात् कृदन्तादेवायं णिजिष्यते। नेह- हंसडिम्भकमाचष्टे। हयग्रीवमाचष्टे। ध्रुवमाचष्टे। सुदर्शनमाचष्टे यत्रैव वा वृत्लोपयोग्यता तत्रैवायं णिच्। तेन लुप्यमानकृदन्तान्न। देवद्रयञ्चमाचष्टे, अग्निष्टुतमाचष्टे। बलिभुजमाचष्टे। आख्यानशब्दादपि नायं णिच् विधीयते[1]- ध्रुवाख्यानमाचष्टे। अहल्याख्यानमाचष्टे। आख्यानमाचष्टे।

अत्राहुः– आख्यान इत्युपलक्षणम्। यत्रापि नाट्यादौ कंसवधमभिनयति तत्रापीदमिष्यते णिच्विधानम्। कंसं घातयति। अद्य कंसं घातयिष्यति कंसमजीघतत्।

विशेषग्राहिप्रतिपत्तारस्तु लौकिका आहुः- वहुलमतेण्णिजविधानं द्रष्टव्यम्। अन्तरेणापि णिचं प्रकृतिप्रत्ययापत्तिर्दृश्यते लोके। ये तावद् ग्रन्थिकाः कंसवधमाख्यानमाचक्षते, ये वा शौभिकाः कंसवधमभिनयन्ति तच्च तच्चोपदिदश्य लौकिकाः संलपन्ते–''एष श्रूयतां - कंसं हन्ति'' एष दृश्यतां - कंसं हन्ति। 'अद्य कंसं हनिष्यति, अद्य कंसो हनिष्यते, 'अद्य कंसो हतः' इति त एते संलपन्तो न नामाद्यतनमेव कंसवधमर्थतः प्रतिजानते न वा चिरहतं कंसं न विजानन्तीति पश्यामः। अपितु नूनमाख्यानमभिनयो वा तेषां लक्ष्यं भवति। 'एष श्रूयतां कंसवधमाचष्टे। एष दृश्यताम् – कंसवधमभिनाटयति। अद्य कंसवधाख्यास्यति नाटयिष्यति वा कंसवध आख्यास्यतेऽभिनेष्यते वा, कंसवधः कथितोऽभिनीतो वा' इत्येवैतदेषां लौकिकानामभिप्रायो गम्यते। तत्र कंसवधमाचष्टे कंसं हन्तीति णिजभावेऽपि प्रकृतिप्रत्यापत्तेरेवैतदाख्यानादिरर्थः स्यात्।

2. दृश्यर्थायां प्रवृत्तौ कृदन्तात् तदाख्याने णिच् स्यात् कृल्लोपः प्रकृतिप्रत्यापत्तिः कारकपृथग्भावश्च[2]।

मृगरमणमाचष्टे मृगान् रमयत्याखेटकः। यदा ह्यरण्ये मृगयाप्रवृत्तस्य दर्शनार्थं रममाणान् मृगान् प्रतिपद्य परस्तदधिकृतो भृतको व्याचष्टे– 'एकस्मिन्नवकाशे एवं विधा मृगा रमन्ते'– इति, तत्रैवाख्यानेऽयं प्रत्ययः स्यात्। तदा तु ग्रामे मृगरमण्माचष्टे तदा णिच् न भवतीत्यावेदयितुमयमारम्भः। अयमाचाष्टते केवलं न त्वसौ मृगान् रन्तुं प्रयोजयति ततोऽयमप्राप्तो णिज् विधीयते।

3. कालात्यन्तसंयोगे मर्यादायां कृदन्तात् तदाख्याने णिच् स्यादाङ्लोपश्च, कृल्लोपः प्रकृतिप्रत्ययापत्तिः कारकपृथग्भावश्च[1]।

---

1 आख्यानाच्च प्रतिषेध (वा.1778)

2 दृश्यर्थायां च प्रवृत्तौ(वा.1779)

आरात्रिविवासमाचष्टे रात्रिं विवासयति। विवासोऽतिक्रमणं समाप्तिरिति यावत्। कथायां कथ्यमानायाः स्वतोविस्तिर्णाया वा, तावतकालयापनार्थं यत्नवता कृताविताानाया वा यत्र रात्रेः समाप्तिपर्यन्तं कथनं नाट्यते तत्रेदमुच्यते– अयं रात्रिं विवासयतीति। तत्र मर्यादार्थस्याङो लोपः। अयमाचष्टे केवलं न त्वसौ रात्रिमतिक्रमितुं प्रयोजयति, स्वत एव तु सा रात्रिः समाप्नोति ततोऽयमप्राप्तो णिज् विधीयते।

4. चित्रीकरणे तत्प्राप्तौ कृदन्ताण्णिच् स्यात् कृल्लोपः प्रकृतिप्रत्यापत्तिः कारकपृथग्भावश्च[2]।

सायमुज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयते इति सूर्यमुद्गमयति। आश्चर्यकरणं गम्यते। सायं प्रयागात् प्रस्थितो मथुरायां सूर्यमुद्गमयति सूर्योद्गमं प्राप्नोतीत्यर्थः। प्रातः प्रयागात् प्रस्थितः स्रुघ्ने सूर्यमस्तमयति। सूर्यास्तमनं संश्रावयते इत्यर्थः। तत्र तत्र स्थाने गतः सूर्योदयनं सूर्यास्तमनं संभावयते इत्यर्थः। तत्र तत्र स्थाने गतः सूर्योदयनं सूर्यास्तमनं वा प्राप्नोति केवलं, न त्वसौ सूर्यमुद्गन्तुमस्तमेतुं वा प्रयोजयति। ततोऽयमप्राप्तो णिज् विधीयते।

5. नक्षत्रयोगे तज्ज्ञाने कृदन्ताण्णिच् स्यात् कृल्लोपः प्रकृतिप्रत्यापत्तिः कारकपृथग्भावश्च[3]।

चन्द्रमसः पुष्ययोगं जानातीति–चन्द्रमसं पुष्येण योजयति ग्रह-गणकः मघाभियोजयति। ग्रहगणितविद्यया जानाति केवलं न त्वसौ चन्द्रमसा संयोक्तुं पुष्यं प्रयोजयति ततोऽयमप्राप्तो णिज् विधीयते।

एतच्च सर्वं भगवतः कात्यायनस्य मतेनोक्तम्। भगवान् पतञ्जलिस्त्वाह– अनारब्धव्यमेवेदं प्रकृतिप्रत्यापत्ति[4] प्रकरणम्। हेतुतो ह्यविशिष्टमेतद् भवतीति कृत्वा सामान्यकृतमेवेदं णिच् संपत्स्यते। तुल्या हि हेतुता देवदत्ते चादित्ये च दृश्यते। अत्राह - स्वतन्त्रस्य प्रयोजको हेतुर्भवति। न चासावादित्यं प्रयोजयति य उच्यते – उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्यमुद्गमयतीति। उच्यते। यं भगवान् स्वतन्त्रप्रयोजकं मुक्तसंशयं नाय्यं मन्यते – पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति। नेहापि नितान्तं देवदत्तो यज्ञदत्तं प्रयोजयति। प्रवृत्तिर्ह्युभयत्रानपेक्ष्यैव किञ्चिद्भवति –यज्ञदत्ते चादित्ये च। नेह कश्चित्

1 आङ्लोपश्च कालात्यन्तसंयोगे (वा.1780)

2 चित्रीकरणे प्रापि (वा.1781)

3 नक्षत्रयोगे ज्ञि (वा.1782)

4 प्रत्याकृतिप्रति. इति मूले।

परोऽनुग्रहीतव्य इति प्रवर्तते। सर्व इमे स्वभूत्यर्थं प्रवर्तन्ते। ये तावदेते गुरुशुश्रूषवो नाम तेऽपि स्वभूत्यर्थं प्रवर्तन्ते। पारलौकिकं च नो भविष्यति, इह च नः प्रीतो गुरुरध्यापयिष्यतीति। तथा य एते दासाः कर्मकरा नाम तेऽपि स्वभूत्यर्थं प्रवर्तन्ते भक्तं चैलं च लप्स्यामहे, परिभाषाश्च न नो भविष्यन्तीति। तथा य एते शिल्पिनो नाम एतेऽपि स्वभूत्यर्थं प्रवर्तन्ते - मित्राणि च नो भविष्यन्ति, वेतनं च लप्स्यामहे इति। एवमेतेषु सर्वेषु स्वभूत्यर्थं प्रवर्तमानेषु यदि कश्चित् प्रयोजको नाम कुर्वतो भवति। नूनं तत्तर्हि तेनैव न्यायेनासावादित्यस्य प्रयोजकः स्यात्। अत्राह। यदि तर्हि सर्व इमे स्वभूत्यर्थं प्रवर्तन्ते, कः प्रयोज्यार्थः। उच्यते। यदभिप्रायेषु सज्जन्ते। ईदृशौ वध्यौ कुरु, ईदृशौ पुटकौ कुरु इति। एवमयमादित्योऽप्यस्याभिप्राये सज्जते- उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयेय - इत्येष हि तस्याभिप्रायः तं चादित्यो निवर्तयति। अत्राह–1 भवेदिह वर्तमानकालता युक्ता स्यात् माहिष्मत्यां सूर्यमुदमयतीति। तत्रस्थस्य हि तस्यादित्य उदेति। इह तु कथं वर्तमानता- कंसं घातयति बलिं वन्धयतीति, चिरहते च कंसे चिरवद्धे च वलौ। उच्यते। अत्रापि सा युक्ता। ये तावदेते शौभिका नाम, एते प्रत्यक्षं कंसं घातयन्ति, प्रत्यक्षं च बलिं बन्धयन्तीति चित्रेष्वपि यत्र शब्दग्रन्थनमात्रं लक्ष्यते तत्रापि सा युक्ता। तेऽपि हि तेषामुत्पत्तिप्रभृति आ विनाशात तदृद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति। आतश्च सतः व्यामिश्रिताश्च दृश्यन्ते – केचित् कंसभक्ता भवन्ति केचिद्वासुदेवभक्ताः। वर्णान्यत्वं खल्वपि पुष्पन्ति- केचित् कालमुखा भवन्ति, केचिद्रत्नमुखाः। त्रैकाल्यं खल्वपि लोके लक्ष्यते– 'गच्छ हन्यते कंसः। गच्छ– घातिष्यते कंसः किं गतेन- हतः कंसः, इति। तदेतेन बौद्धेन गौणेन कंसेन सर्वे व्यवहारा संसिद्धाः। भगवान् पाणिनिरप्येषां पश्यति कारितणिचैव संसिद्धम्। इति प्रत्यापत्तिः ॥

तदित्थं– तदिच्छा, तदिवाचारः, तदभूतभावः, तत्करणम्, स्वार्थः प्रत्यापत्तिश्चेत्येतैः षड्भिरधिकरणैः कृतं नामधातुप्रकरणं संपूर्णम्। इति नामजधातुभिः कृतं वृत्तिव्याकरणस्य द्वितीयं प्रकरणं वृत्तम्। अथात - स्तृतीयं धातुजधातुप्रकरणं वर्तिष्यते।

**इति नामधातुप्रक्रिया**



# प्रक्रियापरिच्छेदः

## अथ कारितप्रक्रियाः

इह हि धातुनिर्माणप्रकारे प्रक्रान्ते नामभ्यस्तावद् धातुसाधनमुपपादितम्। अथेदानीं धातुभ्यो धातुसाधनमुपपादनीयम्। तत्र सिद्धेभ्य एव तेभ्यो धातुभ्योऽर्थविशेषाभिधित्सायां प्रत्ययविशेषसम्बन्धाच्चतस्रो धातुजधातुनिर्म्माणप्रक्रियाः सम्भवन्ति। कारितं चर्करीतं चेक्रीयितं चिकीर्षितं चेति। धात्वर्थप्रवर्तनायां कारितकं धात्वर्थक्रियासमभिहारे चर्करीतकं तत्रैक चेक्रीयितकं धात्वर्थेच्छायां तु चिकीर्षितकमित्येवमर्थविशेषवृत्या प्रत्यय विशेषान्तस्य धातुत्वोपपत्तेः। तत्रादौ कारितप्रयोगव्यवस्थां व्याख्यास्यामः।

**धातोरुत्तरमिप्रत्ययः प्रयुज्यते णिच्संज्ञस्तदर्थक्रियाकर्तुः प्रयोजक-व्यापारोऽभिधेये** 1/1

कस्यांचित् क्रियायां प्रवर्तमानस्य योऽर्थः प्रवृत्तिनिमित्तं स प्रयोजकः। निमित्तं च प्रकरण विशेषादनेकधोपपद्यते। वटुः पठति। पिता पाठयति। पठद्भ्यो मोदकं दीयते। मोदकं लप्स्येमहीति वटुः पठति। लिप्सागम्यते। दण्डः पाठयति। यो न पठति स ताडयते। ताडनं न भजेमहीति वटुः पठति। भयं गम्यते। भृत्यः पाठयति। भृत्यो निरीक्षणे नियुक्तः। यदि न पठिस्यामि स तर्हि पित्रे निवेदयिष्यतीत्यपराधो मे विदितः स्यात्। स नाहं जिह्मकारी भवानीति वटुः पठति। एवमन्ये चान्ये चार्थास्तत्क्रियासमर्थाः प्रवृत्तौ निमित्तानि। तेषां व्यापारो णिजर्थः। तादृशे च व्यापारे प्रेषणाध्येषणादौ पठनविषये पाठि धातुः संपाद्यते गमनविषये तु गमिधातुः। एवमन्योऽन्यत्र द्रष्टव्यः। भिक्षा वासयति कारीषोऽग्निरध्यापयति। भिक्षा हि प्रचुरा व्यंजनवत्यौ लभ्यमाना वासं प्रयोजयन्ति। कारीषोऽग्निनिर्वाते एकान्ते सुप्रज्वलितोऽध्ययनं प्रयोजयति। वासादिसमर्थता गम्यते[1]।

अथेह णिच् कस्मान्न भवति। पाचकस्तन्दुलानि पचतीति। इह हि तन्दुलानि विक्लिद्यन्ते, परस्तु तत्समर्थान्याचरतीति नाप्राप्तः प्रयोज्यप्रयोजकभावः। अत एव तु गम्यते नाम तन्दुलं पचतीत्युक्ते तन्दुलानि विक्लेदयतीत्येवमर्थः। उच्यते। अन्तरेण

---

1 हेतुमति च 3-1-26

यत्नं योऽर्थो न गम्यते तमर्थं गमयितुमिह यत्नः क्रियते। गच्छतीत्युक्ते प्रेषो न गम्यते इति तमर्थं गमयितुं णिच् क्रियते, गमयतीति। यत्र तु सोऽर्थः शब्दान्तरेण गम्यते तत्रोक्तार्थानामप्रयोग इति न्यायादप्राप्तोयमन्यो णिच् शब्दः।

यदि तु विक्लित्तिमात्रे पचिरिष्यते तदाऽवश्यं णिचा भवितव्यम्। पच्यन्ते तन्दुलानि पाचयति च पाचकः इति[1]। पचतीत्येवार्थो गम्यते। एवमन्यत्र न्यायः। सर्वे हि सकर्मका धातवः क्रियाप्रैषे वर्तन्ते इति धातुनैव तदर्थप्राप्तौ नावकाशो णिच्प्रयोगस्य। द्वयोरपि क्रिययोधातुना क्रोडीकरणात् क्वचित्तु तिसृणां क्रियाणां दृश्यते क्रोडीकारः। मिलतिग्रामः प्राप्नोति ह्योग्रामम्, भृत्यो नयति ह्यं ग्रामम् स्वामी तु नाययति भृत्येन हयं ग्राममिति। तत्र प्रापयतीत्यर्थे गर्भिते नयतिर्व्युत्पन्न इति नाऽर्थोऽवशिष्यते णिचा प्रत्याययितुम्। अर्थाभावाच्च णिजयं तत्र न भवतीत्यवगम्यम्॥

अथेह कस्मान्न भवति- यत्रैकान्ते तूष्णीमासीन उच्यते पंचभिर्हलैः कृषतीति। तत्रावश्यं कर्षयतीति भवितव्यम्[2]। कर्षव्यापारस्य तत्रावर्तमानत्वात्। उच्यते। नाना क्रियाः कृषेरर्थाः। स नावश्यं कृषतिर्विलेखने एव वर्तते, किंन्तर्हि प्रतिविधानेऽपि वर्तते। यदसौ भक्त बीजबलीवर्दैः प्रतिविधानं करोति स कृष्यर्थः प्रतिविधाने वर्तते यदहरेवासौ न प्रतिविधत्ते तदहरेण तत्कर्म न प्रवर्तते। तस्मात् स तूष्णीमासीनोऽपि नूनं प्रतिविधत्ते इत्युच्यते कृषतीति। स धातुनोक्तत्वादर्थस्य तत्राणि णिजयं न प्राप्नोति। यदा तु विलेखने तावदयमिष्यते कृषिस्तदा भवत्येवायं णिच् प्रयोगः-

पंचभिर्हलैः कर्षयतीति।

अथेह कस्माद् विपर्य्यासो दृश्यते - पुष्यमित्रो यजते, याजका याजयन्तीति भवितव्यं तु तत्र - पुष्यमित्रो याजयते, याजका यजन्तीति[3]। ऋत्विजः खल्वपि दृश्यन्ते हविः प्रक्षेपणं कुर्वन्तो न यजमानः। उच्यते। इहापि नानाक्रिया यजेरर्थाः स नावश्यं यजिर्हविः प्रक्षेपणे एव वर्त्तते,किन्तर्हि त्यागेऽपि वर्तते। यः सुष्ठु त्यागं करोति स उच्यते यं

---

1 पाचयत्योदनं देवदत्तौ यज्ञदत्तेनेत्युभयोः कर्त्रोर्लेनाऽभिधानं प्राप्नोति प्रत्यायार्थविशेषणे सति पुनर्न दोषः ''प्रधानकर्तरि लादयो भवन्ती'' ति प्रधानकर्त्ता लेनाऽभिधीयते। यश्चाऽत्रा प्रधानं कर्त्ता सिद्धा त कर्तरीत्येव तृतीया।(महाभाष्यम् 3-1-26)

2 कृष्यादिषु चानुपत्तिः /वा./ कृष्यादिषु चानुत्पत्तिवक्तव्या। एकान्ते तूष्णीयमासीन उच्यते- पंचभिर्हलैः कृषतीति। तत्र भवितव्यं ''पंचभिर्हलैः कर्षयतीति। (महाभाष्यम् 3-1-26)

3 यज्यादिषु चाऽविपर्यासः/वा./यज्यादिषु चाऽविपर्यासो वक्तव्यः पुष्यमित्रो यजते, याजका याजयन्तीति। तत्र भवितव्यं- पुष्यमित्रो याजयते, याजका यजन्तीति। (महाभाष्यम् 3-1-26)

साधु यजते इति। स पुष्यमित्रस्त्यागं करोति याजकाः पुनरेनं तत्र प्रयोजयन्तीति न विपर्य्यासो भवति।

अथेह कस्मान्न भवति- यत्र कश्चित् कंचिदाह पृच्छतु मा भवान्, अनुयुंक्तां मा भवानिति। उच्यते। नेह दृश्यते प्रयोजकव्यापारः। न ह्यसौ संप्रति पृच्छति, तूष्णीमास्ते। ततोऽर्थाभावादयं णिज् न प्राप्नोति। ननु च भोः किमेतेन वर्तमानकालाया एव क्रियायाः कर्त्रा भवितव्यं न भूतभविष्यत्कालायाः। उच्यते। भूतभविष्यत्कालाया अपि नूनं भवितव्यम्। अभिसम्बन्धस्तु तत्र क्रियते- इमां क्रियामकार्षीत्, इमां क्रियां करिष्तीति। इह पुनर्नकश्चिदभिसम्बन्धो दृश्यते, न चासौ संप्रति पृच्छति न चासौ प्रेक्ष्यति, तूष्णीमास्त। ननु भोः यद्येष कर्ता नास्तीति प्रतिज्ञायते स तर्हि कथं कर्तृप्रत्ययेन लोटाभिधीयते। उच्यते। अभिसम्बन्धो हि तत्र क्रियते। यथैव खल्वस्मिन्न पृच्छत्ययं पृच्छति वर्तते - इमां क्रियां कुर्वित्यभिसम्बन्धकरणात्। एवमनेन कर्त्राऽप्यभिसंबन्धः क्रियते, अस्याः क्रियायाः कर्ता भवति। स तत्र नैष कर्ता कर्तृप्रत्ययेन लोटाऽभिधीयते। अथवा ऽभ्युपगम्यतां कर्ता - को दोषः। पृच्छतु मा भवानिति णिच् तु न प्राप्नोति। प्रैषस्य लोटाभिधानादिह णिचोऽभिधेयानुपलब्धेः। विधीयन्ते ह्येतेषु प्रैषादिष्वर्थेषु लोडादयः। यत्र च द्वितीयः प्रयोज्योऽर्थो भवति तत्रायं णिच् प्रवर्तते। आसय, शायय। उक्तं विधितन्त्रं शेषतन्त्रमतोऽनुवर्तयिष्यामः।

प्रकृतिविकारो धातुसंज्ञा, उपग्रहो, लकाराः, स्वरविधिश्चेतिपंचेहाश्रित्यविधयो भवन्ति। प्रकृतिविकारस्त्रेधाव्यंजनागमनेन, स्वरागमनेन स्वरविकारेण चेति।

## व्यञ्जनागमो यथा-

स्वरान्तेषु तावदकारान्तो धातुर्नास्त्येव। उक्तं तु पूर्वं शाकटायनमते सन्ति केचिदकारान्ता अपि धातवः - कथ - वाक्यप्रबन्धे, कल - गतिसंख्यानयोः, अर्थ-उपयांचायाम्, गण - संख्याने, सूत्र-वेष्टनेः, चित्र-चित्रीकरणे, वण्ट-विभाजने लज्ज-प्रकाशने, सुख दुःख- तत्क्रियायाम् इत्यादयस्तत्रेदं द्वैविध्यं भवति। नाकारान्ता अमी इति येषां प्रतिपत्तिस्तेषां समये मितामिवैतेषां रूपाणि- कथयति। कलयति। अर्थयति। गणयति। सूत्रयति। चित्रयति। वण्टयति। लज्जयति। सुखयति, दुःखयतीत्यादीनि। येषां तु सन्त्यकारान्ता इति प्रतिपत्तिस्तेषामनुवर्ततेऽन्त्यस्वरनिबन्धनं प्रतिविधानम्।

**णिचि कण्ठताल्वोष्ठमूर्द्धस्वरान्ताद्धातोरूत्तरं क्रमश पयवरागमः स्यात् स्वराणां तु सर्वेषामन्त्यानामाकारत्वमन्यत्र प्रतिपदोक्तात्**[1]।

अ आ कण्ठ्यस्वरौ, तयोः स्थाने आप्छब्दः। इ ई तालुस्वरौ। तयोः स्थाने आय शब्दः। उ ऊ- ओष्ठ्यस्वरौ। तयोः स्थाने आव् शब्दः। ऋ ॠ मूर्द्धस्वरौ। तयोः स्थाने आर् शब्दः।

यत्र तु प्रतिपदोक्तं किंचिदन्यत् प्रतिविधास्यामि न तत्र लक्षणोक्तोऽयमाकारादेशो वा पकारागमो वाऽनुवर्तनीयः। कथादीनामकारान्तत्वादायो विधिः। तेन कथापीत्येवमादिस्वरूपा धातवः सिद्धाः।

| | |
|---|---|
| कथापयति | चित्रापयति |
| कलापयति | वण्टापयति |
| अर्थापयति | लज्जापयति |
| गणापयति | सुखापयति |
| सूत्रापयति | दुःखापयति |

आकारादिस्वरान्तानामप्येवं स्वरूपासिद्धिर्द्रष्टव्या। यथा -

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| स्था | = | स्थ् | - | आप् | इ | = | स्थापि | - | स्थापयति |
| हि | = | ह् | - | आय् | इ | = | हायि | - | हाययति। |
| मी | = | म् | - | आय् | इ | = | मायि | - | माययति। |
| स्तु | = | स्त् | - | आव् | इ | = | स्तावि | - | स्तावयति। |
| भू | = | भ् | - | आव् | इ | = | भावि | - | भावयति। |
| कृ | = | क् | - | आर् | इ | = | कारि | - | कारयति। |
| जॄ | = | ज् | - | आर् | इ | = | जारि | - | जारयति। |

---

[1] अर्तिह्रीव्लीरीक्नूयीक्ष्माप्यातां पुङ्णौ 7।3।36। अचो ञ्णिति 7।2।115। एचोऽयवायावः 6।1।78 उरण् रपरः 1।1।51

## (आ)

अथ विशेषविधयो निदर्श्यन्ते। **तत्राकारान्तेषु तावज्ज्ञादिषु शादिषु च विशेषा उपलभ्यन्ते। णिचि ज्ञा. क्षा. श्राणां पकारगमो ह्रस्वत्वं चार्थविशेषेषु स्याद् विकल्पेन त्वनुसृष्टयोः स्नातिग्लायत्योः**[1]/2

मारण तोषण निशामनेषु ज्ञप्। निशामनं चाक्षुषज्ञानजननमिति माधवः। मारणतोषणनिशानेषु ज्ञप्। निशानं तीक्ष्णीकरणमिति हरदत्तः। ज्ञपयति। सामान्यज्ञानोत्पादने तु ज्ञापयतीत्येव। क्षयकरणे क्षप्। क्षपयति। पाकसाधने श्रप्। श्रपयति। विक्लेदयतीत्यर्थः। अन्यत्र श्रापयति। स्वेदयतीत्यर्थः। शौचसाधाने स्नप्। स्नपयति। स्नापयति वा। स्नाने प्रवर्तयतीत्यर्थः। हर्षक्षयजनने ग्लप्। ग्लपयति। ग्लापयति वा। दैन्ये प्रवर्तयतीत्यर्थः। ग्लेपयतीति तु ग्लेप् दैन्ये कम्पने चेत्यविकरणात्मनेभाषस्य रूपमित्याहुः। ग्लेपनं दैन्यम्। सोपसर्गत्वे त्वनयोः सामान्यविधिना सिद्धिः। संस्नापयति। सुस्नापयति। प्रग्लापयति। अभिग्लापयति।

**णिचि शा. छा. सा. पा.ह्वा. व्या. यतीनां यकार आगमो न पकारः**[2]/3/

शा - तनूकरणे। छा- छेदने। सा- अन्तकर्मणि। एते यविकरणाः[3] परस्मैभाषाः। ह्या - स्पर्द्धायां शब्दे च। व्या - संवरणे। वा- तन्तुसन्ताने। एतेऽविकरणा[4] उभयतोभाषाः। पा-पात्रेऽविकरणः परस्मैभाषः। पा शोषणे च् गृह्यते। एषामेवायं यकारागमो न तत्सदृशानाम्। तेन रक्षणकर्मणः पातेर्नास्ति।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| शा | - | य्. | इ | = | शायि | - | शाययति, निशाययति। |
| छा | - | य्. | इ | = | छायि | - | छाययति, प्रवच्छाययति। |
| सा | - | य्. | इ | = | सायि | - | साययति, अवसाययति। |
| पा | - | य्. | इ | = | पायि | - | पाययति। |
| ह्वा | - | य्. | इ | = | ह्वायि | - | ह्वाययति। आह्वाययति। |
| व्या | - | य्. | इ | = | व्यायि | - | व्याययति। संव्याययति। |
| वा | - | य्. | इ | = | वायि | - | वाययति। |

---

1 अर्तिह्व्लीरीक्नूयी. 7/3/36 मितां ह्रस्वः 6/4/92/ ग्लास्नावनुवमां च (ग.सू./90)

2 शाच्छासाह्वाव्यावेपां युक् 7/3/37

3 दिवादिभ्यः श्यन् 3-1-66/

4 कर्तरि शप् 3/1/68/

**णिचि वातेर्विधूनने जकार आगमो न पकारः**[1] / 4 /

गतिगन्धनयोर्व्युत्पन्नस्य णिचा संनियोगेन विधूनने वृत्तिराम्नायते। तत्र वाजि धातुः संपद्यते। वाजयति। पक्षेणोपवाजयति। अन्यत्र तु वापयतीत्येव। आवापयति केशान्[2]। शोषयतीत्यर्थः। वज गतौ धातुः पठ्यते। ततो वाजयति सिद्धः। वातेस्तु वापयतीत्येवं मा भूदित्येवमर्थमिदमुच्यते।

**णिचि पातेर्लकार आगमो न पकारो यकारो वा**[3] / 5 /

पा - रक्षणे। णिचि पालिः संपद्यते। पालयति। पालरक्षणे धातुः पठ्यते। ततः पालयति सिद्धः। पकारागमं यकारागमं तु वारयितुमिदमुच्यते॥

**णिचि लातेः स्नेहद्रवे लकार आगमो विकल्पेन**[4] / 6 /

ला- आदाने। णिच् संनियोगेन स्नेहद्रवे वृत्तिस्तत्र लालिः संपघते। लापिश्च। विलालयति विलापयति[5] वा घृतम्। द्रवयतीव्यर्थः। काठिन्य विपातनं विलापनम्। काठिन्युपगतस्याग्नौ निष्टपनादिना द्रवत्वापादनमिति यावत्। लौहादि कठिन द्रव्यद्रवे तु न लकारः। लौहं विलापयति। आदानाद्यर्थे तु लापयतीत्येव इत्याकारान्ते विशेषाः।

## (इ)

इकारान्तेषु - स्मि, जि. चि. इ. धातुसम्बन्धेन विशेषः स्मर्यते।

**णिचि स्मयतेरूत्तरं पकारागमः स्वरस्याकारत्वं च विस्मयश्चेत्प्रयोजकात्**[6] / 7 /

स्मि - ईषद्धसने। आत्मनेभाषः। इकारस्थाने आपछब्दः। मुण्डो विस्मापयते। जटिलो विस्मापयते। अयमात्मनेभाष एव। (यत्तु विस्मापयतीति क्वचिद् दृश्यते तद् विस्मापयमानं प्रति पुनः प्रवर्तनायां द्रष्टव्यम्।) यः प्रवर्तयति स प्रयोजकः। स चेत् स्वयं विस्मयहेतुर्न स्याद् अपि तु विस्मयजनकवस्तुद्वारा विस्मये प्रवर्तयति तत्र

---

1 वो विधूनने जुक् 7/3-38/
2 अर्तिहीव्लीरीक्नूयी. 7/3/36/
3 पातेर्णौ लुग् वक्तव्यः (वा.4520)
4 विभाषा लीयतेः 6/1/51/ लीलार्नुग्लुकावन्यतरस्यां स्नेहनिपातने 7/3/39/
5 अर्तिह्वीब्ली. 7/3/36
6 नित्यं स्मयतेः 6/1/57/ अर्तिहीव्लीरीक्नूयी 7/3/36/ भीस्म्योर्हेतुभये 1/3/68/

सामान्यविधिना रूपसिद्धिः। कुंचिकया बालं विस्मापयति दुष्टः[1]। विस्मापयन् विस्मितमात्मवृत्ताविति तु सिंहस्यैवाकस्मादागतस्य मनुष्यवाग्विशिष्टस्य विस्मय-जनकत्वमपेक्ष्य प्रयुज्यते। मनुष्यवाचः करणस्य विस्मयनिमित्तत्वापेक्षायां तु विस्मापयन्नित्येव पाठः स्यात्।

**णिचि जयतेरूत्तरं पकारागमः स्वरस्याकारत्वं च**[2]/8/

जि - न्यूनीकरणे उत्कर्षप्राप्तौ च। ततो णिचि जापि संपद्यते। जापयति।

**णिचि चिनोतेरूत्तरं पकारागमो वा स्वरस्य त्वाकारत्वमकारत्वं वा**[3] /9

चि चयने। अस्येकारस्थाने आप्, आय्, अप्, अय् - इति चत्वार आदेशाविकल्पेन स्युः। चापयति। चाययति[4]। चपयति। चययति।

**णिच्यधीतेरूत्तरं पकारागमो धातोस्त्वाकारत्वम्**[5] 10/ अध्यापयति।

**इङ्भिन्नस्य त्विकारस्य धातोर्न कारितमबोधने गमिना निर्वाहात्**[6]/11/

इ- गतौ। एति। इ -स्मरणे। अध्येति। इ-अध्ययने। अधीते। इति त्रय इकारा धातवः। तत्र णिच्यध्ययनार्थस्येव प्रयोगो भवति। इतरयोस्तु यदि बोधनेऽर्थे वृत्तिस्तदैवेष्यते कारित प्रयोगः। प्रत्याययति। अध्याययति। बोधनादन्यत्र तु न प्रयोगः। तत्स्थाने गमिधातोः प्रयोगेण गतार्थत्वात्। गमयति। अधिगमयति। अधेः प्रयोगोऽयमध्येतेः प्रतिनिध्यमुपपादयति।

## (ई)

ईकारान्तेषु री. ब्ली. ह्री. क्री. वी.ली.प्री. भी धातुषु विशेषो यथा-

णिचि रिणातिव्लीनातिजिहेतीनां स्वरस्यैकारः पकारागमश्च।

---

1 अचो ऽञ्णिति 7/2/115/ एचोऽयवायावः 6/1/78/

2 क्रीङ् जीनां णौ 6/1/48/ अर्तिह्रीव्ली. 7/3/36/

3 चिस्फुरोर्णौ 6/1/54/ अर्तिह्रीव्ली 7/3/36/

4 मितां ह्रस्वं 6/4/92/ अर्तिह्रीव्ली. 7/3/36/ मित्वाभावाद् ह्रस्वभावे चापयतीति रूपम्। आत्वाभावे अचो ऽञ्णिति 7/2/115/ एचोऽयवायावः 6/1/78

5 क्रीङ्जीनां णौ 6/1/48/ अर्तिह्रीव्ली. 7/3/36/

6 णौ गमिरबोधने 2/4/46/

री गतिरेषणयोः। व्ली- वरणे। ह्री- लज्जायाम्। एषामीकारस्थाने एप्। रेपयति। ब्लेपयति। ह्रेपयति। यस्तु रीयते श्रवण कर्म्मा, तस्य राययतीत्येव[1]।

**णिचि क्रीणातेः स्वरस्याकारः पकारागमश्च**[2] /13/

क्री- द्रव्यविनिमये। ईकारस्थाने आप्। क्रापयति। विक्रापयति। णिचि वीयतेः प्रजने स्वरस्याकारः पकारागमश्च विकल्पेनस्तः[3] /14/

वी- गतिव्याप्तिप्रजनकान्त्यसनखादनेषु। प्रजने वृत्तावीकारस्थाने आप्। प्रजनो हि जन्मन उपक्रमो गर्भग्रहणम्। गर्भ ग्राहयति इत्यर्थः। पक्षे प्रवाययति[4]। अर्थान्तरेषु तु वाययतीत्येव।

**णिचि लीयतेलीनात्योर्विसंवादनशालीनीकरणसंमाननेषु नित्यमन्यत्र विकल्पेन स्वरस्याकारः पकारागमश्च**[5] /15/

विसंवादनं प्रलम्भनम्। शालीनीकरणं न्यग्भावनम्। संमाननं पूजनम्। ली- श्लेषणे। यविकरणश्च नाविकरणश्च। ईकार स्थाने आप्। बालमुल्लापयते[6]। वंचयतीत्यर्थः। कस्त्वामुल्लापयते। विसंवादयतीत्यर्थः। श्येनो वृतिकामुल्लापयते। अभिभवतीत्यर्थः। जटाभिर्लापयते। पूजामधिगच्छतीत्यर्थः। अन्यत्रार्थे विकल्पः। बालकमुल्लापयति उल्लाययति वा[7]। श्लेषयतीत्यर्थः।

**णिचि लीयतेलिनात्योः स्नेहनिपातने पयलनानामागमाः स्युः पर्यायेण तत्र पयलागमसत्वे स्वरस्याकारश्च**[8]। /16/

स्नेहनिपातनं घृतादीनां द्रवद्रव्याणां काठिन्युपगतानां पुनर्द्रवीभावः। लीधातोरीकारस्थाने आप्, आय्, आल्, ईन्, इत्येते चत्वार आदेशाः पर्यायेण भवन्ति।

---

1 अर्तिह्रीव्ली. 7/3/36/ पुगन्तलधूपधस्य च 7/3/86/

2 क्रीङ् जीनां णौ 6/1/48/ अर्तिह्रीव्ली. 7/3/36/

3 प्रजने वीयतेः 6/1/55/ अर्तिह्रीब्ली. 7/3/36/

4 अचोऽञ्णिति 7/2/115 एचोऽयवायावः 6/1/78/

5 प्रलम्भनाभिभवपूजासु लियो नित्यमात्त्वमशिति वाच्यम् (वा.3483) अर्तिह्रीब्ली. 7/3/36

6 लियः संमानन शालिनीकरणयोश्च 1/3/70

7 विभाषा लीयतेः 6/1/51/

8 विभाषा लीयतेः 6/1/51/ अर्तिह्रीब्लीक्नूयी. 7/3/36/
अचो ऽञ्णिति 7/2/115/ एचोऽयवायावः 6/1/78/
लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने 7/3/39/

विलापयति, विनाययति, विलालयति, विलीनयति वा घृतम्। अग्नौ निष्टापनेन द्रवयतीत्यर्थः। स्नेहविपातनादन्यत्र तु पूर्वं विकल्पः उक्तः लोहं विलापयति, विलाययति वा[1]। द्रवीकरोतीत्यर्थः। लापयति, लाययति वा। श्लेषयतीत्यर्थः।

**णिचि प्रीणातेर्णकारागमः स्यात्** /17/[2]

प्री-तर्पणे कामनायां च। प्रीणयति। नकारागमोऽयम्। रेफसम्बन्धात्तु णकारः श्रूयते इति भाव्यम्।

**णिचि भिषः षकारागमः स्यात् पकारागमो वा, पकारे तु जाते स्वरस्याकारत्वं च, भयं चेत्प्रयोजकात्**[3]।/18

भी- भये। मुण्डो भीषयते। जटिलो भीषयते। भापयते वा। प्रयोजकादन्यतस्तु भये सामान्यविधिः। कुंचिकया बालं भाययति[4]। अत्र हि कुंचिकातो भयं कारणविशेषान्न तु तस्मात् प्रयोजकात्।

उकारान्ते विशेषो न स्मर्य्यते।

**(ऊ)**

**णिचि धुवो नकारागमः स्याद्विकल्पेन**[5]/19/

धू - कम्पने। धूनयति। पक्षे धावयति।

**(ऋ)**

ऋकारान्तेषु ऋदृस्मृ धातुषु विशेषः।

1. **णिचि ऋकाराद्धातोः पकारागमः स्याद् ऋकारस्य त्वर्कारः**[6]/19/

ऋ- गतौ प्रापणे च। तत्स्थाने अर्प संपत्तिः पकारागमे सति ऋकारस्योपधानियमादप्यर्भावसिद्धेः। अर्पयति[1]। समर्पयति। प्रत्यर्पयति।

---

1 विभाषालीयते, 6/1/51/ अर्तिह्रीव्ली. 7/3/36/

2 धूंप्रीयोर्नुग्वक्तव्यः(वा.4519)

3 भियो हेतुभये षुक् 7/3/40/ अर्तिह्रीब्ली. 7/3/36/ विभेते र्हेतुभये 6/1/56/ भीस्म्योर्हेतुभये 1/3/68

4 अचो ऽञ्णिति 7/2/115/ एचोऽयवायावः 6/1/78/

5 धूंप्रीयोर्नुग्वक्तव्यः (वा.4519)

6 अर्तिह्रिव्लीरीक्नूयी. 7/3/36/ सार्वधातुकार्धधातुकयो. 7/3/84/

2. **णिचि द्रियतेरादरे रेफागमः स्यात् स्वरस्य त्वकारत्वन्तत्र** /19/ आदरयति। आदरशब्दन्नामधातुप्रत्ययेऽति सिद्धमेतत्। आदरे ऋकारस्य सामान्यविधिना त्वार्भावो नास्तीत्यावेदयितुमिदमुच्यते।

3. **णिचि स्मृधातोराध्याने रेफागमः स्यात् स्वरस्यत्वकारत्वन्तत्र**/ 20/ आध्यानमुत्कण्ठापूर्वक स्मरणम्। स्मृ चिन्तायां स्मरति। स्मृप्रीतिपालयोः स्मृणोति। तस्याध्ययने वृत्तौ ऋकारस्थाने अर्भावः। स्मरयति। सोत्कण्ठं स्मरणे प्रवर्तयति। अर्थान्तरे तु सामान्यविधिना स्मारयति। इति ऋकारान्ते विशेषाः।

**(ॠ)**

ॠकारान्तेषु दॄ नॄ जॄ धातुषु विशेषः-

1- **णिचि दरति नृणात्योर्भयनययो रेफागमः स्यात् स्वरस्य त्वकारत्वं तत्र/21/**

दॄ - भये। नॄ-नये। अनयोर्ॠकारस्थाने अर्भावः। दरयति। विभीषयतीत्यर्थः। नरयति। नीत्या संचारयतीत्यर्थः। अन्यत्र सामान्यविधिः।विदारयति। द्विधा करोतीत्यर्थः। नारयति। प्रवाहयतीत्यर्थः।

2- **णिचि जीर्य्यते जृणात्यो रेफागमः स्यात् स्वरस्य त्वकारत्वं तत्र विकल्पेन**[2] /22/

जॄ - वयोहानौ। ॠकास्थाने विकल्पेन अर्भावः। जरयति। जारयति। इति दीर्घ ऋकारान्ते विशेषा उक्ताः।

तदित्थं धातूनामन्त्यस्वरनिबन्धं प्रतिविधानमुक्तम्। अथोपधास्वरनिबन्धनं व्याख्यास्यामः।

णिचि व्यंजनान्तानामुपधायां दीर्घस्वरा ऋकारभिन्नाः प्रायेण न विकुर्वते, नापि तदनुरोधेनागमादयो जायन्ते। राज् दीप्तौ। राजयति। जीव्- प्राणधारणे। जीवयति। भूष् - अलंकारे। भूषयति। अथ ह्स्वानामृकारस्य च दृश्यते प्रतिविधानमित्युदाह्रियते।

---

1 पुगन्तलघूपधस्य च 7/3/86/

2 जनीजृष्
जृणातेस्तु जारयति

**णिचि धातोरूपधाह्रस्वात् प्रागकारगमो मिदभिन्नस्य /23/**

अकारागमे सति सन्धिफलं क्वचिद्दीर्घः क्वचिद्गुणः[1]। यथा :'

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| वद् | - | व् | अ. | अद् | = | वादि | - वादयति। |
| विद् | - | व् | अ. | इद् | = | वेदि | - वेदयति। |
| बुध् | - | ब् | अ. | उध् | = | बोधि | - बोधयति। |
| नृत् | - | न् | अ. | ऋत् | = | नर्ति | - नर्तयति। |

अथ मित्संज्ञानां धातूनामयमकारागमो नास्ति[2]। ते यथा -

**अकतिस्तकति च चकति च कख् गु रगु लगु सगु ह्गु च।**
**स्तगु कगु रंजि घंटि नटु वटु भटु गडु लडु कणु श्चणुः फणुः ॥1॥**
**रणु च शणु श्रणु तद्वत् प्रथि व्यथि श्रयति च श्लयति।**
**क्लयति म्रदति च्छदति स्वदिः क्लदि क्रदि कदी मदु च ॥2॥**
**ध्वनु च स्वनु जनि वनु वनु क्रपि त्रपि श्रमु शमु क्षमु च।**
**भ्रमु च क्लमु तमु दमु रमि गमु नमु च द्रमु स्तमु स्यमु च ॥3॥**
**छमु समु जमु झमु यमु च क्रमु त्वरि ज्वरि तथा ज्वलति।**
**ह्वलति म्हलति स्खलु चलु दलु बलु वलुस्तथा च प्रसि क्नसी चहु च ॥4॥**
**रहु चाष्टाशीतिमिता धातव एतेमितः प्रसिद्ध्यति।**
**स्मरि दरि नरि जरि चपि च ज्ञपि च क्षपि च श्रपि स्नपि ग्लपि च ॥5॥**
**क ख गा जा ट ड णा थ द, न पम रला सह कृतोत्तराः क्रमतः।**
**ग क जा का भ र ता मसम जन्ख तज खाखसंमिताः सन्ति ॥6॥**
**रचः पटवढौ शठश्वठ गण व्रणाः स्युः पतः।**
**कथे गदपदौ स्तनः क्षपलज ध्वनाश्च श्रयः।**
**वरः स्वरकलौ पषो रसवसौ महः कीर्तिताः।**
**क्वचिन्मित इमेऽर्थकेऽप्यथ, मता अदन्ता अपि।**
**सुखः पुटः कुणो गुणः कुहो मृगः कृपो गृहः।**
**स्पृहो मितो मता इमे भजन्ति नोपधागमम्।**

---

1 अत उपधायाः 7/2/116/ पुगन्तलघूपधस्य च 7/3/86/

2 मितां ह्रस्वः 6/4/92

तदित्थमेते विंशत्यधिकं शतं पठिताः। तेषु सन्त्येव केचन धातवो नित्यमितः। केचिदर्थमितः। केचिद्विकल्पमितः। केचित्पुनः प्रदेशमित इति चातुर्विध्यम्। तथा हि -

अक् - कुटिलायां गतौ। अविकरणः परस्मैभाषः। स नित्यमित्। अकयति।

चक् - तृप्तौ प्रतिघाते च। अविकरणः परस्मैभाषः। अयमर्थमित् तस्य तृप्तौ मित्वमिष्यते। चकयति। स्वादग्रहणेन तर्पयतीत्यर्थः। प्रतिघाते तु न मित्। चाकयति मन्त्रादिप्रयोगेण रोगं प्रतिघातयतीत्यर्थः।

स्तक् - प्रतिघाते। नित्यमित्। स्तकयति। गतिं प्रतिघातयतीत्यर्थः।

कख - हसने। नित्यमित्। कखयति। उपहासयतीत्यर्थः।

अग् - कुटिलायां गतौ। नित्यमित्। अगयति।

रग् - शंकायाम्। रगयति।

लग् - संगे। लगयति।

ह्लग् - संवरणे। ह्लगयति।

ह्लम् - संवरणे। ह्लगयति।

सग् - संवरणे। सगयति।

स्तग् - संवरणे। स्तगयति।

कग् - अविशिष्टार्थे कगयति।

रंज - रागे। यविकरणोऽयमुभयतो भाषः। तस्य कारित विषयस्याखेटकार्थ मृगरमणे न लोपोभवति। रजयति मृगान्। आखेटकादन्यत्र तु रंजयति मृगान् तृणदानेन। रंजयति पक्षिणः।

घट - चेष्टायाम्। अर्थमिदयम्। घटयति। विघटयति। संघटयति। संघाताद्यर्थे तु नायं मित्। घाटयति। उद्घाटयति। विघाटयति।

नट् - नृत्ते नृत्ये वा। अयमप्यर्थमित्। नटयति। नाट्यं तु न मित्। नाटयति।

वट् - परिभाषणे। वटयति। अर्थमित्। यो ह्यविकरणो वेष्टनार्थो यो वा विभाजनार्थः, तयोर्नमित्वम्। वाटयति।

भट् - परिभाषणे। भटयति। अर्थमित्। भृत्यर्थे भाटयति।

गड् - सेचने। गडयति। नित्यमित।

लड - जिह्वाव्यापारे। उन्मथने च। लडयति जिह्वां जिह्वया वा। लडयति दधि व्यंजनम्। लडयति शत्रुम्। विलासे तु भिन्न लाडयति पुत्रम्।

फण् - गतौ। अयं विकल्पमित्। फणयति। फाणयति।

कण् - गतौ। कणयति।

रण् - गतौ। रणयति।

चण् - गतौ दाने च। चणयति।

शण् - गतौ दाने च। शणयति।

श्रण् - गतौ दाने च। श्रणयति।

प्रथ् - प्रख्याने। अविकरणात्मने भाषः। विकल्पमित्। प्रथयति। प्राथयति।

व्यथ् - भयसंचलनयोः व्यथयति।

श्रथ् - हिंसायाम्। श्रथयति। दौर्बल्ये चायं मिदिष्यते।

श्लथ् - हिंसायाम्। श्लथयति।

क्लथ् - हिसांयाम्। क्लथयति।

म्रद - मर्द्दने। म्रदयति।

छद् - उर्ज्जने। छदयति। बलवन्तं प्राणवन्तं वा करोतीत्यर्थः। अपवारणे तु विकल्पमित्। छदयति। छादयति। अपवारयतीत्यर्थः। ऊर्जनेऽपि प्रवर्तना कारितक एवायं मित्। स्वार्थकारितके तु भिन्नास्ति। छादयति। बलीभवति प्राणीभवति वा।

मद् - हर्षग्लेपनयोः। ग्लेपनं दैन्यम्। मदयति। हर्षयति ग्लेपयति वा। चित्तविकाराद्यर्थे तु भिन्न। मादयति। चित्तविकारममुत्पादयतीत्यर्थः।

स्खद् - विद्रावणे। स्खदयति। विद्रावयति। अयमवपरिभ्यां भिन्नेत्येके। अपावपरिभ्यो भिन्नेत्यन्ये। अपस्खादयति। अवस्खदयति। परिस्खदयति। अन्यत्र प्रस्खादयति। प्रतिस्खादयति।

कद् - वैक्लव्ये। कदयति।

क्रद - वैक्लव्ये। क्रदयति।

क्लद - वैक्लव्ये। क्लदयति। केचित्त्वेषां नकारोपधत्वमाचक्षेते[1]। कन्दयति। क्रन्दयति। क्लन्दयति।

ध्वन् - शब्दे। ध्वनयति घण्टाम्। वादयतीत्यर्थः। अन्यत्र तु भिन्न। ध्वानयति। अस्पष्टाक्षरमुच्चारयतीत्यर्थः।

स्वन् - अवतंसने। स्वनयति। अवतंसयति। शब्दे तु भिन्न। स्वानयति।

जन् - प्रादुर्भावे। जनयति। उत्पादयति।

वन् - हिंसायाम्। वनयति। हिंसयति।

वन् - अनिदि्र्दष्टकर्म्मा। उपसृष्टो नित्यमित्। अनुपसृष्टौ विकल्पमित्। संवनयति। उपवनयति। वनयति। वानयति।

क्रपं - कृपायां गतौ। क्रपयति।

त्रप् - लज्जायाम्। त्रपयति।

क्षम् - सहने। क्षमयति

भ्रम - अनवस्थाने। भ्रमयति। भ्रामयतीत्यपि दृश्यते।

श्रम् - तपसि खेदे च। श्रमयति। उपसर्गस्य द्योतकत्वात् खेदापनोदार्थस्य नास्ति मित्वं, ततो विश्रामयतीत्यादय प्रयोगा उपपद्यन्ते। नामज-धातु प्रयोगास्त्वेवं विधा इत्यपरे।

तम् - कांक्षायाम्। तमयति।

दम् - पशमकरणे। दमयति।

शम् - पशमभवने। शमयति। आलोचनार्थस्तु न मित्। निशागम तदुत्पत्तिम्। आलोचयेत्यर्थः। दर्शनेऽपि न मित्। निशामयति रूपम्। दर्शनालोचनाभ्या–न्यत्र तु सर्वत्रेष्यते मित्वम्। प्रणयिनो निशमय्य वधूः कथाः। श्रावयित्वेत्यर्थः।

क्लम् - लानौ। क्लमयति। अपक्लमयति।

गम् - गतौ। गमयति। अध्येतेः स्मरणकर्मणः कारितक प्रयोगो नास्तीति तत्स्थाने गमिः प्रयुज्यते। अधिगमयति। नित्यमित्।

---

1 क्षीरस्वामी।

रम् - क्रीडायाम्। रमयति। उपरमयति। विरमयति। विरामयतीत्यादयस्तु नामधातुप्रयोगाः।

नम् - प्रह्वत्वे शब्दे च। अस्योपसृष्टस्य नित्यं मित्वमनुपसर्गस्य विकल्पेन। उपनयति। विनमयति। प्रणमयति। अन्यत्र तु नमयति। नामयति।

वम् - उद्गिरणे। अस्याप्युपसृष्टस्य नित्यमनुपसर्गस्य विकल्पेन मित्वम् आवमयति। उद्वमयति। अन्यत्र वमयति। वामयति।

द्रम् - गतौ। द्रमयति।

सम् - अवैकल्ये। समयति।

स्तम् - अवैकल्ये। स्तमयति

स्यम् - शब्दे। स्यमयति। वितर्कार्थो न मित्। स्यामयति।

छम् - अदने। छमयति।

जम् - अदने। जमयति।

झम् - अदने। झमयति। चमस्त्वदनार्थस्य नास्ति मित्त्वम्। आचामयति। आचमयतीति त्वप प्रयोगः।

क्रम् - पादविक्षेपादिषु। क्रमयति। विक्रमयति। आक्रमयति। संक्रमयति। निश्क्रमयति। प्रक्रमयति। पराक्रमयति। अपक्रमयति। अनुक्रमयति। अतिक्रमयति। उत्क्रमयति। अभिक्रमयति। परिक्रमयति। उपक्रमयति। आक्रामयतीत्यपप्रयोगः।

यम् - परिवेष्टने। यमयति चन्द्रम। परिवेष्टते इत्यर्थः। अत्र केचिदाहुः- यमः केवलं परिवेषणेऽर्थे मित्वं नास्ति। यामयति ब्राह्मणान्। भोजयतीत्यर्थः। अन्यत्र तु सर्वत्र मित्। यमयति। उपरमयतीत्यर्थः। नियमयति। संयमयति। उद्यमयति। यत्तु द्राघयति व्यापारयति वेत्यर्थे आयामयतीति दृश्यते तन्नाम धातोर्नेयम। अन्ये तु परिवेषणमात्रे मित्वमिच्छन्ति। यमयति ब्राह्मणान्। अन्यत्र तु नास्त्येवास्य मित्वम्। नियामको नियामयति। आयामयति। ये तु नियमयतीत्यादयः प्रयोगास्ते नामधातोर्नेयाः।

त्वर - संभ्रमे। त्वरयति। वित्वरयति।

ज्वर - रोगे। ज्वरयति। विज्वरयति। संज्वरयति।

ज्वल् - दीप्तौ। अस्योपसृष्टस्य नित्यं मित्वमनुपसर्गस्य विकल्पेन। प्रज्वलयति। उज्ज्वलयति। अन्यत्र ज्वलयति। ज्वालयति।

ह्वल् - चलनं

**ह्न् - ह्वलम्हलयोरूपसृष्टयोर्नित्यं मित्वमनुपसर्गयोर्विकल्पेन।** प्रह्वलयति। प्रह्नलयति। अन्यत्र ह्वलयति। ह्वालयति। ह्नलयति ह्नालयति।

चल् - कम्पने। चलयति शाखाम्। संचलयति। विचलयति। कम्पनादन्यत्र भिन्न। शीलं चालयति। संचालयति। विचालयति। अन्यथा करोति हरति क्षिपति वा।

दल् - विशरणे। विदलयति। विदारणे तु न मित्। विदालयति। उद्दालयति।

वल् - संवरणे। वलयति। संवरयति।

बल् - प्राणने। बलयति। प्राणवन्तं करोति।

स्खल् - संचलने। स्खलयति। प्रस्खलयति।

प्रस - विसतारे। प्रसयति। संप्रसयति।

क्नस् - ह्वरणदीप्त्योः। ह्वरणं कौटिल्यम्। क्लसयति। कुटिलयति दीपयति वा। केचित्तु क्लसः स्थाने स्नस् निरसने धातुं पठन्ति स्नसयति। निरासयतीत्यर्थः।

चह - परिकल्कने। परिकल्कनं दम्भः शाठ्यञ्च। चहयति।

रह - त्यागे। रहयति। विरहयति। कारितप्रयोगादन्यत्र क्वचिन्नास्ति मित्वम्। राहुः।

अथ दशैते स्मरादयः कृत्रिमा धातवः पठ्यन्ते। उपधायां हस्वः स्वरः प्रयुज्यत इत्यतो मित्वमाचक्षते। मितामुपधास्थाने दीर्घस्वर विरोधित्वात्। स्मरयति दरयति। नरयति जरयति। पचयति। ज्ञपयति। श्रपयति। स्नपयति। ग्लपयति।

अथ रचादयो द्वात्रिंशदन्येऽपि मितः पठ्यन्ते। तेषामप्युपधायामकारागम प्रतिषेधात्। रच प्रतियत्ने। रचयति। लज प्रकाशने। लजयति। पट, वट, ग्रन्थे। पटयति। तन्तूनोतप्रोतं संयोजयति। वटयति। तन्तुं रश्मिं वा परिनिष्पादयति। वट धातुः प्रागप्युक्तः, सह इकाराकारान्तत्वास्थानाय स्वार्थकारित विषयताख्यानाय च पुनरूक्तः। शठ, श्वठ सम्यगवभाषणे। शठयति, श्वठयति। गण संख्याने। गणयति। व्रण गात्रविचूर्णने व्रणयति। पत गतौ। पतयति। कथ वाक्यप्रबन्धे। कथयति। श्रथ दौर्वल्ये। श्रथयति।

गद - देवशब्दे। गदयति। पद गतौ। पदयते। स्तन देवशब्दे। स्तनयति। ध्वन शब्दे। ध्वनयति। क्षिप् - प्रेरणे। क्षिपयति। क्षिप्रं करोति क्षिपयतीति नामधातुप्रयोगे। वर

ईप्सायाम्। वरयति। स्वर आक्षेपे। स्वरयति। कल गतौ संख्याने च। कलयति। पष गतौ। पषयति। रस आस्वादनस्नेहनयोः। रसयति। वस निवासे। वसयति। मह पूजायाम्। महयति। अथोकारमध्याः। सुख सुखने। सुखयति। पुट संसर्गे। पुटयति। कुण गुण आमन्त्रणे केतने च। कुणयति। गुणयति। कुह विस्मापने। कुहयति। अथ ऋ मध्याः। मृग अन्वेषणे। मृगयते। कृप दौर्वल्ये। कृपयति। ग्रह। गृहयते। स्पृह - ईप्सायाम्। स्पृहयति। त एते संप्रति द्वात्रिंशत्। दश कृत्रिमाः अष्टसप्ततिः सर्वसिद्धा। इति विंशशतं मितो भवन्ति। एषां णिच् संनियोगेन प्राप्तोऽयमुपधायामकारागमः प्रतिषिध्यते। शाकटायनस्तु स्वादीनां केषांचिदकारान्तत्व निबन्धनमापमिच्छतीत्युक्तं प्राक्।

अथ द्वादशसु स्थानेषु विशेषविधयो भवन्ति-

**णिचि सिध्यतेरपारलौकिकविषयतायामुपधेकारस्थाने आकारः**[1]/24/

सिध - संराद्धौ यविकरणः। प्राग्वदकारागमे कृते धात्विकारस्याप्याकारः। ततो दीर्घः सन्धिफलम्। साधयत्यन्नम्। साधयति स्वार्थम्। पारलौकिकार्थनिष्पादने तु - सेधयति[2] तापसं तपः। तत्वं निश्चिन्वन्तं तापसं प्रवर्तयतीत्यर्थः।

**णिचि स्फुरतेरूपधोकारस्थाने आकारो विकल्पेन**[3]/25/

स्फुर स्फुरणे। प्राग्वदकारागमे कृते धातूकारस्याप्यकारः। ततो दीर्घः सन्धिफलम्। स्फारयति। पक्षे सामान्यनियमात् स्फोरयति।

**णिचि गुहदुषोरूपधोकारस्य दीर्घः स्याच्चित्त विकारे तु दुषो विकल्पेन**[4]/26/

गुह संवरणे। अविकरणोभयभाषः। दुष वैकल्ये। य विकरणः परस्मैभाषः। अकारागमप्राप्तौ तदपवादेनोकारागमो विधीयते। दीर्घः सन्धिफलम्। गूहयति। दूषयति। चित्तविकारे तु द्वैविध्यम्। दूषयति दोषयति वा चित्तं कामः।

**णिचि हेडतेर्वेष्टने सत उपधास्वरस्थाने इकारः**/27/

हेड अनादरे। अविकरणात्मने भाषः। तस्य वेष्टनेऽर्थे वृत्तौ सन्ध्यक्षरादकारो निवर्तते। हिडयति। अनादरे तु हेडयतीत्येव[5]।

---

1 सिध्यतेरपारलाकिके 6/1/49/

2 पुगन्तलघूपधस्य च 7/3/86/

3 चिस्फुरोर्णौ 6/1/54/ पुगन्तलघु 7/3/86/

4 ऊदुपधाया गोहः 6/4/89/ दोषो णौ 6/4/90/ वा चित्तविरागे 6/4/91

5 मितां ह्रस्वः 6/4/92/ अनादरे तु मित्वाभावान्न ह्रस्वः।

इत्थं प्रवर्तनेकार समवधाने व्यंजनान्त धातूनामुक्ताः स्वरनिबन्धना विशेषाः। अथ व्यंजन निबन्धना अपि केचिद्विशेषाः प्रदर्श्यन्ते -

**णिचि हन्तेः स्थाने घात्**[1]/28/

हन् हिंसागत्योः। तस्य स्वरात् प्रागकारागमः सामान्यवत्। विशेषस्तु हकारात् प्राग् गकारागमः- इत्येकः। त प्रकृतिकादस्मान्नकारान्नासिकागुणनिवृत्तिश्चेति द्वितीयः। तेनासौ णिजन्तत्वे घातिरूपेण संपद्यते। घातयति।

**णिच्यगतौ शदः स्थाने शात्**[2]/29/

शद् विशीर्णतायाम्। तस्य स्वरात् प्रागकारागमः सामान्यवत्। विशेषस्तु नादगुणयोगिनि दकारे श्वासगुणयोगात् तकारभावः। शातयति। गतौ तु न विशेषः। गाः शादयति गोविन्दः।

**णिच्याखेटके रंजेर्नलोपः**[3]/30/

रंजन रागे। धातुस्थाः स्ववर्ग्योदयाः सर्व एव पंचमा नकारत्वेन व्यवह्रियन्ते। आरजयति मृगान्। आखेटकं मृगयारमणम् ततोऽन्यत्र रंजयतीत्येव।

**णिचि स्फायः स्फाव**[4]/31/

**स्फाय् वृद्धौ। वकारागमो यकारनिवृत्तिश्च विशेषः। स्फावयति। णिचिक्ष्मायः क्ष्माप्**[5]/32/

**क्ष्माय् विधूनने। पकारागमो यकारनिवृत्तिश्च विशेषः क्ष्मापयति। णिचि क्नूयः क्नोप्**[6]/33/

क्नूय् शब्दे उन्दे च। पकारागमो यकारनिवृत्तिरूकारयोराद्यस्याकारेण परिवृत्तिश्च विशेषः। क्नोपयति।

**णिचि रूहो रोप् स्याद्विकल्पेन**[7]/34/

---

1 अत उपधायाः 7/2/116/ हनस्तो चिण्णलोः 7/3/32/ हो हन्तेर्ञ्णिन्नेषु 7/3/54

2 अत उपधायाः 7/2/116/ शदेरगतौ तः 7/3/42/

3 रंजेर्णौ मृगरमणे नलोपो वक्तव्यः(वा.4067)

4 स्फायो वः 7/3/41/

5 अर्त्तिह्रब्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (7-3-36)

6 अर्त्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (7-3-36)

7 रूहः पोऽन्यतरस्याम् 7/3/43/

रूह वीजजन्मनि प्रादुर्भावे च। स्वरात् प्रागकारागमः सामान्यवत्। पकारागमौ हकारनिवृत्तिश्च विशेषः। रोपयति। आरोपयति। अध्यारोपयति। पक्षे सामान्यविधिः। रोहयति। आरोहयति। अध्यारोहयति।

**णिचि मृजो मार्ज्भावः**[1]/35/

मृज शुद्धौ। मृज शौचालंकारयोः। ऋकारात् प्रागकारद्वयागमः। मार्जयति।

**णिचि धातोरूपधायामृकार स्थाने ईरभावः**[2]/35/

ऋकारस्थस्य ऋकारद्वयस्य सम्बन्धिस्वरभक्तिद्वयमिकारद्वय रूपेण परिवर्त्त्य पृथग् भवति। रेफद्वयं तु सह न श्रूयते इत्येक निवृत्तिः। कृत् संशब्दने। कीर्तयति।

इति प्रकृतिविकारः।

## धातुसंज्ञा

**णिजन्तस्तत्तत्क्रियाप्रवर्तनार्थत्वाद्धातुः**[3]

क्रियावचनो हि शब्दभागो धातुरित्युच्यते। प्रवर्तनापि क्रिया भवति। तदर्थोऽप्ययं णिच् पार्थक्येन न प्रयुज्यते इति न णिज्मात्रस्य धातुत्वम्। णिजन्तस्तु णिच् प्रकृतिभूत धात्वर्थक्रिया विषयक प्रवर्तनार्थो भवति धातुः। तस्मात् सामान्यलक्षणोऽकारो विकरणः।

## उपग्रह

**सकर्मकक्रियाकर्मणः प्रयोजकत्वविवक्षया कृते णिचि तदन्तादात्मनेपदं स्यान्नत्वाध्याने**[4]/1

सर्व एव कर्मोद्दिष्टफलः सकर्मको धातुस्तत्तत्क्रियोपसर्जन प्रवर्तनार्थो भवति। तत्र धात्वर्थ प्रवर्तनां प्रति उपसर्जनभूतायाः क्रियाया यः कर्ता तस्यैव तत्प्रवर्तनासापेक्षं कर्मत्वं नाम। अत एव जहल्लक्षणया यत्र सा प्रवर्तना न विवक्ष्यते उपसर्जन भूता तु सा प्रयोज्यक्रिया विवक्ष्यते तत्र तस्य कर्मणः कर्तृत्वमेवोपपद्यते। तस्यां क्रियायां तस्य स्वतन्त्रत्वात्। यथा पचिरिह विक्लित्युपसर्जने विक्लेदनमाह।तत्र यदा कर्मणः सौकर्यातिशय प्रतिपादनाय कर्तृव्यापारो न विवक्ष्यते तदा निवृत्तप्रेषणं कर्म

---

1 मृजेर्वृद्धिः 7/2/114

2 ऋत इद्धातोः 7/1/100/ उरण् रपरः 1/1/51

3 सनाद्यन्ता धातवः (3-1-32)

4 णेरणौ यत्कर्म णौ चेत्स कर्त्ताऽनाध्याने (1-3-67)

स्वक्रियाऽवयवे स्थितं निवर्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते। धातुरपि तदव्यापारमात्रे तदा वर्तते। अकर्मिका च सा क्रिया भवतीति भावे कर्तरि च ततो विभक्तयः प्रवर्तन्ते। तत्र कर्मस्था यदुद्देशेन कारक व्यापारः सा प्रधानक्रिया यत्र समवैति कर्मणि वा कर्तरि वा तत्स्थोधात्वर्थ उच्यते। यथा पचेर्विक्लितिः भिदेर्द्विधाभवनं च कर्मस्थे। गमेर्देशान्तरप्राप्तितश्चिन्तेर्ज्ञानप्राप्तिर्वा कर्तृस्थे। धात्वर्थोऽपि द्वेधा- भावः क्रिया च। अपरिस्यन्दरूपो भावः परिस्पन्दरूपस्तु क्रिया। कर्मस्थभावकानां कर्मस्थ क्रियाणां च कर्त्ता कर्मवद्विभक्तिप्रक्रियां भजते, कर्तृस्थभावकानां कर्तृस्थक्रियाणां च कर्म कर्तृ प्रयोगो न भवतीत्यनुसन्धेयम्। यथा पचत्योदनं देवदत्त इत्यत्र प्रवर्तनामविवक्षमाणः प्रयुंक्ते - पच्यते ओदनेन। पच्यते ओदन इति। अत्र कर्मस्थो भावो विक्लित्तिर्नाम। विक्लित्तेरोदनस्थत्वात्। एवं भिनत्ति काष्ठं देवदत्त इत्यत्रापि प्रवर्तना विवक्षायां प्रयुङ्क्ते - भिद्यते काष्ठेन। भिद्यते काष्ठमिति। तत्र कर्मस्थाक्रिया द्विधाभवनं नाम। द्विधाभावस्य काष्ठस्थत्वात्। (अपरिस्पन्दन साधनसाध्यो धात्वर्थो भावः सपरिस्यन्दन साधन साध्यस्तु धात्वर्थः। क्रिया)

हरदत्तस्त्वाह - परिस्पन्दन एव वाक्यस्य।

यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तन्दुलेषु यथा वा भिन्नेषु काष्ठेषु तत्र कर्मस्था क्रिया नेतरत्र। न हि पक्वापक्वतन्दुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलभ्यते तस्मान्नेह कर्मणः कर्तृत्वविवक्षा भवति। यत्तुपश्यति भवः, आरोहति हस्ती, अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति वेत्युदाहरन्ति कैयटादयः तत्साहसमात्रम्। लोके तावत् पश्यतीत्युक्ते दृश्यते इत्यर्थानवबोधात्, एवं विधानां कर्मकर्तृत्वे सूत्रभाष्यादि - प्रमाणगन्धानुपलम्भाच्च। अधिगच्छति शास्त्रार्थ इत्यत्र तु शास्त्रमर्थते इत्येवं व्याख्येयम् धनार्थो गच्छतीत्यादिवत्। गच्छति ग्रामम्। चिन्तयत्यर्थम्। मासमास्ते। सोऽयमेकः कर्मकर्तृप्रयोग प्रकारः प्रवर्तनांश परित्यागादुपपन्नः। अत्रात्मनेपदं कर्मवद्भावश्च भवतीत्यन्यत्रोक्तम्।

अथान्योऽप्यस्ति कर्मकर्तृप्रकारः प्रवर्तनाविशेष संयोगादुपपन्नः। स इह विषयः। अस्ति तावद् बह्वयो विधा धात्वर्थो प्रवर्तन्ते। तथा हि-

1- कर्मव्यापारकर्तृव्यापाराभ्यां समुचिताभ्यां कर्मणि फलसिद्धिः।

2- कर्तृव्यापारदुपजायमान व्यापारेण कर्मणा कर्मणि फलसिद्धिः।

3- कर्तृव्यापारादुपजायमानव्यापारेण कर्मणि कर्तरि फलसिद्धिः।

4- निर्व्यापारे कर्मणि कर्तृव्यापारादंजसा कर्मणि फलसिद्धिः।

5- निर्व्यापारे कर्मणि कर्तृव्यापारादंजसा कर्तरि फलसिद्धिः।

6- कर्तृव्यापारात् कर्मसिद्धिः।

7- कर्तृव्यापारात् कर्तरि फलसिद्धिः।

8- मिश्रित व्यवहारश्चेति।

9- कर्तृस्थ कर्म चेति।

अयं भावः - यदुद्देशेन कारकव्यापारस्तत्फलम्। तत्रैदं द्वेधं दृश्यते- अस्तीदं कर्मस्थं भवेत्, अस्तीदं कर्तृस्थम्। उभयमपि द्वेधा-स्वव्यापारसाध्यं च परव्यापारसाध्यं चेति। यदि चित्तवत्कर्मणः फलेनाभिषंगार्थ कर्तृव्यापारोऽनुवर्तते तर्हि भवति नाम क्वचिदिदं कर्मपि तथा चेष्टते यथा स्वस्मिन् फलजनकः कर्तृव्यापारो निष्प्रतिबन्धं प्रवर्तेत। यथा हस्तिनं सिंचति हस्तिपकः। तत्र हस्ती हस्तिपकाभिप्रायानुसारेण तथा तथा चेष्टते यथाऽस्य सिंचनव्यापारः फलजननानुकूलः संपद्येत। बालकमाभरणेनालंकरोति एवमन्यत्रान्यत्र। तत्रावश्यं कर्तृव्यापारं प्रति कर्मणः प्रयोजकत्वं शक्यं वक्तुम्। हस्तिपकाय स्वाच्छन्द्यदानमनपेक्षमाणे हस्तिनि हस्तिपकव्यापारासंभवात्। तथा च तादृशं कर्मभूतस्य हस्तिनः प्रयोजकत्वं प्रत्यावेदयितुं यत्र णिच् प्रयुज्यते तत्रासौ कर्मकर्तृ प्रयोगो भवति। ईदृशे च कर्मकर्तृप्रयोगे नित्यमात्मनेपदं भवत्येवमिहानुज्ञायते। उपसिचन्ति हस्तिनं हस्तिपकाः। उपसेचयते हस्ती। एकस्यामेव तस्यामुपसेचन-क्रियायां विषयीभूते हस्तिनि कर्मत्वं प्रयोजकत्वं चोपपद्यते, स यदि कर्मत्वं विवक्षते तदोपसिचन्तीत्याह। अथ प्रयोजकत्वं चेत्तर्हि स उपसेचयते-इत्याह। विवक्षा भिद्यते न क्रिया भिद्यते। एवं णिज्मात्रमतिरिच्यते न धातुर्भिद्यते। समाने धातो समानायामेव क्रियायां णिज्मात्रमतिरिच्यते न धातुर्भिद्यते। समाने धातो समाने धातौ समानायामेव क्रियायां णिजुत्पत्तावत्रात्मनेपद विधानस्येष्टत्वात्। इत्येकं स्थानम्/ 1/

अथान्यत्र कर्मणः फलेनाभिषंगार्थ यत्र कर्तृव्यापारोऽनुवर्तते तत्रेदं फ लं यदि नान्तरेण कर्मव्यापारं कर्मणि शक्यमुद्भावयितुं तदा कर्मणि तत्फलजननानुकूलः स व्यापार एवानेन कर्त्रा प्रत्युत्पाद्यते न फलम्। प्रत्युत्पन्नेन च तेन कर्मव्यापारेण नान्तरीयकतया कश्चिदापूर्वोऽतिशयः कर्मणि संभवति फलं नाम। यथा तन्दुलं पचति देवदतः। अत्र तन्दुलस्यौदनभावः फलम्। न चैतच्छक्यमन्तरेण तन्दुलविक्लित्तिरूपं

व्यापारमित्यसौ कर्ता तथा चेष्टते यथा तन्दुलानि[1]।परिस्पन्दयुक्तानि भूत्वा विक्लिद्येरन्। देवदत्तव्यापारेण सव्यापारं तन्दुलं भूयसा कालेनौदनभावाय संपद्यते। ततः क्रियानिवृत्तिः। ओदनत्वं तु फलं चिरायोत्तरकालेऽपि तिष्ठति। तस्मात् तत्फलं क्रियातोऽतिरिच्यते। क्वचित्त्वपरिष्यन्दमेवेदं कर्म गृहीतव्यापारं सत् फलेनानुषज्जते। यथा घटं पचति देवदत्तः। न त्वत्र घटे तन्दुलवत् परिष्पन्दः। न च निर्व्यापारः। फलव्यापारयोः सामानाधिकरण्यसापेक्षात्वादन्तरेण व्यापारं फलानुत्पत्तेः। क्रिययोः प्रयोज्यप्रयोजकभावस्तु संयोगविशेषसापेक्षो न विशिष्य समवायमपेक्षते इति लोके दृष्टम्। तथा चैवं विधो धातुः कर्मस्थभावकः कर्मस्थक्रियो वा वक्तव्यः। ईदृशेरपि धातुभिः कर्मकर्तृप्रक्रिया संपद्यते। तथा हि स यदि कर्मव्यापारो न स्यान्नेव तदा कर्मणि फल कर्त्तुरभीष्टं संपद्येत। तस्मादवश्यमिहोभयोः प्रयोज्यप्रयोजक–भावोऽभ्युपगम्यते-कर्त्तुश्च कर्मणश्च। तत्रेदं त्रैविध्यं विवक्षावशादुपपद्यते यद्यूभे अपि ते प्रयोजकत्वे नापेक्ष्यते तदा प्रवर्तनानिवृत्या पूर्वोक्तः कर्मकर्तृप्रयोगः। पच्यते तन्दुलम्। अथ धात्वर्थभूतं मुख्यं कर्तुः प्रयोजकत्वं विवक्ष्यते तदा तन्दुलं पचति देवदतः । अथ धात्वर्थाद्बहिर्भूतं गौणं कर्मणः प्रयोजकत्वमपेक्ष्यते तदा णिजुत्पत्या पाचयते तन्दुलम्। अत्रेदमात्मनेपदं नियम्यते। यत्र तु कर्म्मातिरिक्तस्य ('कर्मतिरिक्तस्य' इति मूले) कस्यचित् प्रयोजकत्वं स्यात्तदा तु क्रियान्तरत्वात् प्रयोजकस्य मुख्यत्वाच्च नात्मनेपद नियमः। पाचयति पाचयते वा तन्दुलं देवदत्तेन यज्ञदत्तः। एवं भिद्यते काष्ठम्। काष्ठं भिनत्ति सः। भेद्यते काष्ठम्। लूयते केदारः। लुनाति केदारमन्यः। लावयते केदारः स्वयमेव। इत्यादिः। इति द्वितीयं स्थानम्/2/

अथ क्वचिदसौ कर्ता स्वस्यैव फलेनाभिषंगार्थ व्याप्रियमाणः परस्मिन् द्रव्ये क्रियामुत्पादयति, तत्फलस्य परव्यापारसापेक्षत्वात्। उत्पन्नेन च परस्य कर्मणः करणस्य वा व्यापारेण कर्तरि फलं संपद्यते। तत्रैतस्य कर्मणो व्यापारलाभाय यथा कर्तुर्मुख्यं प्रयोजकत्वं दृश्यते एवममुष्य कर्तु फलाभिषंगाय कर्मणोऽपि मुख्यमेव प्रयोजकत्वमुपपद्यते न विवक्षाधीनम्। तस्माद् धात्वर्थभूतया प्रवर्तनयैव तत्रोभयथापि प्रयोग निर्वाह इति न तत्र णिच् प्रयोगः। उष्णीषं परिवेष्टते। वस्त्रामावृणुते।शाटी प्रोर्णुते। इत्यादि। अत्र कर्मकर्तृप्रयोगाभावः। येषामत्रापीष्यते तेषामिदं तृतीयं स्थानम्। परिवेष्टयते। आवश्यते। प्रोर्णावयते शाटी/3/

अथ क्वचित् कर्तृव्यापारादेवांजसा कर्मणि फलमुत्पद्यते कर्तरि वा न तदर्थ कर्मणोऽपिव्यापारोऽपेक्ष्यते। स यदि कर्तुर्व्यापारो अपरिस्पन्दरूपस्तदायं धातुः

[1] 'तण्डुलश्च कृमिघ्नश्च' इति अमरकोशात् (2-4-906) पुल्लिंग एवायम्।

कर्तृस्थभावक उच्यते,सपरिस्पन्दत्वे तु कर्तृस्थक्रिय इति। तत्रायमिष्यते कर्मकर्तृप्रयोगः। केनचिद्धर्मेण कर्मणि प्रयोजकत्वारोपात्। कर्मणि फलसिद्धि यथा प्रांगणभूमिं लिम्पति स्त्री। सा च भूमिर्लेपयते। वालिशं भृत्यं हन्ति स्वामी। स च भृत्यो घातयते। कर्तरि तु फलं यथा-जनाः पश्यन्ति राजानम् स च राजा दर्शयते। अध्वानं गच्छन्ति पथिकाः स चाध्वा भूरि गमयते। आरोहन्ति हस्तिनं हस्तिपकाः। स च आरोह्ययते हस्ती। रुहिः कर्तृस्थक्रियो दृशिः कर्तृस्थभावकः। उपरिदेशप्राप्तिः प्रतिपत्तिश्च कर्तरि समवेता (सवेतः इति मूले) तदेतत् चतुर्थं पंचमं च स्थानम् 4,5

अथ क्वचित्कर्तृव्यापारात् कर्म्मेवोत्पद्यते न तु कर्मणि फलान्तरम्। कर्तृव्यापारात् प्राक् तस्य कर्मणो सत्वात्। अयमर्थः। विक्लित्तिं गतस्य तन्दुलस्यौदनमिति संज्ञा क्रियते। तेनासौ द्विकर्मकः प्रयोगो भवति शुद्धविकृतभेदेन कर्मणो द्वैविध्यात्। तन्दुलमोदनं पचतीत्युक्ते शुद्धतन्दुलं विक्लिन्नतन्दुलं यथा संपद्येत तथा पचतीत्यर्थः। पाकेन विक्लित्तिं करोतीति तत्सम्बन्धाद्विशिष्टे तदुपचारः। विक्लिन्नं करोतीति। तथा च विक्लन्नमेव संपद्यते न विक्लिन्ने फलान्तरम्। नात्र कर्मकर्तृप्रयोगः। येषान्त्वत्रापीष्यते तेषामिदं षष्ठं स्थानम्। ओदनं पाचयते। शाटकं वाययते /6/

यस्तु नित्याकर्मको धातुस्तस्य कर्म्माभावादेव कर्मकर्तृप्रयोगाभावः। अथ मिश्रितव्यवहारे प्रवर्त्तनाद्वयीगर्भितार्थत्वाद् द्विकर्मके प्रयोगेऽपि यथेच्छं कर्मकर्तृप्रयोगे णिजन्तः। अजां ग्रामं नयति। अजां ग्रामं नाययते। तदिमं सप्तमं स्थानम् /7/

कर्तृस्थे तु कर्मणि फलसिद्धिर्नास्तीति कर्मकर्तृ प्रयोगाभावः। अनभिधानात्। अग्रे चरणं ददाति, मार्गे दृष्टिं ददाति। वाचं ब्रूते। इत्यादि।

तदित्थं सप्तस्थानोऽयमात्मनेपदविधिः। अत्र यं प्रवर्तना णिचमाश्रित्यात्मनेपदं चिकीर्षितं तत्प्रकृतिभागस्य तस्मिन् घटितत्वादण्यन्तत्वं (तस्मिनघटितत्वाद इति मूले)नेयम्। तेन तस्य स्वार्थिकणिजन्तत्वेऽपि अण्यन्तत्वात् तदीयकर्मणः कर्तृत्वे ण्यन्तादात्मने (पदं)भवति। गणयति गणं गोपालः। गणयते गणः। संख्या निमित्तकः परिच्छेदो ज्ञानविशेषः कर्तरि वर्तते। ततः कर्तृस्थभावकोऽयम्। परे त्वाहुः भागशो व्यवस्थापनेऽपि गणिर्वर्तते। भागशोऽवतिष्ठमानं गणं गोपालकोऽवस्थापयति। तेन कर्मस्थ भावकोऽयम्। प्रवर्तनावियोगनिबन्धना तु कर्मकर्तृप्रक्रिया भावक्रिययोः कर्मस्थत्व एवोक्ता। इयं तु प्रवर्तना संप्रयोगनिबन्धना कर्मकर्तृप्रक्रिया भावक्रिययोः कर्तृस्थत्वे कर्मस्थत्वे चेष्यते इत्यपि द्रष्टव्यम्।

अत्र कर्मकर्तृप्रयोगे स्वयमेवेति सर्वत्रानुषंगयन्ति तत् कर्त्रन्तर व्युदासपरं न तु तद्वाक्यांगम्। कर्मणः कर्तृत्वविवक्षायां करणत्वाविक्षणात्। आत्मनस्तु कर्मत्वे प्रतिषेधो

द्रष्टव्यः। हन्त्यात्मानम्। घातयत्यात्मानमयम्। अन्यदत्राण्यन्ते कर्म, अन्यो ण्यन्तस्य कर्ता। द्वावात्मानौ-अन्तरात्मा च शरीरात्मा च। अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति। अत एव पश्यन्ति भृत्या राजानम्। दर्शयते राजाऽप्यात्मानमित्यात्म शब्द प्रयोगे नात्मनेपदनियमः। समानक्रिये कर्मणः कर्तृत्वे तत्प्रवृत्तेः। इह त्वेकत्र भृत्यः कर्त्ता, अन्यत्रान्तरात्मा राजा। उभयत्र च शरीरात्मा राजा कर्म्मेति दिक्। यदा तु स्वतात्पर्य्येणैव प्रयोक्तुमिष्यते तदा भवन्त्येव। ओदनं पाचयते आत्मानं देवदत्तेन। शाटी वाययते आत्मानं तन्तुवायेन। यत्तु कर्म्मान्तर सद्भावे न कर्मकर्तृप्रक्रिया प्रवर्तते इति कैयटोऽभिप्रैति तच्चिन्त्यम्। स्मरयत्येनं वनगुल्म इति भाष्य प्रयोग विरोधात्। निर्निमित्तं कर्मविरोधे प्रमाणाभावाच्च।

1- **अथाध्यानमुत्कण्ठापूर्वकं स्मरणं तत्रायं प्रतिषिध्यते-स्मरति वनगुल्मस्य कोकिलः**। स्मरयत्येनं वनगुल्मः। यत्तु वनगुल्मस्येति शेषषण्ठ्या अनुदाहरणत्वं कैयटो ब्रूते तत्साहसमात्रम्। वस्तुसत्तया कर्मणोऽपेक्षिततत्वात्। न तु कर्मसंज्ञक एवेह गृह्यते इत्यत्राभिनिवेशः साधीयान्। भाष्य व्यामोहकल्पनस्य दुरभिनिवेशत्वात्।

आरोहन्ति हस्तिनं हस्तिपकाः। आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान्। इह तु नात्मेपदम्। कर्म्मान्तर सद्भावेन क्रियान्तरत्वात्।

2- **भीस्म्योर्ण्यन्तयोरात्मनेपदं स्याद् भयस्मयो चेत्प्रयोजकात्**[1] /

जटिलो भीषयते। मुण्डो भीषयते। जटिलो विस्मापयते। मुण्डो विस्मापयते। प्रयोजकातन्यतस्तु भयस्मये नेदम्। कुंचिकयैनं भाययति। रूपेण विस्माययति। भयस्य कुंचिका, स्मयस्य रूपं हेतुर्न कर्ता

3- **गृधिवञ्चयोर्ण्यन्तयोरात्मनेपदं स्यात् प्रलम्भने**[2] /

प्रलम्भनें प्रतारणं विसंवादनं मिथ्याफलाख्यानमिति यावत्। माणवकं गर्द्धयते। वालिशं वञ्चयते। प्रलम्भनादन्यत्र तु परस्मैपदम्। श्वानं गर्द्धयति। गर्द्धनमस्योत्पादयति। गर्द्धनमभिकांक्षा। अहिं वञ्चयति परिहरति।

4- **लियो ण्यन्तादात्मनेपदं स्यात् संमानने शालीनीकरणे प्रलम्भने च**[3]।

---

1 भीस्म्योर्हेतुभये 1/3/68

2 गृधिवंच्योः प्रलम्भने 1/3/69/

3 लियः संमाननशालिनीकरणयोश्च 1/3/70/

संमाननं पूजनम्। शालीनीकरणं न्यग्भावनम्। लीयतेलिनात्योरविशेषादयं विधिः। जटाभिरालापयते=पूजां समधिगच्छति। श्येनो वर्त्तिकामुल्लापयते। न्यग्भावयति। कस्त्वामुल्लापयते। विसंवादयति। अन्यत्र परस्मैपदम्। वालकमुल्लापयति। विकल्पेनात्वम्।

5- **करोतेर्ण्यन्तान्मिथ्योपपदादात्मनेपदं स्यादभ्यासे**[1] /

अभ्यासः पुनः पुनः करणमावृत्तिः। स हि पदं मिथ्या कारयते। यः सापचारं स्वरादिदुष्टमसकृदुच्चारयति। अभ्यास इति तमर्थमाह येनान्यथाभाविनस्यार्थस्य प्रवृतिर्दृढतामुपैति न तु पौनः पुन्ये एवाग्रहः। शास्त्रं मिथ्याकारयते। यो अन्यथा तदर्थ कृत्वा व्यतिव्यस्तयति। एकवारमेव तु कदाचिदन्यथाकरणे नैष विधिः। पदं मिथ्या कारयति। यथावत्करणेऽपि न। पदं सुष्ठु कारयति।

6- **शेषात्तु ण्यन्तादात्मनेपदं स्यात् कर्त्रभिप्राये क्रियाफले**[2] / विकल्पेन तूपपदात् कर्त्रभिप्रायत्वप्रतीतौ यमर्थमुद्दिश्य क्रियायाः प्रवृतिस्तेन फलेन यदि कर्तुरूपयोग इष्यते तदेवेदमात्मनेपदं भवति। यदा तु परस्योपयोगार्थः परः प्रवर्तते तदा परस्मैपदमेव। तेनोभयपदसिद्धिः। कटं कारयते कारयितुः कटेनार्थश्चेत्। ओदनं पाचयते। पाचयिता यद्योदनं तमुपभोक्ष्यते। कटस्यौदनस्य चात्मार्थत्वमात्मनेपद प्रयोगेण प्रत्याय्यते। परार्थत्व प्रतिपिपादयिषायां तु कटं कारयति भृत्यः। ओदनं पाचयंति पाकाधिकारी। लीभिस्मि कृ गृधिवंचिभिन्नेषु ण्यन्तेषु सर्वत्रायं नियमः साधारणः। यदि तु कर्त्रभिप्रायत्वं क्रियाफलस्य केनचिदन्येनोपपदेन प्रत्याय्ययते तदा तु शक्यते यथेच्छं प्रयोक्तुमात्मनेपदेन परस्मैपदेन वा आत्मनेपदार्थस्य कर्त्रभिप्रायत्वस्यान्यथासिद्धत्वेऽपि पदसिध्यर्थं कर्तव्ये विभक्ति प्रयोगे कामचारात्। स्वं यज्ञं कारयति कारयते वा। इत्युपग्रह विधिः।

## लकाराः

अनेकाक्षरोऽयमविकरणो धातुस्तस्य लुङ् भिन्नेषु लकारेषु सामान्यवद्रूपाणी नेयानि। यथा-

भावीति भावनायाम्। तस्य परस्मैपदे तावत्-

लट् = भावयति। लङ् = अभावयत्।

---

1 मिथ्योपपदात् कृञोऽभ्यासे 1/3/71

2 णिचश्च (1-3-74)

| | | | | | |
|---|---|---|---|---|---|
| लिट् | = | भावयां बभूव। | लिङ् | = | भाव्यात्। |
| लुट् | = | भावयिता। | लुङ् | = | - |
| लृट् | = | भावयिष्यति। | लृङ् | = | अभावयिष्यत् |
| लेट् | = | भावयात्। | लेङ् | = | भावयेत्। |
| लोट् | = | भावयतु। | लोङ् | = | भावयतात्। |

भावयांबभूवेत्यत्र भावयामास, भावयांचकारेत्यपि यथायथं द्रष्टव्यम्। लेटि भावयति, भावयाति, भावयिषति, भायिषाति, भावयत्। भावयात्। भावयिषत्। भावयिषात्। इत्येवमन्यान्यपि नेयानि लकारार्थाः सामान्योक्ता एव सर्वे भाव्याः।

**आत्मनेपदे तु-**

| | | | | | |
|---|---|---|---|---|---|
| लट् | = | भावयते | लङ् | = | अभावयत् |
| लिट् | = | भावयां बभूवे | लिङ् | = | भावयिषीष्ट |
| लुट् | = | भावयिता। | लुङ् | = | - |
| लृट | = | भावयिष्यते | लृङ | = | अभावयिष्यत् |
| लेट् | = | भावयिषाते | लेङ् | = | भावयीत् |
| लोट् | = | भावयताम् | लोङ | = | भावयताम् |

भावयां बभूवे-इत्यत्र भावयामासे, भावयांचक्रे इत्यपि। लेटि भावयते, भावयाते, भावयिषते, भावयिषाते इति चतुर्धा।

लुङि तु भूयसां कारितान्तानां कतिपये विशेषाः स्मर्य्यन्ते। तत्र तावद् विभक्तिस्वरूपाण्येवम्-परस्मैपदे-

| | **प्रथमपुरुषः** | **मध्यम पुरुषः** | **उत्तम पुरुषः** |
|---|---|---|---|
| एकवचनम् | अत् | अः | अम् |
| द्विवचनम् | अताम् | अतम् | आव |
| बहुवचनम् | अन् | अत | आम |

आत्मनेपदे तु-

| | प्रथमपुरुष | मध्यमपुरुष | उत्तमपुरुष |
|---|---|---|---|
| एकवचनम् | अत | अथाः | ए |
| द्विवचनम् | एताम् | एथाम् | आवहि |
| बहुवचनम् | अन्त | अध्वम् | आमहि |

एषु विभक्तेः प्राक्तनोऽक र श्चङ् संज्ञः। चङि सति पञ्चैते नियमाः साधारणाः भवन्ति यथा-

1. **चङि णिचः प्राग्धातोरूपधास्वरस्य संहितरूपस्य पूर्वो भागो निवर्तते[1]। न तु शासादीना[2],भासादीनां तु विकल्पेन[3]।**

2. **सन्नन्तवच्चङि णिजन्तस्य व्यंजनवत् प्रथमाक्षराभ्युच्चयः[4]।**

3. **चङि णिचो लोपः[5]**

4. **चङ्यभ्युच्चयाकार इकारः स्यात्परः स्वरो यदि लघूकृतः न तु स्मृ दृ स्तृ स्पशि त्वरि म्रदिः प्रथीनाम्[6]।**

5. **चङ्यभ्युच्चयेकारोकारो कृतावकृतौ वा दीर्घो भवतो यदि परतो व्यंजनमसंयुक्तं स्वरोऽपि च लघूकृतः[7]।**

अच्युच्चयप्रक्रिया सन्नन्ते वक्ष्यते।

वद्। वादि वादनायाम्। अवीदत्। एवं मद्-अमीमदत्।चल्। अचीचलत्। गद्। अजीगदत्। फल्। अपीफलत्। हन्। अजीघतत्। रट्। अरीरटत्। कृ। अचीकरत्। ह

---

1 णौ चङ्युपधाया ह्रस्वः (7-4-1)

2 नाग्लोपिशास्वृदिताम् (7-4-2)

3 भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् (7-4-3)

4 चङि (6-1-22)

5 णेरनिटि (6-4-51)

6 सन्वल्लघुनिचङ् परेऽनग्लोपे (7-4-93) सन्यतः (7-4-94) अत्स्मृदृत्वरप्रथम्रदस्तृ-स्पशाम् (7-4-95)

7 दीर्घो लघोः (7-1-94)

अजीहरत्। पर्य्यजीहरत्। व्यत्यजीहरत्। सहः सस्योपसर्गेकारनिबन्धनं षत्वं नास्ति। न्यसीषहत्। सन्ध्यक्षरादकारनिवृत्तिः। तेनेकार उकारो वा श्रूयते। विद्। अवीविदत्। खिद्। अचीखिदत्। मुद्। अमुमुदत्। चुर्। अचूचुरत्। परतः संयुक्तव्यंजनसत्वे तु नाभ्युच्चये दीर्घः। क्रद् अचिक्रदत्। स्खद्। अचिस्खदत्। त्रस्। अतित्रसत्। प्रस् अपिप्रसत्। द्रा। अदिद्रपत्। भ्रंश। अविभ्रशत्। ह्रस् अजिह्रसत्।

गुरूस्वरपरत्वेऽपि न दीर्घः। वेप्। अविवेपत्। शोण्। अशुशोणत्। लोच्। अलुलोचत्। शीभ्। अशिशीभत्। क्रीड् अचिक्रीडत्। अजीजागरत। अजजागरत। इति मतभेदेन द्वैविध्यमुक्तं कातन्त्रानुयायिभिस्तद् शुद्धम्। आत्रेयवर्द्धमानवामनादिभिर्दूषितत्वात्। अचिक्ष्णत्। अचिस्नसत्। अशिश्वमत्। अविव्यषत्। अजिजक्षत्-इत्यादौ स्वरो लघुरेव।

**गुरूस्वरपरतवेऽभ्युच्चयाकारस्येकारत्वमपि नास्ति।** अशशासत्। अबबाधत। अरराजत। अययाचत्। अचचन्दत्। अततर्कत्।

**स्मृ प्रभृतीनां तु लघुस्वरपरत्वेऽपि नेकारः**[1]। असस्मरत्। अददरत्। प्रतस्तरत्। अपस्पशत्। अतत्वरत्। अममृदत्। अपप्रथत्।

**शासादयः शास् प्रकाराः। तेषां चङ् निमित्तकमुपधाह्रस्वत्वं नास्ति। त एते शासादयः कान्त खान्त क्रमेण प्रदर्श्यन्ते-**

**शीकि ष्टीकि स्तीकिः स्रेकिः सेकिः ष्टिकि स्तिकी रेकिः।**
**ट्रेकि ध्रेकीः लोकि श्लोकी त्रौकिश्च दौकिश्च ॥1॥**
**द्राखुः ध्राखति शाखु श्लाखत्योखति च राखु लाखति च।**
**द्राघि ध्राघिः श्लाघी राधि लांघिश्च याचि लोची च ॥2॥**
**एजत्येजिर्भ्रेजिर्भ्राजी राजश्च रेट यौटति च।**
**म्लेटुम्लेड्डु म्रड्डुः काडु क्रीडु स्तुडु ईडु स्तूड्डुः ॥3॥**
**हूडु हेडि होडू रोडू रोडुश्च लोडु शाडि तथा।**
**द्राडि ध्राडिः वांडिः श्लोणु श्रोणु श्वशोणु वेण्वोणु ॥4॥**
**पैणुः प्रेणुर्जुतु मिथ मेथि प्रोथिश्च वेथि नाथिरपि।**
**खादिर्मिदि निटि नाहधि बाधिर्गाधिर्मिधिर्मेधिः ॥5॥**

---

1 अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् (7-4-95)

**वेनिः केपिर्गेपिः म्लेपिस्तेपि लिपिर्वेपिः ।**
**मेपी रेपिर्लेपिः क्षीविः क्तीविश्च शीभि वीभि तथा । ।6 ।।**
**रेभिर्मीमि श्र्वायस्तायः खोरूश्च घोरूश्चु ।**
**खोतुः खेतुः केलुश्चेलुः क्ष्वेलुश्च शेलु सेलु तथा ।।7 ।।**
**पेलुः फेंलुर्वेलुःकविः खेवि गेवि तथा ।**
**क्लेपिर्ग्लेविम्लेंवि लेविर्देविश्चपेविमेवि तथा ।8 ।।**
**रेविः शेविः सेविश्वी विःकाशिश्च वाशि तथा ।**
**भ्राशि म्लाशिदांशिर्भ्रेष म्लेषौ च भेष रेषौ च ।।9 ।।**
**हेषि हेंषि ग्लेंषि गेंषिः प्रेषिश्च नेषि जेष्येषि चेषिर्वेषिः**
**पेसति रासि नांसि भांसिः श्चकासि कामि तथा दासि**
**शासु माहश्चैकत्रिंशशतमुच्यते तु शासादि ।**
**शासादीनामेषामुपधाया ह्रस्वता नास्ति**
**सति चङि तद्वत् तेषामम्युच्चय दीर्घता नास्ति ।।11 ।।**

## स्वरान्ताः

| | | |
|---|---|---|
| मा | मापयति | अमीमपत् |
| धा | अदीधपत् | धापयति |
| दा | दापयति | अदीदपत् |
| द्रा | द्रापयति | अदिद्रपत् |
| हा | हापयति | अजीहयत् |
| ज्या | ज्यावति | अजिज्यपत् |
| ज्ञा | - | अजिज्ञपत् |
| इ | आयति | - |
| ईङ | आययते | आयियत |
| षि | साययति | असीसयत् |
| हि | हाययति | अजीहयत् |
| डी | डाययति | अडीडवत् |
| भी | भाययति | अबीभयत् |
| | भापयति | अबीभपत् |
| री | रेपयति | अरीरपत् |

| | | |
|---|---|---|
| ह्री | ह्रेपयति | अजिह्रियत् |
| क्री | क्रापयति | अचिक्रपत् |
| हु | हावयति | अजूहवत् |
| स्कु | स्कावयति | अचुस्कवत् |
| सु | - | असूषुवत् |
| हु | - | अजूहुवत् |
| पू | पावयति | अपीपवत् |
| भू | भावयति | अबीभवत् |
| धू | धूनयति | अदूधुवत् |
| नू | | |
| षू | षावयति | असूषवत् |
| ऋ | अर्पयति | आर्पिपत् |
| कृ | कारयति | अचीकरत् |
| ह | | अजीहरत् |
| स्तृ | | अतिस्तरत् |
| स्मृ | | असस्मरत् |
| पृ | पारयति | अपीपरत् |
| गृ | गार | अजीगरत् |
| | गाल | अजीगलत् |
| जृ | जारयति | अजीजरत् |
| कृ | कारयति | अचीकरत् |
| | अपस्कारयति | अपाचिस्किरत् |
| स्तृ | | अतस्मरत् |

**स्वरमध्याः**

| | | |
|---|---|---|
| वद | वादयति | अवीवदत् |
| सह | | असीषहत् |
| गद् | | अजीगदत् |
| व्यध | | अविव्यधत् |

| | | |
|---|---|---|
| जक्ष | | अजिजक्षत् |
| प्रथ | | अपप्रथत् |
| साध | | असीसधत् (असीषधत् इति मूले) |
| राध् | | अरीरधत् |
| शास् | | अशशासत् |
| षिव् | | असीषिवत् |
| निज् | | अनीनिजत् |
| क्षिप् | | अचिक्षिपत् |
| मिच्छ | मिच्छयति | अमिमिच्दत् |
| दीप् | दीपयति | अदीदिपत् |
| क्रीड् | | अचिक्रीडत् |
| बुध् | | अबुबूधत् |
| क्षुभ् | | अचुक्षुभत् |
| व्युष् | | अवुव्युषत् |
| ष्णुस् | | असुष्णुसत् |
| वृत् | | अवर्तत्-अवीवृतत् |
| नृत् | | अनीनृतत् |
| छृन्द् (च्छृद्र इति मूले) | अचच्छृदत् | अचच्छर्दत् (अचिच्छृददित्यसत्) |
| कृत | अचिकीर्तत् | अचीकृतत् |
| वेप् | अविवेपत् | |
| भ्रेष् | अविभ्रेषत् | |
| लोच् | अलुलोचत् | |

## स्वराद्याः

| | |
|---|---|
| अह | |
| अश | आशिशत् मा अशिशत् |

| | | |
|---|---|---|
| अंजा | आंजिजत् | |
| आप् | मा अपिपत् | |
| आस् | | |
| इष् | एषयति | मा इषिषत् |
| रन्ध | रन्धयति | ऐन्दिधत् |
| ई | | |
| उभ | | औविभत् |
| उव्ज | उव्जयति | मा उव्जिजत् |
| उम्भ | | मा उम्बभत् |
| उक्ष | उक्षयति | मा उचिक्षत् |
| उन्द | | औन्दिदत् |
| ऋध् | अर्धयति | आर्दिधत् |
| ऋष | अर्षयति | आर्षिषत् |
| ऋच्छ | ऋच्छयति | मा ऋचिच्छत् |
| ऋण् | अर्णयति | मा ऋणिनत् |
| एजृ | एजयति | ऐजिजत् |
| ओण् | | औणिणत् |
| जागृ | अजीजागरत् | केचित्तु अजजागरदित्यपीच्छन्ति |
| चकास | अचीचकासत् | |
| क्रद क्रदि | अचिक्रदत् | |
| वद-वादि | (अववादत्) | अवीवदत् |
| राध-राधि | (अरराधत्) | अरीरधत् |
| दा दापि | (अददापत्) | अदीदपत् |
| अग्लेपि कथ-कथि | अचकथत् | |
| गण-गणि | अजगणत् अजीगणत् | |
| पत्-पति | अपपतत् | अपीपतत् |
| शास शासि | अशशासत् | |

| | | |
|---|---|---|
| ऋदित् न ह्रस्वः | | |
| बाध-बाधि | अवबाधत | |
| विद्-वेदि | अविवेदत् (विदलृ) | |
| ष्टिप्-स्तेपि | अतिष्टेपत् | |
| अद्विधिः | वा अत् | |
| प्रथ-प्राथि | (अपप्राथत्) अपप्रथत् | |
| स्मृ-स्मारि | | असस्मरत् |
| वेष्ट-वेष्टि | अविवेष्टत् | अववेष्टत् |
| उर्ऋद्वा पृथ-पर्थि | अपपर्थत् अपीपृथत् | |
| कृत-कीर्ति | अचिकीर्तत् | अचीकतत् |
| वा ह्रस्वः पीड-पीडि | अपिपीडत् | अपीपिडत् |
| कण्-काणि | अचकाणत् | अचीकणत् |

णौ चडि उपधाया ह्रस्वः। न तु अग्लोपिनाम् शासादीनां च। भासादीनां वा चङ् परक लघ्वक्षरे परेऽभ्यासस्य सन्वद्भावः- न तु अग्लोपिनाम्। सन्वद्भावे अभ्यासे अस्य इः। लघोरभ्यासस्य दीर्घश्च।

# धातुतो धातुसिद्धिः

## अथ चिकीर्षितकप्रक्रिया

इच्छायामवधारितायामध्यारोपितायां वा तत्कर्मणो धातोस्तदिच्छैककर्तृकात् परतः सकारः प्रत्ययो भवति सन्संज्ञः[1]।

या क्रिया धातुनाप्रतिपाद्यते तस्याः स्वयं करणेच्छायां प्रतिपादयिषितायां तस्माद्धातोरुत्तरं सकारः प्रयुज्यते स च प्रत्ययः सन् शब्देन व्यवहर्तव्यः। इच्छा च

---

1 धातोः कर्मणः समानकतृकादिच्छायां वा 3/1/7

द्विविधापि निमित्तं भवति-अवधारिता चाध्यारोपिता च। तत्क्रिया कर्तृनिष्ठा सेयं तत्क्रिया कारणेच्छा यदि वक्त्रा निश्चितं विज्ञायते आहोस्वित् तत्राध्यारोप्य नीयते उभयथापि सन् प्रत्ययः शक्यते प्रयोक्तुम् तत्रावधारणमुभयथापि संभवति प्रमया च भ्रमेण च। अध्यारोपनिमित्तं तु द्वयं भवति- आशंका च संभावना चेति। यत्रेदमित्थं भविष्यतीत्याशंक्यते संभाव्यते वा तत्र तत्क्रिया स्वतन्त्रनिष्ठां तत्क्रियाकरणेच्छामभिनात्य तत्प्रकारेणैव तामाशंकां संभावनां वा व्यंजयितुमिच्छतीति प्रयोक्तृ समयो दृश्यते। इच्छा च सन् प्रत्ययेन विविक्षिता निमित्तं न वस्तुसती। तस्मादविशेषेणोभयत्रापि सन्नादिश्यते अवधारितायां चाध्यारोपितायां च। अत एव चाविशेषादुभयत्रापि चिकीर्षितक प्रयोग इष्यते चेतने चाचेतने च। चेतनेऽपीच्छाया वस्तुतः सत्वे चासत्वे च। रामो जिगमिषति, राजा बुभूषति, सम्पदं लिप्सति। स यत्राऽपि नायं रामो गन्तुमिच्छति यत्रापि वा नामुष्य राजभवनेच्छा स्याद्, अथापि यद्येवं तत्र सा विज्ञायते यदि वा कथंचिद् विवक्ष्यते स तर्हि नूनमिष्यते तत्रापि चिकीर्षितक प्रयोगः। विवक्षामात्रेण निमित्तस्योपसन्नत्वात्। यत्र वा नाटकादौकल्पितः कर्त्ता कल्पितां क्रियां कर्तुं कल्पितामेवेच्छां नाटयति तत्रापि सन्नियते। रामोऽयं वनं जिगमिषति। रामोऽहं वनं जिगमिषामि। यदि राजानं दिदृक्षसे स त्वं तर्हि सभामायीहि। शंके मरिष्यति श्वेति वक्तव्ये श्वा मर्तुमिच्छतीति विवक्षाणो मुमूर्षति श्वेत्याह। शंके पतिष्यति कूलमिति वक्तव्ये कुलं पतितुमिच्छतीति विवक्षमाणः पिपतिषति कूलमित्याह[1]। अश्मा लुलुठिष ते॥

भगवान् पतंजलिस्त्वेवमाह- तुल्यकारणत्वात् सिद्धमेतत्। तुल्यं हि कारणं चेतनावति देवदत्ते कूले चाचेतने। इच्छाया हि प्रवृत्तित उपलब्धिर्भवति। योऽप्यसौ कटं चिकीर्षुर्भवति नासावाद्योषयति। किं तर्हि संनद्धं रज्जुकीलपूलपाणिं दृष्ट्वा तत इच्छा गम्यते। कूलस्यापि विपतिषतो लोष्टाः शीर्य्यन्ते, भिदा उपजायते, देशान्तरमुपसंक्रामति। श्वानः खल्वपि मुमूर्षवः एकान्तशीलाः शूनाक्षाश्च भवन्ति।

अयमत्राभिसन्धिः - इह हि सनः प्रक्रियां प्रवृत्ते प्राग्भाविनी प्रवृत्युन्मुखता निमित्तभूता प्रवृत्याश्रयनिष्ठा काचिद् वृत्तिरिच्छा शब्देन विवक्ष्यते। सा चेयं तावत् प्रवृत्तिं प्रतिज्ञानेच्छाकृतीनां प्रयोजकतया मनो धर्मरूपेणैव लभ्यते। अचेतने तु सा तदवयवगतविलक्षणदोषरूपैव संभाव्यते। तस्याश्च प्रवृत्तिविशेषप्रयोजिकाया वृत्तेः सत्वेन

---

1 आशङ्कायां सन्वक्तव्यः (वा.1707)

तत्फलभूतायास्तु प्रवृत्तेरिदानीं यावद् सम्पनत्वेनोपलक्षितायामवस्थायां सनः प्रयोग प्रसज्जते। तदतत्तुल्यं कारणं भवति चेतने चाचेतने च।

अथवा-उपमानादेतत् सिद्धम्[1]। लुलुठिषत इव लुलुठिषते। पिपतिषति इव पिपतिषति। ये तु

**येनैव हेतुना हंसः पततीत्यभिधीयते।**
**आतौ तस्य समाप्तत्वादुपमार्थो न विद्यते॥[2]**

इत्येवमभिप्रयन्तो नाख्यातेनोपमानमिच्छन्ति तेषामियमिच्छैवेच्छा निमित्तं भवति। प्रवृतिप्रयोजिकायाः कस्याश्चिद् वृत्तेरिच्छातिरिक्तत्वेऽपि सादृश्यादिच्छा शब्देनोपचारः॥

अथवा नैदं द्वैविध्यं नामेह भवति। चेतनावच्च चेति। अपि तु नाम चेतनावदेवेदं सर्वं जगत्। एवं ह्याह लोके-कंसकाः सर्पन्ति। शिरीषोऽयं स्वपिति। सुवर्चला आदित्यमनुपर्य्येति। आस्कन्द कपिलकेत्युक्ते तृणमास्कन्दति। अयस्कान्तमयः संक्रामति। ऋषिरप्येवं भूरिशः पठति। श्रृणोत ग्रावाणः॥ स्वधिते, मैनं हिंसीः। आपो। हि ष्ठा मयोभुवः। ओषधे त्रायस्वेत्यादि। तत्र युक्तोऽयमविशेषादिच्छाप्रयोगश्चेतने चाचेतने चेति।

या खल्वात्मना कर्त्तव्यायाः क्रियायाः सिद्धयर्थमिच्छा भवति तामन्तर्भाव्य धातोः प्रयुयुक्षायां नित्यश्चिकीर्षितः प्रयोगः। तस्य के पर्य्यायवचना भवन्तीति चिन्त्यते। पृथक् छब्देन प्रयोगेऽपि यत्रेच्छायाः क्रियया सामानाधिकरण्यं वापोह्यते तदिह वाक्यं पर्यायेण प्रवर्तते। द्विविधिं च तादृशं वाक्यं तुमाकृतं च लिङुत्तम कृतं चेति। द्रष्टुमिच्छति। गन्तुमिच्छति अशितुमिच्छति। शयितुमिच्छति। अथवा पश्येयमितीच्छति। गच्छेयमितीच्छति। आसीयेतीच्छति। शयीयेतीच्छति। अथेदं कस्मान्न भवतिआसनमिच्छति, शयनमिच्छतीति। अतुल्यार्थत्वात्। आसितुमित्युक्ते यादृशोऽर्थो गम्यते-स्वयं तां क्रियां कर्तुमिच्छतीति। नासाविह गम्यते। आसनमिच्छतीति। अन्यस्यासनमिच्छतीत्यर्थो गम्यते। नासौ सन्नर्थः। अथात्मन आसनमिच्छतीत्येवं ब्रूयान्न तेनाप्यर्थः स्यात्। क्यचो विषयत्वात्[3]। अथवा द्विविधो हीयं क्रिया भवति- साध्यावस्था च सिद्धावस्था चेति। तत्र साध्यावस्थात्वेन विवक्षिताया इच्छाकर्मत्वे यं सन् विधीयते।

---

1 उपमानात् सिद्धम्। उपमानाद्वा सिद्धमेतत्। कथम् लुलुठिषत इव लुलुठिषते। पपतिषतीव पिपतिषति। (महाभाष्य3-1-7)

2 वाक्यपदीयम् 3/56

3 सुप आत्मनः क्यच् 3/1/8

सिद्धावस्था तु सा भावप्रत्ययेन तुं व्यतिरिक्तेन निर्दिश्यत्ते। तस्मान्नासिसिषत इत्यस्यासनमिच्छतीति पर्य्याय वचनं भवति। भिन्नार्थत्वात्।

अथेह जिज्ञास्यते- रामो ग्रामं गन्तुमिच्छतीत्यत्र कस्य किं कर्म्मेति। यदि तावदिच्छतेर्ग्रामः कर्म स्यान्न गमनं, तदा ग्रामं जिगमिषतीति चिकीर्षितप्रयोगो न स्यात्। धातोरिच्छा कर्मत्वाभावात्। अथेष्यते- ग्रामो यं गच्छतेः कर्म स्याद्, गच्छतिः पुनरिच्छतेरिति। स तर्हि ग्रामो गन्तुमिष्यते रामेणेति प्रयोगो न स्यात् इषि प्रत्ययेन ग्रामस्यानभिधानाद् ग्रामे द्वितीया विभक्ति प्रसंगात्। अथ ब्रूमः- इच्छतेरेवैते उभे कर्मणी आस्तां ग्रामश्च गच्छतिश्च। स यतो ग्रामः कर्म, तेनायमभिहितप्रयोगः सिद्धयति-ग्रामो गन्तुमिष्यते इति। अथ यतो गच्छति कर्म तेनायं चिकीर्षितप्रयोगः सिद्धयति। ग्रामं जिगमिषतीति। नैवं शंक्यम्। गत्यार्थ कर्मणि चतुर्थी विधीयते विकल्पेन[1]। स ग्रामं गन्तुमिच्छतीतिवद् ग्रामाय गन्तुमिच्छतीत्येवमपि नाम तत्रेष्यते प्रयोगः। तत्र यदीच्छतेरयं ग्रामः कर्म स्यात् स तर्हि चतुर्थी प्रयोगो न स्यात्॥ सत्यम्॥ एवं तर्हि गच्छतेर्ग्रामः कर्म स्याद, इच्छतेः पुनरूभे कर्मणी भवतोग्रामश्चेच्छतिश्चेति लोकवशान्नूनमभ्युपगंस्यामः ततो न दोषः॥ ग्रामं जिगमिषतीत्यत्र तु गच्छतिरिच्छतेः कर्म, अथायं ग्रामोजिगषतेः कर्म्मेति विशेषः॥

अथ जिज्ञास्यते- सोपसर्गाद्धातोः कथं सिद्धिः-उपचिकीर्षति, विजिहीषति, अनबुभूषति, संधित्सतीति। अत्र हि न धातुरिच्छतेः कर्म भवति। उपकारं विहारमनुभवं सन्धानमिति विशिष्टं तं तमर्थमिच्छति, न क्रियां हरणं भवनं धारणं वा। स इह यो धातुन्नं तत्कर्म यच्च कर्म,नासावत्र धातुस्ततो न प्राप्नोति चिकीर्षितकप्रत्ययः। उच्यते। कर्मण इति नैषा धातुसमानाधिकरणा पंचमी वर्तते- कर्मणो धातोरिति। किं तर्हि अवयवयोगे षष्ठयेषाकर्मणोऽवयवो यो धातुस्तस्मादिति। तेनोपगर्सविशिष्ठस्यैव कर्मत्वेऽपि तदवयवाद्धातोः प्रत्ययो भविष्यति। अत्राह- यद्येवं वैयधिकरण्यमिष्यते स तर्हि केवलाद्धातोः प्रत्ययो न स्यात्- चिकीर्षति, जिहीर्षति, जिगमिषति, पिपतिषतीति। इह हि धातुरेव कर्म्मोपपद्यते न कर्म्मावयवो धातुः। सत्यम्। एषोऽपि व्यपदेशिवद्भावेन कर्मणो धातुरवयवो भवति। एक एवार्थोऽन्यथान्यथा विवक्षणादन्यान्य-इव भवति। स इह कर्मत्वेन दृष्टः करोतिरन्यः। तयोर्यद्यभेदो न विवक्ष्यते तदा कोऽन्यो भेदसम्बन्धः स्याद् ऋतेऽवयवयोगात्। तस्मादिह राहोः शिर इतिवद भेदबुद्धि निबन्धना सिद्धयत्यर्थगतिः।

---

[1] गत्यार्थकर्मणि द्वितीयचतुर्थ्यौ चेष्टायामनध्वनि 2/3/12/

गुपेर्निन्दायां तिजेः क्षमायां, कितेर्व्याधि प्रतीकारे निग्रहेऽपनयने नाशने संशये च सन् स्यान्नित्यम्[1]।

जुगुप्सते, निन्दतीत्यर्थः। तितिक्षते, सहते इत्यर्थः। चिकित्सति, भिषज्यतीत्यर्थः। क्षेत्रियश्च परक्षेत्रे चिकित्स्यः पारदारिकः परदारेभ्यो निग्रहीतव्य इत्यर्थः। अथवा क्षेत्रियाणि तृणानिं शस्यार्थे क्षेत्रे जातान्यपनेयानि नाशयितव्यानि वा। इमे रोगाश्चिकित्स्याः। नाशयितव्या इत्यर्थः। दुष्टा इमे चिकित्स्याः। निग्रहीतव्या इत्यर्थः। प्रकरणादेवमर्थविवक्षा द्रष्टव्या। संशये तु वि पूर्वः प्रयुज्यते। तच्छुरुवान्ठयिर्व्यचिकित्सत्। एवं विद्वान् विचिकित्सति। अर्थान्तरेषु तु नायं सन्। गुप्-गोपने। तिज निशाने। कित-निवासे। गोपयति। तेजयति। संकेतयति॥

बधेश्चित्तविकारे, दानेरार्जवे, मानेर्जिज्ञासायां, शानेर्निशाने सन् स्यान्नित्यम्[2] /3/

बीभत्सते, दुर्गन्धाद्यनुभवनिमित्तक चित्तविकार ग्रहणं बीभत्स धात्वर्थः। दीदांसते, आर्जवेनोपसर्पति। मीमांसते, तर्केणार्थज्ञानम् चेष्टते। शीशांसते, विशिष्य तीक्ष्णीकरणंशीशांस धात्वर्थः॥ अर्थान्तरत्वे तु नास्ति बध-बन्धने। दान-अवखण्डने। मान्-पूजायाम्। शान- अवतेजने। बाधयति। दानयति। मानयति। निशानयति॥

इह जिज्ञासा शब्देन न ज्ञातुमिच्छैव विवक्ष्यतेऽपितु ज्ञानविषयिणी काचिदपेक्षाबुद्धिरिच्छाविशेषानुगृहीता लक्ष्यते। अथवा-अपेक्षाबुद्धिपुरस्कृतं ज्ञानमिह जिज्ञासा पदार्थः। अथवा ज्ञातुमिच्छानिबन्धस्तर्कप्रयोग इह लक्षणया जिज्ञासा पदार्थः। हरदत्तस्तु ज्ञातुमिच्छायामेवात्र सनमिच्छति, तद् भ्रान्तम्। तर्काद्यप्रयोगदशायामिच्छामात्रसत्वेऽपिमीमांसादि शब्दाव्यवहारात्॥

इच्छायां गुपादिभ्यः सन्नास्तीति वक्तुमिवायमिहार्थविशेषेषु सन्नादिश्यते। वस्तुतस्तु स्वार्थिकोऽयं सन्न निन्दाद्यर्थेषु विधीयते। गुपादीनामेवानेकार्थकानां सतां (सत्तां इति मूले) निन्दाद्यर्थ वृत्तौ विभक्तिप्रकारेण सनो विधानात्। यदि निन्दादयः सनोऽर्थाः स्युः अवश्यं तत्तर्हिजुगुप्सत्यादिषु धात्वर्थाऽपि गोपनादिर्विषयीयभवन्नुपलभ्यते। नोपलभ्यते। तस्मात् स्वार्थिकः सन्। अथवा न प्रदेशो विवक्ष्यते। पिपठिषिः पठनेच्छायां वर्तते, जुगुप्सिर्निन्दायाम्॥

---

1 गुप्तिज्किद्भ्यः सन् 3/1/5 गुपेर्निन्दायाम् (वा 1687) तिजेः क्षमायाम् (वा 1688) कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च (वा 1689)

2 बधेश्चित्तविकारे (वा 1693)दानेरार्जवे (वा 1694) मानेर्जिज्ञासायाम् (वा 1962)शानेर्निशाने (वा 1695)

अबोधकृतेरेतेरध्येत्यधीतयोश्च स्थाने गमिः प्रयुज्यते सनः प्रयुयुक्षायामस्तेर्भूस्ते[1] रत्तेर्घसो[2] ॥4॥

सर्वेभ्यो धातुभ्यः सन् विधीयते केवलमेतेभ्यः प्रतिषिध्यते। तत्र इण् गतौ, इक्-स्मरणे, इङ्-अध्ययने, इति त्रय इकारा धातवः तेभ्यः सनो विधित्सायां तत्स्थाने गमिरादिश्यते। एतिष्तु यदि बोधनार्थः प्रयुज्यते स तदा सना युज्यते एव। एतुमिच्छति जिगमिषति। अध्येतुमिच्छति अधिजिगांसते बोधने तु प्रतीषिषति[3]। अस्तेर्बुभूषति अत्तेर्जिघत्सति। नैते सना संयुज्यन्ते स्वभावात्। उक्तं विधितन्त्रं शेषतन्त्रमुत्तरं वक्ष्यामः।

इडागमः, धातुविकारः, अभ्युच्चयः इति तिस्रोऽन्तरंग क्रियाः। धातुसंज्ञा, उपग्रहः, लकारः स्वरविधिश्चेति चतस्रो बहिरंग क्रियाः।। इति सप्ताश्रित्य विधयः क्रमेण विविच्यन्ते।

**इडागमः**

उदात्ताद्धातोः परस्य सनः प्रागिकारः[4] स्यान्नत्वनुदात्तात्[5] स्वरितात्तूभयथा[6] ॥

अयं तावत् सन् कुतश्चिद्धातोरूत्तरं शुद्धः प्रयुज्यते, कुतश्चित् पुनरिकारपूर्वः। कुतश्चित्तु यथेच्छमिकारपूर्वश्च शुद्धश्च। स च इकार इट्छब्देन व्यवह्रियते। तथा चायं त्रेधा-नेट् च सेट् च वेट् चेति भेदात्। यस्माद्धातोरूत्तरतो नेट् सन् भवति सोऽनुदात्त शब्देन, यस्मात् सेट् स उदात्तशब्देन यस्मादुभयथा स स्वरितशब्देनापदिश्यते। त एते सनः सम्बन्धेनोदात्तानुदात स्वरिता नियम्यन्ते-

---

1 सनि च 2/4/47 इण्वदिकः (वा 1577) अस्तेर्भूः 2/4/52
2 लुङ् सनोर्घस्लृ 2/4/37/
3 णौगमिरबोधने 2/4/46/ सनि च 2/4/47/
4 आर्धधातुकस्येड्वलादेः 7/2/35
5 एकाच उपदेशेऽनुदात्तात् 7/2/10/
6 स्वरतिसूतिसूयति धुञ्रुदितो वा 6/2/44

**स्मि[1] श्वि डी शी च दीधी च वेवी[2] यव ऋ[3] दृङ् धृङ[4] ।**
**जागृ चैत उदात्ताः स्युः किरतिर्गिरतिस्तथा[5] ॥1॥**
**दरिद्रा[6] श्रिर्यूर्णु[7] सूति सूयती धूञ् प्रकम्पने[8] ।**
**वृङ् वृञौ[9] स्वृभरो[10] तद्वद् ऋदन्ताः स्वरिता मताः ॥2॥**
**कृ गृ जृ झृ तथा तृ दृ धृ नृ पृ वृ च भृ च मृ।**
**वृ श्रृ स्तृ इमे वेदः[11] किरतिं गिरतिं विना[12] ॥3॥**

अकारान्तो धातुर्नास्ति। कथादीनामकारलोपेन व्यंजनान्तत्वाविशेषता। आकारान्तेषु उदात्तो नास्ति। दरिद्राः स्वरितः। इतरेऽनुदात्ताः। इकारान्तेषु सिम श्वि इति द्वावुदातौ। श्रिः स्वरितः। इतरेऽनुदात्ताः। ईकारान्तेषु डी.शी.दीधी चोदात्ताः स्वरितो नास्ति। इतरेऽनुदात्ताः। ऊकारान्तेषु पवतिरूदात्तः। सूति, सूयति, धूनोति, धुनातयः स्वरिताः। इतरेऽनुदात्ताः। ऋकारान्तेषु ऋ, दृङ् धृङ, जागृ चोदात्तः। स्वृ, भृ, वृङ्, वृञः, स्वरिता। इतरेऽनुदात्ताः। ॠकारान्तेषु कृ, गृ इति द्वावुदात्तौ। इतरे स्वरिताः। अनुदात्तो नास्ति।

अत्र दीर्घोकारान्तेषु पू धातुरविकरणात्मने भाषः पठ्यते। यस्तु नाविकरण उभय भाषः सोऽनुदात्तः तेन सामान्य विवक्षायां सनि पू धातुः स्वरितः, अत्रोदात्तः कोऽपि नास्तीति वा शक्यते वक्तुम्। उभयोरर्थाविशेषात्। सू धातुस्त्रिविधः सुवतिरविकरणः प्रेरणार्थः स नेह गृह्यते। यस्तु सूते इति विकरणहीनः प्रेरणार्थे यो वा सूयते इति यविकरणो गर्भमोचनार्थस्तस्यस्वरितत्वमिष्यते। धू-धातुश्चतुर्धा। तत्र नुविकरणो

1 स्मिपूङ रंज्वशां सनि 7।2।74
2 आर्धधातुकस्ये 7/2/35
3 स्मिपूङ रंज 7/2/74
4 किरश्च पंचभ्यः 7/2/74
5 किरश्च पंचभ्यः 7/2/75/
6 तनिपतिदरिद्रातिभ्यः सनो वा इड् वाच्यः (वा 5059)
7 सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् 0/2/49/
8 स्वरतिसूतिसूयतिधूञु दितो वा 7/2/44/
9 इट् सनि वा 7/2/41/
10 सनीवन्तर्धभ्रस्ज 7/2/49/
11 इट् सनि वा 7/2/41/
12 किरश्च पंचभ्यः 7/2/75/

नाविकरणश्च धूनयतिश्च कम्पनार्थाः स्वरिताः। यस्तु धुवतिरविकरणो विधूननार्थः सोऽनुदात्तः। आद्रियतिरादरार्थो ध्रियतिरवस्थनार्थश्चात्मने भाषाविहोदात्तौ। अन्यस्तु परस्मैभाष आत्मनेभाष उभयभाषो वा धृ धातुरनुदात्त एव। भृ धातुरविकरणः स्वरितो न त्वन्यः।

इत्थं स्वरान्तेषु तावदुदात्ताः स्वरिताश्च परिगण्यन्तेऽनुदात्तास्तु परिशेषाद गृह्यन्ते। व्यंजनान्तेषु पुनरनुदात्तानेव स्वरितांश्च परिगणय्य परिशेषादुदात्ता ग्रहीतव्याः। तथा हि-

अनुदात्ताः-

**शकिः पचिः मुची रिचिश्च वचि र्विचिः किंच सिचिस्त्यजिश्च।**
**नेनिग् भजि र्भजि भुजी च मज्जिर्यजिर्युजीरंजि रूजी च वेविक[1] ॥1॥**
**स्वंजिश्च सञ्जिश्च सृजिः परस्मैभाषा वृति स्यन्दि वृधः कृपिश्च।**
**क्षुदि श्विदिः स्कन्दि तुदी नुदिः खिद भिदी विदिः पद्य शदी सदिश्च/2/**
**स्विद्यो हदीराधी रूधी युधिश्च कुधिः क्षुधिर्बन्धि शधी व्यधिश्च।**
**साधिस्तथा सिध्यति बुध्यती च मन्यो हनिश्चापि तपी तिपिश्च ॥3॥**
**क्षिपिश्छुपिर्लिप् च लुपिर्वपिस्तथा शपिः स्वपिः सृप् च यभीरभिस्तथा।**
**लभिर्गमिर्भाष्यत आत्मने यदा रमिर्नमिः किंच यमिः क्रुशिस्पृशिः ॥4॥**
**रिशी रूशिर्दशि दिशी दृशिमृंशिकिंशिर्विशिः पृष्य पिषी शुषिःशिषि।**
**तुषिस्त्विषिः श्लिष्य विषी दुषि र्दिषिः कृषि र्घसिर्वां वसतिर्ग्रहि र्मुहिः ॥5॥**
**दहिर्दिहिः किंच दुहिर्नहिर्मिहि र्लिहीरूहिःकिंच वहिः सनायुता[2]।**

---

1 शक्लृपच्मुचरिच्वच्विच्सिच्प्रच्छत्यज्निजिरभजः।
भंज्भुग्भ्रस्जनस्जियज्युज्रूज्रंज्विजिरस्वंजिसभजसृजः॥
उद्क्षुद्खिद्तुदनुदः पद्यभिद्विघतिर्विनद्।
शद्सदिस्विद्यतिस्कन्दिहदिक्रुधक्षुधिबुध्यती॥

2 बन्धिर्युधिरूधी राधिव्ययधशुधः साधिसिध्यती।
मन्यहन्नाप्क्षिप् छुपितप्तिस्तृप्यतिदृप्यती।
लिप्लुप्वप्शप्स्वप्सृपिभ्रभ्लभ्गमनम्मयो रमिः।
क्रुदिर्दशिदिशिदृशमृश्रिश्रूश्लिश्विश्स्पृशः कषिः॥
त्विषतुषद्विषदुष्पुष्यपिष्विष्शिष्शुष्श्लिष्यतयो घसिः।
वसतिर्दहदिहिदुहो नह्मिह्रूह्लिह्वहिस्तथा॥

**इमेऽनुदात्ता स्त्र्यधिकं शतं मतास्ततः परः सन् इ इटा न युज्यते ॥6 ॥**

## कान्तेषु–

शकिरेकः। स च शक्तौ नु विकरणः परिस्मैभाषः। मर्षणे तु यविकरणोभयभाषः। केचित्तु शक्यतेरूदात्तत्वमेवेच्छन्ति तदसत्। अनिट् कारिकासु शक्लृ इति अनुबन्ध सहितस्यैव पाठः॥

## चान्तेषु–

पच्, पंच्, मुच्, रिच्, वच्, विच्, सिच् इति सप्त। रिचिर्विरिकार्थो वियोजनसंपर्चनार्थश्च। वाचिः परिभाषणार्थो वचनार्थश्च।

## जान्तेषु–

त्यज्, निज्, भज्, भंज्, भुज्, मज्ज्, यज्, युज्, रंज्, रूज्, विज्, स्वंज्, संज्, सृज् इति चतुर्दश। निजिद्वेधा। विजिस्त्रेधा। तत्र नेनेक्तेः शौचपोषणार्थस्य, वेवेक्तेस्तुपृथग्भावार्थस्येहानुदातत्वार्थः पाठः। विङ्क्तेस्तु शुद्धयर्थ उदात्तः। विजते विनक्ति च भय चलनार्था वुदात्तौ। अन्येषां तु सर्वविधानां ग्रहणम्॥

## तान्तेषु–

वृतिरेकः परस्मैपदी चेत्। आत्मनेपदित्वे तु सेडयमुदात्तत्वात्॥[1]

दान्तेषु-क्षुद्, खिद्, छिद्, तुद्, नुद्, पद्, भिद्, विद्, शद्, सद्, स्विद्, स्कन्द्, स्यन्द हद् इति चतुर्दश। अत्र पद्स्विदौ यविकरणौ, तेन पद स्थैर्य्ये, स्विद्-स्नेहनमोचनयोः॥ इत्येतयोरूदात्तत्वम्। स्यन्दिः परस्मैपदी चेत्। आत्मनेपादित्वे तु वेडयं स्वरितत्वात्[2]।

---

1 न वृदभ्यश्चतुर्भ्य 7/2/59/

2 न वृद्भ्यश्चतुर्भ्यः, 7/2/59/

## धान्तेषु–

क्रुध्, क्षुध्, बन्ध्, बुध्, युध्, रूध्, राध्, व्यध्, शुध्, साध्, सिध्, वृध्-इति द्वादश। तत्र बुधसिधौ च विकरणौ, न त्वविरणौ। रूधिरिति रूणद्धि चानुरूध्यते च वृधिः परस्मैपदी चेत्। आत्मनेपदित्वे तु सेऽयमुदात्तत्वात् [1]।

## नान्तेषु–

मन् हनिति द्वौ। तत्र मनिति यविकरणात्मनेभाषो ज्ञानार्थो न त्ववबोधनार्थ उविकरणात्मनेभाषः।

## पान्तेषु–

आप्, क्षिप्, छुप्, तप्, तिप्, लिप्, लुप्, वप्,शप्, स्वप्, सृप्, कृप् इति द्वादश-तत्र कृपि परस्मैपदी चेत्। आत्मनेदित्वे तु वेडयं स्वरितत्वात्।[2]

## भान्तेषु–

यभ्, रभ्, लभ्, इति त्रयः।

## मान्तेषु–

गम्, नम्, यम्, रम्, इत चत्वारः तत्र गमिरात्मनेपदी चेत्। परस्मैपदित्वे तु सेडयमुदात्तत्वात्[3]।

## शान्तेषु–

क्रुश्, दंश्, दिश्, दृश्, मृश्, रिश्, रूश्, लिश्, विश्, स्पृश् इति दश।

---

1 न वृद्भ्यश्चतुर्भ्यः,7/2/59/
2 तासि च क्लृपः 7/2/60/
3 गमेरिट् परस्मैपदेषु 7/2/58/

**षान्तेषु-**

कृष्, त्विष्, तुष्, द्विष्, दुष्, पुष्, पिष्, विष्, शिष्, शुष्, श्लिष्,इत्येकादश। तत्र पुषश्लिषौ य विकरणौ।

**सान्तेषु-**

घस्, वस् इति दौ। तत्र वसिरविकरणः परस्मैभाषौ निवासार्थः। न तु विकरणहीनात्मनेभाष आच्छादनार्थः।

**हान्तेषु-**

ग्रह्, गुह्, दह्, दिह्, दुह्, नह्, सिह्, रूह्, लिह्, वह इति दश।

**गुपिस्तिजिः किति[1]र्दानिर्म्मानिः शानिर्वधिस्तथा।[2]**
**स्वार्थिकस्य सनोयोगेऽनुदाताः परिकीर्तिताः ॥1॥**

तदित्थं दशाधिकं शतमनुदात्ता धातवो भवन्ति। एषामुत्तरतः सन्नेकारपूर्वः प्रयुज्यते, नेड्त्वात्॥

**स्वरिताः-**

**भ्रज्जि[3] मृजिः[4] कृति चृती च नृतिः[5] पतिश्च[6]**
**स्यन्दि क्लिदि[7] श्छृदि तृदि च[8] ऋधी रधिश्च[9]।**
**तद्वत् सिधि[10] स्तनि[11] सनी[12] कृपि गुप् त्रपि[1] ज्ञप्[2]**

---

1 गुप्तिज्किदभ्यः सन् 3/1/5/
2 मान्वधदान्शान्भ्यो दीर्घश्चाभ्यासस्य 3/1/6/
3 सनीवन्तधीभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् 7/2/49
4 स्वरतिसूतिसूयतिधूञू दितो वा 7/2/57/
5 सेडसिचिकृतचृतच्छृतृदनृतः 7/2/57/
6 तनिपतिद्राद्रितिभ्यः सनो (वा.5059)
7 स्वरतिसूति.7/2/44/
8 सेडसिचिकृत.7/2/57/
9 सनीवन्तर्ध. 7/2/49/
10 रधादिभ्यश्च 7/2/45/
11 तनिपतिद्ररिद्रातिभ्यः सनो वा इड् वाच्यः (वा.5059)
12 सनीवन्तर्धभ्रस्ज.7/2/49/

**तृप् दृप्[3] दभि क्षमि[4] नशि[5] क्लिशि[6] निषुकुषिश्च[7] ॥1॥**
**त्वक्ष्यक्षि तक्षि गृहि गाहि[8] मुहि द्रुहिश्च[9]**
**तृहि स्तृहि वृहिः स्नुहि च स्निहिश्च।**
**सिवि व्रश्चि[10] दिवि स्रिवि ष्ठिवयश्च तद्वत्[11]**
**सन्त्येत (स) एव सनि तु स्वरिता अधीताः ॥2॥**

भृज्जतिरविकरणः परस्मैभाषः पाकार्थः। मर्जयतिरविकरणः स्वार्थकारितान्तश्च शौचालंकारार्थः। नृत्यतिर्यविकरणो गात्रविक्षेपार्थः। स्यन्दतिरविकरणः प्रस्रवणार्थः। स्यन्दि कृपी आत्मनेभाषावेव स्वरितौ परस्मैभाषत्वे त्वनुदस्तत्वमनयोरूक्तम्। क्लिद्यति ऋध्यती यविकरणौ। सेधति रविकरणः परस्मैभाषः शास्त्रमांगल्यार्थः। सिध्यतिस्त्वनुदात्तः। तनोति सनोती उविक रणौ क्षमिरविकरण आत्मनेभाषो यविकरणः परस्मैभाषश्च तृपदृपौ यविकरणौ न त्वविरणौ स्वार्थकारित विषयौ वा। एषामुत्तरतः सन् सेट् च प्रयुज्यते नेट् च विकल्पेन॥

## उदात्ता

तदित्थमनुदात्तस्वरितातिरिक्ताः सर्व एव व्यंजनान्ता धातव उदात्ता इष्यन्ते। तेषामुत्तरतः सनो नियमेनेकारपूर्वत्वं नेयं सेट्त्वात्[12]।

---

1 स्वरतिसूति.7/2/44/
2 सनीवन्तर्ध 7/2/49/
3 रधादिभ्यश्च 7/2/45/
4 स्वरतिसूति7/2/44
5 रधादिभ्यश्च 7/2/45
6 स्वरतिसूति.7/2/44
7 निरः कुषः 7/2/46/
8 स्वरतिसूतिः7/2/44
9 रधादिभ्यश्च 7/2/45/
10 स्वरतिसूति.7 /2 /44
11 सनीवन्तर्ध 7/2/49
12 आर्धधातुकस्येड्वलादेः 7/2/35

**षत्वम्–**

इकारपूर्वस्य सनः सकारः सर्वत्र षत्वमापद्यते[1] शुद्धस्य तु नामिस्वरेभ्यः कचजेभ्य शषहरेभ्यश्च[2] धातोरूपम्लिष्टस्य ॥

सन्धिनियमो यमिहोच्यते स्पष्टार्थम्। तथा चास्य सनस्त्रैरूप्यं सिद्धं भवति। इष-इति सेट सनो रूपम्। ष-इति नेट सनो रूपम्, यदि प्रकृतिसिद्धाद विकारसिद्धाद्वा धातोरन्त्यादिउऋवर्णाद्वा ककार,चकार, जकाराद्वा शकार, षकार, हकाराद्वा रेफाद्वा यं संयुज्यते। अन्यथा तु नेट् सनः स-इत्येव रूपम्। इष् ष् स-इत्येव त्रयोऽप्येते सनः स्वरान्ता न सन्ति। इषः प्रदेशाः सिस्मयिषतें पिपठिषति इत्यादयः। षः प्रदेशाः- चिचीषति। शुश्रूषते। चिकीर्षति। जिघृक्षति। पुपुक्षति। दिदृक्षते सिसृक्षते। पिपक्षते। शिक्षति इत्यादयः। सः प्रदेशाः-पिपासति बुभुत्सति। मीमांसते-इत्यादय। इति इडागमाधिकारः।

**धातुविकारः–**

स्वरलोपः, दीर्घः, गुणः-इति त्रयः स्वरविकाराः, व्यंजनलोपः, संप्रसारणं, वर्णविनिमयः, प्रयत्नविपर्य्ययः, श्वासगति, कुत्वं, तत्वं, षत्वं, टुत्वं-मिति नवैते व्यंजनविकाराश्चेत्येवं सनः संनियोगेन धातुविकारा उच्यन्ते।

**दरिद्रा, दीधी, वेवीनामन्त्यस्वरलोपः सेट्सनि[3]** /1/

दिदरिद्रिषति। नेट्सनि त्वाकारः श्रूयते। दिदरिद्रासति। दिदीधिषते। विवेविषते। इति स्वरलोपाधिकारः।

**नेट्सनि धात्वन्त्यस्वरो हन्तिस्वरश्च दीर्घो भवति नित्यं[4] विकल्पेन तु गमितन्योः[5]** /2/

चि। चिचीषति। श्रि। शिश्रीषति। यु। युयूषति। स्तु तुष्टूषति। दिव् दिद्यूषति। सिव् सुस्यूषति। ऊर्ण ऊर्णुनूषति। हन् जिघांसति। गमिश्चतुर्विधः। इण् गतौ। इक्

1 आदेशप्रत्यययोः 8/3/59

2 चोः कुः 8/2/30/ खरि च 8/4/55/ ब्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां सः 8/2/36/होढः 8/2/31/ षढोः कः सि 8/2/41

3 दरिद्रातेरार्धातुके विवक्षिते आलोपो वाच्यः (वा.4146) यीवर्णयोर्दीधीवेव्योः 7/4/53

4 अज्झनगमां सनि 6।4।16/

5 गमेरिट् रस्मैपदेषु 7/2/58/तनोतेर्विभाषा 6/4/17/

स्मरणे। इङ् अध्ययने। एषां सनि प्रयोगो नास्तीति गमयः प्रयुज्यन्ते[1]। स्वतन्त्रश्चैको गमिर्गत्यर्थः। तत्रादेशानां गमीनां स्वरस्य नित्यं दीर्घीभावः[2]। स्वतन्त्रस्य तु दैव्यां विकल्पः। आर्ष्यां तस्य नास्ति दीर्घः। तदेवं व्यवस्थितोऽत्र विकल्पो द्रष्टव्यः। जिगांस्यते। कर्मणि प्रयोगः। कर्तरि परस्मैपदित्वादिटो लब्धो दीर्घस्य नेष्टत्वात्। अधिजिगांस्यते। इङिकोरधिशब्द प्रयोगो नित्यः। अनादेशस्य तु गमेर्दैव्यामस्ति दीर्घः। स्वर्ग लोकं संजिगांसत्। आर्ष्यां तु संजिगंसते वत्सो मात्रा। कर्मप्रत्यये जिगंस्यते, संजिगंस्यते। तनोतेस्तु त्रैरूप्यम्। तितांसति। तितंसति। तितनिषति। सनोतेर्नलोपो वक्ष्यते। ततः स्वरान्तत्वादेव दीर्घसिद्धिः। सिषासति। इट्पक्षे तु सिसनिषति[3]। ऋकारस्तु न स्वरूपेणावतिष्ठते क्वापि। ततो न तत्रानेन सिद्धिः।

सना संयुक्ताद्रेफात् दीर्घीभवति[4] /3/

ऋवर्णस्य धात्वन्त्यस्येरादेशोरादेशौ वक्ष्येते[5]। तयोर्नेट्सनि दीर्घस्त्वं विधीयते। कृ। चिकीर्षति। हृ जिहीषति। धृ उद्दिधीर्षते। तृ तितीर्षति। वृ वुवूर्षति। धृ दुध्वूर्षति। स्वृ-सुस्वूर्षति। मृ मुमूर्षति।

कृगृभिन्नाद् ऋकारान्ताद् वृङ्वृञभ्यां चोत्तरस्य सेट्सन इकारो दीर्घीभवति विकल्पेन[6] /4/

स्वरितत्वादिड्विकल्प इत्येषां त्रैरूप्यम्। तृ। तितरीषति। तितीर्षति। विवरीषति। विवरिषति। वुवूर्षते। कृगुवृते तु नास्ति दीर्घः। चिकरिषति। जिगलिषति। भागवृत्तौ तु दृश्यतेऽनयोरपि दीर्घ विकल्पः। स नेष्यते। इति दीर्घाधिकारः ॥

सेट्सनीवर्णान्तानामन्त्येवर्णस्यायादेशः[7] /5/

स्मि सिस्मयिषते। श्वि शिश्वयिषति। श्रि शिश्रयिषति। शिश्रयिषते। डी डिडयिषते। शी शिशयिषते। एतान्येवोदाहरणानि। नेट्सनि दीर्घ उक्तः शिश्रीयति। शिश्रीयते। दीधीवेव्योस्त्वन्त्येकारलोपान्नायादेशः प्रसज्ज्यते[8]।

---

1 सनि च 2/4/47/इण्वदिकः (वा.1577)

2 अज्झनगमां 6/4/16/

3 जनसनखनां सञ्झलो.6/4/42/ समीवन्तर्ध. 722/49/

4 हलि च 8/2/77/

5 अज्झनगमां सनि 6/4/16/ ऋत इद्धातोः 7/1/100 उदोष्ठ्यपूर्वस्य 7/1/102/

6 वृतो वा 7/2/38/ अत्रेटो दीर्घो नेष्ट (कृ गृ) इति कौमुद्यां मूले उक्तम्।

7 सार्वधातुकार्धधातुकयोः 7/3/84/ एवोऽयवायावः 6/1/78/

8 यीवर्णयोर्दीधीवेव्योः 7/4/53/

**सेट्सन्युवर्णान्तानामन्त्योवर्णस्यावादेशः**[1]/6/

यु यियविषति। धू दिधविषति। दिधविषते। सू सिसविषते। पू पिपविषते। इह सिद्धरूपेष्ववादेशादुकारो न श्रूयते तेनाभ्युच्चयेऽपिनोकारः। नेट्सनि दीर्घ उक्तः[2]। युयूषति। दुधूषति। दुदूषते। सुसूषते। पुनातेः पुपूषति। पुपूषते॥

**ऊर्णोतेस्त्वन्त्योवर्णस्योवादेशो वादेशश्च सेट्सनि**[3]। उर्णुनुविषति। उर्णुनविषति नेट्सनि तु-ऊर्णनूषति।

**सेट्सनि ऋवर्णान्तानामन्त्य ऋवर्णस्यारादेशः**[4]/8/

ऋ अरिरिषति। दृ आदिदरिषते। धृ दिधरिषते। वृ विवरिषते। विवरीषते। विवरिषति। विवरीषति। जागृ जिजगरिषति। भृ विभरिषति। स्वृ सिस्वरिषति। एतावन्त एव प्रदेशा ह्रस्व ऋकारस्य। कृ चिकरिषति। गृ जिगरिषति। लत्वं विकल्पेन सामान्यशास्त्रात्। जिगलिषति[5]। जृ जिजरिषति। जिजरीषति। तितरिषति। तितरीषति[6]। अष्टादशप्रदेशा दीर्घ ऋकारस्यानुसन्धेयाः॥

नेट् सन्योष्ठ्यपूर्वस्य ऋवर्णस्योरादेशः शेष ऋवर्णस्येरादेशः[7] 1/9/

अनयोरिकारोकारयोर्नियमेन दीर्घादेशः प्रागुक्तः[8]। वृ वुवूर्षति। वुवूर्षते। भृ बुभूर्षति। स्वृ सुस्वूर्षति। मुमूर्षति। पृ पुपूर्षति। स्मृ सुस्मूर्षते। ध्वृ दुध्वूर्षति। ओष्ठ्यपूर्वत्वाभावे तृ-धृ। उद्दिधीर्षति। कृ चिकीर्षति। स्तृ तिस्तीर्षति। श्रृ शिशीर्षति। नृ निनीर्षति। झृ=जिझीर्षति। ॠ ईर्षिषति॥

व्यंजनादीनां यवहेतरव्यंजनान्तानामुपधाभ्यामिकारोकाराभ्यां प्रागकारागमो विकल्पेन सेट्सनि[9] 1/10

---

1 सार्वधातुकार्धधातुकयोः 7/3/84/ एचोऽयवायावः 6/1/78/
2 अज्झनगमां सनि 6/4/16/
3 विभाषोर्णो 1/2/3/ अचि श्नुधातुभ्रुवां 6/4/77/ सार्वधातुकार्ध 7/3/84/ एचोऽयवायावः 6/1/78/
4 सार्वधातुकार्ध. 7/3/84/ उरण् रपरः 1/1/51/
5 अचि विभाषा 8/2/21/
6 वृतो वा 7/2/38/
7 अज्झनगमां सनि 6/4/16/ उदोष्ठ्यपूर्वस्य 7/1/12/ ऋत इद्धातोः 7/1/100/
8 अज्झनगमांः 6/4/16/
9 रलोव्युपधाद्धलादेः संश्च 1/2/26/
पुगन्तलघूपधस्य च 7/3/86/

अकारेकारयोः संयोगादेकारः। अकारोकारयोस्त्वोकारः इति गुणः सन्धिकार्य्यम्। द्युत् दिद्योतिषते। दिद्युतिषते। रूच रूरोचिषते। रूरूचिषते। लिख लिलेखिषति। लिलिखिषति।

**शेषाणां व्यंजनान्तानामुपधाभ्यामिकारोकाराभ्यां प्रागकारागमो नित्यं सेट्सनि**[1] /11/

इष्। गुणादेषिषः सिद्धौ पश्चात् षिरभ्युच्चयः। एषिषिषति। उख् ओखिखिषति। दिव् दिदेविषति। सिव सिसेविषति। स्रिवं सिस्रेविषति। ष्ठिव तिष्ठेविषति। मुह मुमोहिषति। द्विष दिद्वेषिषति।

**ऋकारोपधानामुकारात् प्रागकारागामः सेट्सनि** /12/

अकारऋकारयोः संयोगादर्भावः सन्धिफलम्। ऋध अर्द्दिधिषति। वृध विवर्धिषते। वृत् विवर्तिषते। नृत् निनर्त्तिषति। कृत् चिकर्तिषति। चृत् चिचर्तिषति। छृद् चिच्छदिर्दषति। तृद् तितदिर्दषति। नेट्सनि ऋधः केवलमृकारस्येर्भावः। इंर्त्सेति। अन्यत्राविकारः।

**कुटादीनां गुणादीनां रूदिविदिमुषीणां च नायमकारागमः सेट्सनि**[2] /13/

**कुटिर्घुटिश्चतुटिश्दुटिर्जुटिस्तुटिस्त्रुटिः पुटिः।**
**स्फुटिर्मुटिर्लुटिः क्रुडि ब्रुडिः कुडिः खुडिः गुडिः /1/**
**चुडिश्छुडिस्तुडिस्थुडि स्थुडिः पुडिः स्फुडिः स्फुलिः।**
**स्फुरिश्छुरिर्गुरिर्गुजिः कुचिः कृडिः भृडि डिपिः /2/**
**त्रयोदश त्रयोदश त्रयस्त्रयश्च धातवः।**
**कुटादयो मता न तत्स्वरो विकारमश्नुते /3/**
**गुणिः कुणिः पुटिः कुहिः स्पृहिर्गुहिः कृपिमृंगिः।**
**गुणादयोऽष्ट धातवो न तत्स्वरो विकारभाक्/4/**



---

1 पुगन्तलघू.7/3/86/

2 गाङ् कुटादिभ्योऽञ्णिन्डित् 1/2/1/
गुणादयो धातवः पाणिनीये चुरादौ अजन्तेषु पठ्यन्ते तेषां "अतो लोपः 6/4/48/" इत्यल्लोपस्य स्थानिवद्भावात् गुणो न भवति।
रूदविदमुषग्रहिस्वपिप्रच्छ संश्च 1/2/8/

# कृदन्तपरिच्छेदः

## कृत्यप्रक्रिया

**धातोः परे य, [1]तव्या, नीये[2], लिमाः[3] स्युः**
**प्रैषातिसर्गप्राप्तकालार्हशक्येषु भावकारकेषु[4] बहुलम्।[5]**

यथेच्छं सर्वस्मादेव धातोरेते चत्वारः प्रत्ययाः कृत्यसंज्ञा[6] शक्यन्ते कर्तुम्। तत्र तावदयं य प्रत्ययस्त्रेधा संज्ञायते-यत् ण्यत् क्यप् चेति। य प्रत्यय निबन्धनाः प्रकृतो केचन विकारा जायन्ते तेषां वैलक्ष्यण्यानुरोधेनैते य प्रत्यये भेदाः प्रकल्प्यन्ते। तथा हि-

अस्ति कश्चन् य प्रत्ययो यस्मिन् सति धात्वन्तानामकाराणां लोपः,[7]आवर्णोवर्णानाम् एकारः,[8] क्वचिदिवर्णानामयादेशः उवर्णानामवादेशः[9] ऋवर्णानामरादेशः[10]प्रवर्तते स य प्रत्ययो गुणकरणो यत्संज्ञः ॥।

अस्तिकश्चन य प्रत्ययो यस्मिन् सति धात्वन्तानामिवर्णनामायादेशः उवर्णानामावादेशः,[11] ऋवर्णानामारादेशः,[12] चस्य कत्वं, जस्य गत्वं,[13] हनो

---

1 अचो यत् 3/1/17/ एतिस्तुशास्वृदृजुषः क्यप् 3-1!109/ ऋहलोर्ण्यत् 3/1/124/
2 तव्यत्तव्यानीयरः 3/1/92/
3 केलिमर उपसंख्यानम्। वार्तिक।
4 प्रैषातिसर्ग प्राप्तकालेषु कृत्याश्च 3/3/163
5 कृत्यल्युटो बहुलम् 3/3/113/
क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकम् वदन्ति ॥
6 कृत्याः 3/1/95
7 अतो लोपः 6/4/48/
8 ईद्यति। 6/4/65/ सार्वधातुकार्धधातुकयोः 7/3/84/
9 सार्वधातुकार्धधातुकयोः 7/3/84/ एचोऽयवायावः 6/1/78/
10 सार्वधातुकार्धधातुकयोः 7/3/84 उरण् रपरः 1/1/51×
11 अचोऽञ्णिति 7/2/115/ एचोऽयवायावः 6/1/78/
12 अचोऽञ्णिति 7/2/115/ उरण् रपरः 1/2/51/
13 चजोः कुघिण्यतो 7/3/52/

उकाराणामोकारः,[2] ऋकाराणामर्कारः[3] प्रवर्तते स य प्रत्ययो वृद्धिकरणे ण्यत् संज्ञः ।2।

अस्ति कश्चन प्रत्ययो यस्मिन् सति ह्रस्वान्तात् तकारोऽन्तागमः, खनो नस्येत्व,[4] मुज्झेर्झस्य घत्वं,[5] हनो नस्य तत्वं[6] युजो जस्य गत्वं,[7] स्वरते सूत्वं[8] शंस्यंज्योर्नलोपः[9] शास्तेराकारस्येत्वं[10] गुपो गस्य कत्वं[11] यजिर्वद्योर्यवयोः सस्वरयोः संप्रसारणं[12] प्रवर्तते स य प्रत्ययः आगमकरणः क्यप् संज्ञः ।3।

तदित्थं प्रकृतिविकाराः भिद्यन्ते। तद् भेदाच्च तत्प्रयोजके य प्रत्ययेऽपीदं त्रैविध्यमुपकल्प्यते। स्वरभेदश्चभवति। दृश्यते हि क्यबनुदातः[13] प्रायेण, यत्ण्यतौ तु स्वरितौ[14] प्रायेण त्रयोऽपि य प्रत्ययाः प्रदेशभेदेन प्रयुज्यन्ते नाविशेषं सर्वेभ्यः सर्वे विधीयन्ते। यदेव, ण्यदेव क्यपेवेति केवला वा, यत् ण्यत् क्यप् इति त्रिविकल्पो वा इत्येवं प्रदेशभेदेन व्यवतिष्ठन्ते। तस्मादेषां प्रदेशाः पृथक्कृत्य प्रदर्श्यन्ते=तत्रादौ-यत्-

अ.इ.वर्णन्तात् यत्[15] स्यात्।2। यति सत्यकारस्य धात्वन्तस्य लोपः[16] आकारेवर्णानामेकारः, शक्यार्थे तु क्षिज्योरिकारस्यायादेशः[17] क्रीणातेरिकारस्य चायादेशस्तदर्थे[18] दीधीवेव्योस्त्वन्त्येकारस्य[19] कारितेकारस्य च लोपः[20] स्यात्।3।

---

1 अत उपधायाः: 7/2/116/
2 पुगन्तलघुपधस्य च 7/3/86/
3 उरण् रपरः 1/1/51/
4 ई च खनः 3/1/111/
5 भिद्योद्यो नदे 3/1/115/
6 हनस्त च 3/1/108
7 युग्मं च पत्रे 3/1/121/
8 राजसूयसूर्यमृषोद्यरूच्यकुप्यकुष्टपच्याव्यध्याः 3/1/114/
9 आङ् पूर्वात्संसेरूपसंख्यानम्। वार्तिक, शंसिदुहिगुहिभ्यो वा। वार्तिक।
10 शास इदङ् हलोः 6/4/34/
11 राजसूयसूर्यमृषोद्यरूच्यकुप्यकुष्टपच्याव्यध्याः 3/1/114/
12 वचिस्वपियजादीनां किति 6/1/15/ वदः सुपि क्यप् च 3/1/106/
13 अनुदात्तौ सुप्पितौ 3/1/4/
14 तितस्वरितम् 6/1/185/
15 अचो यत् 3/1/97/
16 अतो लोपः 6/4/48/
17 क्षय्यजय्यौ शक्यार्थे 6/1/81/
18 क्रय्यस्तदर्थे 6/1/82/
19 यीवर्णयोर्दीधीवेव्योः7/4/53
20 णेरणिटि 6/4/51/

अकारान्तात् यप्रत्ययेऽकार लोपः[1] कथ-कथ्यम् गण-गण्यम् सन् यङ्, प्रत्ययान्तानामप्यकारान्तात् ततोऽपि यप्रत्ययेऽकारलोपः[2] दित्सदित्स्यं, दातुमेष्टव्यम्। धित्स्यम्। बोभूय-बोभूय्य पुनः पुनरतिशयेन वा भव्यम्।

अकारान्तात् य प्रत्यये तदाकारादुत्तरमिकारागमो विकरणो भवतीति सन्धिनैकार सिद्धिः। दा-देयं प्रदेयं। धा-धेयमवधेयम् हा-हेयम्। पा-पेयम्। गा-गेयम्। ग्ला-ग्लेयम्। ध्या-ध्येयम्। सा-अवसेयम्।

इकारान्तादीकारान्ताच्च य प्रत्यये प्रागकारागमादेकारसिद्धिः। इ अध्येयम्। चि-चेयम्। क्षि-क्षेतुं योग्यं क्षेयं पापम्। जि-जेतुं योग्यं जेयं मनः। शक्यार्थे तु क्षेतुं शक्यम् क्षय्यम्[3]। जेतुं शक्यं जय्यम्। नी-नेयम्। पी-पेयम्। क्री-क्रेयम्,क्रयणार्हमित्यर्थः। क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं द्रव्यं तु क्रय्यम्[4]। दीधीवेव्योस्त्वीकारोऽन्त्यो विलुप्यते[5]। दीध्यं वेव्यम् कारितेकारस्य य प्रत्यये सति लोपो[6] भवति। कारि-कार्य्यम्। कीर्ति-कीर्त्यम्। लक्षणोक्तोऽयं यद्विधिः। स प्रतिपदोक्तं ण्यत्क्यपो विषयं परित्यज्य प्रवर्तते[7]। प्रतिपदोक्तांशे लक्षणस्य संकुचितत्वात्। तथा च परिभाष्यते प्रतिपदोक्तादन्यत्र लक्षणोक्तानि कार्याणि नेयानि इति। लक्षणोक्तप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति च तेन नातिव्याप्तिः।

अकारोपधवर्ग्यान्ताद्[8]वपादिभिन्नात्[9] पणादिभ्यश्च[10] यत् स्यात्। जप्-जप्यम्। तप्-प्रतप्यम्। शप्-शप्यम्। रभ्-आरभ्यम्। लभ्-लभ्यम्। वपादिभ्यस्तु यत् प्रत्ययो नास्ति। 'वपादयो चपि लपि रपि त्रपि दभि श्चमिः॥' वाप्यम्। लप्यम्। आलाप्यम् विलाप्यम्। राप्यम् त्राप्यम्। दाभ्यम्। चाम्यम्। आचाम्यम्। एषु व्यंजनान्तनिबन्धनो लक्षणोक्तो ण्यत्। केचित्तु वपादिभ्यो बहुलम् यतमपीच्छन्ति।

---

1 अतो लोपः 6/4/48

2 अतो लोपः6/4/48/

3 क्षय्यजय्यौ शक्यार्थे 6/1/81/ अचोरहाभ्यां द्वे 8/4/46/

4 क्रय्यस्तदर्थे 7/1/82/

5 यीवर्णयो र्दीधवेव्योः 7/4/53/

6 णेरणिटि 6/4/51/

7 वासरूपोऽस्त्रियाम् 3/1/92

8 पोरदुपधात् 3/1/98/

9 आसुयुवपिरपिलपित्रपिचमश्च 3/1/126/

10 अवद्यपण्यवर्या 3/1/101/

वप्यम्, आलप्यम्। लप्यम्। दम्यम्। आचम्यम्। पणादिभ्यस्तु प्रतिदोक्तो यद्विधिलक्षणोक्तं ण्यतं बाध्यते।

**पणि,[1] स्तकिः,[2] शकिः,[3] शसिः,[4] सहि, वंधिः।**
**चेति, यंति, जंनिःपणादयोः मताः ॥1॥**

पण्यम् तक्यं शक्यम्, शस्यं, सह्यं, वध्यं,[5] चत्यं यत्यं जन्यम्। इति यद्विधिः।

**ण्यत्–**

**व्यंजनान्तात् ऋवर्णान्ताच्च ण्यत्[6] स्यात्।5।**

ण्यति सत्युपधायामकारेकारोकार ऋकार लृकाराणां ह्रस्वानां-क्रमादा[7] ए.ओ.अर्. अल्[8] स्यात् न तु कुटादिस्थानां गुणादिस्थानां[9] प्रवचादिभिन्नानां तु निष्ठानिटां धातूनामन्त्यस्य चस्य कत्वं, जस्य गत्वं,[10] हनस्तु हनयोर्घत्वतत्वे[11] ऋकारस्यान्तस्य त्वारादेशः[12] ।6।

व्यंजनान्तात् तावत्। राध् आराध्यम्। मेध-मेध्यम्। लोक-लोक्यम्। वर्ष-वर्ष्यम्। पठ-पाठ्यम्। वद्-वाद्यम्। विद्-वेद्यम्। भिद्-भेद्यम्। बुध्-बोध्यम्। शुध्-शोध्यम्। ऋच्-अर्च्यम्। चृत्-चर्त्यम्। कल्प्-कल्प्यम्। हन-घात्यम्।

त तवत् प्रत्ययौ[13]कृतौ निष्ठासंज्ञौ[14] भवतः। तौ द्वेधा-शुद्धौ चेकारपूर्वौ च। कृतः, कृतवान्। कथितः कथितवान् इति। तत्रेयमिकार इट् छब्देन[15] व्यपदिश्यते।

---

1 अवद्यपण्यवर्या गह्यपणितव्यानिरोधेषु 3/1/102,
2 तकि शसिचतियतिजनिभ्यो यद् वाच्यः। वार्तिक।
3 शकिसहोश्च 3/1/99/
4 शसिदुहिगुहिभ्यो वा
5 हनो वा यत् वधश्च वक्तव्यः। वार्तिक।
6 ऋहलोर्ण्यत् 3/1/113
7 अत उपधायाः 7/2/116/
8 पुगन्तलघूपधस्य च 7/3/86/
9 गाङ कुटादिभ्योऽञ्णिन्ङि त् 1/2/1/
10 चजोः कु घिण्ण्यतो 7/3/52/
11 होहन्तेर्ञ्णिन्नेषु 7/3/54/ हनस्तोचिण्णलो 7/3/39/
12 अचोंऽञ्णिति 7/2/115 उरण् रपरः 1/1/51/
13 निष्ठा 3/2/102/
14 क्तक्तवतू निष्ठा 1/1/26/
15 आर्धधातुकस्येड्वलादेः 7/2/35/

यस्माद्धातोरिमाविकारपूर्वो विधीयते स धातुर्निष्ठा सेडिति कथ्यते। यस्मात्तु शुद्धौ स्यातां स निष्ठानिट्[1]। ण्यत् प्रत्यये सति तेषां निष्ठानिटां धातूनामन्त्यस्य चस्य कत्वं, जस्य गत्वं[2] भवति न तु सेटां धातूनामन्त्यस्य चस्य कत्वं जस्य गत्वं भवति न तु सेटां प्रवचादीनां च[3]। पच् पाक्यम्। वच्-वाक्यम्। भुज-भोग्यम्। मृज्-मार्ग्यम्। सेटां तु-अर्ज्यम्। तर्ज्यम्। गर्ज्यम्। वर्ज्यम्। याच्यम्। पूज्यम्।

**प्रवचिस्तु ऋचिर्याचिः[4] पूजिस्त्याजिर्य[5] जीरूचिः।**
**वचस्त्वशब्दसंज्ञायां[6] गतौ वंचो[7] दने भुजः[8]।1।**
**नियुजिप्रयुजी शक्ये,[9] धातवः प्रवचादयः।**
**एषां ण्यति चजोः कुत्वं नास्तीत्याह स पाणिनिः।2।**

प्रवाच्यं ग्रन्थविशेषः अर्च्यम्। याच्यम्। पूज्यम्। त्याज्यम्। याज्यम् रोच्यम् वाच्यः[10] शब्दस्यार्थो भवति। शब्दस्तु वाक्यमित्येव। वञ्चिर्द्वयर्थः। तत्र गत्यर्थस्येह ग्रहणम्। वंच्यो गम्यः[11]। अन्यत्र तु वङ्क्यम् काष्ठं, कुटिलीकृतमित्यर्थः। भुजि द्वयर्थः। तत्र भक्षणार्थस्येह ग्रहणम्। भोज्यं भक्ष्यं[12] चेत्।भोग्यमन्यत् नियोक्तुं शक्यो नियोज्यो[13] भृत्यः। अहाद्यर्थे विवक्षिते तु नियोक्तुं योग्यो नियोग्यः प्रयोग्यः। अत्र याचिपूज्यादयः सेटोऽपि केचन पठ्यन्ते प्राचामनुरोधात्।

---

1 एकाचउपदेशेऽनुदात्तात् 7/3/10/ यस्य विभाषा 7/2/15/
2 चजोः कुघिण्ण्यतो 7/2/52/
3 न क्वादे 7/3/59/
'निष्ठायामनिट्' इत्युक्त्वा न क्वादे इति-प्रत्याचख्यौ।
4 यजयाचरूचप्रवचर्चश्च 7/3/66/
5 त्यजिपूज्योश्च। वार्तिक काशिका।
6 वचोऽशब्दसंज्ञायाम् 7/3/67/
7 वंचेर्गतौ 7/3/60/
8 भोज्यं भक्ष्ये 7/3/69/
9 प्रयोज्यनियोज्यौ शक्यार्थे 7/3/68/
10 वचो शब्द संज्ञायाम् 7/3/67/
11 वञ्चेर्गतौ7/3/60/
12 भोज्यं भक्ष्ये 7/3/69/
13 प्रयोज्यनियोज्यौ शक्यार्थे 7/3/68/

अथ ऋकारान्तात्। धृ-धार्य्यम्[1]। हृ-हार्य्यम्। तृ-तार्य्यम्। धृ-आधार्यम्। यद्यप्यविशेषेणायं-व्यञ्जनान्ताऋवर्णान्तांच ण्यद्विधीयते तथापि यत् क्यप् प्रत्ययाविषयादेवायं नेयः। यत् क्यपोः प्रतिपदविधानात् तावद्देशे लक्षणस्य संकुचितत्वात्[2]। इति ण्यद्विधिः।

**क्यप्-**

ऋकारोपधात् ऋचि-चृति-क्लपि भिन्नात् क्यप् स्यात्[3]। वृत्-वृत्यम्। वृध्-वृध्यम्। मृग्-मृग्यम्। हृष-हृष्यम्। नृत्-नृत्यम्। ऋचादीनां तु व्यंजनान्तत्वलक्षणो ण्यदेव[4]। अर्च्यम्।चर्त्यम्। कल्प्यम्। ऋकारेण लृकार ग्रहणं सम्प्रदाय सिद्धम्[5]।

**शासिजुषि दृ स्तुभ्यः क्यप् स्यात[6]**

क्यपि सति शास्तेराकारसकारयोरित्वषत्वे[7] ह्रस्वान्तात्तु तकारोऽन्तागमः[8] शासितुं योग्यः शिष्यः। जुषी प्रीतिसेवनयोः जुष्यः प्रीतियोग्यः सेव्यो वा। आदृत्यः। स्तुत्यः।

भिदेरूज्झेश्च क्यप् स्यात् झस्य धत्वं च नदेर्कर्तरि[9]। भिनत्ति कूलं भिद्यो नद्यः। उज्झत्युदकमुद्ध्यो नदः। नदादन्यत्र भेत्ता उज्झिता।

**नञुपधात्-व्यथे क्यप्[10] कर्तरि। न व्यथते अव्यथ्यः।**

आङ् पूर्वादञ्जेः क्यप्[11] संज्ञायाम् नलोपश्च[12] अञ्जूव्यक्तिभ्रक्षणकान्तिगतिषु अञ्ज्यतेऽनेनेत्याज्यं घृतम् करणे प्रत्ययः। प्राज्यमिति प्रव्यक्तं प्रभूतत्वात्। केचितु नाङ्

---

1 अचोऽञ्णिति 7/2/115/ उरण् रपरः 1/1/51/
2 वासरूपोऽस्त्रियाम् 3/1/91/इति विशेषः।
3 ऋदुपधाच्चाक्लृपिचृतेः 3/1/110/
4 ऋहलोर्ण्यत्3/1/113/
5 ऋलृवर्णयोर्मिथः सावर्ण्यम् वाच्यम्। वर्तिकरु
6 एतिस्तुशास्वृदृजुषः क्यप् 3/1/109/
7 शास इदङ्हलोः 6/4/34/ शासिवसिघसिनाञ्च/8/3/60
8 ह्रस्वस्य पिति कृति तुक् 6/1/71/
9 भिद्योद्ध्यौ नदे 3/1/115/
10 राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः 3/1/114/
11 आङ् पूर्वादञ्जेः संज्ञायामुपसंख्यानम्। वर्तिक
12 अनिदितां हल. 6/4/24/

पूर्वत्वमिच्छन्ति, न लोपेन सह दीर्घत्वं चाकारस्य मन्यन्ते। अवग्रहे विशेषः। इति क्यप् विधिः।

## यत् ण्यत्-

आनाय्योऽनित्ये दक्षिणाग्नौ प्राणय्यो संमतौ सन्नाय्यं हविषि वृत्तिविशेषे नयतेर्ण्यत्[1]। ईकारस्यायादेशः। समो दीर्घश्च। यो हि गार्पत्यादानीयते, सतन्तमप्रज्वलादनित्यश्च स आनाय्य। आनेयोऽन्यो घटादिः। वैश्यकुलादेरानीतो दक्षिणाग्निश्च।

संमतिः प्रीतिविषयीभवनं कर्म व्यापारः। प्राणाय्यश्चौरः[2]। प्रीत्यनर्ह इत्यर्थः। भोगेष्वादरोऽपिसंमतिः। प्राणाप्योऽन्तेवासी। विरक्त इत्यर्थः। प्रणेयोऽन्यः।

सम्यङ् मीयते होमार्थमग्निं प्रति सांनाप्यं[3] हविर्विशेषः। संनेयोऽन्यः।

उवर्णान्ताद् यत् स्यादावश्के तु द्योत्ये[4] स्तौति भिन्नात् ण्यत् स्यात्[5]। यति सति उवर्णस्थाने वादेशः[6] स्यात् ण्यति तु आवादेशः[7] हु-हव्यम्। द्रु-द्रव्यम्। श्रु-श्रव्यम्। पू-पव्यम्। लू-लव्यम्। भू-भव्यम्। अवश्यं भावे तु प्रत्याययितव्ये ण्यत्[8]। अवश्यं लवितुं योग्यं लाव्यम् पाव्यम्। अवश्यं भावो द्योत्ये विवक्षितः। न च द्योत्ये वाचक प्रयोगं प्रत्याचष्टे तेनावश्य शब्दप्रयोगोऽपि न दोषाय, अवश्यलाव्यम्। स्तौतेस्तु यद्यवश्यं भावोऽन्तर्भाव्यते अथवा नान्तर्भाव्यते सर्वथाऽपि क्यप् प्रत्ययः[9] एव न तु यत्ण्यतौ। स्तुत्यः। अवश्यस्तुत्यः।

अनावश्यकेऽपि यौतेण्यत् स्यात्[10] माससंज्ञायां तु यत्[11] स्यात्। यू-मिश्रणे। याव्यम्। माससंज्ञायां तु यव्याः संवत्सरावयवा द्वादशमासाः।

---

1 आनाय्योऽनित्ये 3/1/127/
2 प्राणाय्यौ संमतौ 3/1/128/
3 प्राय्यसान्नाय्यनिकाय्य धाय्यामानहविर्निवाससामीधेनीषु 3/1/129/
4 ओरावश्यके 3/1/125/
5 एतिस्तुशास् वृदृजुषः क्यप् 3/1/109/
6 सार्वधातुकार्धधातुकयोः 7/3/84/ एचोऽयवायावः 6/1/78/
7 अचोऽञ्णिति 7/2/115/ एचोऽयवायावः 6/1/78/
8 ओरावश्यके 3/1/125/
9 एतिस्तुशास् वृदृजुषः क्यप् 3/1/109/
10 आसुयुवपिरपिलपित्रपिचमश्च 3/1/126/
11 अचो यत् 3/2/97/

अमापूर्वाद्वसेरधिकरणे यत्ण्यतो[1] स्याताम्। अमा शब्दः सहार्थे निपातः। यस्यां तिथौ चन्द्रार्कौ सह वसतः सा तिथिरमावस्या। अमावस्या। अस्यां हि तावेकराशौ दृश्येते इयमेका पर्यायवृत्या विभाषा। -अन्यास्तु सर्वा एवात्र भिन्नवृत्त्या। अमावस्यामावास्या शब्दौ ह्येकस्यामेव रात्रौ पर्यायेण प्रयुज्येते। अन्ये तु वृत्तिभेदेन। यथा-अन्यस्यां वृत्तौ याव्यशब्दः प्रयुज्यते अन्यस्यां यव्य शब्दः।

**अर्तेर्यत् स्यात् स्वामीवैश्ययो[2] रूपपूर्वात् सरते-**

**प्रजने काल्यायां[3] नञ्पूर्वां जीर्यतेर्यत् स्यात्[4] स्तृ**

**मृ स्मृ ध्वृभ्यो यत्[5] स्याद्दैव्यां भाषायाम्**

**अन्त्य ऋकारस्थानेऽरादेशः[6] स्यात्।**

गन्तुमाश्रयितुं योग्यः अर्य्यः[7]। श्रेष्ठप्रवृत्तिनिमित्तो यं शब्दःप्रभो वेश्ये च निरूढिमागतः। ''अक्षैर्मादीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहु मन्यमानः तत्र गावः कितवः तत्र जाया तन्मे विचचष्टे सविता यमर्य[8]।''अयमर्यः ईश्वरः इत्यर्थः।

**''प्रियं मा कृणु देवेषुप्रियं राजसु मा कृणु**
**प्रियं सर्वस्य पश्यत उत शूद्र उतार्य्ये।''[9]**

देवराज शूद्राणां साहचर्यादर्यो वैश्यः। ये त्वार्य इति पदच्छेदमिच्छन्ति ते नितान्तं भ्रान्ता इत्यन्यत्रोपपादितम्। एवम्- यथेमां वाचं कल्याणी-मा वदानि जनेभ्यः

**ब्रह्मराजन्याभ्यां शूद्राय चार्य्याय च, स्वाय चारणाय च।[10]**

वैश्यत्वाद्यविवक्षायां तु ण्यत्[11] आर्य आश्रयणीयः उपगमयः। ब्राह्मणक्षत्रियवैश्येषु निरूढोऽयम्। अध्यात्म विद्योद्बुद्ध धर्मग्राहित्वे न सर्वप्राणिभ्यः श्रेष्ठत्वादित्याहुः। केचितु अर्याणामेकस्यैव परमेश्वरस्य विभूतिरूपाणामग्नीन्द्रवायूनां

---

1 अमावस्यदन्यतरस्याम् 3/1/122/
2 अर्यः स्वामिवैश्ययोः 3/1/103/
3 उपसर्या काल्या प्रजने 3/1/104/
4 अजर्यं संगतम् 3/1/105/
5 छन्दसिनिष्टक्र्यदेवहूयं 3/1/123/
6 सार्वधातुकार्धधातुकयोः 7/3/84/ उरण् रपरः 1/1/52/
7 अर्यः स्वामिवैश्ययोः 3/1/103/
8 ऋग्वेदः (10-34-13)
9 अथर्ववेदः 19-62-1
10 यजुर्वेदः (26-2)
11 ऋहलोर्ण्यत् (3-1-124)

भक्तिसिद्धत्वादेषां ब्राह्मणक्षत्रियवैश्यानामार्यत्वमित्येवं तद्धितव्युत्पत्तिमिच्छन्ति। ण्यत् प्रत्ययान्तस्य त्वार्यशब्दस्याराध्यमात्रे गुरूपित्रादौ प्रयोगः।

गर्भग्रहणे प्राप्ताकाला प्रजने काल्या। उपसर्य्या गौः[1] गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः। अन्यत्र ण्यत्। उपसार्या[2] प्राप्तव्येत्यर्थः।

**नजीर्यतीत्यजीर्यम्[3]संगतम्।**

"तेन संगतमार्येण रामाजर्यं कुरू द्रुतम्" इत्येवं संगतविशेषणतया जर्यशब्दः प्रयोगः। यत्र संगतमिति विशेष्यं न श्रूयते तत्र तदध्याहारः।

"मृगैरजर्यं जरसोपदिष्टमदेहवन्धाय पुनर्वबन्ध" इति यत्र संगतमेव जीर्यति कर्तृस्याद्विशेष्यं च तत्रैवायं यत्। तेन भावे संगतकर्तृकेऽपि ण्यदेव। अजार्यः संगतेन॥ मर्य्यो मर्त्यो मनुष्यः[4]। स्तर्य्या। स्त्रियामेवायाम्। ध्वर्यः।वैदिकभाषायामेवैते त्रयः प्रयुज्यन्ते न त्वार्ष्याम्।

**"अनुपसर्गेभ्यो गदिमदियमिचरिभ्यो यत्[5] स्याद्**
**यमेस्तु निपूर्वादपि यत्[6] स्यादाङ् पूर्वात्तु चरेरगुरौ[7]॥**

गद्यं निगद शब्दः। पद्यमिति तु पद् शब्दात्तद्धितव्युत्पन्न। माघतीति मघं। कर्तरि करणे भावे वा यत्[8]। यम्यम् चर्य्यः। चर्य्या क्रिया। साधुचर्या। दुश्चर्या दुरितिचर्यया युज्यते न चरतिना। तेनानुपसर्गत्वं न विहन्यते। तपश्चर्या ब्रह्मचर्यम्। भैक्ष्यचर्यम्। यमेस्तु निपूर्वत्वे यन्न प्रतिषिध्यते। नियन्तुं योग्यं नियम्यं विनियम्यम्। चरेरप्याङ् पूर्वत्वे यद् दृश्यते यद्यस्य वाच्यो गुरूर्न विवक्ष्यते[9]। आचर्यो देशः। साधुवृत्तमाचार्य्यम्।

---

1 उपसर्या काल्या प्रजने 3/1/104/

2 ऋहलोर्ण्यत् 3/1/124/

3 अजर्यं संगतम् 3/1/105/

4 छन्दसि निष्टक्र्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यंखन्यखान्यदेवयज्यावृच्छ्यप्रतिषीव्यब्रह्मवाघ भाव्यस्ताव्योपचाय्य पृडानि 3/1/123/

5 गदमदचरयमश्चानुपसर्गे 3/1/100/

6 न तत्र भवेद् विनियम्यमि, ति वार्तिक प्रयोगात्।

7 चरेराङि चागुरौ। वार्तिक।

8 पोरदुपधात् 3/1/98/

9 चरेराङि चागुरौ। वार्तिक।

विहितादन्यत्र ण्यत्[1]। निगद्यम्, उन्माद्यम्। आयाम्यम्। आचार्यो गुरूः। संचार्य्यम्, प्रचार्य्यम्।

वह्यम् वहनकरणे, पण्यं व्यवहार्ये॥ वहन्त्यनेन वह्यं शकटम्[2] वहन कर्मणि तु वोढुं योग्यं वाह्यं इत्थं क्रियताम्- एतत्प्रातिनिध्येन तुभ्यमिदं दास्यते इति मत् प्रतिदेयतया नियम्यते तत् पण्यम् [3]स्तुत्यादो तु पाण्यम्। ये तु पाण्य शब्दं नेच्छन्ति तदनुरोधेनायं पणिर्यत् प्रकरणे पठितः। इति यत्ण्यतोविधिः।

ण्यत्क्यपौ

कृ, वृषि,[4] मृजि,[5] रूचि,[6] दुहि, गुहि, शंसिभ्या[7] ण्यत्[8] क्यपौ स्यातां क्यपि शंसेर्नलोपश्च[9]॥

ण्यति तावदुक्ताः प्रकृतिविकाराः। करोते ऋकारस्यारादेशः[10]। वृषे ऋकार स्थानेऽरादेशः। मृजेर्ऋकारस्य तु आरादेशो[11] जस्य गत्वं च[12]। उपधोकार स्थाने ओकारः[13]। कार्य्यम्। वर्ष्यम्। मार्ग्यम्। रोच्यम्। दोह्यम्। गोह्यम्। शस्यम्। क्यपि तु करोतेस्तकारोऽन्तादेशः[14]। शंसेर्नकार लोपश्च कृत्यम्। वृण्यम्। मृज्यम्। रोचते-रूच्यम् कर्तरि प्रत्ययः। दुह्यं गुह्यं शंस्यं-प्रशस्यम्।

**भृञ्। भञः। संज्ञायां ण्यत् स्यादसंज्ञायां क्यप्[15] समस्त्वसंज्ञायां ण्यत्क्यौ।।**

---

1 ऋहलोर्ण्यत् 3/1/124/
2 वह्यं करणम् 3/1/102/
3 अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु 3/1/101/
4 विभाषा कृवृषोः 3/1/120/
5 मृजेर्विभाषा 3/1/113/
6 राजसूयसूर्यमृषोद्यरूच्यकुप्यकृष्टपच्याव्यथ्याः 3/1/114/
7 शंसिदुहिगुहिभ्यो वा। वार्तिक।
8 ऋहलोर्ण्यत् 3/1/124/
9 अनिदितां हल. 6/4/24/
10 अचोञ्णिति 7/2/115/उरण् रपरः 1/1/51/
11 मृजेर्वृद्धिः 7/2/114/ उरण् रपरः 1/1/51/
12 चजोः कुघिण्यतोः 7/3/52/
13 पुगन्तलघुपधस्य च 7/3/86/
14 ह्रस्वस्य पिति कृति तुक् 6/1/71/
15 ऋहलोर्ण्यत् 3/1/124/ भृञो संज्ञायाम् 3/1/112/

भार्या नाम क्षत्रियाः। भार्य्याविधूः। असंज्ञायान्तु भृत्याः कर्मकराः भर्तव्याः इत्यर्थः। क्रिया शब्दोऽयम्। सम्पूर्वत्वे तु संभार्याः संभृत्या[1] स्त्र्यधिकारे तु संज्ञायामप्यस्माद् भृञः क्यब् विधीयते। भृत्याः भृतिः।

कृष्टपूर्वात् पचेः क्यप् स्यात् कर्मकर्तरि[2]। कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः शुद्धे तु कर्मणि कृष्टपाक्याः। ण्यत्।

उपसर्गेतरनामन्युपपदे हन्तेर्भावे क्यप् स्यान्नस्य तत्वं[3] चान्यत्र तु हन्तेर्ण्यत्[4] स्याद् हकारनकारयोर्घत्वेतत्वे च[5]॥ ब्रह्मणो हननं ब्रह्महत्या। भ्रूणहत्या। बालहत्या। स्त्रीहत्या स्त्रीलिंगोऽयम्। अन्यत्र तु ण्यत् प्रत्ययः। हन्तुं योग्यो घात्यः। वध्य इति तु वधेरूक्तः।

युजः क्यप् स्यात् जस्य गत्वं च पत्रे,[6] गुपः क्यप् स्याद् गस्य कत्वं च[7] धन संज्ञायां पुषिसिद्धयोरधिकरणे क्यप् स्यान्नक्षत्र संज्ञायाम् [8]पत्रं वाहनम्। युग्यो गौः। पत्रादन्यत्र ण्यत्। योग्यः कर्मसु योगार्हः। कुशल इत्यर्थः। सुवर्णरजतभिन्नं धनं कुप्यम्। गोप्यमन्यत्। पुष्पन्त्यस्मिन् क्रियमाणा अर्थाः पुष्यः। सिद्धयन्त्यस्मिन् सिध्यः। प्रतिषेध्यः आषेध्यः।

ग्रहे क्यप् स्यात् पदास्वैरिवाह्यापक्ष्येष्वर्थेषु[9] प्रत्यपिभ्यां ग्रहेः क्यप्स्याद्दैव्यां भाषायाम्। क्यपि सति ग्रहेरेफस्य ऋत्वं स्यात्[10] प्रगृह्यं पदम्। अवगृह्यं पदम्। अस्वैरी परतन्त्रः। गृह्या गृह्यका वा शुकाः। पंजरादि बन्धनेन परतन्त्रीकृता इत्यर्थः। बाह्या तु ग्राम गृह्या सेना। ग्रामबहिर्भूतेत्यर्थः। स्त्रीलिंग विशेष्य एवायं स्वभावात् पक्षे भवः पक्ष्यः आर्यैर्ग्रह्यते- आर्यगृह्यः। आर्यपक्षाश्रित इत्यर्थः।

---

1 समश्च बहुलम् /वार्तिक /
2 राजसूयसूर्यमृषोद्यरूच्यकुप्यकृष्टपच्याव्यथ्याः 3/1/114/
3 हनस्त च 3/1/108/
4 ऋहलोर्ण्यत् 3/1/124/
5 होहन्तेर्ञ्णिन्नेषु 7/3/54/ हनस्तोचिण्णलोः7/3/39/
6 युग्यं च पत्रे 3/1/121/
7 राजसूयसूर्यमृषोद्यरूच्यकुप्यकृष्टपच्याव्यथ्याः 3/1/114/
8 पुष्यसिद्धौ नक्षत्रे 3/1/116/
9 पदास्वैरिबाह्यापक्षेषु च 3/1/119/
10 प्रत्यपिभ्या ग्रहेः 3/1/118/

प्रत्यपिभ्यां तु प्रतिगृह्यम्। अपिगृह्यम्। देवभाषा प्रयुक्तावेतौ आर्ष्यां तु प्रतिग्राह्यम्[1]। अपि ग्राह्यम्। लक्षणोक्तो ण्यत्।

पाणिपूर्वात् समवपूर्वाच्च सृजेर्ण्यत् स्यात्[2]। ऋकारोपधलक्षणस्य क्यपोऽयमुपपदविषयेऽपवादः। पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः। समवसर्ग्या[3]। अन्यत्र तु लक्षणोक्तः क्यप्[4]। सृज्यः। संसृज्यः विसृज्यः अतिसृज्यः। उत्सृज्यः। उपसृज्यः। खलसृज्य।

स्वरते क्यप् स्यात् ऋकार-स्वरभक्तिलोपश्च[5]॥ स ऊ ऋ इत्येषां त्रयाणाम् समष्टिरूपः स्वृ धातुः। तत्र ऋकारस्वरभक्ति लोपे रकारमात्रमवशिष्यते। स्वरत्वव्याघाताच्च। तन्निमित्तमूकारस्य वत्वं निवर्तते। प्रकृति प्रत्यापत्तिर्भवति। तेन सूर्य इति रूपसिद्धिः। एक एवायमर्थः स्वरश्च सूर्यश्च। स्वरोऽध्यात्मं प्राणः। सूर्योऽधिदैवतं प्राणः। प्राणादन्यत्र तु स्वार्य इति लक्षणोक्तो ण्यत्। भगवान् पतंजलिस्तु सरते सूर्यमाह सुवतेर्वा इति। ण्यत् क्यपोर्विधिः[6]।

## क्यप्यतौ

**अनुपसर्गादितेः क्यप् स्यात्[7] तकारोऽन्तागमश्च[8]। एतुं योग्यः इत्यः।**

सोपसर्गात्तु लक्षणोक्तो यत्[9]। उपेयोऽभिगम्यः अवेयोऽवगम्यः। अत्येयोऽतिक्राम्यः।

जिनीपूभ्यः क्यप् स्याद्हलि[10]। कल्कमुंजेषु जित्यो हलिः। बलेन क्रष्टव्य इत्यर्थः। कृष्टसमीकरणार्थ स्थूलकाष्ठम् विनीयः कल्कः पिष्ट औषधिविशेषः।

---

1 ऋहलोर्ण्यत् 3/1/124/अतः उपधायाः 7/2/116/

2 पाणौ सृजेर्ण्यद् वक्तव्यः।वार्तिक।

3 समवपूर्वाच्च। वार्तिक।

4 ऋदुपधात् 3/1/110/

5 राजसूयसूर्य.3/1/114/

6 सूर्यरूच्य अव्यथ्य इत्येते कर्तरि निपात्यते। किं निपात्यते? सूर्यः-
"सूसर्तिभ्यां सरतेरूत्वं सुवतेर्वा रूडागमः।"
सरणाद्वा सुवति वा कर्मणीति सूर्यः। सूर्य। (महाभाष्यम्)

7 एतिस्तुशास्वृदृजुषः क्यप् 3/1/109/

8 हस्वस्य पिति कृति तुक् 3/1/71/

9 अचो यत् 3/1/97/

10 विपूयविनीयजित्यामुंजकल्कहलिषु 3/1/117/

पापमित्यपरे। विपूयो मुंजः। रज्वादिकरणाय शोधयितव्य इत्यर्थः। अन्यत्र तु लक्षणोक्तो यत्[1] जेयः, विजेयः, नेयः, विनेयः, पव्यम् विपव्यम्। इति क्यप्यतोर्विधिः।

## यत् ण्यत् क्यप्–

उपसर्गेतरनामन्युपपदे भुवोभावे क्यप् स्यात्[2]। ब्राह्मणो भावो ब्राह्मभूयम् केवले सोपसर्गे च लक्षणोक्तौ भव्यं प्रभव्यं अवश्यभाव्यं।

''नञ्युपपदे वदेयत् स्यांद्गर्ह्ये[3] मृषोपपदे वदेः क्यप्[4] स्यादुपसर्गेतरनामन्युपपदेवदेर्यत् क्यपौ स्याताां,[5] देव्यां तु ब्रह्ण्युपपदे ण्यत्[6] स्यात्।

गर्ह्ये[7] यदेव। अवद्यं पापम्। तद्धि गर्हितत्वाद् वक्तुमयोग्यं भवति। यत्तु निमित्तान्तरवशाद् वक्तुमयोग्यं तदनुद्यं यथा गुरूनामादि। उपसर्गेतर नामन्युपपदे यत् क्यपोर्विधानात् उभयमपिसिद्धमेतत् अवद्यं-चानुद्यं[8] च। तत्राऽयं प्रयोगनियमः क्रियते। गर्ह्ये वद्य शब्दः प्रयोक्तव्योऽन्यत्र त्वनुद्यशब्दः मृषोपपदे क्यबेव। मृषोद्यं[9] मिथ्यावचः। तदितरनामसु यतक्यपौ। धर्मवन्द्यम् धर्मोन्द्यम् सामवन्द्यं सामोन्द्यं ब्रह्मवद्यम् ब्रह्मोद्यम् वेदवचनं भावे प्रत्ययः - कर्मणीत्येके ब्रह्मणा ब्राह्मणेन कथ्यमानाकथा ब्रह्मोद्या ब्रह्मवद्या दैव्यां तु भाषायां ब्राह्मणि ण्यत्-दृश्यते। ब्रह्मवाद्यम्[10]। उपपदाभावे तु वदेर्लक्षणोक्तो ण्यदेव[11] वाद्यम्। उपसर्गे चोपपदे ण्यभावे तु वदेर्लक्षणोक्तो ण्यदेव वाद्यम्। उपसर्गे चोपपदे ण्यदेव। अनुवाद्यम्। अपवाद्यम्। संवाद्यम्। विवाद्यम्। अभिवाद्यम्।

---

1 अचो यत् 3/1/97/

2 भुवो भावे 3/1/107/

3 अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु 3/1/101/

4 राजसूयसूर्यमृषोद्यरूच्यकुप्यकृष्टपच्याव्यथ्याः 3/1/114/

5 वदः सुपि क्यप् च 3/1/106/

6 छन्दसिनिष्टक्र्यदेवहूय. 3/1/123/

7 अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु 3/1/101/

8 वदः सुपि क्यप् च 3/1/106/

9 राजसूयसूर्यमृषोद्यरूच्यकुप्यकृष्टपच्याव्यथ्याः 3/1/114/

10 छन्दसिनिष्टक्र्यदेवहूय. 3/1/123/

11 ऋहलोर्ण्यत् 3/1/124/

यजेर्ण्यत्क्यपौ स्यातां[1] देवे तूपपदे यत् स्याद्। याज्यो याजमानः संप्रदाने कर्मणि वा ण्यत्। याज्या ऋक् करणे ण्यत् केचित्तु कारितान्ताद् यतमिच्छन्ति। याजयितुं योग्ये याज्यः याजयत्यनया याज्या[2]। भावे तु स्त्रियां क्यप्। इज्या। कर्मणि तु इज्यो गुरूः[3]। देवेज्यः। दैत्येजः। दैव्यां तु भाषायां देवपूर्वत्वे यत्[4]। देवयज्या देवयजनम्। शुन्धध्वं दैव्याय कर्मणे देवयज्यायै।

खनेः क्यप् स्यान्नस्येकारो दैव्यां तु यत्ण्यतौ स्याताम्[5]। खातुं योग्यं खेयम्। देवानां तु भाषायां खन्यं खान्यं च दृश्येते। परे त्वाहुः - खन् धात्वर्थे। खाधातुरप्यस्ति। खात्वा खातेत्यादौ व्यवस्थितप्रयोगदर्शनात्। तस्मादेवादन्तलक्षणेन यता[6] खेयसिद्धिः। खनस्तु यत्ण्यतौदैव्यामेवेष्यते प्रयोगो नार्ष्याम्।

**राजन्युपपदे सुञ् क्यप् स्यादुकारस्य च दीर्घत्व[7] माङि तूपपदे ण्यत्[8] स्यात्।**

राज्ञा सोतव्योऽभिषवद्वारानिष्पादयितव्यो राजसूयो नाम यज्ञ यद्वालतात्मक सोमो राजा, सोऽत्र सूयते खण्डयते इत्यधिकरण व्युत्पन्नो राजसूयः आङि त्वनावश्यकेऽपि ण्यत्। आसाव्यम्, अन्यत्र तु लक्षणोक्तो यत्[9] सव्यम् अपसव्यम्। इति यत् ण्यत् क्यपां भेदात् त्रेधा विभक्तो य प्रत्ययो व्याख्याताः।

## तव्यादयः

त एते त्रिविधानां य प्रत्ययानां प्रदेशा लक्षणशः प्रतिपदशश्च यथायथं प्रदर्शिताः। अतः परं तव्यानीयैलिमाः[10] प्रदर्श्यन्ते। द्विप्रत्यया हीमे तव्यानीयैलिमा उच्यन्ते। तव्यस्तावदयं तु य इत्येताभ्यां द्वाभ्यां प्रत्ययाभ्यां संहताभ्यां रूपं धत्ते।

---

1 व्रजयजोर्भावे क्यप् 3/3/98/ऋहलोर्ण्यत् 3/1/124/

2 ऋहलोर्ण्यत् 3/1/124/

3 व्रजयजोर्भावे क्यप् 3/3/98/

4 छन्दसिनिष्टक्र्य. 3/1/123/

5 ई च खनः 3/1/111/ छन्दसिनिष्टक्र्यदेवहूय.3/1/123/

6 अचो यत् 3/2/97/

7 राजसूयसूर्यमृषोद्य. 3/1/114/

8 आसुपुवपिरपिलपित्रपिचमश्च 3/1/126/

9 तव्यत्तव्यानीयरः 3/1/96/ केलिमर उपसंख्यानम्। वार्तिक।

10 तव्यत्तव्यानीयरः 3/1/96/ केलिमर उपसंख्यानम्। वार्तिक।

सर्वस्मादेव धातोरूत्तरं क्रमसंहतावेतौ द्वौ प्रत्ययौ युगपद् भवतः। तत्रैतस्मिन् य प्रत्यये तु प्रत्ययस्य धातुवदादेशाः प्रवर्तन्ते। तथा हि-

य प्रत्यये तु प्रत्ययोकारस्य वकारः स्यात् प्राक्तु तस्मादकारागमः। तथा च तयोयोगेन तव्यस्वरूपसिद्धिः। सोऽयं तव्य प्रदेशभेदेनादेशवशात् षोढा स्वरूपं धत्ते- इतव्य, ईतव्य, तव्य, टव्य, धव्य, ढव्य भेदात्। षोढाऽप्ययं द्वेधा विभज्यते- सेटकश्चानिटकश्च। इतव्येतव्यौ सेट्कौ। तव्यादयश्चत्वारोऽनिट्काः। सेडधातोरूत्तरं सेट्कस्तव्यो विधीयतेऽनिडधातोरनिट्को वेड् धातोस्तु यथेच्छम्। उदात्तो धातुः सेट्। अनुदात्तोऽनिट् यस्तु विभाषितस्वरः स वेट्। विकल्पेनेटस्तत्र सिद्धेः। ते चानिटो वेटः सेटश्च धातवो यथाक्रमं प्रदर्श्यन्ते-

**अनिटः**[1]

**दरिद्रावर्जमादन्त मिदन्तं श्रिश्विवर्जितम्।**
**ईदन्तं निहतं डी शी दीधीवेवीविवर्जितम्/1/**
**उदन्तमूर्णु नु यु रु क्षु क्ष्णु स्नु परिवर्जितम्।**
**ऋदन्तं निहतं विद्धि वृङ् वृञ् जागृ विवर्जितम्।/2/**
**धातुमूदन्तमृदन्तमदन्तं वापि कश्चन।**
**नानुदात्तं प्रपश्यामि, स्वरान्ता कथिता इमे।/3/**
**कवर्ग्यान्ते शकिं विद्धि,चवर्ग्यान्ते पचिं मुचिम्।**
**रिचिं वचिं विचिं तद्वत् सिचिं पृच्छिं त्यजिं निजिम्।/4/**
**भजिं भंजिं भुजिं भ्रस्जि मस्जी यजि युजिरूजिः।**
**रंजिं विजिं स्वंजि संजी स्वृजि निहतमुन्नयेत्।/5/**
**तवर्ग्यान्ते क्षुदि मदिं खिदि छिदि तुदी नुदिम्।**
**पद्यं भिदिं शदि सदी विन्ति विन्दन्ति विद्यति।/6/**
**स्विद्यं स्कन्दिं हदिं तद्वत् कुधिं क्षुधि वुधी अपि।**
**वन्धिं युधिं रूधिं राधिं व्याधिं साधिं सिधिं शुधिम्।/7/**

---

1 एकाच उपदेशेऽनुदात्तात् 7/2/10/
''अनिट्स्वरान्तो भवतीति दृश्यमाताम्, इमांस्तु सेटः प्रवदन्ति तद्विदः। अदन्तमदन्मृत्तां च वृङ् वृञौ श्विडीङि वर्णेष्वथ शीङ श्रिञावपि गणस्थमूदन्तमुतां च रूस्नुवौ क्षुवं तथोणोतिमथो युणुक्ष्णवः। इति स्वरान्ता निपुणं समुच्चिताः ततो हलन्तानपि सन्निबोधतः॥
(काशिका)

**मन्यं हनिं पवर्ग्यान्ते छुपि मपिं तपिं तिपिम्।**
**तृप्यदृप्ये लिपि लपि स्वपि सृपी शपिम्।/8/**
**क्षिपिं यमिं रभि लभी गमिं नमिं यमि रमिम्।**
**उष्मान्ते तु क्रुशिं दंशिं दिशिं दृशिम्सशीरिशिम्।/9/**
**रूशिं लिशिं विशिं तद्वत् स्पृशिं तुषि कृषि त्विषिम्।**
**द्विषिं दुषिं पुष्य पिषी विशिं शिषि शुषि श्लिषिम्।10/**
**घसिं वसिं दहि दिही दुहि नहि मिही रूहिम्।**
**लिहिं वहिं विजानीयादनुदात्तं तथाऽनिटम्।/11/**
**क च छ जा द ध न पा भ म शाः यसहा क्रमात्।**
**क च छा ण आ ख ड ग घ भ षृ र व जाः स्मृता!/12/**

दरिद्रा-दुर्गतौ। श्रि-सेवायाम्। श्वि-गतिवृद्धयो। डी-विहायशा गतौ। शी-स्वप्ने। दीधी-दीप्तिदेवनयोः। वेवीगतिव्याप्तिप्रजनकान्त्यशनखादनेषु। ऊर्ण-आच्छादने। नु-स्तुतौ। यु-मिश्रणामिश्रणयोः। रूर्द्विविधः। रू-शब्दे। रू-गतिरेषणयोः। क्षु-शब्दे। क्ष्णु-तेजने। स्नु-प्रस्रवणे। वृ-संभक्तौ। वृ-वरणे। जागृ-निद्राक्षये। एतदष्टदशधातु-भिन्ना-सर्व आकारान्ता इकारान्ता ईकारान्ता उकारान्ताऋकारान्ताश्च धातवोऽनुदात्ताः विज्ञेयाः। यु-शब्देन यौतेरिह पर्युदासात् क्रैयादिको यु-वन्धने धातुरप्यनुदात्त एव। तेभ्योऽनिट्कस्तव्यः स्यात्। लृवर्णान्ताः सन्ध्यक्षरान्ताश्च धातवो न सन्ति। तत् इत्थं स्वरान्तेषु कलृप्तः।

**व्यञ्जनान्तेषु यथा-**

1. कान्तेषु शकिरेकोऽनुदात्तः। स च शक शक्तौ सौवादिक इह गृह्यते। यस्तु शक् मर्षणे दैवादिकः स उदात्त एव।

2. चान्तेषु पच्यादयः षडनुदात्ताः। तत्र पच्-पाके, पच्-व्यक्तिकरणे इति द्विविधः पचिः। मुच्-मोक्षणे। रिच् विरेचने। रिच्-वियोजनसंपर्चनयोरिति द्विविधा रिचिः। वच्-व्यक्तायां वाचि, वच्-परिभाषणे इति द्विविधो वचि। विच्-पृथग्भावे। सिच्-क्षरणे।

3. छान्तेषु-पृच्छ-ज्ञीप्स्यायामित्येकः।

4. जान्तेषु-त्यजादयः पंचदशानुदात्ताः। त्यज्-हानौ। निज्-शौचपोषणयोरिति जौहोत्यादिक एव गृह्यते। आदादिकस्तु निज् शुद्धौ धातुरूदात्त एव। भज्-सेवायाम्। भंज्-आमर्दने। भुज्-पालनाभ्यवहारयोः,भुज्-कौटिल्ये। इति द्विविधो

भुजिः। भ्रस्ज् पाके मस्ज्-शुद्धौ। यज-देवपूजासंगतिकरदानेषु। युज-योगे। युज् समाधाविति द्विविधो युजिः। केचित्तु-युज-समाधो धातोरूदात्त-त्वमिच्छन्ति, तन्मतेऽयं सेट्। रूज्-रोगे। रंज-रागे भौवादिको दैवादिकश्च। भगवान् पतंजलिस्तु नैनां पठन्ति। विज्-पृथक्भावे जौहोत्यादिको-ऽनुदात्तः। विज्-भयचलनयोरिति रौधाधिकस्तूदात्त एव। स्वंज परिष्वंगे। संज-संगे। सृज्-विसर्गे दैवादिकस्तौदादिकश्चेति द्विविधः।

5. दान्तेषु-क्षुदादयः षोडशोऽनुदात्ता-क्षुद्-संपेषणे। अद् भक्षणे। खिद्-दैन्येरूधादिर्दिवादिश्च। खिद्-परिधातो-तुदादिः। छिद्-द्वेधीकरणे। तुद् व्यधने। नुद्-प्रेरणे। पद्-गतौ देवाादिको गृह्यते। भौवादिकस्तु पट्-स्थैये धातुरूदात्तः भिद्-विदारणे। शद शातने भ्वादिस्तुदादिश्च। विद्-धातुश्चतुर्धा। तदुक्तम्-

**सत्तायां विद्यते, ज्ञाने वेति, विन्ते विचारणे।**
**विन्दते विन्दति प्राप्तौ, श्यन् लुक् श्नम् शेष्विदं क्रमात्॥**

तत्र विद्-विचारणे, विद्-लाभे, विद्-सत्तायामित्येते त्रयोऽनुदात्ताः। विद्-ज्ञाने धातुस्तूदात्त एव। व्याघ्रभूत्यादयस्तु विद्-लाभे धातोरप्युदात्तत्वमेवेच्छन्ति। स्विद्-गात्रप्रक्षरणे दैवादिकः। यस्तु भौवादिकः स्विद् स्नेंहनमोचनयोः यो वा स्विद् अव्यक्ते शब्दे ताविमावुदात्तौ। स्कन्द-गतिशोषणयोः। हद्- पुरीषोत्सर्गे।

6. धान्तेषु क्रुधादय एकादशानुदात्ताः। क्रुध्-क्रोधे। क्षुध् बुभुक्षायां। वुध्-अवगमने दैवादिकः। यस्तु वुध्-बोधने भौवादिकः स उदातः। वन्धन वन्धने। युध्-संप्रहारे। रूध-आवरणे रौधादिकः अनो रूधकामे दैवादिकश्चेति द्विविधो रूधिः। राधं-संसिद्धौ। सिध्-संराधौ दैवादिकः। यस्तु सिध्-गत्यां भौवादिकः यो वा सिध्-शास्त्रे मांगल्ये च स उदातः। शुध्-शौचे।

7. नान्तेषु-मन्हनौ। द्वानुदात्तौ। तत्र मन्-ज्ञाने दैवादिकः। यस्तु मन-अवबोधने तानादिकः स उदातः। हन्-हिंसागत्योः।

8. पान्तेषु छुपादयस्त्रयोदशानुदात्ताः। छुप्-स्पर्शे आप् व्याप्तौ। तप्-रक्षणे। तप-संतापे भौवादिकाविमौ। तप्-ऐश्वर्ये दैवादिकः। तप्-दाहे चौरादिकः-इति चतुर्विधोऽपि तपिरनुदातः। पित्-क्षरणे। तृप्-प्रीणने दैवादिको गृह्यते। यस्तु तृप्-तृप्तौ तौदादिको या वा तृप्-तृप्तौ संदीपने च चौरादिकः ताविमावुदात्तौ। दृप्-हर्ष-मोहनयो दैवादिकः। यस्तु दृप्-उत्क्रोशे तौदादिको यो वा दृप्-संदीपने चौरादिकः, तावुदात्तौ। तृपद्रपोर्वेट्त्वेन वक्ष्यमाणत्वेऽपि अनुदात्तत्वसिध्यर्थमिहापि तत्पाठः। लिप्-उपदेहे। लुप् मोहने दिवादिः। लुप्-छेदने तुदादिरिति द्विविधो लुपिः। वप्-वीज सन्ताने छेदने च। स्वप् शयने। सृप्-गतौ। शप्-आक्रोशे क्षिप् प्रेरणे दिवादिः तुदादिश्च॥

9. भान्तेषु यभादयस्त्रयोऽनुदात्ताः। यभ-विपरीतमैथुने। रभ्-राभस्ये। लभ्-प्राप्तौ॥

10. मान्तेषु गमादयश्चत्वारोऽनुदात्ताः। गम्-गतौ। नम्-अह्नत्वे शब्दे च। यम्-उपरमे। रम्। क्रीडायाम्।

11. शान्तेषु क्रुशादयो दशानुदात्ताः। क्रुश-आह्वाने,रोदने च दंश-द्रशने। **दिश्-अतिसर्जने। दृश्-प्रेक्षणे।** मृश-आमर्षने। रिश्,रुश-हिंसायाम्। लिश-अल्पीभावे। **लिश्-गतौ तुदादिश्चेति द्विविधः।** विश्-प्रवेशने। स्पृश्-संस्पर्शने।

12. षान्तेषु कृषादय एकादशानुदात्ताः। कृष-विलेखने। भ्वादि-तुदादिश्च। तुष्-प्रीतौ। त्विष्-दीप्तौ। दिष्-अप्रीतौ। दृष्-वैकृत्ये। पुष्-पुष्टौ दैवादिकः। यस्तु भौवादिकः क्रैयादिको वा सावुदात्तौ। यो वा पुष्-धारणे चौरादिकः सोऽप्युदातः। षिष्-संचूर्णने गतौ च। विष्-प्राप्तौ जुहोत्यादिः। विष्-विप्रयोगे क्रमादिः। विष्-सेचने भ्वादिः। इति त्रिविधो विषिः। शिष्-विशेषणे। रूधादिः। शिष्-हिंसायाम् भ्वादिः। शिष्-असर्वोपयोगे चुरादिरिति त्रिविधः शिषि। वोपदे-वादयस्त्वाहुः - न जौहोत्यादिकभिन्नो विषिन वा रौधाधिकाभिन्नः। शिषिरनुदात्तौ मन्तव्य इति। शुष-शषणे ....। श्लिष्-आलिंगने दैवादिकः। यस्तु श्लिष्-दाहे भौवादिकः श्लिष्-श्लेषणे चौरादिकश्च स उदात्त इति कैयटादयः। केचित्त्वस्याप्यनिट्त्वमिच्छन्ति तदनादेयम्।

13. सान्तेषु घसवसौ द्वावनुदात्तौ। घस्-अदने भौवादिकश्चादादिकश्च।

वस्-निवासे भौवादिकः। यस्तु वस्-आच्छादने आदादिको यो वा वस-स्नेहच्छेदापहरणेषु चौरादिकः स उदात्तः।

14. हान्तेषु-दहादयोऽष्टावनुदात्ताः। दह्-भस्मीकरणे। दिह्-उपचये। दुह्-प्रपूरणे आदादिक एव गृह्यते। यस्तु दुह्-अर्दने भौवादिकः स उदात्तः एवेति प्रांचः। नह्-वन्धने। मिह्-सेचने। रूह्-वीजजन्मनि, प्रादुर्भावे च। लिह-आस्वादने। वह-प्रापणे। ष्वदिपदिपुषिशुषि शिषयः मृष-तितिक्षाया दिवादिः मृष्-सेचने सहने चेति भ्वादि स एष दृश्यते पातंजलेऽनिट् संग्रहतत्संवादिवचनं तु नोपलभ्यते।



पातंजले संग्रहे न दृश्यन्ते तत्र लेखक प्रमादोऽवधार्य्यते। व्याघ्रभूत्यादि संग्रहे पठितत्वात् भूयसाऽनिट्प्रयोगोपलब्धेश्च। तदित्थं व्यंजनान्तेषु त्र्यधिकं शतं धातवोऽनुदात्ताः सिद्धाः। एभ्योऽनिट्कस्तव्यः स्यात्।

वेट्-

सूतिसूयति धूनोति धूनाति स्वरतीति च।
स्वरान्ते व्यंजनान्ते तु जान्ते नक्ति च मार्ष्टि च ॥/1/
क्लिद्यति स्यन्दते दान्ते[1] धान्ते रध्यति[2] सेधति।
पान्ते तु त्रपते गोपायति[3] तृप्यति दृप्यति[4] ॥/2/
कल्पते[5] लुभ्यति भान्ते[6] क्षमते क्षाम्यतीति च।
मान्ते नाशान्ते नश्यतीति[7] षान्ते त्विष्णाति इच्छति[8] ॥/3/
अक्षत्यक्ष्णोति तक्ष्णोति तक्षति त्वक्षतीति च[9]।
निरः परस्तु कुष्णाति[10] तथा रोषयति रेषति ॥/4/
हान्ते तु सहते[11] तद्वत् गाहते गहतीति च।
गर्हते वहतिस्तद्वत् तृहंति स्तृहति[12] स्तृहिः ॥/5/
मुह्यति द्रुह्यतीत्येवं स्नुह्यति स्निह्यतीति च।[13]
द्विचत्वारिंशदित्येते धातवो वेट ऊहिताः ॥/6/

---

1 स्वरतिसूतिसूयति धूञूदितो वा 7/2/44/
2 रधादिभ्यश्च 7/2/45/
3 स्वरतिसूति.7/2/44/
4 रधादिभ्यश्च 7/2/45/
5 स्वरतिसूति.7/2/44/
6 तीषसहलुभरूषरिषः 7/2/48/
7 रधादिभ्यश्च 7/2/45/
8 तीषसहलुभरूषरिषः 7/2/48/
9 स्वरतिसूति.7/2/44/
10 निरः कुषः 7/2/46/
11 तीषसहलुभ.7/2/48/
12 स्वरतिसूति.7/2/44/
13 रधादिंभ्यश्च 7/2/45/

सू धातुस्त्रिविधः-सू-प्राणिगर्भविमोचने अदादिः ।सू-प्राणिप्रसवे दिवादिः । सू-प्रेरणे तुदादिः । तत्रादादिक दैवादिकौ वेटौ । तौदादिकस्तु नित्यं सेट् धू-धातुश्चतुर्विधः - स्वादौ, क्र्यादौ, चुरादौ च कम्पनार्थः । तुदादौ विधूननार्थश्च । तत्र तौदादिको नित्यं सेट् । अन्ये वेटः । चौरादिकस्य कारितप्रयोगाभावदशायां सौवादिकाद्यनतिरिक्तत्वाभिमानेन वेट् कारिकायामपृथङ् निर्देशः । इत्पूकारान्ते ।

स्वृ- शब्दोपतापयोरित्येक ऋकारान्ते । त एते पंच स्वरान्तेषु वेटो धातवः ।

अथ व्यंजनान्तेषु गण्यन्ते

1. जान्तेषु द्वौ-अंज्-व्यक्तिम्रक्षणकान्तिगतिषु रूधादिः । मृज्-शुद्धौ अदादिः ।

2. दान्तेषु द्वौ-क्लिद्-आर्द्रीभावे दिवादिः । स्यन्द प्रस्रवणे भ्वादिः ।

3. धान्तेषु द्वौ-रध्-हिंसासंराध्यो दिंवादिः । सिध् (षिधू)-शास्त्रे मांगल्ये च भ्वादिः । त्रिविधस्तु सिधिराम्नायते-सिध्संराद्धौ दैवादिकः सेड्निडुक्तः । सिध् गत्यां भौवादिकः स सेड् वाच्यः । यस्तृतीयः शासनाद्यर्थः स इह वेडुच्यते ।

4. पान्तेषु पंच-त्रप्-लज्जायां भ्वादिः । गुप्-रक्षणे भ्वादिः । तृप्-प्रीणने । दृप्-हर्षमोहनयोः । इमौ दिवादी । कृप् सामर्थ्ये भ्वादिः ।

5. भान्तेष्वेकः - लुभ्-गार्धे दिवादिः ।

6. मान्तेषु द्वौ-क्षम्-सहने भ्वादिर्दिवादिश्च ।

7. शान्तेष्वेकः नश्-अदर्शने दिवादिः ।

8. षान्तेषु दश-इषिस्तावद् त्रिविधः -इष्-इच्छायां तुदादिः । इष्-आभीक्ष्ण्ये क्र्यादिः । इष्-गतौ दिवादिः । तत्र तौदादिकः क्रैयादिकश्च वेटौ । दैवदिकः सेट् । केचित्त्वपाणिनीयाः क्रैयादिकस्यापि सेट्त्वमिच्छन्ति तदनादेयमिति पातंजलाः । अक्ष्-व्याप्तौ । तक्ष्-तनूकरणे । अविकरणो नुविकरणौ । त्वक्ष्-तनूकरणे भ्वादिः । कुष्-निष्कोषे धातुर्यदि निरः परः प्रयुज्यते तदा वेट् अन्यथा सेट् । रूष, रिष-हिंसायां भ्वादिः ।

9. हान्तेषु द्वादश-सह्-मर्षणे भ्वादिश्चतुरादिश्च । गाह्-विलोडने भ्वादिः । गुह्-संवरणे भ्वादिः । गर्ह्-गर्हणे भ्वादिः । गर्हधातुर्ग्रहधातुश्चातोऽतिरिच्येते । वह्-उद्यमने । तृह,स्तृह, तृंह-हिंसायाम् । एते तौदादिक । मुह्-वैचित्ये । द्रुह-जिघांसायाम् । स्नुह्-उद्गिरणे स्निह-प्रीतौ । एते दैवादिकाः । इत्थं द्वाचत्वारिंशद्धातवो वेट् सिद्धाः । तेभ्यो वक्ष्यमाणलक्षणानुसारेण यथायथं सेट्कश्चानिटकश्च तव्यो विधातुं शक्यः ।

## सेटः

य एते निटो वेटा वा धातवः परिगणितास्ततोऽतिरिक्ताः सर्व एवोदात्ताः धातवः सेटोऽवगन्तव्याः[1] तेभ्यः सेट् तव्यः स्यात्। इति सेट्कानिट्कविवेकः।

अथ तव्यादिषु पंचसु तव्यविशेषु कुत्र कस्य प्रयोगः इति व्युत्क्रमेण प्रदर्श्यन्ते।

## ढव्य

वहिसहिभ्यां परस्यानिट्कतव्यस्य तकारो ढत्वमापद्यते,[2] तत्र सति हकारस्य विसर्गवदुकारः स्यात्[3] /3/

वहेरनिट्त्वादनिट्क एव तव्यो विधीयते, सहेस्तु वेटत्वादनिट्कः सेट्कश्च। तत्रानिट्कतव्यस्य तकारमपनीय ढकारः क्रियते। तेनासौढव्यः सिद्धौ भवति। को ढक्कां वादयतीत्यत्र घोषवर्णे परतः सत्वे विसर्गो यथोकारो भूत्वा संधत्ते तथेह हकारोऽप्युकारो भूत्वा संधते वोढव्यम् सोढव्यम्।

मिहि लिहि रूहिभ्यो, द्रुहिमुहिस्नुहिस्निहिभ्यो गुहि ग्रहिवृहितृहि स्तृहिभ्यश्च परस्यानिट्क तव्यस्य तकारो ढत्वमापद्यते तत्र सति धातुस्वरात् प्रागकारागमो हलोपश्च[4]।

मिहादयस्त्रयोऽनिटः। द्रुहादयो नवैते वेटः। मेढव्यम्, लेढव्यम्, रोढव्यम्, द्रोढव्यम्, मोढव्यम्, स्नोढव्यम्, गर्ढव्यम्, वर्ढव्यम्, तर्ढव्यम्, स्तर्ढव्यम्।

गाहितृंहिभ्यां परस्यानिट्कतव्यस्य तकारो ढत्वभापद्यते तत्र सति इमौ वेटौ। गाढव्यम्, तृढव्यम्। षोडशैते ढव्य प्रदेशाः उक्ताः।

---

1 आर्धधातुकस्येड्वलादेः7/2/35/

2 झषस्तथोर्धोधः 8/2/40/ष्टुना ष्टुः 8/8/41/

3 होढः 8/2/31/,ढो ढे लोपः 8/3/13 सहिवहोरोदवर्णस्य 6/3/112/

4 पुगन्तलघूधस्य च 7/3/86/ हो ढः 8/2/31/ झषस्तर्थोर्धोधः 8/2/40/ ष्टुना ष्टुः 8/4/41/ ढो ढे लोपः 8/3/13/

## धव्य

दहिदिहिदुहिभ्यो द्रुहिमुहिस्नुहिस्निहिभ्यो नहेर्धान्ताद् भान्ताच्च परस्मादनिट्कतव्यस्य तकारो धत्वमापद्यते,[1]तत्र सति नामिस्वरात् प्राग्कारागमो[2] दहादेर्हस्य गत्वं[3] नहो हस्य धत्वं धस्यदत्वं[4] बत्वं च स्याद्[5] व्यधो वेधादेशंच।

इ उ ऋस्वरा नामिनः। हस्य गत्वं न जातु साक्षादुपपद्यते, किन्तु हकारात् प्राग् गकारागमेन हस्य घ भावसिद्धिः, ततः स्वरान्तस्थनासिक्य-परत्वाभावाादशक्योच्चारणो महाप्राण इति घकारादूष्मणो हस्य निवृतिः। तेनान्ततोगत्वे पर्यवसानम्। तदत्र प्रतिपतिलाघवाय हस्य गत्वमादिष्टम्। एवं दत्वमपि॥

दग्धव्यम्, देग्धव्यम्, संदेग्धव्यम्, द्रोग्धव्यम्, मोग्धव्यम्, स्नोग्धव्यम्, स्नेग्धव्यम्। द्रोढव्यादिभिरेषा विकल्पः[6] इति गप्रदेशाः। नद्धव्यम्, संनद्धव्यम्, राद्धव्यम्, साद्धव्यम्, व.इ अ ध्.-इति वर्णचतुष्टयात्मको व्यध् धातुः तत्र तव्यसंनिधाने इकाराकारयोर्विपर्यासो भवति। तेन व्यधावेधात्मना परिणामः। वेद्धव्यम्, सेद्धव्यम्, शोद्धव्यम्। व्यंजनात्परयोः स्पर्शयोः प्रथमो नोच्चारयितुं शक्यते- इत्येवं पश्यतां मते नदधानां दकारो विलुप्यते तेन संव (ब)न्धव्यम्[7]। इति द प्रदेशाः। यब्धव्यम्, रब्धव्यम्, आरब्धव्यम्, लब्धव्यम्, लोब्धव्यम्। इति ब प्रदेशाः। तदित्थं त्रयोविंशतिर्धव्यप्रदेशाः उक्ताः।

## टव्य

षान्तात् शान्तात् छान्तात् भ्रस्जि यजि सृजि मृजिभ्यश्च परस्यानिट्कतव्यस्य

---

1 झषस्तथोर्धो धः 8/2/40/
2 पुगन्तलघूपधस्य च 7/3/86/
3 दादेर्धातोर्घः 8/2/32/झलां जश् झशि 8/4/53/
4 नहो धः 8/2/34/ झलां जश् झशि 8/4/53/
5 झलां जश् झशि 8/4/53/
6 वा द्रुहमुहष्णुहष्णिहाम् 8/2/33/
7 झरो झरि सवर्णे 8/4/65/

तकारष्टत्वमापद्यते,[1] टव्ये परे नामिस्वरात् प्रागकारागमः स्यात् [2]सृजिदृशोस्तु ऋकारादुत्तरमकारागमो न प्राक्[3] स्पृशिमृशिकृषीणां तु प्राग् वोत्तरं वा पर्यायेणाकारागमः स्यात्[4]।

टव्ये परे नशेः शकारात् प्राङ् नकारागमो[5] भृजेर्ऋकारात् प्रागाकारागमः स्याद्,[6] क्षस्य क लोपो[7] भ्रस्जेः सलोपो विकल्पेन तु रेफाकारयो विपर्यश्च स्यात्[8]।

टव्ये परे धात्वन्तानां शच्छजानां षकारः स्यात्[9]। आदौ यकारान्तानामनिटाम्-त्वेष्टव्यम्, द्वेष्टव्यम्, श्लेष्टव्यम्, विश्लेष्टव्यम्, शेष्टव्यम्, शोष्टव्यम्, दोष्टव्यम्, तोष्टव्यम्, संतोष्टव्यम्, कर्ष्टव्यम्, क्रष्टव्यम्, वा। वेटां तु एष्टव्यम्, एषितव्यम्। अकारककारषकाराणां समष्टिरूपोऽयम् क्षधातुः। स टव्ये कलौ न प्रयुज्यते। अष्टव्यम्। अक्ष्णोतेरप्यष्टव्यम्। एवं तक्षतेस्तष्टव्यम्। तक्ष्णोतेरपि तष्टव्यम्, त्वष्टव्यम्, रेष्टव्यम्, रोष्टव्यम्, निष्कोष्टव्यम्, निरः परस्यैव कुषेर्वेट्त्वमिष्यते तेनान्यत्र नित्यं सेट्। कोषितव्यम्। प्रकोषितव्यम्। उत्कोषितव्यमिति। अथ शकारान्तामनिटाम्। दंष्टव्यम्, देष्टव्यम्, आदेष्टव्यम्, वेष्टव्यम्, आवेष्टव्यम्, प्रवेष्टव्यम्, संवेष्टव्यम्, निर्वेष्टव्यम्, लेष्टव्यम्, रेष्टव्यम्, रोष्टव्यम्, क्रोष्टव्यम्, आक्रोष्टव्यम्, दृशे-द्रष्टव्यम्। स्पृशेः स्पर्ष्टव्यम् स्प्रष्टव्यं वा। मृशेर्मर्ष्टव्यम् म्रष्टव्यं वा[10]। वेटां तु नंष्टव्यम्। इह नशेः स्वरादुत्तरं नकारागमः[11] प्रच्छेश्छस्य व इत्याहुः। वस्तुतस्तु पृ-अत्-श इत्येषां पंचानां समष्टिरूपः प्रच्छधातुः स क्वचिदकारलोपेन प्रयुज्यते यथा- पृच्छति पृच्छेत्यादिषु[12]।

---

1 ष्टुना ष्टुः 8/4/41/
2 पुगन्तलघूपधस्य च 7/3/86/
3 सृजिदृशोर्झल्यमकिति 6/1/58/
4 अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् 6/1/59/
5 मस्जिनशोर्झलि 7/1/60/
6 मृजेर्वृद्धिः 7/2/114/
7 स्कोः संयोगाद्योरन्ते च 8/2/29/
8 भ्रस्जोररोपधयो रमन्यतरस्याम् 6/4/47/
9 व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः 8/2/36/
10 अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् 6/1/59/
11 मस्जिनशोर्झलि 7/1/60/
12 ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृंजतीनां ङिति च 6/1/16/

क्वचित्तकारलोपे-यथा प्रष्टा,[1] प्रश्न[2] इत्यादिषु। क्वचित्तु लोपाभावेन यथा-पप्रच्छेत्यादिषु। तत्र यस्तलोपेन प्रयोक्तव्यस्तादृशो यं प्रदेशष्टव्ये निदृश्यते। प्रष्टव्यम् अत्रापि शकारस्यैव यकारो न तु वा छकारस्य पृथक् विधातव्यः। तलोपमात्रं विधातव्यम्[3]। एवं क्वचिदकारलोपेन प्रयुज्यते, यथा-भृज्जति[4]। क्वचित्सकारलोपेन यथा-भ्रष्टा[5]। क्वचिदकारसकारोभयलोपेन यथा भर्जनम्[6]। क्वचित्तु लोपाभावेन यथा बभ्रज्जेति। तत्र यः सलोपेन प्रयोक्तव्यस्तादृशो यं प्रदेशष्टव्ये निदृश्यते। भ्रष्टव्यम्। अत्र जकारस्य षकारो विधीयते[7]। तत्र न ज्ञायते कोऽयमनयोर्जकारषकारयोः पारस्परिक विपरिणाम योग्योऽभिसम्बन्धोऽस्तीति। न हि प्राणप्रयत्नयोः सन्निकर्षतारतम्यानपेक्षं सहसैव कश्चिद्वर्णो यथेच्छं वर्णान्तरत्वेन विकुरूते नहि ककारः सहसा मकारः शकारो वा भवन् द्रष्टः। स केन सम्बन्धेनायं जकारः सहसा षकारो भवतीति न विजानीमः। यथापि दृश्यते प्रयोग इत्येवमनुजानीमः। अथ सलोपे सति रेफाकारयो विपर्यासोऽप्यत्र विकल्पेनानुज्ञायते भर्ष्टव्यम्[8]। भर्जितव्यमित्यपि दृश्यते प्रयोगः स सेटो भृज-भर्जने धातोर्ज्ञेयः। न त्वनिटोः भ्रस्जेः यजेर्यष्टव्यम्। सृजेः स्रष्टव्यम्। मृजे मर्ष्टव्यम् (मार्ष्टव्यम्)। मार्जितव्यमिति तु वेट्त्वात्-सिद्धम्। इत्थमेकचत्वारिंशदिमे टव्यप्रदेशा उक्ताः।

### तव्य

धभहान्तान् छंशषान्तान् भ्रस्जि. यजि सृजि मृजीश्च वार्ययित्वा शेषादनिटो वेटश्च परस्यानिट्कतव्यस्य तकारो न विकारमापद्यते 1/1/

तव्ये परे धात्वन्ताद् धातूपान्त्याच्च नामिस्वरात् प्रागकारागमः स्यात्[9] तृपि दृपि सृपीणां तु सकारात् प्रागुत्तरं च पर्य्ययेणाकारागमः स्यात्[10] दीयते लीयते मीनाति मिनोतीनां तु

---

1 व्रश्चभ्रस्ज.8/2/36/

2 च्छ्वोः शूडनुनासिके च 6/4/19/

3 च्छ्वोः शूडननु. 6/4/19/

व्रश्चभ्रस्जसृजमृजयराजभ्राजच्छशां षः 8/2/36/

4 ग्रहिज्यावयिव्यधि.6/1/16/

5 स्को संयोगाद्योरन्ते च 8/2/29/

6 भ्रस्जो रोपधयो रमन्यतरस्याम् 6/4/47/

7 स्कोः संयोगाद्योरन्ते च 8/2/29 व्रश्चभ्रस्ज8/2/36/

8 भ्रस्जोरोपधयोरमन्यतरस्याम् 6/4/47/

9 पुगन्तलधूपधस्य च 7/3/86/ सार्वधातुकार्धधातुकयोः 7/3/84/

10 अनुदात्तस्य चर्दु. 6/1/59/

नामिस्वरस्था न आकारः स्यात्[1] वसेस्त्वकारस्याकारो यदि कर्तरि तव्यः स्यात्[2] 1/2/

भूषण समवाय प्रतियत्नं वैकृतवाक्याध्याहारेष्वर्थेषपात् परस्य भूषण-समवायोः समः परस्य तयोरेव च करोतेरादौ सकारागमः स्यात् परेः परस्य तु षकारागमः स्याद् भूषणे समवाये च[3] 1/3/

तव्ये परे मस्जेः सस्य नत्वं[4] धात्वन्तस्य मस्य नत्वं[5] चस्य जस्य च कत्वं,[6] दस्य तत्वं,[7] स्कन्दिस्पन्दोर्दलोपो वा,[8] धातूपान्त्यस्यानुनासिकस्य तु परसवर्णोऽनुनासिकः स्यात्।/4/

## (आ)

दरिद्रा पर्युदासादेकसप्ततिराकारान्ता धातवः। स्थातव्यम्,घ्रातव्यम्, ध्यातव्यम्, धातव्यम्, दातव्यम्, हातव्यम्, यातव्यम्, पातव्यम्, मातव्यम्, अवसातव्यम् इति।

## (इ)

श्रिश्विपर्युदासात् पंचविंशतिरिकारान्ता धातवः। इकारात् प्रागकारागमादेकारः सन्धिः[9]। जेतव्यम्, स्मेतव्यम्, विस्मेतव्यम्, एतव्यम्। अध्येतव्यम्। चेतव्यम्। क्षेतव्यम् मिनातेस्तु प्रक्षेपणार्थस्याकारोऽन्तादेशो न त्वकारागमः[10]। तेन मातव्यमित्येवं रूपम्।

---

1 मीनातिमिनोतिदीङां ल्यपि च 6/1/50/विभाषा लीयतेः 6/1/51/

2 वसेस्तव्यत् कर्तरि णिच्च। वार्तिक।

3 संपरिभ्यां करौतौ भूषणे 6/1/137/ समवाये च। 6/1/138/ उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च 6/1/139/ परिनिविभ्यः सेवसितसयसिवुसह-सुटुस्तुस्वंजाम् 8/3/71/

4 मस्जिनशोर्झलि 7/1/60/ स्कोसंयोगाद्योरन्ते च 8/2/29/

5 नश्चापदान्तस्य झलि 8/3/24/ अनुस्वारस्य ययि परसवर्णः 8/4/58/

6 खरि च 8/4/55/चोः कु 8/2/30/

7 खरि च 8/4/55/

8 झरो झरि सवर्णे 8/4/65/

9 सार्वधातुकार्धधातुकयोः 7/3/84/

10 मीनातिमिनोति. 6/1/50/

## (ई)

डी.शी.दी. (दीधीङ) वे (वेवीङ्) वी. पर्युदासात् सप्तविंशतिरीकारान्ता धातव ईकारात् प्रागकारागमादेकारः सन्धिः। भेतव्यम्, हेतव्यम्,पेतव्यम्,री श्रवणे, रीयते। री-गतिरेषणयो, रिणाति इत्येवं द्विविधो री धातुः रेतव्यम्। प्री-प्रीतौ, प्रीयते। प्री-तर्पणौ कान्तौ च प्रीणातीति द्विविधः प्री धातुः। प्रेतव्यम्, क्रेतव्यम्, श्रेतव्यम्। दी-क्षये धातोस्तु आकारोऽन्तादेशो न त्वकारागमः। तेन दातव्यमित्येव। मी-हिंसायामिति द्विविधो धातुः। तत्र ना विकरणस्याकारोऽन्तादेशः। मातव्यम् यस्तु मीयते इति य विकरणस्तस्य प्रागागम एव मेतव्यम्। ली-श्लेषणे इति द्विविधो धातुः लीयते च लिनाति च एकस्याकारोऽन्तादेशोऽन्यस्य प्रागागमः। ततो द्वैरूप्यं लातव्यम्। ली-द्रवीकरणे इत्यस्य तु लेतव्यमिति।

## (उ)

ऊर्णु. नु.यु. रू.क्षु. क्ष्णु. स्तु पर्युदासाचतुस्त्रिंशदुकारान्ता धातवोऽवशिष्यन्ते। उकारात् प्रागकारागमादोकारः सन्धिः[1]। श्रोतव्यम्, स्रोतव्यम्, स्तोतव्यम्, ह्नोतव्यम्, निह्नोतव्यम्, अपह्नोतव्यम् होतव्यम्, द्योतव्यम्, सुधातुस्त्रेधा-सौति सवतिश्चेतौ प्रसवैश्वर्यार्थो सुनोतिरभिषवार्थः। सोतव्यम्, सोतव्यम्, प्रसोतव्यम्, परासोतव्यम्, उत्सोतव्यम्, आसोतव्यम्। कु-शब्दे धातुस्त्रिविधाः-कौति च कवते च कुवते च। कोतव्यम्। गु-अव्यक्ते शब्दे। गवते, गु-पुरीषोत्सर्गे गुवति अनयोर्गोतव्यम्। ध्रु-स्थैर्ये ध्रवति, ध्रु-गतिस्थैर्ययोः ध्रुवति, तयो ध्रोंतव्यम्। च्युगतौ च्यवते। च्युसहने हसने वा च्यावयति। तयोश्च्योतव्यम्। दु=गतौ दवति। दु-तापे दुनोति तयोर्दोतव्यम्। धुकम्पने चतुर्धाधुनोति च धुनाति च धवति च धुवति च। तेषां धोतव्यम्। यु-धातुर्द्वेधा। तत्र बन्धनार्थस्य युनाते योंतव्यम्। यस्तु यौति मिश्रणामिश्रणार्थस्तस्येतव्यो वक्ष्यते। यवितव्यम्। एवं रू धातुरपि द्वेधा तत्र गतिरेषणार्थस्य रवते धातो रोतव्यम्। शब्दार्थ रौतेस्तु रवितव्यमित्येव।

## (ऊ)

दीर्घोकारान्तस्त्वनिड् धातुर्नास्ति। सू-धातुस्त्रेधाप्राणिगर्भविमोचने सूते। प्राणिप्रसवे-सूयते। प्रेरणो-सुवतिः। तेषां सुवतिर्नित्यं सेट्। अन्यौ द्वौ वेटौ तयोः सोतव्यं सवितव्यम् वा। एवं धू- धातुश्चतुर्धा धूनोतिर्धूनोतिर्धूनयतिश्च कम्पनार्था। धुवति

---

[1] सार्वधातुकार्धधातुकयोः 6/3/84/

विधूननार्थः। तत्र धुवतिर्नित्यं सेट्। अन्ये त्रयो वेटः। धोतव्यं धवितव्यं वा। इतोऽन्ये दश धातव ऊकारान्ताः शिष्यन्ते ते सर्वे सेट् एव।

## (ऋ)

वृ वृ जागृ पर्युदासात् षट्त्रिंशदृकारान्ता धातवः शिष्यन्ते। ऋकारात् प्रागकारागमादर्करः सन्धिः[1]। कृ-धातुस्त्रेधा-कृणाति कृणोति हिंसार्थौ। करोतिरूत्पादनार्थः। तेषां कर्तव्यम्। उपसंभ्यां परत्वे सकारः[2] परेस्तु षकारः[3] प्रागागमः सर्वप्रक्रिया साधारणः। उपस्कर्तव्यम्। संस्कर्तव्यम्। परिष्कर्तव्यम्। भूषणाद्यर्थाभावे तु न। उपकर्तव्यम्। संकर्तव्यम्। परिकर्तव्यम्। कृणातिकृणोत्योस्तु सकारागमो नास्त्येव उपकर्तव्यमित्यादि। स्तृ-आच्छादने द्वेधा-स्तृणातिश्च स्तृणोतिश्च तयोः स्तर्तव्यम्। पृ-धातुर्द्वेधा-प्रीत्यर्थः पृणोतिश्च व्यायामार्थो व्याप्रियते च। तयोः पर्त्तव्यम्, व्यापर्तव्यं चेति। स्मृ-धातुर्द्वेधा-आध्यानचिन्तार्थः स्मरतिश्च प्रीतिजीवनार्थः स्मृणोतिश्च। तयोः स्मर्तव्यम्। धृधातुस्त्रेधा-धरतिर्धारणे, धरतेऽवध्वंसने। ध्रियतेऽवस्थाने। तेषां धर्तव्यम्। दृ-धातुर्द्वेधा-द्रणोति हिंसार्थः द्रियते तु आदरार्थः। तयोर्दर्तव्यम्। घृ-धातु स्त्रेधा-घरतिः सेचनार्थः जिघर्तिः क्षरणदीप्त्यर्थः, घारयतिः प्रस्रवणार्थः। तेषां घर्तव्यम्। गृ-धातुर्द्वेधागरतिः सेचनार्थः, गृणातिर्विज्ञानार्थः तयोर्गर्तव्यम्। सृ-गतौ द्वेधा-सरतिश्च सिसर्तिश्च तयोः सर्वव्यम्। मृ-प्राणत्यागे-मर्तव्यम्। हृ-धातुर्द्वेधा-हरणे हरति, प्रसह्यकरणे जिहर्तिश्च तयोर्हर्तव्यम्। भृ-धातुर्द्वेधाभरणे भरति, धारणपोषणयोर्बिभर्तिश्च तयोर्भर्तव्यम्। ह्वरतिः, कोटिल्ये च संवरणे च ह्वर्तव्यम्। शब्दोपतापयोः स्वरतिर्वेट् स्वर्तव्यम्। पक्षे स्वरितव्यम्। दीर्घकारान्तात् त्वनिट् तव्यो नास्ति।

## (स)

अथ व्यंजनान्ताः वक्तव्याः तत्रादौ वस-निवासेऽकारविकरणे धातुरस्ति। तस्य स्वरस्तव्ये परे दीर्घीभवति स तव्यो यदि कर्तरि विहितः स्यात्[4]। वसतीति वास्तव्यः।

---

1 सार्वधातुकार्धधातुकयोः 6/3/84/उरण् रपरः 1/1/51/

2 संपरिभ्यां करोतौ. 6/1/137/ समवाये च 6/1/138/ उपात्प्रतियत्न.6/1/139/

3 परिनिविभ्यः सेवसित. 8/3/70/

4 वसेस्तव्यत् कर्तरि णिच्च। वार्तिक।

कर्मादौ तु वस्तुं योग्यं वस्तव्यमित्येव। वस् आच्छादने इत्यादीनां तु कर्तरि तयो नास्ति। कर्मादौ तु वस्तव्यमित्येव। घसे र्घतव्यम्।

**(क. च. ज.)**

अनिटां तावत् कचजान्तानाम् शक्तव्यम्, पक्तव्यम्, वक्तव्यम्, विवेक्तव्यम्, विरेक्तव्यम्, सेक्तव्यम्, मोक्तव्यम्, त्यक्तव्यम्,[1] विभक्तव्यम्, भङ्क्तव्यम्, मङ्क्तव्यम्। संक्तव्यम्, स्वंक्तव्यम्। रंक्तव्यम्। निर्णेक्तव्यम्, वेक्तव्यम्, भोक्तव्यम्, नियोक्तव्यम्, रोक्तव्यम्, वेटां तु अंक्तव्यमित्येकम् पक्षे अंजितव्यम्। इत्थं विंशतिः।

**(द)**

दान्तानाम्-अत्तव्यम्[2] प्रतिपत्तव्यम्, शक्तव्यम्, आसत्तव्यम्, हत्तव्यम्, स्कन्तव्यम्, वेत्तव्यम्, भेत्तव्यम्, छेत्तव्यम्, खेत्तव्यम्, स्वेत्तव्यम्, तोत्तव्यम्, नोत्तव्यम्, क्षोत्तव्यम्। वेटां तु सन्तव्यम्, क्लेत्तव्यम्, पक्षे स्यन्दितव्यम्, क्लेदितव्यम्। इत्थं षोडश॥

**(न.म)**

नमान्तानाम्-नितव्यमित्यपि दृश्यते प्रयोगः, स च मन बोधे तौदादिकस्य नेयः। मन्तव्यम्। हन्तव्यम्, गन्तव्यम्, नन्दव्यम्, नियन्तव्यम्, रन्तव्यम्। वेटान्तु क्षन्तव्यम्, क्षमितव्यम् वा इत्थं सप्त।

**(प)**

पान्तानाम्-आप्तव्यम्, वप्तव्यम्, स्वप्तव्यम्, शप्तव्यम्, तप्तव्यम्, तेप्तव्यम्, क्षेप्तव्यम्, लेप्तव्यम्, लोप्तव्यम्, छोतव्यम्। सृपितृपिदृपीणां प्रागागमादुत्तरागमाच्च द्वैरूप्यम्।[3]सर्प्तव्यम्, तर्प्तव्यम्, उर्प्तव्यमिति वा, स्रप्तव्यम्, त्रप्तव्यम्, द्रप्तव्यम् वा। तृपिदृप्योर्वेट्त्वात्-तर्पितव्यम् दर्पितव्यमित्यपि साधु। अन्येषां तु वेटाम्-कल्प्तव्यम्, कल्पितव्यं वा। त्रप्तव्यं त्रपितव्यं वा। गोप्तव्यं, गोपितव्यं वा। इत्थं षोडश। तदित्थं द्वे शते सप्तपंचाशच्च तव्य प्रदेशा भवन्ति।

---

1 चोः कुः 8/2/30/

2 खरि च 8/4/55/

3 अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् 6/1/59/

## ईतव्य

ग्रहेरेकस्वरात् परस्य सेट्क तव्यस्येकारो दीर्घः प्रयुज्यते,[1] वॄ धातोर्ऋकारान्ताच्च परस्य विकल्पेन[2] /1/

**ईतव्ये परे धात्वन्तादृवर्णात् प्रागकारागमः स्यात्[3]। /2/**

हिंसालवनयोरूपात् परस्य, हिंसायां प्रतेः परस्य च क्रिरतेरादौ[4]। सकारागमः स्यात्[5]।/3/

**गिरते रेफस्य विकल्पेन लत्वं स्यात् स्वरे परे[6]।/4/**

ग्रहीतव्यम्। यत्र तु चर्करीतादि प्रयोगवशादनेकस्वरो ग्रह धातुः तत्र ह्रस्व एवेकारः प्रयुज्यते। जरीगृहितव्यम्[7]। वृ धातुस्त्रेधा वृणीते संभक्त्यर्थः। वृणाति, वृणीते च वरणार्थः वृणोति वृणुते च वरणार्थः।वारयति वारयते चआवरणार्थः। एभ्योऽयमीतव्यो द्रष्टव्य इतव्यो वा। वरीतव्यं वरितव्यं वा।[8] एवं दीर्घ ऋकारान्ता धातवस्त्रयोविंशतिः। तेभ्योऽप्युभयं भवति। तरीतव्यं, तरितव्यं वा। जरीतव्यं जरितव्यं वा। परीतव्यं, परितव्यं वा। पर्तव्यमिति तु ह्रस्वान्तस्य संपद्यते। झरीतव्यं झरितव्यं वा। दरीतव्यं, दरितव्यं वा। नरीतव्यं नरितव्यं वा। शरीतव्यं, शरितव्यं वा। भरीतव्यं भरितव्यं वा। मरीतव्यं, मरितव्यं वा। अरीतव्यमरितव्यं वा। करीतव्यं करितव्यं द्विविधोह्यं कृधातुः। किरतिर्विक्षेपार्थः, कृणातिश्च हिंसार्थः। तत्रास्य किरतेः प्राक् सकारः प्रयुज्यते, स चेदुपाद्वा प्रतेर्वा परः स्यात्[9]। उपस्करीतव्यमुपस्करितव्यं वा, हिंसितव्यमित्यर्थः। छेत्तव्यं वेति तदर्थः। प्रतिस्करीतव्यं प्रतिस्करितव्यं वा, हिंसितव्यमित्यर्थः। गरीतव्यं, गरितव्यं वा। गलीतव्यं, गलितव्यं वा।[10]इत्थं सप्तविंशतिरितव्य प्रदेशाः उक्ताः।

---

1 ग्रहो लिटि दीर्घः 7/2/37/
2 वृतो वा 7/2/38/
3 सार्वधातुका. 6/3/84/ उरण् रपरः 1/1/51/
4 किरतौ लवने 6/1/140/ हिंसायां प्रतेश्च 6/4/141/
5 किरतौ लवने 6/1/140/ हिंसायां प्रतेश्च 6/4/141/
6 अचि विभाषा 8/2/21/
7 प्रकृतिग्रहणे न यङ लुन्तस्य। परिभाषा।
8 वृतो वा 7/2/38/
9 किरतौ लवने 6/1/140/ हिंसायां प्रतेश्च 6/4/141/
10 अचि विभाषा 8/2/21/

## इतव्य

**सेटो धातोः परस्तव्य इकारपूर्वः स्याद् वेटस्तु विकल्पेन[1] ।/1/**

अनिटो वेटः सेटो वा नाम्नो वा धातुकरणप्रत्ययान्तात् परस्तव्य इकारपूर्वः स्यात्।/2/

इतव्ये परे धात्वन्तयोरकारा[2]कारयोर्लोपादेश[3] इकारेकारयोरयादेश उकारोकारयोरवादेश ऋकार ॠकारयोररादेशो[4] दीधीवेव्योरन्त्यस्वरलोपः स्यात्[5] धुवत्यादीनां तु स्वरस्योवादेश[6]उर्णोतेरन्त्योकारस्य त्ववादेश उवादेशो[7] वा ब्रूधातोरप्रयोगः स्यात्[8]।/3/

**इतव्ये परे व्ययोऽ कारलोपः स्यादिकार तु यकारस्य[9] ।/4/**

इतव्ये परे धातूपान्त्यादिकाराद्वकार ऋकाराच्च प्रागकारागमः[10] स्यान्न तु विजते[11] र्न वा कुटादीनां,[12] नापि गुणादीनां,[13] गुहस्तूकारो दीर्घः स्यान्[14]

---

1 आर्धधातुकस्येड्वलादेः 7/2/35/

2 अतो लोपः 6/4/48/

3 आतो लोप इटि च 6/4/64/

4 सार्वधातुकार्ध.6/3/84/ एचोऽयवायावः 6/1/78/ उरण् रपरः 1/1/51/

5 यीवर्णयोर्दीधीवेव्योः 7/4/53/

6 अचिश्नुधातु. 6/4/82/

7 विभाषोर्णो :1/2/3/ अचिश्नुधातुभ्रूवां य्योरियङुवङौ 6/4/82/ सार्वधातुकार्ध.6/3/84/ एचोऽयवायावः 6/1/78/

8 ब्रुवो वचिः 2/4/53/

9 ग्रहिज्यावयिव्यधिवष्टिविचति.6/1/16/ संप्रसारणाच्च 6/1/108/

10 पुगन्तलघूपधस्य च 7/3/86/

11 विज इट् 1/2/2/

12 गाङ् कुटादिभ्योऽञ्णिन्ङित् 1/2/1/

13 गुणादयो धातवः पाणिनीये चुरादौ अजन्तेषु पठ्यन्ते तेषां अल्लोपस्य (अतो लोपः 6/4/48/) स्थानिवद्भावात् गुणो न भवति।

14 ऊदुपधाया गोहः 6/4/89/

मृजेर्ऋकारस्यत्वारादेश[1]ऋकारस्य त्वीरादेशो[2] जभेस्तु मकारागमः प्रागभकारात्[3]/5/

**कुटि घुटि श्रवुटि श्छुटि र्जुटि स्तुटि स्त्रुटिः पुटिः**
**स्फुटि र्मुटि र्लुटिः क्रुडि ब्रुडिः कुडिः खुडि र्गुडिः/1/**
**चुडि श्छुडि स्तुडि स्थडिः स्थुडिः पुडिः स्फुडिः स्फु**
**स्फुरि श्छुरि र्गुरि र्गुजिः कुचिः कृडि र्भृडि र्डिपिः/2/**
**त्रयोदश त्रयोदश त्रयस्त्रयश्च धातवः।**
**कुटादयो मता न तत्स्वरो विकारमश्नुते॥3॥**
**गुणिः कुणिः पुटिः कुहिः स्पृहि र्गृहिः कृपिर्मृगिः।**
**गुणादयोऽष्ट धातवो न तत्स्वरो विकारभाक्॥4॥**

अनिङ् वेट् सेडिति त्रिविधा धातुजातिरूक्ता। तत्रानिटो वेटश्च परिगणिताः। ततोऽन्ये सर्व एव धातवः सेटः। तेभ्योऽयमितव्यो विधीयते। तत्रापि ग्रहेर्विहितस्येतव्यस्येकारो नित्यं दीर्घत्वमापद्यते,[4] वृ-धातो र्ऋकारान्तेभ्यश्च विकल्पेनेत्युक्तम्।[5] ततोऽन्येभ्यः सेड्भ्यो वा वेड्भ्यो वा धातुकरण प्रत्ययान्तेभ्यो वा विंहितस्येतव्यस्येकारो ह्रस्व एव प्रयुज्यते।[6]

**तत्रादौ–**

**अकारान्तात्** – दरिद्रितव्यम्॥[7]

**इकारान्तात्** – श्रयितव्यम्, आश्रयितव्यम्, श्वयितव्यम्, उच्छ्रयितव्यम्।

**ईकारान्तात्** – शयितव्यम्, संशयितव्यम्, विशयितव्यम्, अनुशयितव्यम्, आशयितव्यम्, अतिशयितव्यम्, डयितव्यम्, उड्डयितव्यम्, निडयितव्यम्।[8] दीधीवेव्योस्त्वन्त्येकारलोपः। दीधितव्यम्। वेवितव्यम्।[9]

---

1 मृजेर्वृद्धिः 7/2/114/ उरण् रपरः 1/1/51/
2 ऋत इद्धातोः 7/1/100/ उरण् रपरः 1/1/51/
3 रधिजभोरचि 7/1/61/
4 ग्रहो लिटि दीर्घः 7/2/37/
5 वृतो वा 7/2/38/
6 आर्धधातुकस्येड्वलादेः 7/2/35/
7 दरिद्रातेरार्धातुके विवक्षिते आलोपो वाच्यः (वा 4146)
8 सार्वधातुकार्धधातुकयोः 6/3/84/ एचोऽयवायावः। 6/1/78/
9 यीवर्णयोर्दीधीवेव्योः 7/4/53/

**उकारान्तात्** - ऊर्णवितव्यम्, प्रोर्णवितव्यम्, पक्षे-उर्णुवितव्यम्, प्रोर्णुवितव्यम्,[1] नवितव्यम्, प्रणवितव्यम्। यवितव्यम्, अवयवितव्यम्। युनातेस्तु योतव्यमित्येव। रवितव्यम्। रवतेस्तु रोतव्यमित्येव। क्षवितव्यम्, क्ष्णवितव्यम्, स्नवितव्यम्। ध्रुवत्यादयस्तौदादिकाः षड् धातवः। तेषु ध्रु-गतिस्थैर्ययोः गु-पुरीषोत्सर्गे। कु-शब्दे-इति त्रयो ह्रस्वान्ताः तेषामुवादेशः [2]। ध्रुवितव्यम्, गुवितव्यम्, कुवितव्यम्।

**ध्रुवते**

**ऊकारान्तात्** - भवितव्यम्, प्रभवितव्यम्, पराभवितव्यम्, अनुभवितव्यम्, पवितव्यम्,लवितव्यम्, द्रवितव्यम्, कवितव्यम्, मवितव्यम्, सवितव्यम्,[3] वेट्त्वात् सोतव्यम्, धोतव्यमित्यपि। धुवत्यादीनां तु दीर्घान्तानामुवादेशः[4]। धू-विधूनने। धुवितव्यम्। नू-स्तुतौ-नुवितव्यम्। कू-शब्दे-कुवितव्यम्। धवितव्यम्, नवितव्यम्, कवितव्यमिति तु धुनोतेर्नौतेः कौतेश्च ह्रस्वान्तानां नेयम्। ब्रू- धातोः कृत्यप्रयोगो नास्ति तदर्थविवक्षायां वच् धातोरेव प्रयोगदर्शनात् [5]।

**ऋकारान्तात्** - जागरितव्यम्, वरितव्यम्। पक्षे-वरीतव्यमित्यपि।[6] स्वरितव्यम्-पक्षे स्वर्तव्यम्।[7]

**ॠकारान्तात्** - तरितव्यम्, जरितव्यम्, दरितव्यम्, रितव्यम्, परितव्यम्, मरितव्यमित्यादि[8]। पक्षे दीर्घविधानात् तरीतव्यम्, जरीतव्यमित्याद्यप्युक्तम्।[9]

**अकारोपधात्** - कपितव्यम्, कथितव्यम्, गणितव्यम्, पठितव्यम्, रचितव्यम्, गदितव्यम्,वदितव्यम्, स्वदितव्यम्, हसितव्यम्, वधितव्यम्। चलितव्यम, स्खलितव्यम्। जभ-गात्रविनामे भकारात् प्राङ् मकारागमः जम्भितव्यम् [10]। व्यच्-

---

1 विभाषोर्णोः 1/2/3/
2 अचि श्नुधातु.6/4/82/
3 सार्वधातुकार्ध.6/3/84 एचोऽयवायावः 6/1/78/
4 अचि श्नुधातुभ्रुवां 6/4/82/ गाङ् कुटादिभ्यो 1/2/1/
5 ब्रुवो वचिः 2/4/53/
6 वृतो वा 7/2/38/
7 स्वरतिसूतिसूयति धूञूदितो वा 7/2/44/
8 ॠत इद्धातोः 7/1/100/ उरण् परः 1/1/51/
9 वृतो वा 7/2/38/
10 रधिजभोरचि 7/1/61/

व्याजीकरणे तौदादिकः। तस्याकारो लुप्यते। यकारस्त्विकारभावं प्रपद्यते [1]। चेकार एव प्रयुज्यते न तु नियमान्तरेणैकारो भवति[2] विचितव्यम्।

**आकारोपधात्** – आसितव्यम्, उपासितव्यम्, भासितव्यम्, भाषितव्यम्। स्वादितव्यम्, आशासितव्यम्, निष्कासितव्यम्, चकासितव्यम्।

**इकारोपधात्** – एषितव्यम्, प्रेषितव्यम्, परिवेमितव्यम्। विज्धातुस्त्रिविधः पृथक् भावार्थो वेवेक्तिश्च, भयचलनार्थो विनक्तिश्च, भयचनलार्थ एवासौ विजतिश्च। तत्र वेवेक्ति (क्तेः) रनिट्त्वादितव्यो नास्ति। विनक्तेस्तु वेजितव्यमित्येव। यस्तु विजतिरूत्पूर्व एव प्रायेण प्रयुज्यते तस्येकारात् प्रागकारागमो नास्ति तत इकार एव भूयते नैकारः। उद्विजिव्यम्[3]।

**ईकारोपधात्** - ईरितव्यम्, प्रेरितव्यम्, समीरितव्यम्, ईशितव्यम्, ईषितव्यम्, ईहितव्यम्, कीलितव्यम्।

**उकारोपधात्** – शोचितव्यम्, मोदितव्यम्। कुटादयस्तौदादिका द्वात्रिंशत्। तत्रो न त्रिंशदुकारोपधाः डिपि रिकारोपधः। कृडि भृडी द्वावृकारोपधौ। नैषामितव्ये प्रागागमोऽकारः। कुटितव्यम्, निष्कुटितव्यम्।[4] घुटितव्यम्। जुटितव्यम्, त्रुटितव्यम्, संपुटितव्यम्। स्फुटितव्यम्, मुटितव्यम्, लुटितव्यम्, स्फुरितव्यम्, संकुचितव्यम्। डिपितव्यम्, कृडितव्यम्, भृडितव्यम्। केचित्तु लिखेर्मिलेश्च कुटादित्वभिप्रेत्य लिखितव्यं, मिलितव्यमित्येवं प्रयुंजते तदाकरविरूद्धम्।[5] कुटादीनां बहवोऽन्यत्र पठिताः सन्ति तेषां प्रागागमो भवत्येव। जोटितव्यम्, डेपितव्यम्। डिप्यतेः। लोटितव्यम् लोटतेः स्फोटितव्यम् स्फोटतेः। लोडितव्यम् लोडतेः। संकोचितव्यम्, कोचतेः।

---

1 ग्रहिज्यावपि.6/1/16/ संप्रसारणाच्च 6/1/108/

2 गाङ् कुटादिभ्यो.1/2/1/ पुगन्तलघूपधस्य.7/3/86/

3 विज इट् 1/2/2/

4 गाङ् कुटादिभ्योऽञ्णिन्डित् 1/2/1/

5 केचित्तु कुट आदिर्येषां ते कुटादयः, आदिः कुटादिः, कुटादिश्च कुटादयश्च कुटादय इति समासद्वयमाश्रित्य कुटपूर्वस्य लिख धातोरपि ग्रहणाल्लिखनमिति प्रयोगः सिद्धः इत्याहुः। तच्च 'रलोव्युपधात्' इति सूत्रस्थेन लिखित्वा लेखित्वा, लिलिखिषति इति वृत्तिग्रन्थेन, 'शकुनिष्वालेखने' इति सौत्रप्रयोगेन च विरूध्यते। इति बालमनोरमायाम् (1-८-2)

गुणादयश्चोरादिका अष्टौ। गुण, कुण-आमन्त्रणे केतने च गुणितव्यं कुणितव्यं।[1]पुट-संसर्गे-पुटितव्यम्। कुह-विस्मापने कुहितव्यम्। स्पृह-ईप्सायाम्, स्पृहितव्यम्। गृह ग्रहणे गृहितव्यम्। कृप् दौर्बल्ये, कृपितव्यम्। मृग्अन्वेषणे, मृगितव्यम्, मार्गितव्यमिति तु मार्गयतेर्नेयम्। मृग्यितव्यमिति च मृग्यतेर्नामधातोर्वदन्ति गण संवन्धाद् ऋकारोपधा अपि प्रदर्शिताः। अथ-गुहेरूकारात् प्रागुकारागमो न त्वकारागमः। गूहितव्यम्।[2]

**ऊकारोपधात्** – ऊहितव्यम्

**ऋकारोपधात्** – वर्धितव्यम्, वर्तितव्यम्, प्रवर्तितव्यम्, निवर्तितव्यम्, नर्तितव्यम्, धर्षितव्यम्, कर्तिव्यम्,[3] मृजेस्तु-शुद्धयर्थस्य ऋकारात् प्रागकारगमः मार्जितव्यम्।

**ऋकारोपधात्** – कीर्तितव्यम्।[4]

**सन्ध्यक्षरोपधात्** – नागमविकारादेशाविशिष्य विधीयन्ते एधितव्यम्

व्यंजनोपधाद्वा सेवितव्यम्, आलोचितव्यम्, विलोकितव्यम्,दक्षितव्यम्, दीक्षितव्यम्, घूर्णितव्यम्, चूर्णितव्यम्, चुम्बितव्यम्, लुम्बितव्यम्, अर्थितव्यम्, गर्वितव्यम्, सूत्रितव्यम्, मूत्रितव्यम्, चित्रितव्यम्, अंकितव्यमित्यादि ॥

**धातुकरणप्रत्ययान्तात्**– गोपायितव्यम्, जुगुप्सितव्यम्, मीमांसितव्यम्, चिकित्सितव्यम्, घातयितव्यम्, पाचयितव्यम्, चिकीर्षितव्यम्, दित्सितव्यम्, ईप्सितव्यम्, चेक्रीयितव्यम्, पुत्रीतव्यम्, ओजायितव्यम्।

इत्थं ढव्यादि परिगणितातिरिक्ताः सर्व एतव्य प्रदेशाः द्रष्टव्या इति ढव्य धव्य टव्य तव्ये तव्ये, तव्यानां भेदात् षोढा विभक्तस्तव्य प्रत्ययो व्याख्यातम्।

**अनीय–**

अथानीयो[1] व्याख्यातव्यः सोऽपि खलु-अन्-य-इत्येताभ्यां द्वाभ्यां प्रत्ययाभ्यां नित्यं संहताभ्यां स्वरूपं धत्ते। सर्वस्मादेव धातोरूत्तरं क्रमसंहतावेतौ द्वौ प्रत्ययौ युगपद्

---

1 गुणदयो धातवः पाणिनीये चुरादौ अजन्तेषु पठ्यन्ते तेषां 'अतो लोपः 6/4/48/' इत्यल्लोपस्य स्थानिवद्भावात् गुणो न भवति।

2 ऊदुपधाया गोहः 6/4/89/

3 पुगन्तलघूपधस्य च 7/3/86/ उरण् रपरः 1/1/51/

4 ऋत इद्धातोः 7/1/100/ उरण् रपरः 1/1/51/

भवतः। तत्रैतस्मिन् प्रत्यये परे अन् प्रत्ययस्य नकारादुत्तरतः पूर्वतो वा प्रत्यय दीर्घेकारागमः प्रवर्तते। तेनास्य प्रत्ययस्य द्वैरूप्यं सिद्धम् यदुत्तरतस्तत्तर्हि-अनीय इति रूपम्। यदि पूर्वतस्तत्तर्हि एन्य इति। भूयांसस्त्वनीयस्य प्रदेशा देव्यां चार्ष्यां च। अल्पीयांसस्त्वेन्यस्य लभ्यन्ते, तेऽपि दैव्यामेव। वरेण्यमिति वैदिका प्रयुञ्जते। वरणीयं तु वैदिकाश्च लौकिकाश्चेति तदनयोः प्रदेशेषु विकाराः प्रदर्श्यन्ते॥

अनीये चैन्ये च परे धात्वन्ताद् नामिस्वरात् प्रागकारागमः स्याद्[2] दीयते, लीयते मिनाति मीनोतीनां तु नामिस्वरस्था न आकारः स्यात्[3] धुत्यादीनां तु स्वरस्योवादेशः[4]।

अनीये चैन्ये च परे व्ययोऽकारलोपः स्यादिकार एव तु यकारस्य 12/[5]

अनीये चैन्ये च परे धातूपान्त्याल्लघोर्नामिस्वरात् प्रागकारागमः[6] स्यान्नतु कुटादीनां[7] नापि गुणादीनां[8] गुहस्तूकारो दीर्घः स्यान्[9] मृजेर्ऋकारस्य त्वारादेश[10] ऋकारस्य त्वीरादेशो[11] रधि (धे) र्नकारागमः प्राग् भकारात्[12] /3/

अनीये चैन्ये च परे धातुकरणप्रत्ययान्तानां धातूनां प्रत्ययस्वरलोपः स्यात्[13]/4/

**आकारान्तात्** – दानीयो ब्राह्मणः, दानीयं द्रव्यम्, पानीयम्, जलनामैतत्। स्नानीयम्-जलम्। स्थानीयं प्रकारादिपरिवेष्टितं सुविस्तीर्ण नगरम्। उपधानीयम्। प्रख्यानीयम् संस्त्यानीयम्।

---

1 तव्यत्तव्यानीयरः 3/1/92/
2 सार्वधातुकार्धधातुकयोः 6/3/84/
3 मीनातिमिनोतिदीडां ल्यपि च 6/1/50/ विभाषा लीयतेः 6/1/51/
4 अचि श्नुधातुभ्रुवां य्वोरियङुवङौ 6/4/82/
5 ग्रहिज्यावयिव्यधि.6/1/16/ संप्रसारणाच्च 6/1/108/
6 पुगन्तलघूपधस्य च 7/3/86/
7 गाङ् कुटादिभ्योऽञ्णिन्ङित् 1/2/1/
8 गुणादयो धातवः पाणिनीये चुरादौ अजन्तेषु पठ्यन्ते तेषां अल्लोपस्य (अलोलोपः)6/4/48/) स्थानिवद्भावात् गुणो न भवति।
9 ऊदुपधाया गोहः 6/4/89/
10 मृजेर्वृद्धिः 7/2/114/उरण् रपरः 1/1/51/
11 ऋत इद्धातोः 7/1/100 उरण् रपरः 1/1/51/
12 रधिजभोरचि 7/1/61/मिदचोऽन्त्यात्परः 1/1/47/
नश्चापदान्तस्य झलि 8/3/24/ अनुस्वारस्य ययि. 8/4/58/
13 अतो लोपः 6/4/48/ णेरनिटि 6/4/51/

**इकारान्तात्** – आश्रयणीयम्, चयनीयम्[1]। मिनोतेस्त्विकारस्यात्वम् मानीयम्[2]

**ईकारान्तात्** – शयनीयम्, उड्डयनीम्। दीयते, लीयते मीनातीनां त्वीकारस्यात्वम्। दानीयं, लानीयं, मानीयम्।

**उकारान्तात्** – भवणीयम्, स्तवनीयम्।

**ऊकारान्तात्** – लवनीयम्, पवनीयम्[3]। धुवत्यादीनां तु धुवनीयम्, कुवनीयम्[4]। ब्रू धातोः प्रयोगो नास्ति।[5]

**ॠकारान्तात्** – करणीयम्, आदरणीयम्, वरणीयम्।

**ऋकारान्तात्** – संतरणीयम्, प्रतरणीयम्, शरणीयम्, परणीयम्।

**अकारोपधात्** – गमनीयम्, प्रवचनीयम्, वि अच् इत्यनयोः समाहारोऽयं व्यचि धातुः तत्राचोऽकारलोपाद् विचनीयम्।[6] रधिरभोस्तु प्रागन्त्याद् व्यंजनान्ता नासिक्यागम इष्यते स धकारसम्बन्धान्नकारो भकारसम्बन्धात्तु मकारः फलति रन्धनीयम् जम्भनीयम्[7]। अस्तेः प्रयोगो नास्ति तस्य सार्वधातुकमात्र विषयत्वात्।[8]

**आकारोपधात्** – आस्वादनीयम्, आह्लादनीयम्, श्लाघनीयम्, शासनीयम्।

**इकारोपधात्** – चेतनीयम्, प्रतिषेधनीयम्, वेदनीयम्, देवनीयम्।

**ईकारोपधात्** – शीलनीयम्।

---

1 सार्वधातुकार्ध. 6/3/84/ एचोऽयवायावः 6/1/78/

2 मीनातिमिनोति.6/1/50/

3 सार्वधातुकार्ध. 6/3/84/ एचोऽयवायावः 6/1/78/

4 अचि श्नुधातुभ्रुवाः 6/4/82

5 ब्रुवो वचिः 2/4/53/

6 ग्रहिज्यावयिव्यधि 6/1/16/संप्रसारणाच्च 6/1/108/

7 रधिजभोरचि 7/1/61/ मिदचोऽन्त्यात्परः 1/1/47/ नश्चापदान्तस्य.8/3/24/ अनुस्वारस्य ययि. 8/4/58/

8 अस्तेर्भूः 2/4/52/

**उकारोपधात्** – शोधनीयम्, मोदनीयम्, अवरोधनीयम्, शोचनीयम्। मोचनीयम्। गुहस्तु-गूहनीयम्[1]। कुटादीनां-कुटनीयम्। घुटनीयम्, जुटनीयम्, स्फुटनीयम्, मुटनीयम्, त्रुटनीयम्, संकुचनीयम्[2]। गुणादीनां गुणनीयम्। कुहनीयम्।[3]

**ऊकारोपधात्** – कूजनीयम्, निषूदनीयम्।

**ऋकारोपधात्** – वर्तनीयम्, वर्द्धनीयम्। मृजेस्तु-मार्जनीयम्[4]। कुटादीनां-कृडनीयम्, भृडनीयम्। गुणादीनां-स्पृहणीयम्, गृहणीयम्, कृपणीयम्।[5]

**ऋकारोपधात्** – कीर्तनीयम्[6]

**सन्ध्यक्षरोपधात्** – सेवनीयम्, आलोचनीयम्, ढौकनीयम्।

**व्यंजनोपधात्** – कत्थनीयम्, मन्थनीयम्, लंघनीयम्। अर्दनीयम्, अर्चनीयम्, चेष्टनीयम्, वेष्टनीयम्।

**धातुकरणप्रत्ययान्तात्** – भावनीयम्, अध्यापनीयम्। चिकीर्षणीयम्, घित्सनीयम्, लिप्सनीयम्, चेक्रीयणीयम्। बोभूयनीयम्, बोभवनीयम्। पुत्रीयनीयम्,[7] पुत्रायनीयम्,[8] ओजायनीयम्, कण्डूयनीयम्। इत्यादि।

**एन्य–**

**वरेण्यम्। संचरेण्यम्, स्तुषेण्यम्, स्तरेण्यम्, सपर्य्येण्यम्। प्रेण्यः शुश्रूषेण्य[9]**

**''ईडया वा अन्ये देवाः सपर्थेव्या अन्ये देवाः। ईडया--------- ब्राह्मणाः सपर्येण्याः यज्ञेनैवेडयान् प्रीणात्यन्वाह---------- सपर्येण्यान्।।'' (अथर्ववेदीयकौशिकसूत्रद्वयम्)**

---

1 ऊदुपधाया गोहः 6/4/89/
2 गाङ् कुटादिभ्योऽञ्णिन्ङि त् 1/2/1/
3 अतो लोपः 6/4/48/
4 मृजेर्वृद्धिः 7/2/114/ उरण् रपरः 1/1/51/
5 गाङ् कुटादि. 1/2/1/
6 ऋत इद्धातोः 7/1/100/ उरण् रपरः 1/1/51/
7 उपमानादाचारे 3/1/10/ क्यचि च 7/4/33/
8 कर्तुः क्यङ् सलोपश्च 3/1/11/ अकृत्सार्वधातुकयोर्दीर्घः 7/4/25/
9 कृत्यार्थे तवैकेन्केन्यत्वनः (3-4-14)

**इदं यत्प्रेण्य इति (वि) शिरः कर्णमभिमन्त्रयते (कौशिक सूत्रम्)**

जुष्टामद्ये देवेभ्यो वाचं वदिष्यामि, शुश्रुषेव्यां मनुष्येभ्य स्वधावती पितृभ्यः ॥ (शाखायनश्रौतसूत्रम् 1/4/)

## एलिम

अथैलिमः प्रदर्श्यते।[1] ए ''एल'' ''इम'' इत्येताभ्यां द्वाभ्यां प्रत्ययाभ्यां नित्यसंहताभ्यां स्वरूपं धत्ते। सर्वस्मादेव धातोरूत्तरं क्रमसंहतावेतौ प्रत्ययौ युगपद् भवतः। तत्रैतस्मिन्निमप्रत्यये परे कृत्रिमादिवत् पूर्वप्रत्ययान्त्याकार लोपः [2]। तत्र सति विकाराः प्रदर्श्यन्ते-

एलिमे परे धात्वन्तयोरकाराकारयोर्लोपः स्यादु[3] कारोकारयोरूवादेशः स्यादिकारेकारयोस्त्वेकस्वरधात्वन्तयोरियादेशः[4] स्याद् दीयतेस्त्वीयादेशः[5] स्यादेतेस्तु यकारः स्यादनेकस्वरधात्वन्तयोस्त्विकारेकारयोर्यकारः स्यादृकारस्य रेफः[6] स्याज्जागर्तेस्त्वृकारस्यारादेशः[7] स्याद्दकारस्य त्विरादेशः[8] स्याद् (दा) देशस्त्वोष्ठ्य पूर्वस्य[9] ॥

एलिमे परे जिनाते र्जियादेशो[10] ययते र्वियादेशो[11] वयते रूवादेशो हूयते र्हुवादेशः[12]श्वयते शुवादेशः[13] इति सर्वादे शा।2।

---

1 केलिमर उपसंख्यानम्। वार्तिक।
2 अतो लोपः 6/4/48/णेरनिटि 6/4/51/
3 अतो लोपः 6/4/48/ आतो लोप इटि च 6/4/64/
4 अचि श्नुधातुभ्रुवां य्वोरियङ्ुवङौ 6/4/77/
5 दीङो युडचि क्ङिति 6/1/63/
6 इणो यण् 6/4/81/ एरनेकाचो संयोगपूर्वस्य 6/4/82/
7 जाग्रोऽविचिण्णल्ङि त्सु 7/3/85/ उरण् रपरः 1/1/51/
8 ऋत् इद्धातो 7/1/100/ उरण् रपरः 1/1/51/
9 उदोष्ठ्य पूर्वस्य 7/1/102/
10 ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छति भृज्जतीनां ङिति च 6-1-16
11 वचिस्वपियजादीनां किति 6।1।15/
12 अचि श्नुधातुभ्रुवां 6/4/77/
13 वचिस्वपियजादीनां किति 6/1/15/ संप्रसारणाच्च 6/1/108/

एलिमे परे गमः हन.जन.खन.घसामुपधास्वरलोपः स्यात्[1]हनो हस्य घत्वं[2]जनो नस्य ञत्वं घसो घस्य कत्वं सस्य षत्वं च[3] ।3।

**एलिमे परे रधेर्नकारागमः प्राग् धकाराज्जभेर्मकारागमः प्राग्भकारात्[4]।4।**

एलिमे परे यजि[5]व्यचिव्यधीनां [6] यकारस्येकारोऽकारस्य च लोपः स्याद् वदिवशिस्वपीनां वकारस्योकारो[7]ऽकारस्य लोपः स्याद्[8] व्रश्चि प्रच्छि भ्रस्जि ग्रहीणां रेफस्य ऋकारोऽकारस्य लोपः स्यात्[9] ।5।

**गिरते रेफस्य विकल्पेन लत्वं स्यात् स्वरे परे[10]।6।**

**एलिमे परे धातूपधानां नासिक्यानां वर्जितानां लोपः स्यात्।/7/**

## आ

आदन्तामालोपः सर्वत्र[11]-आधेलिमाः,विधेलिमाः, प्रदेलिमाः दरिद्रेलिमाः, ज्या वयोहानौ। आलोपः पकारात् प्रागिकारागमः जियेलिमाः[12]एवं व्या संवरणे। वियेलिमाः। वा-तनुसंताने। आलोपः वकारात्प्रागुकारागमः[13] उवेलिमाः। एवं ह्वा-स्पर्द्धायां शब्दे च हुवेलिमाः।

## इ

इदन्तानां श्वयति भिन्नानामिकारस्य यकारः सर्वत्र ततः प्रागिकरागमः[14] स्यादेति भिन्ननाम्-जियेलिमाः, विस्मियेलिमाः, आश्नियेलिमा, संश्रियेलिमाः,

---

1 गमहनजनखनघसां लोपः क्ङित्यनङि 6/4/98/
2 हो हन्ते र्ञ्णिन्नेषु 7/3/54/
3 स्तोः श्चुना श्चुः 8/4/40/ खरि च 8/4/55/शासिवसिघसीनां च 8/3/60/
4 रधिजभोरचि 7/1/61/ मिदचोऽन्त्यात्परः 1/1/47/ नश्चापदान्तस्य झलि 8/3/24/ अनुस्वारस्य ययि परसवर्णः 8/4/58/
5 वचिस्वयियजादीनां किति 6/1/15/
6 ग्रहिज्यावयिव्यधिवष्टिविचति.6/1/16/
7 वचिस्वपियजादीनां किति 6/1/15/
8 संप्रसारणाच्च 6/1/108/
9 ग्रहिज्यावयि.6/1/16/संप्रसारणाच्च 6/1/108/
10 अचि विभाषा 8।2।21
11 आतो लोप इटि च 6 /4/64/
12 ग्रहिज्यावयिव्यधि.6।1।16।
13 वचिस्वपियजादीनां किति 6/1/15/
14 अचि श्नुधातुभ्रुवाः 6/4/77/

क्षियेलिमाः। एतेर्यकार एव न त्विकारागमः। येलिमाः[1] ।अध्ययनार्थ त्वधीयेलिमा इत्येव। श्वयतेस्त्विकारलोपः। वकारात् प्रागुकारागमः। शुवेलिमाः।[2]

## ई

ईदन्तानामिकारस्य यकारः सर्वत्र प्रागिकारागमो[3] दीधीवेवीदीयतेति भिन्नानाम्[4] प्रणियेलिमाः उपनियेलिमाः, शियेलिमाः, विशियेलिमाः, भियेलिमाः (डि 9) येलिमा। दी क्षये अस्य तु यकारात् प्राग् दीर्घेकारागमः दीयेलिमाः[5] दीधीवेव्योर्यकार एव न तु प्रागागमः, दीध्येलिमाः वेव्येलिमाः [6]।

## उ

उदन्तानामुकारस्य वकारः सर्वत्र। ततः प्रागुकारागमः[7]। श्रुवेलिमाः, स्रुवेलिमाः, ध्रुवेलिमाः, सुवेलिमाः,स्तुवेलिमाः ह्नुवेलिमाः हुवेलिमा, धुवेलिमाः, रूवेलिमाः, दुवेलिमाः संयुवेलिमाः, ऊर्णुवेलिमाः।

## ऊ

ऊदन्तानामूकारस्य वकारः सर्वत्र ततः प्रागुकारागमः भुवेलिमाः, सुवेलिमाः, धुवेलिमाः, पुवेलिमाः, लुवेलिमाः।[8]

## ऋ

ऋदन्तानामृकारस्य रेफः[9]। आभ्रेलिमाः, आध्रेलिमाः, विस्म्रेलिमाः, विह्रेलिमाः, सह्रेलिमाः, अनुक्रेलिमाः। आगर्तेस्तु ऋकारस्य रेफः ततः प्रागकारागमः। जागरेलिमाः[10]।

---

1 इणो यण् 6/4/81/
2 वचिस्वपियजादीनां 6/1/15/ संप्रसारणाच्च 6/1/108/
3 अचि श्नुधातुभ्रुवां 6/4/77/
4 एरनेकाचोऽसयोगपूर्वस्य 6/4/82/
5 दीङो युडचि क्ङिति 6/1/63/
6 एरनेकाचोऽसंयोगपूर्वस्य 6/4/82/
7 अचि श्नुधातुभ्रुवां 6/4/77/
8 अचि श्नुधातु.6/4/77/
9 इको यणचि 6/1/77/
10 जाग्रोविचिण्णल्ङित्सु 7/3/85/

### ॠ

ॠदन्तानामृकारस्य रेफः। ततः प्रागिकारागमः[1]। इरेलिमाः, तिरेलिमाः, शिरेलिमाः, किरेलिमाः, गिरेलिमाः, गिलेलिमाः,[2] जिरेलिमाः, झिरेलिमाः, दिरेलिमाः। ओष्ठ्यपूर्वाणां तु ॠकारस्य रेफः[3] ततः प्रागुकारागमः। पुरेलिमाः, भुरेलिमाः, मुरेलिमाः।

### व्यञ्जन

गमादीनां संग्मेलिमाः[4] विघ्नेलिमाः, संज्ञेलिमाः, आरूनेलिमाः, विक्षेलिमाः एधिजभोरन्त्यात् प्राङ् नासिक्यागमः, रन्धेलिमाः, रम्भेलिमाः [5]। यजादीनां इजेलिमाः [6]। व्यच्-विचेलिमाः विधेलिमाः[7]। वदादीनां उदेलिमाः, उपेलिमाः, सुपेलिमाः [8]। अन्येषां व्यंजनान्तानां नास्ति विशेषः। हसेलिमाः पचेलिमाः, भिदेलिमाः। घुटेलिमाः, शुधेलिमाः, वधेलिमाः, नृतेलिमाः। इति कृत्यानां विधितन्त्रमादिष्टम् शेषतन्त्रमतः परमुच्यते।

साधारणविकाराः स्वरविधिः, अर्थविधिः, गतार्थता चेत्येते कृत्यानामनुविधयः। तत्र षत्वं, णत्वं, लत्वं सकारागमश्चेत्येते साधारणविकाराः ते क्रमेण प्रदर्श्यते-षत्वं टत्वं च

1. निरो नामिस्वरान्तोपसर्गाच्च परेषां स्तभ्नाति, स्तभ्नोति, स्तौति, स्तौभति, सुवति, सुनोति, स्यति सेनय, संज, स्वंज सिचस्थानां सेधतेश्चागत्यर्थत्वे सस्य षः स्यात्,[9] तस्य टः स्यात्, धस्य ढः स्यात् [10]।

---

1 ॠत इद्धातो 7/1/100/ उरण् रपरः 1/1/51/
2 अचि विभाषा 8/2/21/
3 उदोष्ठ्यपूर्वस्य 7/1/102/ उरण् रपरः 1/1/51/
4 गमहनजनखनघसां लोप.6/4/98/
5 रधिजभोरचि 7/1/61/
6 वचिस्वपियजादीनां किति 6/1/15/ संप्रसारणाच्च 6/1/108/
7 ग्रहिज्यावयिव्यधिवष्टिविचति.6/1/16/
8 वचिस्वपि.6/1/15/
9 उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसंजस्वंजाम् 8/3/66/स्तम्भेः 8/3/67/ सेधतेर्गतौ 8/3/113/
10 ष्टुना ष्टुः 8/4/41/

2. निरो नामिस्वरान्तोपसर्गाच्च प्रतिभिन्नात् परस्य सदेः सस्य षः स्यात्।[1]

3. अवात् परयोः स्तभ्नातिस्तभ्नोत्योः सस्य षः स्यात् तस्य ट स्यादालम्वने चाविदूर्ये च।[2]

4. वेः परस्य स्कम्भाते[3] र्विपरिभ्यां स्कन्दे[4] र्विनिनिभ्योर्विकल्पेन स्फुरति स्फुलत्यो[5] र्व्यवाभ्यां तु भोजनविषयतायां स्वनः सस्य षः स्यात् [6]स्वनो नस्य णत्वं च।

5. विनिपरिभ्यां सिवसेवसहानां[7] विनिपरिभ्याङभ्युनुभ्यां च स्न्दतेरप्राणि विषयतायां सस्य षः स्यात् [8]।

6. विनिदुः सुभ्यः सुपिसूत्योसस्य षः स्यात्।[9]

7. निसस्तपतेरूत्तरत्वे सस्य षः स्यात् तस्य टः स्याद नासेवने।[10]

अति अधि अपि अभि प्रति परि वि नि अनु सु-इति दशैते नामि स्वरान्ता उपसर्गाः। स्तभ्य स्तम्भनरोधनयोः। निः ष्टम्भ्यम्। निः ष्टम्भनितव्यम्। निः ष्टम्भनीयम्। नासिक्यलोपः। निः ष्टभेलियम्। विष्टम्भ्यम्। प्रतिष्टम्भनीयम्। प्रतिष्टुत्यम्। सुष्टोतव्यम्। विष्टोभ्यम्। प्रतिष्टोभनीयम्। सुष्टुभेलिमम्। अभिषेणयितव्यम्। अनुषंजनीयम्। प्रतिष्वंजनीयम्। परिषेक्तव्यम्। अनुष्ठेयम्। प्रतिष्ठातव्यम्। प्रतिषेध्यम्। निषेधव्यम्। निषतव्यम्, विषदनीयम्।



---

1 सदिरप्रतेः 8/3/66/
2 अवाच्चालम्बनाविदूर्ययोः 8/3/68/
3 वेः स्कम्भातेर्नित्यम् 8/3/73 परेश्च 8/3/74/
4 वेः स्कन्देरनिष्ठायाम् 8/3/73/ परेश्च 8/3/74/
5 स्फुरतिस्फुलत्योर्निर्निविभ्यः 8/3/76/
6 वेश्च स्वनो भोजने 8/3/69/
7 परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वंजाम् 8/3/70/
8 अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु 8/3/72/
9 सुविनिर्दुर्भ्यः सुपिसूतिसमाः 8/3/88/
10 निसस्तपतावनासेवने 8/3/102/

# अव्ययपरिच्छेदः

## प्रतिज्ञाकवीता

स्वहृदयस्थो भावो यया परहृदये समुन्नीयते सा भाषा, सा च देशविशेषाद्बहुधा भिद्यते। तत्र सर्वतः प्राचीना पुण्या च संस्कृत भाषा निरूपयितुं प्रक्रम्यते। संस्कृतभाषा द्विविधा-दैवी भारती च। यस्यां भाषायामार्षा वेदग्रन्था निबद्धाः सा दैवी। तस्याः स्वर्गादिनिवासिभिरिन्द्रादिभिर्देवैः प्रकृत्या भाष्यमाणत्वात्। यस्यां तु सूत्रस्मृतिपुराणादयोऽपरग्रन्था निबद्धाः सा भारती। भरतवर्षनिवासिभिर्ब्राह्मणादिभिस्तस्याः पुरायुगे प्रकृत्या भाष्यमाणत्वात्। ये त्वस्यां भारत्यां प्राच्योदीच्यादिकृता भेदास्तेषां भाषा भेदकत्वं नेष्यते। अखिलभारतवर्षे प्रचरिताया अवान्तर भेदभिन्नाया अप्यैकत्वेन विवक्षितत्वात्। उभयी चैषा भाषा संस्कृता नाम। उभयोरेव दैवीभारत्योर्दैवसंस्कार संस्कृतत्वादित्यत्र पंचमे वेदधर्म्मव्याख्याने व्याख्यातम्। भाषा हि साहित्यवाक्याभ्यां रूपमाधत्ते। शब्दविशेषितार्थ प्रकारविशेषाः साहित्यम्। अर्थविशेषित शब्दप्रकारविशेषा वाक्यम्। वाक्यावयवाः पदानि। पदावयवा अक्षराणि अक्षरावयवा वर्णाः। तत्र वर्णा निरूपिताः, अक्षराणि निरूपितानि। पदानीदानीमालोच्यन्ते ॥2॥ अर्थविशेषे संकेतितः शब्दः पदम् संकेत भेदाच्च पदस्य भावो द्वेधा विभज्यते। प्रकृति प्रत्ययश्च। तत्र प्रकृतिभाषा यावन्तो यत्र यत्रार्थे यथा संकेतितास्तन्निघन्टुनिरूक्तादि कोश ग्रन्थे निरूपिताः। अथ प्रत्यय भागानां यत्र यत्रार्थे यथा संकेतस्तन्निरूपणं व्याकरणम् ॥3॥ तत्र भाषायां पदं त्रिविधम्। आख्यातं कारकमव्ययपदं च। नैतेभ्योऽतिरिच्यते भाषायामेकोऽपि शब्दः। तान्येतानि त्रीणि पदशब्देन व्यपदिश्यन्ते तत्र येन भावः। प्रतिपाद्यते। यत्र कालः संख्या सत्व साध्यता च प्रतीयन्ते स आख्यात शब्दः।येन सत्वं प्रतिपाद्यते यत्र लिंग संख्या क्रिया साधनता च प्रतीयन्ते स कारकशब्दः। आख्यात शब्दः साध्यावस्थ क्रियावचनो नित्यं साधन सापेक्षो भवति कारकस्तु साधन वचनो नित्यं साध्यावस्थ क्रिया सापेक्षः। एतदुभयव्यतिरिक्ताः सर्व एव वाक्यस्थाः शब्दा अव्ययानि कारकशब्दे लिंगसंख्ये, तथाख्यातशब्दे कालसंख्ये नित्यं प्रतीयेते। अव्यय शब्दे तु न लिंगसंख्ये न कालसंख्ये प्रतीयेते। नित्यं चैतानि कारकाख्यातसापेक्षाणि। तत्र लाघवात्तावदव्ययानि निरूप्यन्ते।

ये शब्दाः कारकाख्यातयोग्याभिर्विभक्तिभिर्न विभाज्यन्ते नानाभावेषु न स्थाप्यन्ते ते नूनमविभाज्यत्वादेवाव्ययशब्देनाख्यायन्ते। अव्यय शब्दास्त्रेधा प्रतिज्ञावीता, निपाता, व्युत्पन्नाश्चेति। विभक्त्यर्थगर्भितार्थतया गतार्थत्वादिह यदुत्तरं विभक्तयो न प्रयुज्यन्ते ते प्रथमाः। विभक्त्यर्थ निरपेक्षार्थतया तदयोग्यत्वादिह यदुत्तरं विभक्तयो न प्रयुज्यन्ते ते द्वितीयाः। विभक्त्यर्थप्रत्यययोगाद्वा यदुत्तरं विभक्तयो न प्रयुज्यन्ते ते तृतीयाः। सत्ववचनाः, देशवचनाः, कालवचनाः, प्रकारवचनाश्चेति चतुर्विधा प्रतिज्ञावीताः। द्योतकाः, कर्मप्रवचनीयाः उपसर्गाः गतयश्चेति चतुर्विधा निपाताः। समस्तास्तद्धितान्ताः कृदन्ताश्चेति त्रिविधा व्युत्पन्ना। त एते क्रमेण प्रदर्श्यन्ते।

1. **तत्रादौ सत्वचना यथा–**

1. स्वस्ति-कल्याणे
2. ओम्-ब्रह्मणि
3. भूः -पृथिव्याम्
4. भुवः-अन्तरिक्षे
5. स्वः - स्वर्गे परलोके च
6. शम्-सुखे
7. कम्-सुखे मूर्द्धनि, जले च
8. दोषा-रात्रौ
9. द्युरिति विहायसेति च वियति
10. स्वहा-अग्निपत्नि
11. स्वधा-अन्नम्
12. हन्त-मनुष्यदेयम्
13. नमः-अन्नम्
14. वषट्-इन्द्रायान्नं देवताविशेषश्च

इत्येवमादयः सत्वविशेषार्था अवीताः /1/

2. **अथ देशवचनाः–**

सर्व एव दिगर्थाः शब्दा अविशेषेण देशकालार्था इष्यन्ते देशत्वेन रूपेणफ सर्वेषामैकभाव्यात्॥

1. उपरि, उपरिष्टात्, प्रवाहुकम् इति ऊर्द्धदेशे।
2. अवस्तात्, अवरस्तात्, अवरतस् इति अवरदेशे।
3. अधस्, अधस्तात् इति निम्नदेशे।
4. अन्तर अन्तरा अन्तरे अन्तरेण इति मध्यदेशे।
5. वहिस्, अवस् अवस्तात् इति बाह्यदेशे।
6. परितस्, सर्वतस्, समन्ततस्, विष्वक इति सर्वतोदेशे।
7. परस, पुरस्तात्, पुरतस्, अग्रतस् इति अग्रदेशे।
8. पश्चात् इति पृष्ठदेशे।
9. तिरस् साचि इति तिर्यग् देशे।
10. उच्चैस् इति उच्चदेशे।
11. नीचैस इति नीचदेशे।
12. निकषा, समया, अन्ति, हिरूक् आरात् इति सन्निहितदेश्यो समयेति मध्यमदेशे च।
13. आरात् इति दूरदेशे।
14. पृथक् इति अन्यदेशे। इति देश प्रधानाः।
15. पूर्वेण इति पूर्वस्यां दिशि।
16. अपरेण इति अपरस्यां दिशि।
17. अधरेण अधरात् इति अधरस्यां दिशि।
18. दक्षिणेन, दक्षिणात्, दक्षिणतस, दक्षिणाइति दक्षिणस्यां दिशि।
19. उत्तरेण उत्तरात्, उत्तरतस् उत्तरा उत्तराहि इति उत्तरस्यां दिशि। इति दिक् प्रधानाः।
20. प्राक् इति पूर्वेषु दिग्देशकालेषु।
21. प्रत्यक् इति पश्चिमेषु।
22. अवाक्-इति दक्षिणेषु।
23. उदक् इति उत्तरेषु। इति सामान्यवचनाः। इत्येवं विधाः शब्दा देशविशेषार्था अवीता भवन्ति।

3. अथ कालवचनाः-

1. चिररात्रम्, चिररात्राय, चिरम्, चिरेण, चिराय, चिरात्, चिरस्य ज्योक् इति दीर्घकाले।
2. आशु मंक्षु, स्त्राक् द्राक्, अंजसा, तरसा, अह्नाप, झटिति, झगिति, सपदि, ऋधक्, ज्योक्, अम् इति ह्रस्वकाले।
3. सद्यस्, सपदि, इति तत्काले।
4. प्राक् इति अतीतकाले।
5. अर्वाक् इति अवरकाले।
6. पुरा इति भविष्यदासन्ने। स्यात्प्रबन्धे पुरातीते निकटागामिके पुरा।
7. प्रेत्य अमुत्र इति भवान्तरकाले।
8. प्रवाहुकम्, प्रवाहिका इति समानकाले
9. अभीक्ष्णम्, शश्वत् इति अनारतकाले।
10. सना, सनात् सनत्, इति नित्यकाले।
11. जातु, जातुचित्, कदाचित्, कदाचन, कदा च इति अनिर्णीतकाले।
12. ज्योक्-इति कालभूयस्त्वे।
13. सदा, सर्वदा इति सर्वकाले।
14. एतर्हि, इदानीम्, अधुना, संप्रति सांप्रतम् इति वर्तमानकाले।
15. तदा, तदानीम् इति अवर्त्तमानकाले।
16. यदा इति संभावितकाले।
17. कदा इति जिज्ञासित काले।
18. नक्तम्, दोषा इति रात्रिकाले।
19. उषस् इति रात्र्यावसाने।
20. प्रातर्, प्रगे इति प्रभातकाले।
21. दिवा, वस्तोः इति अहः काले।
22. सायम् इति अस्तकाले।
23. अद्य इति वर्तमान दिने।
24. ह्यस् इति गतदिने।
25. श्वस् इति आगामि दिने।
26. परश्वस् इति पूरानागतदिने।
27. पूर्वेद्युस् इति पूर्वदिने।

28. अपरेद्युस्, परेद्यवि इति अपरदिने।
29. अधरेद्युस् इति अधरदिने।
30. उत्तरेद्युस् इति उत्तरदिने।
31. उभयेद्युस्, उभयद्युस् इति उभय दिने।
32. अन्येद्युस् अन्यतरेद्युस्, इतरेद्युस् इति अन्यदिने।
33. सुदि-इति शुक्लपक्षे।
34. बदि-इति कृष्णपक्षे।
35. संवत् इति संवत्सरकाले।
36. ऐषसस् इति वर्तमानवर्षे।
37. परुत् इति पूर्ववर्षे।
38. परारि इति पूर्वतरवर्षे।
39. अद्यत्वे अनुवर्त्तमानकाले।
40. तदात्वे इति परिवर्तमानकाले।
41. पुरा इति पुरातीते काले इत्येतमादयः कालविशेषार्था अवीता भवन्ति।

## 4. अथ प्रकारार्थाः

अथ अथो इति-अनन्तरे, प्रारम्भे कात्स्न्र्ये प्रश्ने च-

1. यथा-येनप्रकारेण।
2. तथा-तेनप्रकारेण।
3. कथं-केन प्रकारेण।
4. इत्थम्-अमुनाप्रकारेण। स्वयम्-आत्मनेत्यर्थे। मिथु-द्वौ, सहेत्यर्थे। अस्ति विद्यमानत्वे। अस्तम्-अदर्शने। प्रयस्, प्रायेण, भूयसा, कुवित भूम्नि। कुविदितिपवर्गमध्योऽयम्। यथावत्, यथायोग्ये। यथायथं याथार्थे। मृषा, मिथ्या, वैतथ्ये। निःषमम्, दुःषमम्, दुष्ठु, सामि, गर्हिते। स्वस्ति- निरूपद्रवे। सुष्ठु, कूपत्, सूपत्, कुबित्-पूजिते। कुबिदितिपवर्ग-मध्योऽयम्।

कुविदिति क्रोधयुक्ते हेतुप्रश्ने। अन्तःस्थमध्योऽयम्। एवं यथा तथा साम्ये। एवं प्रकारोपमयोरंगीकारेऽवधारणे। अद्धा अंजसा तत्वार्थे इदा प्रकाश्ये। स्पष्टत्वे। वृथा,

मुथा, व्यर्थके विधिहीने च। यावत् तावत् इति अवधौ। साकम्, सार्द्धम्, समम्, सता सह, साहित्ये। प्राध्वम्- आनुकूल्ये। न, नो, नहि, ना-अभावे। अन्यत्-अन्यार्थे। बलवत् सुष्ठु-किमुत, अतीव-निर्भरे। अमा सहार्थे समीपे च। अमावस्या-अमात्यः। पृथक्, विना, नाना, हिरूक्, ऋते, अन्तरेण, अन्तरा, वर्जने। यत्, तत्, यतस्, ततस्- हैतौ। स्थाने, सांप्रतं, न्याये। युक्ते। समुचिते वा। किंचित्, किंचन, किमपि अनिर्धारिते। किं प्रश्ने जुगुप्सने च। किं वितर्के परिप्रश्ने क्षेपे चापृच्छ कर्मणि। किमिदं स्वप्नं पश्यामि प्रत्यक्ष वा। किं करोषि। स किं राजा यो न प्रजां रक्षति। किंकरो भृत्यः। नाना- अनेकार्थे उभयार्थे च। नानाविधा जनाः। नानाविधं न संजेत। सामि-अर्द्धे जुगुप्सिते च (सुरासप्सितेच इति मूले)। सामि संमीलिताक्षी। सामिकृत् प्रकल्याणकारि। अद्धा अतिशये स्फुटे च। तूष्णीम्, तूष्णीकम्, जोष-मौने। शनैस क्रियामान्द्ये च। ऋधक्-लाघवे, वियुक्ते, सत्ये च। जोषम् सुखे। प्रताम्-ग्लानौ। प्रशान्-समानार्थे। प्रतान्- विस्तारे। साक्षात् प्रत्यक्षे तुल्ये। उपधा-भेदे। तिरस्-परिभावे। अलम्-भूषिते पर्याप्ते शक्तिमति च। कामम् स्वाच्छन्दे च। प्रकामम् अतिशये। नूनम् निश्चये तर्के च। क्षुद्रेऽपि नूनं शरणं प्रपन्ने आविनूनमेव सा।[1] उपांशु-अप्रकाशे रहस्ये च। क्षमा-क्षान्तौ। मिथो मिथस्-रहसि सहार्थे च। बलात् हठात्-साहसे। सहसा अतर्किते अविमर्शे आकस्मिके साहसे च। अकस्मात्-दैवात् अतर्किते। अच्छ-स्वच्छत्वे। इति समाप्तौ। इति हेतुप्रकरणप्रकाशादिसमाप्तिषु। इत्येवमादयः प्रकारविशेषार्था अवीता भवन्ति। संहिताब्राह्मणपुराणाख्यायिकादि प्रचीननिबन्धेष्वेषामुदाहरणानि भूयांसि लभ्यन्ते।

## अथ निपाताः

तत्र ये शब्दा सिद्धावस्थं मूर्त्तं किंचित् सत्वं नाचक्षते, अपितु साध्यावस्थममूर्त्तप्रायं दिग्देशकालाद्यन्वयानपेक्षं कंचन-भावं गमयन्ति ते द्योतकाः। निपाताश्चतुर्धा-परसान्निध्यमासाद्यैव येऽर्थं समयतो गमयन्ति न स्वातन्त्र्येण ते सापेक्षद्योतकाः /1/ ये तु नाख्यातेन कारकेण वा साहित्यमपेक्षन्ते, परनिरपेक्षमेव तु समयतोऽर्थ प्रकाशयन्ते ते निरपेक्षद्योतकाः। ये पुनः स्वार्थप्रकाशनाय समयमपि नानुरूध्यन्ति केवलं स्वरूपत एव प्रयुज्यमानाः कंचिद्भावं द्योतयन्ति ते स्वरूपः द्योतकाः। अथ ये स्वार्थमपि न कंचित् प्रकाशयन्ते समयमपि नानुरूधन्ति केवलं सन्दर्भ पोषयितुं वाक्यमेवालं कर्तुं प्रयुज्यन्ते ते पदपूरणद्योतकाः। तत्रादौ सापेक्षद्योतकाः स्वरूपतोऽर्थतश्च प्रदर्श्यन्ते यथा-

---

1 कुमारसम्भवम् (1-12)

च-सम्मुचये, अन्वाचये, इतरेतरप्रयोगे, समाहारे, चेदर्थे, हेत्वपदेशेऽवधारणे विनियोगे तुल्योगितायां चायं च शब्दः प्रयुज्यते। उपरिष्टादुपचारोऽयम्। ईश्वरं गुरूं च भजस्वेति क्रियायां द्रव्ययोः समुच्चयः। राजोऽयं गजश्वाश्वश्चेति द्रव्ये द्रव्ययोः। पटः शुक्लः श्लक्ष्णश्चेति द्रव्ये गुणयोः। रक्तः पटो घटश्चेति गुणे द्रव्ययोः समुच्चयः। भिक्षामटः गां चानयेत्यन्वाचयः। गवानयनस्यानुषंगिकत्वविक्षणात्। नाम च रूपं च नामरूपे इतीतरेतरप्रयोगः। संज्ञा च परिभाषा च संज्ञापरिभाषमिति समाहारः। यदि च संगच्छेदिति, यदि चेदित्यर्थः। अन्यत्रान्वये प्रकारसादृश्यं समुच्चयः। ईश्वरं तथा गुरू भजस्वेत्यर्थे च शब्दप्रयोगात्। सति सम्भवे संग्रहोऽन्वाचयः। भिक्षार्थमटमानस्य पथि गोसाक्षात्कारे सत्यानयनादेशात्। समूहयोर्द्वयोरेकोऽन्वय इतरेतरयोगः। अन्वीयमानयोर्द्रव्ययोः साहित्यस्य विशेषणत्वात्। द्वयोः समूहस्यैकस्यैकोऽन्वयः समाहारः। अन्वीयमाने समूहे द्रव्यस्यविशेषणत्वात्[1] हेतु पक्षान्तरसंभावनाचेदर्थः। हेतौ यथा ग्रामश्च गन्तव्यः, शीतं च वर्तते। शीतस्य गमन प्रतिबन्ध हेतुत्वं दर्शयति। अवधारणं विनिश्चयः। ''अतीतः पन्थानं तव च महिमा वाङ्मनसयोः[2] स कस्य स्तोतव्यः। हेतुरेवेत्यन्ये। विनियोगे यथा। अहं च, त्वं च पुत्र। गच्छावः। तुल्ययोगिता यथा-कृतं च गर्भाभिमुखं मनस्त्वया।'' किमन्यदेवं निहिताश्च नो द्विष[3] अत्र गर्भाभिमुखीभावतुल्ययोगेनैव शत्रुहननं द्योत्यते। पादपूरणे तु निरर्थकोऽयमुत्तरत्र वक्ष्यते।

## चन, चित्

इमावसाकल्ये। असाकल्यविषयास्तु चत्वारो भवन्ति-पूजा, अवकुत्सा, औपम्यं, अनिर्धारितसंसर्गश्च। आचार्य्यश्चिदिदं ब्रूयाद् अन्यस्तु कः शक्नुयाद्वक्तुमित्याचार्य्यं पूजयन् वक्तृ साकल्याभावं गमयति। कुलमाषाश्चिदाहर-यदि नान्यल्लभसे इत कुल्मासमवकुत्सयन्नाहरणीय साकल्याभावं गमयति। दधिचित् प्रतीयते न तत्वतोऽभिजाने इत्यौपम्येन प्रवर्तमानो वस्तु याथात्म्यज्ञानसाकल्याभावं गमयति। किंचित्, कश्चित्, केनचित्, कदाचित्-इत्यादिष्वनिर्धारित संसर्गेण प्रवर्तमानो नैकत्र द्रव्ये प्रवृत्तिसाकल्यमास्थापयति। इमौ चोपरिष्टादुपचारौ। तत्र चन शब्दः किं वृत्तात् पर एव प्रयुज्यते। कश्चन्, काचन् किंचनेत्यादि।

---

1 शिवमहिम्नस्तोत्रम्-2

2 शिवमहिम्नस्तोत्रम्-2

3 साहित्यदर्पण

## अपि

संभावने, गर्हणे, शंकायां, समुच्चये, युक्तपदार्थे, अन्ववसर्गे, प्रश्ने चेति सप्तकर्मायमपि शब्दः। संभावनं शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः।[1] आचार्य्यस्त्वपि कुर्यादसंभाव्यम्, अपि पश्येदतीन्द्रियम्। गर्हणमवकुत्सा। अप सिंचेदसौ पलाण्डुम्। अपि स्तुयादसौ वृषलम्, जाल्मोह्ययम्। अजानतः क्वचिदौपम्येन प्रवृत्तिः शंका। अपि चोरो भवेत्। अपि दध्येवेदं स्यात्। परस्परनिरपेक्षस्यानेकस्यैकत्र संसर्गः समुच्चयः। अपि सिंच अपि स्तुहि। स्त्रियं पालय, पुत्रमपि। अप्रयुक्तमपि किंचित्पदार्थ संभवतः प्रद्योतयति। ब्रूहि ननु कथं संपद्येत भोज्यम्, सर्पिषोऽपि स्यात्। अत्र विन्दुरपिना गमयते। अन्ववसर्गः कामचारानुज्ञा। अपि गच्छ वत्स। यदि गन्तुं कामयसे। प्रश्नो जिज्ञासा। अपि जानासि किंचत्त्वम्। सर्वत्रायं पुरस्तादुपचारः। समुच्चये तूपरिष्टादुपचारोऽपि दृश्यते।

## चेत्

पक्षान्तरसंभावनायां संभावित हेतौ वा चेदिति शब्दः। अहं यास्यामि, स चेदायास्यति। त्वं यासि चेन्नाहं यास्यामि। एवं चेत्, यदि चेदिति निपातसमाहारः।

तु-विनिग्रहे, पक्षान्तरसमर्थने, भेदे, अवधारणे, समुच्चयो विनियोगे, प्रशंसायां च तु शब्दः। उपरिष्टादुपचारोऽयम्। उत्तरेण संप्रयुज्यते। मृषेमे वदन्ति। सत्यं तु ते वदन्ति। विनिग्रहो गम्यते। नाहं शक्नोमि, स तु सुखेन कर्त्तुं प्रभवति। पक्षान्तरं क्रियते। क्षीरान्मासं तु पुष्टिकृत्।भेदः क्रियते। शिष्टैर्मन्यं तु तद् युक्तम्। रावणं तु रामोऽवधीत्। अवधारणं क्रियते। समुच्चये, नियोगे, प्रशंसायाम् प्रयोगा उह्याः। अपि तु, किन्तु, परंतु इत्यादयो निपात समाहाराः।

## आ

धात्वर्थविशेषे मर्य्यादासीमायामभिव्याप्तिसीमायामीषदर्थे, समुच्चये, अनुकम्पायां, स्मरणे, वाक्यपूरणे चायमाशब्दः। धात्वर्थे-आयाति। आहार। आदत्ते। आक्रामति। आसीदति। आकुरूते। आतिष्ठते। मर्य्यादायाम्-आसमुद्रं राजदण्डः। आ शिवानुग्रहाइदुःखम्। दारिद्रयं तिष्ठत्याराजप्रसादात्। आ मुक्तेः संसारः।

अभिव्याप्तौ-आपामरमाब्राह्मणकुलम्। आसत्यलोकादापातालात्। आब्रह्मस्तम्वपर्यन्तम्। अवधिमदर्थ संग्रहेन कृता सीमाऽभिव्याप्तिः। तदसंग्रहेण तु कृता सीमा मर्यादा। ईषदर्थे-आपिंगलः, ओष्णम्, आरक्तः, सर्वत्र पुरस्तादुपचारः।

---

1 अपिः पदार्थसम्भावनाऽन्ववसर्गगर्हास्समुच्चयेषु (1-4-96) इति सूत्रे सिद्धान्तकौमुद्या मुक्तम्।

देवभाषायामयं समुच्चयोऽपि प्रयुज्यते, स उपरिष्टादुपचारः। देव्यश्च पितृभ्य आ। अनुकम्पास्मरणयोरयम् स्वतन्त्र द्योतकः। वाक्ये त्वयं पूरणद्योतकः। अनुकम्पायाम्- आ प्रिय कुतौ रोदिषि। स्मरणे-आ एवं किल् तत्। वाक्यपूरणे-आ एवं नु मन्यसे। वाक्यस्मरणानुकम्पासमुच्चयेष्वस्याकारस्य वर्णसन्धि कार्यं नास्ति।[1]

## आः

कोपे सन्तापेऽपाकरणे स्मरणे च सविसर्ग आ निपातो यथा कोपेआः पापं कि विकत्थसे। संतापः पीडा। आः शीतं बाधते। अपाकरणे। आः अपसर्जनामित्यर्थः। स्मरणे आ एवं किल तत्।

## सु

प्रशस्ते सु शब्दोऽधिके च। आनुकूल्ये च। सुजनः सुशीलः। प्रशंसा गम्यते। सुदूरः सुयोधनः। आधिक्यं गम्यते। सुमुख। सुदृष्टिः, सुमनाः, आनुकूल्यं गम्यते। पुरस्तादुपचारोऽयम्।

## कु

कुत्सिते कुशब्दोऽल्पे च निवारणे प्रतिकूल्ये च। तस्य क्वचित्, क, का, कत्,कचादेशा इष्यन्ते। कुजनः, कापथः कदाचारः, कुत्सा गम्यते। कवोष्णम्, ईषद्भावो गम्यते। कुदृष्टिः, दृष्टिनिवारणं, प्रातिकूल्यं च गम्यते। कुकर्म्म, पापं गम्यते। पुरस्तादुपचारोऽयम्। कुपथः, कापथः, कवपथ इत्येतेषु कवपथ, कापथौ देव्यामेव। एवं कु शब्दस्य दैव्याम् चि क्वचिद्दीर्घः क्रियते। कूमनाः।

## अति

प्रकर्षे स्तुतौ, असंप्रति, क्षेपे मृषे, लंघने चाति शब्दः। प्रकर्षेअतिदेवान् विष्णुः। स्तुतौ-अत्युत्तमः। क्षेपे-अतिकृपा भवता। असंप्रतिअयमति करोति। मृशे-अतिहर्षः। लंघने-अतिवेलं जलधितलम्। अतीतः, अतिक्रान्तः पुरस्तादुपचारोऽयम्।

---

[1] निपात एकाजनाङ् (1-1-13)

## निर्

निश्चये, निषेधे, निःशेषे, कालाद्यर्थे च। निरूक्तम्। निर्धनः। निर्णीतम्। निस्त्रिंशः।

## दुर्

हीने, अधिके, पापे, कुत्सिते, कृच्छ्रे च दुःशब्दः। हीने-दुर्दशा, दुरवस्था। अधिके-दुर्योधनः। दुष्कर्म। कुत्सिते-दुर्जनः,दुःशीलः। दुःखे-दुर्गमः,दुर्घटः। पुरस्तादुपचारोऽयम्।

## प्रति

प्रतिनिधौ, प्रतिदाने, वीप्सायां, लक्षणे, इत्थंभूताख्याने, भागे च प्रति शब्दः। अर्जुनतः प्रतिगच्छति कृष्णः। तिलेभ्यः प्रतियच्छति माषान्। तीर्थं तीर्थं प्रति गच्छति वृक्षं प्रति विद्योतते विद्युत्। कर्कशापि स्त्री साध्वी भवति। पुत्रं प्रति, सुशीलापि सपत्नीं प्रति दुर्म्मना भवति। यदत्र मां प्रति स्यात्। यथोच्छोपचारोऽयं पुरस्ताद्वोपरिष्टाद्वा।

## एव

अवधारणे चानवक्लृप्तौ च सादृश्ये चोत्प्रेक्षायां चैव शब्दः। अहमेद स्वयमिदं वदामि।[1] त्वमेव याहि। इहैव भव माऽन्यत्र गाः। तवैव सर्वमित्यादिष्ववधारणं प्रतीयते। क्वचित्तु द्विरूक्तेनैव शब्देनावधारणार्थेन लुप्यमानयोश्चाहयारर्थोऽपि प्रत्याय्यते। देव एव ग्रामं गच्छतु देव एवारण्यं गच्छतु देव एवारण्यं गच्छतु। ग्राममरण्यं च गच्छत्वित्यर्थः। देव एव ग्रामं गच्छतु राम एवारण्यं गच्छतु। ग्रामं केवलमरण्यं केवलं गच्छत्वित्यर्थः। इहाह लोपः। स च केवलार्थः। इहेव अद्येव। क्वेव भोक्ष्यसे। इत्यादिष्वनवक्लृप्तिः। उपरिष्टादुपचारः। तवैव श्रीर्ममाप्यस्तु। सादृश्यमभिनीयते कल्याणि यस्ते मनोरथः स एवायमद्यागतः। यस्त्वया भूयसा धर्म आराधितः स एवायं भवत्या गृहे स्वयमुदपद्यत पुत्रो नाम। उत्प्रेक्षा क्रियते।

---

1 ऋग्वेदः 10-10-25-5

## इव, व, वत्

इमे साम्ये। इव शब्दः, राजेव त्वमिवत्वम्। व शब्दः - शात्रवंव वपुर्यशः। ब्राह्मणवत्-क्षत्रियवत्,एष्वैकपद्यं नियतम्। प्रथमयोर्विभक्त्यलोपश्चरमेविभक्तिलोपश्च। अत एव प्रत्ययस्यासाधर्म्याद् वतः प्रत्ययत्वं चाभ्युपगम्यते।

## वा

विकल्पे, साम्ये, समुच्चयसे, विचारणायामवधारणे, अनवक्लृप्तौ द्वन्द्वे च वा शब्दः। रामो वा कृष्णो वा यातु। विकल्पोऽयम्। मणीवोष्ट्रस्य लम्वेते साम्यं दर्श्यते। वायुर्वा त्वा मनुर्वा त्वा। समुच्चयोऽयम्। हन्ताह पृथिवीमिमां निदधान इह वा इह वा विचारः क्रियते। न वा तदेवं शक्यं कर्तुमित्यबधार्यते। उपरिष्टादुपचारः। अस्वामिकं धनं दृष्टवा कस्य वा मनो न गृध्नाति। अनवक्लृप्तिः। नाटके भवभूतिर्वा वयं वा वयमेव वा उत्तरे रामचरिते भवभूतिर्विशिष्यते। अनवक्लृप्तिर्वा द्वन्द्वौ वा। स वा शक्नोति तत्र गन्तुमहं वा नान्य इति द्वन्द्वः।

## वै

अवधारणे विशेषे च वै शब्दः। स वै कुरूते। निश्चयो गम्यते। उपरिष्टादुपचारः। वृहस्पतिर्वै देवानां पुरोधाः। विशेषः क्रियते।

## न

नेति प्रतिषेधार्थश्चोपमार्थश्च दैव्याम्। स पुरस्तादुपचारो येन प्रतिषेधति नेन्द्रं देवममंसत। स उपरिष्टादुपचारो येनोपमिमीते। दुर्मदासो न सुरायाम्। मृगो न भीमः कुचरो गिरिष्ठाः[1]। वृषभो न भीमः। भारत्यां तु भाषायां प्रतिषेधार्थीय एवायं पुरस्ताद्वोपरिष्टाद्वा। नाहं कलिङ्गान जगाम[2]। व्याघ्रो नायं वृको नायम्। नहीतिनिपातसमाहारः प्रतिषेधे दुर्मदो नहि पश्यति।

1 ऋग्वेद-1-154-2

2 अत्यन्तापह्नवे लिड्वक्तव्यः (वा.2084)

## हि

अवधारणे हेतौ च हि शब्दः। विशेषे, अनुपृष्टं, हेत्वपदेशे, संभ्रमे, असूयायां च। अयं हि न्यक्कारः। असंन्दिग्धमयं न्यक्कार इति तात्पर्यम्। मानेन यथा गच्छ वृको ह्यग्रे तिष्ठति। वृकावस्थानस्य गमन प्रतिषेधे हेतुत्वं क्रियते। मांसं हि पुष्टिकरं। दुग्धं हि शुक्रकरम्। अतस्तयोः सादृश्यं (साम्यं) कीदृशं नाम। मांसदुग्धयोर्विशेषो विवक्षितः। स्फुटार्थो वा विशेषः। को ह्यबालिशो हस्तगतं पादगतं कुर्यात्। कथं हि करिष्यतीत्यनुपृष्टे। इदं हि करिष्यतीति हेत्वपदेशे। अयं हि भगवान्स्वयमेवोपातिष्ठत। ससंभ्रमोऽयम्। कथं हि व्याकरिष्यतीत्यसूया। स हि गमिष्यति जिज्ञास्यते। प्रयोग विषया हि शब्दस्यैते दर्शिता। अर्थास्त्वेते प्रकरणाद् गम्यन्ते।

## अह,ह

इत्येतौ विनिग्रहे, विनियोगे, आचारातिक्रमे च पूर्वेण संप्रयुज्येते। अयमहेदं करोतु। इदं ह करिष्यति, इदं न करिष्यति। इति विनिग्रहः। विनियोगे यथा-त्वं ह ग्रामं गच्छ। अयं महारण्यं गच्छतु अनाचारे यथा स्वयं ह ओदनं भुङ् क्ते, उपाध्यायं सक्तून् पाययति। स्वयमह रथेन याति, उपाध्यायं पदाति गमयति। अहेति पूजायां च। अह भगवान् समागतः। हेति प्रसिद्धौ। अस्ति ह दक्षिणा पथे मलयो नाम गिरिः। अह हेति निपात समाहारः। ससंभ्रमे अह ह भगवान् समायातः।

## नु

उपमायां हेत्वपदेशे, अनुपृष्टे विकल्पे अनुनये वितर्के, अतीतार्थे च नु शब्दः। वृक्षस्य नु शाखा, सा नद्याः शाखा उपमा क्रियते। इदं नु करिष्यतीति हेत्वपदेशः। कथं नु करिष्यति, को नु धावति। प्रश्नाविमौ। अयं भीमो न धर्मो नु विकल्पोऽयम्। इदं नु ते दास्यामि प्रसीदेत्यनुनयः। किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वत इति वितर्कः। आसीन्नु राजा पुरूरवा इति श्रूयते अतीतोऽर्थः।

## नू

दीर्घोकारान्तस्तु नू शब्दो विद्यमान कालार्थोऽभिनवार्थश्च। नू मित्रो वरूणो अर्य्यमानस्त्मनेतोकाम वरिवो दधन्तु। नूतनम्, नूत्नम्।

## अनु

पश्चादर्थे सादृश्ये वीप्सायां लक्षणे इत्थं भूताख्याने भागे आयामे हीने सहार्थे सन्निधाने चानु शब्दः। रथमनुगच्छति। अनुचराः अनुयायिनः। अनुजाः अनुमितिः। पश्चादर्थो गम्यते। ज्येष्ठमनुकरोति। अनुकरणं सादृश्यं गम्यते। वृक्षं वृक्षमनु-वीप्सा। वृक्षमनु विद्योतते। लक्षणम्। पुत्रमनुसाध्वी माता। इत्थं भावः। यदत्र मामनु स्यात् भागः। अनुगंगाकाशी, अनुयमुनं मथुरा गंगाया अनुकाशी, यमुनाया अनुमथुरा। आयामो द्योत्यते। पर्वतमन्वसिता सेना। पर्वतेन सम्बद्धेति गम्यते। अनुवनमशनिर्गतः।[1]वनसमीपं गत इत्यर्थः। तदनुसारेणेत्यादावपि सादृश्यं गम्यते। अनुमतिः, अनुजाः, इत्यादावपि सहभागे गम्यते। अनुग्रहादौ सहभावः। पश्चाद्भावो भागौ वा प्रतीयते इत्याहुः।

## बत

खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत शब्दः। अहो बत महत्कष्टम्। बत निः स्वोऽसि पतिरालिङि तो बत। अहो बतायं ध्रुव आपदेवम्। एहि बत सखे। दन्त्योष्ठादिरमित्यजयः।

## अन्

शून्ये अत्यल्पे सादृश्ये भिन्ने विरूद्धे चायमन् शब्दः। अनन्तः, अनादिः, अनुदयः, अनर्थ, शून्यता गम्यते। अभाववान् शून्यः। अनुदरा कन्या अत्यल्पोदरेत्यर्थः। अनश्वः अश्वसदृशो जन्तुविशेषः। अनाहत शब्दः। आहतभिन्नः। अनार्य्यः-आर्यविरूद्धः। पुरस्तादुपचारोऽयं स्वरादिप्रातिपदिक सापेक्षः। नान्यत्र प्रयुज्यते।

## अ

शून्ये अत्यल्पे सादृश्ये भिन्ने चायमशब्दः। अभयः, अदयः। दयारहितः। अत्यल्पदयो वा। अक्षत्रियः कायस्थः क्षत्रियसदृशः। अवर्णःवर्णभिन्नः। अधर्मः धर्मविरूद्धः। पुरस्तादुपचारोऽयं व्यंजनादिप्रातिपदिकसापेक्षो नान्यत्र प्रयुज्यते।

## स्म

अतीतकाले स्म शब्दो लङन्तेन क्रियापदेन युज्यते। वक्ति स्म व्यासः उवाच इत्यर्थः। वर्तमानकालमनद्यत्तनातीतकाले प्रवेशति स्म शब्दः। और्ध्व मौहूर्तिकेषु

---

1 अनुर्यत्समया (2-1-15)

प्रैषातिसर्गप्राप्तकालेषु अधीष्टे चायं स्म शब्दो लोडन्तः प्रयुज्यते[1]। यथा उर्ध्वमुहूर्त्ताद् यजतां स्म। त्वं स्म अध्यापय। मा शब्द पूर्वस्तु लडन्ते च लुङन्तेन च क्लैव्यं मा स्म गमः पार्थः [2]। मा स्म स गच्छत् निपातसमाहारोऽयं मा स्म शब्दः

## नेत्

परिभयके नेच्छब्दः। नेंजिह्मापन्त्यो नरकं पताम्। युष्माभिरिहावहि नैर्भवितव्यम् नेदितः सर्वमपहरेयुर्दस्यवः। प्रतिषेधे विचारे समुच्चये च नेच्छब्द इत्यन्ये।

## नाम

प्रसिद्धौ, संभाव्ये, क्रोधे, उपगमे, कुत्सने, विस्मये, स्मरणे, विकल्पे च नाम शब्दः। असिद्धिरर्थप्रकाश्यम्। अस्ति हिमालयो नाम पर्वतः। संभाव्ये कथंचिदर्थे। भविष्यति युद्धं नाम। क्रोधे पापोऽयं रावणो नाम वैरी साधूनाम्। उपगमः सद्वेषांगीकारः। शत्रो सकाशाद् गृह्णाति नाम। कुत्सने को नामायं प्रलपति। विस्मये एवं नाम तत्। स्मरणे एवं हि नाम तत्। विकल्पे-अस्तु घटो नाम पटो नाम।

## किल

विद्या प्रकर्षे वार्तायामलीके सम्भावनीयेऽनुनये रूचौ हेतौ च किल शब्दः। एवं किलेति विद्या प्रकर्षः। स आ (ह) किल नाहं गमिष्यामीति वा विद्याप्रकर्षः। कंसं किल कृष्णो जघानेति वार्ता। गुरून् किलाति-शेते शिष्यः इति सम्भावित कथा। कस्यांचिद्योग्यतायां आप्त प्रतिष्ठः सम्भावितः। अनुनयः सान्त्वनम्। कथय किल किमिति रूष्टोऽसि। क्षमस्व किल भो। अरूचौ न विश्वसिमि किलैवं त्वमाचरसीत्यरूचिः। नायं (नायः इति मूले) पन्था अत्र किल शार्दूलो विद्यते इत्याहुः। शार्दूलसत्ता गमनप्रतिषेधे हेतुर्गम्यते। नननुभ्यामुत्तरतश्च सहाय प्रयुज्यते। अनुपृष्ठे न किलैवम्। ननु किलैवम्। गमिष्यति न किलेति गमन प्रश्ने। न त्वत्र न शब्दो निषेधार्थः। किलेति वार्त्तायाम्।

## खलु

निषेशे जिज्ञासायामनुनये वीप्सायां माने च खलु शब्दः। खलु गत्वेति गमनप्रतिषेधः। जानाति खलु? अथ खलु गमिष्यसि (गिष्यसि इति मूलपाठे)

---

1 स्मे लोट् (3-3-165)

2 श्रीमद्भगद्गीता द्वितीय अध्यायः-3

गमनजिज्ञासेयम्। अनुनये देहि खलु वृत्तिम्। वीप्सायां न खलु न खलु [1]। माने न खलु परतन्त्रा प्रभुधियः [2]। अहं खल्वस्मि भोः। किं न जानासि माम्। पादपूरणेऽयं निरर्थको वक्ष्यते।

## अलम्

निषेधे निरर्थके चालं शब्दः। अलं तत्र गत्वा। अलं श्रमेण। भूषणपर्याप्तिसामर्थ्यादिषु च निरपेक्षोऽयमनुपदं वक्ष्यते।

## यत्र, यच्च

अनवक्लृप्तौ गर्हायाममर्षे आश्चर्ये चायं यत्र शब्दो यच्च वा लिङायोगे प्रयुज्यते। अनवक्लृप्तिरसम्भावना अमर्षो क्षमा। यत्र त्वमेवं कुर्याः। न श्रद्दधे न मर्षयामि [3]। यत्र त्वं शूद्रं याजयेः अन्याय्यं तत् [4]। यत्र त्वं शूद्रं याजयेः आश्चर्यं तत् [5]। यच्च त्वमेवमित्यादि वा। अस्ति, भवति, विद्यते, जातु, यत्, यदा, यदि, अनवक्लृप्तावमर्षे चैते शब्दाः। तत्र लृटा योगेऽस्त्यादयस्त्रयोऽर्थ गमयन्ति। लिङायोगे तु जात्वादयश्चत्वारः। अस्ति नामत्वं शूद्रीं गमिष्यसि। भवति नाम तत्र भवान् मिथ्यावदिष्यति। विद्यते नाम तत्र भवान् वृषलं याजयिष्यति। नश्रद्द न मर्षयामि। जातु यन्नाम्। यदा यदि वा तत्र भवद्विधो वेदं निन्द्येत् न श्रद्दधे न मर्षयामि।

## यदुत

वाक्यार्थानिर्देशे यदुत शब्दः। स त्वया वाच्यो यदुतेहागम्यतामिति।

---

1 अभिज्ञानशाकुन्तलम् 1–3

2 शिवमहिम्नस्तोत्रम्-18

3 यच्चयत्रयोः (3-3-148)

4 गर्हायां च (3-3-149)

5 चित्रीकरणे च (3-3-150)

## उत

अप्यर्थे विकल्पे चोत शब्दः। अप्यर्थाः समुच्चयादयः।अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतननैरूत। उत भीम उत अर्जुनः। विकल्पे विष्णुरूतशिवः सेव्यः। प्रश्ने वितर्के वाढार्थे च।शब्दमुतन्यायं पठसि।

## उ

विनीग्रहार्थीय उकार उत्तरेण संप्रयुज्यते। मृषेमे वदन्ति। सत्यमुते वदन्ति। विद्याप्रकर्षेऽप्युकारः। उदुत्यं वहन्ति केतवः।

## सीम्

परिग्रहार्थीयो दैव्याम्। प्रसीमादित्योऽसृजत्। प्रासृजत् सर्वत इत्यर्थः। पादपूरणार्थस्तु वक्ष्यते।

## कम्

नहिशब्दात् परतः प्रयुज्यमानोऽयं निषेधार्थः। अस्ति ते किंचिदिति पृष्टः प्रत्याह। नहि कमिति। अन्यत्राऽपि दृश्यते-अनुकम्, नहिकम्, हिकम् सुकम्। एवमादीनामितरसान्निध्यमनासाद्य प्रयुक्तानां नैतेऽर्था गम्यन्ते ततः सापेक्ष द्योतका इमे व्यपदिश्यन्ते। छुम्वट्। बट्। वाट्। ताजक्। आनुषक। पशु। खम्। कम्। खुम्। ह्युम्। हुम्। आईम्। शीम्। त्वा, त्वै, है, रै, तक, उक। इत्येवमादयोऽन्येऽपि कतिपये निपाता दैवीविषयाः काशिकायां स्मर्यन्ते।

**इति सापेक्षद्योतकाः।**

अथातोनिरपेक्षद्योतकान् वक्ष्यामः। तेऽष्टधा भवन्ति। (1) सम्बोधनार्थः (2) अभ्युपगमार्थाः (3) जिज्ञासार्थाः। (4) क्रियावृत्यर्थाः (5)सूचनार्थाः (6)निग्रहार्थाः (7) पक्षपरिग्रहार्थाः। (8) दानविशेषार्थाश्चेति ते क्रमेण प्रदर्श्यन्ते-

(1) सम्बोधन शब्दा यथा -हे सम्बोधनसामान्ये। हो दूरसम्बोधने। अहे। है। स्त्रीणां मिथः सम्बोधने। अये अयि प्रीति सम्बोधने। अरे रे नीच सम्बोधने। भोस्

बहूनां सम्बोधने। भगोस्, अघोस् पत्युः सम्बोधने। अहो साभिनिवेशसम्बोधने। अंग सादर सम्बोधने। उ रोषेणाकरणे। अयि, अनुनयार्थे प्रवृत्तो।

(2) अभ्युपगमशब्दा यथा-ओम्,एवम्, परम्, अभ्युपपत्तौ। आम् एवम् अंगीकारे। सत्यम् अर्द्धांगीकारे। कामम् अकामानुमतौ। अस्तु असूयोपगमे (असयोपगमे इति मूले) एवम्, पुनर, अद्धा अवधारणे। नूनं अवश्यं, खलु निश्चये। अथ किम्। सापेक्ष स्वीकारे। वरम्। ईषदुत्कर्षाभ्युपगमे।

(3) जिज्ञासा शब्दा यथा-किम्, किंस्वित, किन्तु उ, ज्योक्, कूपत-सूपत, शश्वच्छब्दमनुपृष्टे यास्क (यास्केः प्राह इति मूले प्राह)[1]। प्रश्ने। कच्चित् इष्टपरिप्रश्ने कच्चित्, कामप्रवेदने। ननु, अथ प्रतिज्ञातार्थ विरोधोक्तो।

**नन्वाक्षेपे परिप्रश्ने प्रत्युक्तावधारणे**
**वाक्यारम्भेऽप्यनुनयामन्त्रणानुज्ञयोरपि ॥**

(4) क्रियावृत्तिशब्दा यथा-सकृत् एकवारे। सकृद्भुङ् क्ते। क्वचित्साहित्येऽप्ययम्। सैरेतत् सकृत कृतम्। सहैव कृतम् इत्यर्थः। असकृत् अभीक्ष्णम्। शश्वत्, मुहुः,पुनः,पुनः, वारं वारे। पुनर, भूयस अप्रथमे द्वितीयवारे। अर्थान्तरेऽपि पुनः शब्दमाहुः। पक्षान्तरेऽधिकारे च भेदे चाप्रथमे पुनः। अयमर्थो व्याख्यात। अथ पुनरूच्यते। पौनः पुन्यम्। किं पुनः ब्राह्मणाः पुण्याः[2]।

(5) सूचना शब्दाः यथा-अथ, अथो प्रारम्भप्रकाशे। उ अनुकम्पाप्रदर्शने। दिष्ट्या, समुपजोषम्। हर्ष प्रकाशे। हा हा हा ही बत हन्त शोकप्रकाशे। हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोरित्याहुः। हुम् किंकिल। क्रोधप्रकाशे। अर्थान्तरेऽपि हुंकारः। तदुक्तम्। हुं वितर्के परिप्रश्ने हुं लज्जायां निवारणे। हु क्रोधोक्तावनुनयेऽनुमतौ च प्रयुज्यते। अहा, ही विस्मय प्रकाशे। ओः, आः आश्चर्यबोधप्रकाशे। 'नमस् नम्रताप्रकाशे। नेत्-परिभवप्रकाशे।' तुम् निग्रहण प्रकाशे। धिक् निर्भत्सनप्रकाशे निन्दा प्रकाशे च। अपकार शब्दैर्भयोत्पादनं निर्भत्सनम्। दोषाख्यातमात्रं निन्दा। नाधीषे धिक् त्वां ताड्यिष्यामि। धिक् परस्त्रीगामिनं पुरूषम्। नियोगे। तथा हि उक्तार्थनिदर्शने।

(6) निग्रहशब्दा यथा-मा, मास्म, अलम्, हलम्, माकिम्, नकिम्, माकिम्, नकिः, हलमादयो दैवी विषयाः। आर्य्य प्रतिबन्धे। आर्यहलम्, प्रसह्य, बलात्कारे। हलम् विवादे। किमुत तुच्छ (तुच्छासम्भावनायामिति मूले) सम्भावनायाम्।

---

1 निरुक्त (1-2-4)

2 श्रीमद्भगवद्गीता (10-33)

(7) पक्षपरिग्रहशब्दा यथा-परम्, परन्तु किन्तु, अपितु, अथवा एवंस्वित्, अधः स्वितः, उपरिस्वित्, किं स्वित्, आहोस्वित्, पक्षान्तरोद्धारे। स्विदिति प्रश्नवितर्कयोः। आहोस्विदिति निपातो निपातान्तरेण समुचितः प्रयुज्यते। उपरिष्टादुपचारोऽयम्। चेत्, यदि सम्भावित हेतौ। आहो, उताहो, आहोस्वित्, अथवा, किम्, किमु, उतः किमुतः विकल्पे। प्रत्युतः पक्षान्तरपरिग्रहे। नो चोत्, चेत् पक्षान्तरापादाने।

(8) दान शब्दाः यथा- स्वाहा- देवहविर्दाने। स्वधा, पितृदाने। नमस् सर्वदाने। श्रोष्ट् वौष्ट्, वष्ट्, हविर्दाने। हन्त, मनुष्यदाने। त एते दानविशेषार्था निपाता उक्ताः। इत्थं च सम्बोधनार्थाः, अभ्युपगमार्थाः, जिज्ञासार्थाः, क्रियावृत्त्यर्थाः, सूचनार्थाः, निग्रहार्थाः पक्षपरिग्रहार्थाः,दानविशेषार्थाश्चेति अष्टधा विभक्ता निरपेक्षद्योतका स्वरूपतोऽर्थतश्च प्रदर्शिताः।

**अथातः स्वरूपद्योतकान् वक्ष्यामः**

आः, हाः, इति हर्षे। हा-इति शोके। ही इति विस्मये। आः इति आश्चर्ये। ओः इति दुःखाघाते। अहा ह इति हास्ये। हुम्-इति क्रोधे। धिग् इति निन्दायाम्। फट्-इति भर्त्सने। अन्येऽप्येवमादयो बहवः शब्दाः अनुकरण शब्दाश्च यथायथं स्वरविशेषेण प्रयुज्यमानाः स्वरूपत एव तं तं भावं व्यंजयन्ति न तत्र समयमपेक्षन्ते इति तत्रोपेक्ष्यम्।

**अथातः पदपूरणान् वक्ष्यामः।**

1.तु2.हि 3.च 4.स्म 5.ह 6.वै 7.खलु 8.किल 9.नूनम् 10.इत् 11.कम् 12.इम् 13.इम् 14.उ 15.सीम् 16. घ। इत्येवमादयः कतिपये शब्दा निरर्थका एव वाक्यालंकाराय सन्दर्भसोष्ठवाय च तत्र तत्र यथेच्छं प्रयुज्यन्ते। यथा गा स्तोमास्तथैते वाक्ये वाक्यपूरणाः। श्लोके च पादपूरणाः त एते पदपूरणा इत्युच्यन्ते। तत्र इदादयो निपाता दैव्यामेव प्रयुज्यन्ते। तु न घ मंक्षूणां दैव्यामृचिछन्दोऽनुरोधेन दीर्घः क्रियते [1]। आ तू न इन्द्रः। नू मर्त्तः। उ त वा घा स्पालात्। मंक्षू गोमन्नीमीमहे। तदित्थं व्याख्याताः सर्वे द्योतकानिपाताः।

---

[1] ऋचितुनुघमक्षुतङ कुत्रोरुष्याणाम् (6-3-133)

निपातानां ह्रस्वान्तानां दैव्यामृगादिच्छन्दोऽनुरोधेनान्त्यस्वरस्य दीर्घीभावः क्रियते [1]। एवा ह्यसि वीर पुरे वा शूर इत स्थिरः। एवा राध्यं मनः। एवा हि ते। इत्यादि।

**अथ कर्मप्रवचनीयाः।**

आ, अनु, सु, प्रति, अधि, अभि, अपि, अप, उप, परि इत्येकादश कर्मप्रवचनीयाः। इमे हि अर्थविशेषे प्रयुक्ता उपपदे द्वितीयाविभक्तिं प्रयोजयन्ति, ततस्ते कर्मप्रवचनीया उच्यन्ते। तेषामर्थविशेषा यथा। आ-मर्यादायामभिविधौ च आ शब्दः कर्मप्रवचनीयो भवति [2]। तद्रहितोऽवधि मर्यादा। तत् सहितोऽवधिरभिविधि। यथा-आ पाटलिपुत्राद् वृष्टो देवः। आ मथुराया वा। पाटलीपुत्रं मथुरां वा मर्यादीकृत्ये अभिविधायेत्यर्थो वा। अनयोरर्थयोराशब्दयोगे पंचमी विभक्ति भवति।

अनु-हीने, [3]तृतीयार्थे, [4] हेतुभूतलक्षणे, [5] परिचायकलक्षणे, इत्थंभूताख्याने, भागे, वीप्सायां च[6] अनु शब्दः कर्मप्रवचनीयो भवति। हीने यथा- अन्वर्जुनं योद्धारः। अनु विष्णुं देवाः। विष्णोर्न्यूना इत्यर्थः। पदपेक्षया न्यूनता गम्यते ततो द्वितीयाविभक्तिः।[7] तृतीयार्थे यथा नदीमन्ववसिता सेना। पर्वतमनुगता सेना। पर्वतेन सम्बद्धा। इत्यर्थः। तृतीयार्थः साहित्यम्। येन साहित्यं ततो द्वितीया। हेतुभूतलक्षणे यथा-जपमनुप्रावर्षत्। हेतुभूत जपो लक्षितं वर्षणमित्यर्थः। एवं साकल्यस्य संहितामनु प्रावर्तत्। अनड्डुत् यज्ञमनु असिंचत्। एषु लक्षणवचनाद् द्वितीया विभक्तिः न तु हेतुत्व निबन्धना तृतीया [8]। परिचायके लक्षणे यथा- वृक्षमनुविद्योतते विद्युत्। इत्थंभूताख्याने- साधुर्देवदत्तो मातरमनु। भागे यदत्रमामनु स्यात्। वीप्सायां-वृक्षं वृक्षमनु सिंचति।

---

1 निपास्य च (6-3-136)
2 आङ् मर्यादावचने (1-4-89)
3 हीने (1-4-86)
4 तृतीयार्थे (1-4-85)
5 अनुर्लक्षणे (1-4-84)
6 लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः (1-4-90)
7 कर्मप्रवचनीययुक्ते द्वितीया (2-3-8)
8 लक्षणेत्थंभूता (1-4-90)

## प्रति परि

लक्षणे इत्थंभूताख्याने भागे वीप्सायां च प्रति परि शब्दौ कर्मप्रवचनीयौ भवतः [1]लक्षणे-वृक्षं प्रति विद्योतते विद्युत् वृक्षं परि। इत्थंभूताख्याने-साधुर्देवदत्तो मातरं प्रति। मातरं परि। भागे यदत्रमां प्रति स्यात्। मां परि स्यात्। वीप्सायां वृक्षं वृक्षं प्रति सिंचति।

## अभि

लक्षणे इत्थं भूताख्याने वीप्सायां च अभि शब्दः कर्मप्रचनीयो [2]भवति। लक्षणे यथा-वृक्षमभि विद्योतते। इत्थंभूताख्याने यथा-साधुर्देवदत्तौ मातरमभि। वीप्सायां यथा-वृक्ष वृक्षमभि सिंचति। भागे तु अभि शब्दः उपसर्ग एव न कर्मप्रवचनीयः। तेन भागिवचनाद् द्वितीया विभक्तिर्नास्ति षष्ठी भवति। यथा यदत्रममाभिष्यात् तद् दीयताम्।

## सु

पूजायां सु शब्दः कर्मप्रवचनीयो भवति [3]। यथा सुसिक्तं भवता। सुस्तुतं भवता। अत्र सो कर्मप्रवचनीयत्वात् उपसर्ग निबन्धनं धातोः सकारस्य षत्वं न भवति।

## अति

अतिक्रमणे, पूजायां च, अति शब्दः कर्मप्रवचनीयो भवति [4]। निष्पन्नेऽपि वस्तुनि क्रियाप्रवृत्तिरतिक्रमणम्। अतिसिक्तमेव भवता। अतिस्तुतमेव भवता। पूजायां यथा-अतिसिक्तं भवता, अतिस्तुतं भवता शोभनं कृतमित्यर्थः।

## प्रति

प्रतिनिधिविषये प्रतिदाने च प्रति शब्दः कर्मप्रवचनीयो भवति[5]। मुख्य सदृशः प्रतिनिधिः। यथाऽभिमन्युरर्जुनात प्रति (अर्जुनः प्रति इति मूले) दत्तस्य निर्यातनं

---

1 अभिरभागे (1-4-91)

2 अभिरभागे (1-4-91)

3 सुः पूजायाम् (1-4-94)

4 अतिरतिक्रमणे च (1-4-95)

5 प्रतिः प्रतिनिधिप्रतिदानयो.(1-4-94)

प्रतिदानम्। यथा माषानस्मै तिलेभ्यः प्रतियच्छति। अत्र यत्र प्रतिनिधिर्यस्य वा प्रतिदानं ततः पंचमीविभक्तिर्भवति [1]।

## अपि

पदार्थे संभावनेऽन्ववसर्गे गर्हायां समुच्चये चार्थे प्रति शब्दः कर्मप्रवचनीयो भवति [2]। पदान्तरस्याऽप्रयुज्यमानस्यार्थः पदार्थः। सर्पिषोऽपि स्यात्। मधुनोऽपि स्यात्। मात्रा विन्दुस्तोकमित्यर्थे अपि शब्दो वर्तते। अथ सम्भावनमधिकार्थ वचनेन श (क्ते) रप्रतिघाताविष्करणम्। (शरप्रतिघाताविष्करणम् इति मूले)। अपि सिंचेन्मूलकसहस्रम्। अपि स्तुयाद्राराजनम्। अथान्ववसर्गः कामचारानुज्ञा। अपि सिंच। अपि स्तुहि। अथ गर्हा निन्दा धिग् जाल्मं दत्तम्। अपि सिंचेत्पलाण्डुम्। अपि स्तूयाद् वृषलम्। समुच्चये तु अपि सिंच अपि स्तुहि। सिंच च स्तुहि च इत्यर्थः। इह सर्वत्र अपि शब्दस्य उपसर्गत्वाभावात् धातु सकारस्य षत्वं न भवति [3]।

## अधि

ऐश्वर्येऽर्थे स्वस्वामिभावं अधि शब्दः कर्मप्रवचनीयो भवति [4]। तत्र कदाचित् स्वामिवचनात् सप्तमी विभक्तिर्भवति। कदाचित् स्ववचनात्[5] यथा-अधिब्रह्मदत्ते पंचालाः अधि पंचालेषु ब्रह्मदत्तः। कृधातुयोगेत्वैश्वर्येऽर्थे अधि शब्दा विकल्पेन कर्मप्रवचनीय संज्ञो भवति [6]। यदत्र मामधिकरिष्यति।

## अप परि

वर्जनेऽर्थे अपपरिशब्दौ कर्मप्रवचनीयौ भवतः [7]। प्रकृतेन सम्बन्धिना कस्यचिदभिसम्बन्धो वर्जनं यथा-अप त्रिगर्तेभ्यो वृष्टो देवः। परिव (ना) त् वृष्टो देवः। भिगर्त्तदेशान् वनं च परित्यज्येत्यर्थः।

---

1 प्रतिनिधिप्रतिदाने च यस्मात् (2-3-11)
2 अपिः पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु (1-4-96)
3 उपसर्गात्सुनोतिसुवतिस्यति.(8-3-65)
4 अधिरीश्वरे (1-4-97)
5 यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी (2-3-9)
6 विभाषा कृञि (1-4-98)
7 अपपरी वर्जने (1-4-88)

## उप

हीने अधिक चार्थे उप शब्दः कर्मप्रवचनीयो भवति [1]। हीने यथा उपार्जुनं योद्धारः। उपविष्णु देवाः। विष्णोर्न्यूना इत्यर्थः। अधिके यथा-उपखार्या द्रोणः। उपनिष्के कार्षापणम्। द्रोणापेक्षया खारी अधिकेत्यर्थः। अत्र यतो हीनता गम्यते ततो द्वितीया विभक्तिः। यतस्तु अधिकता गम्यते ततस्तु सप्तमी विभक्तिरिति विशेषः [2]।

## अधि परि

निरर्थकौ अधि परि शब्दौ कर्मप्रवचनीयौ भवतः [3]। यथा कुतोऽध्यागच्छति, कुतः पर्यागच्छति। अत्र अधिपरिशब्दौ वाक्यशोभार्थौ। अत्राऽपि पंचमी विभक्तिः।

## इति कर्मप्रवचनीयाः

## अथोपसर्गान् वक्ष्यामः

द्वाविंशतिनिपातविशेषा ये धातोः प्रागुपसृष्टा प्रयुज्यन्ते त उपसर्गा इत्युच्यन्ते [4]। यद्यपि दैव्यां भाषायामिमे धातोः प्रागुपरिष्टाच्च वा प्रयुज्यन्ते, अनन्तराः सान्तराश्च दृश्यन्ते तथाऽपि तत्राऽपि सन्निधाने तदर्थोपसृष्टो नूनं धात्वर्थः सम्पद्यते तस्मात्तत्राऽपि तेषामुपसर्गत्वं न नोपपद्यते न उपपद्यते न इत्यन्वयः उपपद्यत एव इत्यर्थः तेषामर्था यथा-आ-इति अर्वागर्थे। प्र परा इत्येतौ परागर्थे। अभि-इति सम्मुखार्थे। प्रति इति प्रतिमुखार्थे। अति सु इत्येतौ पूजितार्थे। निर् दुर इत्यतौ निकृष्टार्थे। उत इति उर्ध्वभावे। अव नि-इत्येतौ विनिगृहीते। सम इति एकीभावे। विअप-इत्येतौ भिन्नभावे। अधि-इति उपरिभावे एश्वर्ये च।अनु-इति सादृश्यापरभावे। अपि-इति संसर्गे। उप-इति उपजने। परि-इति सर्वतोभावे। श्रत् इति सत्यतायाम्। अन्तर् इति तिरोधाने। इतीमेऽर्थाः प्रायिका उक्ताः धातुविशेषसन्निधाने चैषां क्वचिदन्येऽप्यर्थाअनेकविधाः सम्भवन्ति। ते यथायथं प्रयोगादुन्नेयाः। यथा- आहारो भोजने। प्रहारस्ताडने। संहारः सर्वनाशे। अपहारो बलाद्ग्रहणे। विहारः क्रीड़ायाम्। व्याहारो भाषणे। अभ्यवहारो भोजने। निर्हारो निष्काशने। उद्धारो बहिष्करणे। इत्यादि। एवं प्रभावः। पराभवः।

---

1 उपोऽधिके च (1-4-87)

2 यस्मादधिकं यस्य च. (2-3-9)

3 अधिपरी अनर्थकौ (1-4-93)

4 उपसर्गाः क्रियायोगे (1-4-59)

संभवः। अनुभवः। विभवः। उद्भवः। अभिभवः। परिभवः। इत्यादिषु धात्वन्तरेष्वपि तेषामर्थभेदाः लोकतौ द्रष्टव्याः। इत्युपसर्गाः व्याख्याताः। प्रसमुपोदां दैव्यां पादपूरणार्थः द्वित्वं क्रियते [1]। प्रप्रापमग्निः। सं समिद्युवसे। उपोपमे परामृश। किं नोदुदुहर्षसे। भाविस्वरान्तानामेषां देव्यामृचि सुशब्दे परे छन्दोऽनुरोधेन क्वचिद्दीर्घः क्रियते [2]। अभीषु णः सखीनाम्। अन्येषामपि भावि स्वरान्तानामित्थं दीर्घीभावः सु शब्दे परे दृश्यते। ऊर्ध्व ऊ षुणः। भारत्यां तु द्वित्वं दीर्घश्च नास्ति।

इति निपाताधिकारः

## व्युत्पन्नाः

अथातोव्युत्पन्नान् व्याख्यास्यामः। ते चतुर्धा। विभक्त्यन्त–प्रतिरूपकाः समस्तास्तद्धितान्ताः कृदन्ताश्च। विभक्त्यन्तप्रतिरूपका यथा वेलायाम्। मात्रायाम्। हेतौ। रात्रौ। स्थाने। सपदि। इति चिरम्। चिरेण। चिराय। चिरात्। चिरस्य। आरे। आरात। अकस्मात्। हठात्। हठात्कारः। बलात्। बलात्कारः। साक्षात्। साक्षात्कारः। परात्परः। सहसा। अञ्जसा। भूयसा। प्रायेण। अहन्ता। अहं भावः। अहंयुः। अहंकारः। अहमहमि त्वं चाहं च। ममता। ते इति स्यात्त्वयेत्यर्थे मयेत्यर्थे च मे इति कोशः। अस्तं भावः। अस्तं गमः। अस्तुकारः। अस्तु भवतु इत्युयामविचारित परित्यागे च। अस्तीत्याख्यानकोपक्रमे। विविक्षितार्थ संभावितव्ये। स्यादिति संभावनाख्याने। स्याद्वा। अन्येऽप्यनुकरण शब्दा विभक्त्यन्ता अविभक्त्यन्ता वा उपसर्ग प्रतिरूपकाः स्वरप्रतिरूपकाश्च सर्वेऽव्यय शब्दाः द्रष्टव्या। रामाय कृष्णाय कुरु। सर्व, विश्व उभ, उभय डतर, डतम इत्यादीनि सर्वनामानि।

अथ अव्ययीभावे नाम समासोऽव्यीभावत्वादेवाव्ययत्वं भवति। यथा-अभ्यग्नि। प्रत्यग्नि। अधिगृहम्। अधिग्रामम्। परिगंगम्। मध्ये गंगम् इति समस्ताव्यय शब्दो व्याख्यातः। अवदत्तं विदत्तं च प्रदत्तं चादि कर्मणि। सुदत्तमनुदत्तं च निदत्तमीति चेष्यते। अनुपसर्गत्वादवत्तं वित्तं प्रत्तमित्यादि न भवति। दुर्नीतं, दुर्नयः, दुर्निर्णयः इत्यादौ नस्य णत्वं न भवति। अ आ इ ई उ ऊ ऐ ओ ओ औ इत्यादिः। अथ यत्र तद्धितादिप्रत्ययवशाद् सर्वविभक्ति कश्चन शब्दो भवति स तद्धिताव्ययशब्दः। तत्र सन्ति

---

1 प्रसमुपोदः पादपूरणे (8-1-6)

2 इकः सुञि (6-3-134)

केचन तद्धितप्रत्यया अव्यय कारकाः। एते हि नाम शब्देभ्य उत्तरं विधीयन्ते। तदन्तानि। (तदन्तराणि इति मूले)सर्वाणि अव्ययानि भवन्ति। ते च द्वादशधा विभज्यन्ते।

1. देशार्थः, 2. कालार्थ, 3. दिगर्थः, 4. विधाद्यर्थ, 5. वीप्साद्यर्थः, 6. विभक्त्यर्थः, 7. अभूततद्भावार्थ, 8. तदधीनाद्यर्थः, 9. यापनाद्यर्थः, 10. सादृश्याद्यर्थः, 11. अभ्यावृत्यर्थः, 12. प्रकर्षार्थाश्चेति भेदात्। तत्रादौ देशार्थाश्चत्वारः ॥ तसिल प्रत्ययान्तो यथा[1]-कुतः, यतः, ततः, अतः, इतः, अमुतः, बहुतः, परितः, सर्वतः, अभितः, उभयतः, इत्यादि। तसिल् इति सानुबन्धा तस् इति संज्ञा क्रियते व्यवहारार्थम्। एवमुपुत्तरत्राऽपि प्रयोगास्थप्रत्ययरूपेतरद्रूपाणां प्रत्यय शब्दानां संज्ञाशब्दत्वं द्रष्टव्यम्।

2. त्रल् प्रत्ययान्तो यथा[2]-कुत्र, अत्र, यत्र, तत्र,बहुत्र। त्रलो दैव्यामृचिछन्दोऽनुरोधेन दीर्घः क्रियते [3]। अत्रा ते भद्रा। यत्रानश्चक्रा।

3. ह प्रत्ययान्तो यथा[4]-इह, कुह इत्येवं दैव्याम्।

4. अत् प्रत्ययान्तो यथा[5]-क्व

## 2. कालार्था द्वादश-

1. दा प्रत्ययान्तो यथा[6]-सदा, सर्वदा, एकदा, अन्यदा, कदा, यदा, तदा, इदा शब्दस्तु दैव्यामेव प्रयुज्यते न भारत्याम्।
2. र्हिल प्रत्ययान्तो यथा-[7]एतर्हि, कर्हि, यर्हि तर्हि।
3. धुना प्रत्ययान्तो यथा-[8]-अधुना।
4. दानीं प्रत्यान्तो यथा[9]-इदानीम्, तदानीम्।

---

1 पंचम्यास्तसिल् (5-3-7)
2 सप्तम्यास्त्रल् (5-5-10)
3 ऋचितुनुघमक्षुतङ् कुत्र.(6-3-133)
4 इदमो हः (5-3-11)
5 किमोऽत्(5-3-12)
6 सर्वैकान्यकियत्तदः काले दा (5-3-15)
7 इदमो र्हिल् (5-3-16)अनद्यतने र्हिलन्यतरस्याम् (5-3-21)
8 अधुना (5-3-17)
9 दानीं च (5-3-18) तदो दा च (5-3-19)

5. द्यस् प्रत्ययान्तो यथा[1]-सद्यः।

6. उत् प्रत्ययान्तो[2]यथा-परूत्।

7. आरि प्रत्ययान्तो यथा-परारि।

8. समसण् प्रत्ययान्तो [3]यथा-ऐषमः

9. एद्यवि प्रत्ययान्तो[4] यथा-परेद्यवि।

10. द्य प्रत्ययान्तो यथा[5]-अद्य।

11. एधुस् प्रत्ययान्तो यथा[6]-पूर्वेद्युः, अन्येद्युः, उभयेद्युः अन्यतरेद्युः, इतरेद्युः, अपरेद्युः, उत्तरेद्युः।

12. द्युस् प्रत्ययान्तो यथा-[7]उभयद्युः।

## 3. अथ दिग्देशकालार्था दश

1. अस्ताति प्रत्ययान्तो यथा[8]-पुरस्तात्, अधस्तात्, अवस्तात्, अवरस्तात्, परस्तात्।

2. असि प्रत्ययान्तो यथा[9]-पुरः, अद्यः, अवः, अवः।

3. अतसुच् प्रत्ययान्तो[10] यथा-दक्षिणतः, उत्तरतः, अवरतः, परतः।

4. लुक् यथा-[11]प्राक्, उदक्, प्रत्यक्, अवाक्। लुगिति प्रत्ययादर्शनम् उच्यते। प्रत्ययार्थस्तु गम्यते।

5. रिष्टातिल् प्रत्ययान्तो यथा-उपरिष्टात्।

6. रि प्रत्यायान्तो यथा[12]-उपरि।

---

1 सद्यः परूत्परार्यैषमः परेद्य (5-3-22) समानस्य सभावोद्यस चाहनि (वा.3245)

2 पूर्वपूर्वतरयोः परादेशः, उदारि च प्रत्ययौ संवत्सरे (वा.3246)

3 इदमः (इश्) समसण् (3247)

4 परस्मादेद्यव्यहनि (वा.3248)

5 इदमोऽशभावो द्यश्च (वा.3249)

6 पूर्वान्यान्यतरेतरापराधरोत्तरेभ्य एद्युस् च (वा.3250)

7 द्युश्चोभयाद्क्तव्यः (वा.3251)

8 दिक्शब्देभ्यः सप्तमीपंचमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः (5-3-27)

9 पूर्वाधराणामसि पुरधवश्चैषाम् (5-3-29)

10 दक्षिणोत्तराभ्यामतसुच् (5-3-28) विभाषा परावराभ्याम् (5-3-29)

11 अञ्चेर्लुक् (5-3-30)

12 उपर्युपरिष्टात् (5-3-31)

7. आति प्रत्ययान्तो यथा[1]-उत्तरात्। अधरात्। दक्षिणात्। पश्चात्।

8. एन प्रत्ययान्तो यथा[2]-उत्तरेण, अधरेण, दक्षिणेन, पूर्वेण, अपरेण।

9. आच् प्रत्ययान्तो[3]-यथा-दक्षिणा, पुरा, उत्तरा।

10. आहिच् प्रत्ययान्तो यथा[4]-दक्षिणाहि, उत्तराहि। दूरत्वं गम्यते। अवरस्यास्तात्त्यर्थे पश्चापश्चेति दैव्यामेव प्रयुज्यते[5] (न भारत्याम्) अस्तातीत्यादिषु केषुचित् प्रत्ययेषु अनुबन्धाः क्रियन्ते प्राचां व्यवहारानुरोधेन संज्ञार्थम्। अस्तात्यादिषु सप्तसु प्रत्ययेषु पंचमी, सप्तमी प्रथमा विभक्त्यर्था गम्यन्ते। एनबादिषु त्रिषु सप्तमी प्रथमार्थो द्रष्टव्यौ न पंचाम्यर्थः। दिग् शब्देभ्योऽस्ताति प्रभृति प्रत्ययान्तेभ्यो दैव्यां तात् प्रत्ययोऽपि दृश्यते। पश्चात्तात्। अधरात्तात्। उत्तरात्तात्, (उत्तरातात् उत्तरातात्) इति द्विवारं मूले। उदक्तात्। इत्यादि।

## 4. अथ विधाद्यर्थाः पञ्च

क्रियाप्रकारे यः संख्याशब्दः ततः स्वार्थे धा प्रत्ययः [6]। एकधा भुङ् क्ते। द्विधा गच्छति। त्रिधा। चतुर्धा। पंचधा वा। द्रव्यस्य संख्यान्तरापादानेऽपि संख्यगाशब्दात् स्वार्थे धा प्रत्ययः [7]। एकस्यानेकीकरणमनेकस्यैकीकरणं संख्यान्तरापादानम्। एकं राशिं पंचधा कुरू। अष्टधा कुरू। अनेकमेकधा कुरू। द्विधा। द्वेधा। त्रिधा। षोढा। त्रिधा वा भुङ्क्ते इत्यादि।

1. धा प्रत्ययान्तो यथा-उपरि प्रदर्शिता

2. ध्यमु प्रत्ययान्तो यथा। ऐकध्यम्। एक शब्दात् क्रियाप्रकारे द्रव्यस्य संख्यान्तरापादाने चायंधा विषये एकशब्दात् पर्यायेण ध्यम्[8] प्रत्ययो भवत्यादि वृद्धिश्च संख्या शब्दात् (तान्य शब्दात् इति मूले) धा विषये चोभयत्राऽप्ययं धं प्रत्ययः पर्यायेण द्वि

---

1 उत्तराधरदक्षिणादातिः (5-3-34) पश्चात् (5-3-32)

2 एनबन्यतरस्यामदूरे पंचम्याः (5-3-35)

3 दक्षिणादाच् (5-3-36)

4 आहि च दूरे (5-3-37)
उत्तराच्च (5-3-38)

5 पश्च पश्चा च छन्दसि (5-3-33)

6 संख्याया विधार्थे धा (5-3-42)

7 अधिकरण विचाले च (5-3-43)

8 एकाद्धो ध्मुमन्यतरस्याम् (5-3-44)

त्रि शब्दाभ्यां भवति। द्वेधानि, त्रेधानीत्यादिप्रयोगास्त्वनव्यमाभ्य। द्वैध, त्रैध शब्दाभ्यां द्रष्टव्यानि।

3. धमु यथा-द्वैधम्। त्रैधम्[1]।

4. एधाच्च यथा[2]-द्वैधा। त्रैधा। द्वित्रिशब्दाभ्यामेवायमेधा प्रत्ययो धा विषये पर्यायेण भवति। द्वित्रिशब्दयोरन्त्यस्वरलोपश्च।

5. थाल् प्रत्ययान्तो यथा[3]-तथा। यथा। थमुप्रत्ययः[4] इत्थं कथं। इदम्किमोरथा प्रत्ययो दैव्यामेव प्रयुज्यते। इत्था। कथा।

## 5. अथ वीप्साद्यर्थः एकः

1. शस् प्रत्ययान्तो यथा[5]। बहुशः। भूरिशः। अनेकशः। अल्पस्तोकशः इति स्वार्थे। द्विशः। त्रिशः कार्षापणशः। मात्रशः। पादशःइति वीप्सायाम्।

## 6. अथ विभक्त्यर्थ एकः

1. तस् यथा[6]- कृष्णतः। अर्जुनतः। आदितः। मध्यतः। पार्श्वतः। अयत इत्यादिषु पंचम्यर्थः -चरित्रतः। वृत्तत इत्यादिषु तृतीयार्थः। कासतः छर्दितः इत्यादिषु षष्ठ्यर्थः।

## 7. अभूततद्भावार्थास्त्रयः

1. च्वि प्रत्ययान्तादीकारान्तो यथा[7]-शुक्ली करोति। कृष्णी कुर्यात्। शुक्ली भवति। दीर्घी भविष्यति। शुक्ली स्यात्। ह्रस्वीस्यात्। करोतिभवत्यस्ति धातूनां योगतएवच्वि प्रत्ययो भवति। अभूततद्भावो गम्यते। यः शुक्लो नासीत्तं शुक्लं सम्पादयतीत्यर्थः। उकारान्तादूकारोऽन्येभ्यस्त्वीकारश्च्विप्रत्ययारम्भकस्य स्थाने भवति। ऋकारस्थाने री

---

1 द्वित्र्योश्च धमु (5-3-45)
2 एधाच्च (5-3-46)
3 प्रकारवचने थाल् (5-3-23)
4 इदमस्थमुः (5-3-24) एतदो वाच्यः (वा.3235) किमश्च (5-3-25)
5 बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् (5-3-42)संख्यैकवचनाच्च वीप्सायाम्(5-4-43)
6 प्रतियोगे पंचम्यास्तसिः (5-4-44) आद्यादिभ्य उपसंख्यानम् (वा.3339)
7 कृभ्वस्तियोगे संपद्यकर्तरि च्विः(5-3-50)

प्रत्ययः (आदेशः) मात्री करोति। पित्री करोति। उन्मनी करोति। उन्मनी भवति। उच्चक्षु करोति। विचेती करोति। विरही करोति। विरजी करोति। उरूर्मनश्चक्षुश्चेतरहोरज–साच्चिप्रत्ययसलोपश्च।[1] च्विप्रत्ययादुकारान्तो यथा। पटू करोति। कटू भवति। चाटू स्यात्। अरूषश्च्विप्रत्यये सलोपश्च। अरूकरोति। अरूभवति अरूस्यात्।

## 8. तदधीनाद्यर्थौ द्वौ

1. साद (सद् इति मूले) यथा[2]- अग्निसाद्भवति वस्त्रम्। उदकसाद् भवति लवणम्। (भस्म)साद्भवत्यन्नम्। कात्स्न्र्येनाभूततद्भावे अभिव्याप्तौ तदधीनतायां च साद् भवति। कृभ्वस्तियोगेसम्पद्ययोगे चायम्।

2. त्रा यथा[3]- देवत्रा करोति। मनुष्यत्रा गच्छति। पुरूत्रा वसति। देवमनुष्यपुरूषमर्त्येभ्यो द्वितीयासप्तम्यर्थौ गम्येते[4]। मनुष्यान् गच्छति पुरूष वसति। अन्यत्र तदधीनं देयं प्रतीयते। ब्राह्मणत्रा करोति। ब्राह्मणेभ्योदेयत। प्रतिश्रूतं समर्पयतीत्यर्थः।

## 9. यापनाद्यर्थ एकः

डाच् प्रत्ययादाकारान्तो यथा[5]-पटपटा करोति। दमदमा करोति खरटखरटा करोति। त्रपटत्रपटा करोति। खटखटा भवति। जीवा करोति। सुखा करोति। प्रिया करोति। दुःखा करोति

## 10. सादृश्याद्यर्थास्त्रयः

1. वत् यथा[6]-घटवत्। पटवत्। ब्राह्मणवत्। क्षत्रिवत्।
2. ना यथा[7]-विना, नाना।

---

1 अरूर्मनश्चक्षुचेतोरहोरजसां लोपश्च (5-4-51)
2 विभाषा साति कात्स्न्र्ये (5-4-42)
3 देये त्रा च (5-4-55)
4 देवमनुष्यपुरूषपुरूमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् (5-4-56)
5 अव्यक्तानुकरणाद् द्वयजवरार्धादनितौ डाच् (5-4-57)
6 तेनतुल्यं क्रिया चेद्वति (5-1-115)तत्र तस्यैव (5-1-116)
7 विनञ्भ्यां नानाञौ नसह (5-2-27)

3. थाल् यथा[1]-यथा तथा, प्रत्नथा, पूर्वथा, विश्वथा, इमथा, प्रत्नथादयश्चत्वारो दैव्यामेव प्रयुज्यन्ते [2]।

**11. अथ क्रियाभ्यावृत्तिप्रत्ययास्त्रयः**

1. कृत्वसुच् यथा[3]-पंचकृत्वाः, षट्कृत्वः, दशकृ त्वः। संख्या शब्दात् कृत्वसुच्।
2. सुच् यथा[4]-द्विः त्रिः। द्वित्रिचतुर्भ्यः सुच्।
3. धा यथा[5]- बहुधा दिवसस्य भुङ्क्ते। बहोर्धा कालस्याविप्रकर्षे।

**12. क्रियाप्रकर्षार्थ एकः**

आम् यथा[6]-पचतितराम। सन्तुतराम। इति तद्धितप्रत्ययाः।

तदित्थमुक्ता एते नामजाव्ययशब्दा समासतस्तद्धितप्रत्ययतश्च सम्पन्नाः। अतः परं धातुजा (अव्यय)शब्दा वक्तव्याः। मकारान्ता सन्ध्यक्षरान्ताः अन्येऽपि कृत् प्रत्यया (अष्टप्रका) रकाः एते हि धातुभ्य उत्तरं विधीयन्ते तदन्तानि च सर्वाण्यव्ययानि भवति। ते द्विधा। पूर्वक्रियाद्यर्थाः उत्तरक्रियाद्यर्थाः। पूर्वक्रियाद्यर्था यथा-ण्मुल्-इति अम् प्रत्यय संज्ञा [7]। स्वादुं कार भुङ्क्ते। स्मारं स्मारम्। गमं गमम्।

क्त्वा[8]-इति त्वा, त्वाय, त्वी, त्वीनम्, ल्यप् प्रत्ययानां संज्ञा। त्वा यथा-कृत्वा, गत्वा-दत्वा नीत्वा। त्वाय। यथा[9]-दिवं सुपर्णो गत्वाय। त्वी यथा[10]-स्नात्वी, पीत्वी, त्वीनम् यथा[11]-इट ट्वीनम्। त्वाय, त्वी, त्वीनमिति त्रयः प्रत्यया दैव्यामेव

---

1 प्रकारवचने थाल् (5-3-23)
2 प्रत्नपूर्वविश्वेमात्थान्छन्दसि (5-3-111)
3 संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् (5-4-17)
4 द्वित्रिचतुर्भ्यः सुच् (5-4-18)
5 विभाषा बहोर्धा विप्रपृष्टकाले (5-4-20)
6 किमेतिङ व्ययघादाम्वद्रव्य प्रकर्षे (5-4-20)
7 स्वादुमि णमुल् (3-4-26) आभीक्ष्ण्ये णमुल् च (3-4-22)
8 समानकर्तृकयोः पूर्वकाले (3-4-21)
9 क्त्वो यक् (7-1-47)
10 स्नात्व्यादयश्च (7-1-49)
11 इष्ट्वीनमिति च (7-1-48)

प्रयुज्यन्ते न तु भारत्याम्। त्वीनं प्रत्ययो यजतेरेव दृश्यते। न त्वन्यधातुभ्यः। इष्ट्वीनं देवान्, इष्ट्वति भारत्याम्।

ल्यप् इति य प्रत्ययसंज्ञा [1]।आगत्याऽऽगम्य प्रणम्य। क्वचिदक्रियार्थत्वेऽपि क्त्वाण्मुलौ भवतः अयथाभिप्रेताख्यानेऽव्यययोगे यथा यदुच्चैराख्येयं तत् किं नीचैः कृत्य नीचैः कृत्वा करमाचक्षे। यन्नीचैराख्येयं तत् किमुच्चैः कृत्य उच्चैः कृत्वा उच्चैः कारमाचक्षे। तीर्यच्यपवर्गे[2] यथा तिर्यक् कृत्य तिर्यक् कृत्वा तिर्यक् कारं गतः। समाप्यगत इत्यर्थः। स्वागेतस् प्रत्यये कृभ्वोः [3]। मुखतः कृत्य मुखतः कृत्वा मुखतः कारं गतः। एवं पृष्टतः कृत्येत्यादिः। मुखतो भूय मुखतो भूत्वा मुखतो भावं वा तिष्ठति। एवं पृष्टतो भूयेत्यादिः। नाद्यार्थप्रत्यये च्व्यर्थे [4]। यत्र नाना नाना कृत्वा गच्छति तत्राह नानाकृत्य, ननाकृत्वा, नानाकारं गतः। विना कृत्य, विना कृत्वा विनाकारं गतः। नाना भूय नाना भूत्वा नानाभावं गतः। एवं विना भूयेत्यादि। द्विधाकृत्य द्विधाकृत्वा द्विधाकारं गतः। द्विधाभूय द्विधाभूत्वा द्वैधाभावं गतः द्वैधं कृत्य दैधं कृत्वा द्वैधं कारं गतः। द्वैधं भूय द्वैधं भूत्वा दैधं भावं गतः।तूष्णीमि भुवः[5]। तूष्णीं भूय तूष्णीं भूत्वा तूष्णीं भावं गतः। अन्वच्यानुलोम्ये। आनुलोम्यमनुकूलत्वम् परचित्तानुविधानम्। अन्वग् भूयास्ते अन्वग् भूत्वा। अन्वग्भावम्। णमुल्प्रत्ययविषया बहवोऽन्येऽपि भवन्ति। ते कृतप्रकरणे वक्ष्यन्ते। अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वा [6]।अलं कृत्वा खलु कृत्वा। उदीचां माङो व्यतिहारे [7]।अपमित्ययचते। अयमित्य हरति। याचित्वाऽयमयत इत्यर्थः। शरावती नद्याः पूर्वदक्षिणाऽभिजनाः प्राच्यः। पश्चिमोत्तरा उदीच्च तदुक्तम् प्रागुदंचौ विभजते हंसः क्षीरोदके यथा। विदुषां शब्दसिद्धयर्थं सा न या तु शरावती [8]। इति।

तुमुन् इति तुम् प्रत्यय संज्ञा। कर्तुम्[9]। गन्तुम्। दातुम्। द्रष्टुम्। भोक्तुम्। क्वचिदक्रियार्थत्वेऽपि यथा। शक् धृष ज्ञा ग्ला घट रभ क्रम सहार्हास्त्यर्थेषु तुमुन् [10]।भोक्तुं

---

1 समासेऽनञ्पूर्वे क्त्वो ल्यप् (7-1-37)

2 तिर्यच्यपवर्गे (3-4-60)

3 स्वागे तस्प्रत्यये कृभ्वोः (3-4-61)

4 नाधार्थप्रत्यये च्व्यर्थे (3-4-62)

5 तूष्णीमि भुवः (4-3-64)

6 अलंखल्वोः प्रतिषेध्योः प्राचां कृत्वा च (3-4-18)

7 उदीचां माङो व्यतिहारे (3-4-19)

8 काशिकावृत्तिः (एङ् प्राचां देशे 1-1-75)

9 तुमुण्वुलौ क्रियायां क्रियार्थायाम् (3-3-10)

10 शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन (3-4-65)

शक्नोति, धृष्णोति जानाति ग्लपयति घटते प्रारभते। लभते प्रक्रमते सहते अर्हति। एवमस्ति भवति विद्यते वा भोक्तुम्। पर्याप्तिवचनेष्वलमर्थेषु [1]। पर्याप्तिरन्यूनता। पर्याप्तो भोक्तुम्। भोक्तुमलम्। भोक्तुं पारयति। णमुल्इति अमः संज्ञा। विभाजं नाशकत्। अपलुपं नाशकत्। विभक्तुमपलोप्तुमित्यर्थः। शकि धातु प्रयेोगादेवायं णमुल् प्रत्ययो नान्यत्र [2]। तोसुन् इति तोसप्रत्ययसंज्ञा। ईश्वरो विचरितम्। विचरितुं समर्थ इत्यर्थ। कसुन्निति-असः संज्ञा। ईश्वरो विलिखिः। विलेखितमित्यर्थः। ईश्वरे तोसन्कसुनौ[3] नान्य तुमर्थे। ए प्रत्ययान्ता यथा-दृशे, विख्ये [4]।द्रष्टुं विख्यातुमित्यर्थः। ऐ प्रत्ययान्तो यथा- प्रयै प्रयातुमित्यर्थः। इष्यै प्रत्ययान्तो यथा[5]प्रियै रोहिष्यै, अव्यथिष्यै (वोष्टुमिति मूले) रोदुमव्यथितुम् इत्यर्थः। इष्यै नान्यत्र दृश्यते। अध्यै प्रत्ययान्तो यथा[6]-विवध्यै। असे प्रत्यान्तो यथा-जीवसे। झत्वे। दक्षाय जीवसे जीवितुमित्यर्थः। से प्रत्ययान्तो यथा-वक्षे रायः। तावमेषे रथानाम्। वक्तुमेतुमित्यर्थः। तवे प्रत्ययान्तो यथा-सूतवे कर्त्तवे। तवै प्रत्ययान्तो यथा-दातवा उ। णमुल् तोसुन्नादयस्तुमर्था एकादश प्रत्यया दैवी विषया भारत्यां न प्रयुज्यन्ते। तुमुन्णमुर्द्वितीयान्तत्वं तोसुन् कसुनोः पंचम्यन्तत्वमेकारादीनां च चतुर्थ्यन्तत्वं न त्वेषा कृत्प्रत्ययचान्तत्वमित्येके। क्वचिदक्रियार्थत्वेऽपि भवति। भावलक्षणे तोसुन्नेति करोति स्था वदि चरि हुत मि जनिभ्यः[7]सृपितृदोः[8] कसुन्। उदेतोः। उदयनादित्यर्थः। अपकर्त्रोः। अपकरणादित्यर्थः। आ संस्थात्तोः सीदन्ति। आ समाप्तिरित्यर्थः। प्रवदितोः।प्रचरितोः होतोः। आतमितौः काममाविजनितोः सम्भवामः। पुराक्रूरस्य विष्टपो विरप्शिन्। पुराजत्रुभ्यः (आतृद्) पंचम्यन्ता एते इत्येके। कृत्यार्थे ए तवै च प्रत्ययौ भवतः [9]। सन्ध्यक्षरान्तत्वादव्ययत्वम्। अवचक्षे अवख्यातुमित्यर्थः। अवगाहे।अवगाह्यमित्यर्थः। न म्लैच्छितवै। नापभाषितव्यम्। भाषितव्यमित्यर्थः। एतवै प्रत्ययौ दैवीविषयौ भारत्यां न स्तः। इति

---

1 पर्याप्तिवचनेष्वलमर्थेषु (3-4-66)
2 शकि णमुल्लमुलौ (3-4-12)
3 ईश्वरे तोसुन्कसुनौ (3-4-13)
4 दृशे विख्ये च (3-4-11)
5 प्रयै रोहिष्यै अव्यथिष्यै (3-4-10)
6 तुमर्थे सेसेन से असेनक्सेक्रसेनध्यैअध्यैनक्रध्यैकध्यैन्शध्यैशध्येन् तवैतवेङ् तवेनः (3-4-9)
7 भावलक्षणे स्थेण् कृभ्वदिचरिहुतामिजनिघ्भ्यस्तोसुन् (3-4-16)
8 सृपितृदोः कसुन् (3-1-17)
9 कृत्यार्थे तवैकेन्केन्यत्वनः (3-4-14)

कृतप्रत्ययाः। तदित्थं विभक्त्यन्ताः समस्तास्तद्धितान्ता कृदन्तान्ताश्चेति चतुर्विधा अव्ययशब्दा उक्ताः।

**इति व्युत्पन्नावीताधिकारः।**

## अथाव्ययस्वराः

1. प्रतिज्ञावीता अन्तोदात्ता[1] इतरानुदाताः। सना सनत् सनात् तिरस् पुनर इत्यादयः केचिदाद्युताः। 2.सनान्तोदात्त इत्येके। 3.सहेत्याद्युदात्तं कचिदाहुः अन्तोदात्तमितिस्थिति 4.स्वः स्वरितो वोदात्तो वा।

2. निपाता अनुदात्ता इतरानुदात्ता[2] //1/ च वा हा है वाः सर्वानुदात्ताः[3]/2/ एवान्तोदात्त इत्येके। एवं नूनमादयोऽन्तोदात्ताः/4/ यथेति पदान्ते सर्वानुदात्तोऽन्यत्रानुदात्तः/5/उपसर्गश्चाभि वर्जमाद्युदात्तः /6/[4] अभिस्त्वन्तो-दात्तोऽनुदात्तादिः/7/

3. अव्ययीभावसमस्तमन्तोदात्तम्[5]/1/ परिप्रत्युपापा वर्ज्यमाना-होरात्रावयवेषूत्तरपदेषु प्रकृतिस्वरा भवन्ति [6] उपसर्गा आद्युदात्ता। तेन पर्यादिपूर्वा अव्ययीभवा आद्युदात्ताः। परित्रिगर्तम्। परिसौवीरम्। प्रतिपूर्वाह्णम्। प्रत्यपराह्णम् प्रतिपूर्वरात्रम्। प्रत्यपररात्रम्। उपपूर्वाह्णम्। उपापररात्रम्। अपत्रिगर्त्तम्/2/ कूलतीरतूलमूलशालाक्षसामान्याव्ययीभावस्योत्तरपदानि आद्युदात्तानि भवन्ति [7]। परिकूलम्। उपकूलम्। परितीरम्। उपतीरम्। परितूलम्। उपतूलम्। परिमूलम्। उपमूलम्। परिशालम्। उपशालम्। उपाक्षम्। पर्यक्षम्। सुषमम्। विषमम्। निःषमम्। दुःषमम्। एषु कूलादीनामाद्यः स्वर उदात्तः/3/ इतरेऽव्ययीभावः सर्वेऽप्यन्तोदात्ताः/4/

4. लकारानुबन्धिप्रत्ययान्तानां प्रत्यात्पूर्वोऽनन्तरः स्वर उदात्तः[8]/1/ तसिल्। अतः यतः। अकार उदात्तः। इतः। परितः। इकार उदात्तः। कुतः। अमुतः।

---

1 फिषोऽन्त उदात्तः (फिट्सूत्र-1)
2 निपाता आद्युदात्ताः (फिट्सूत्र-80)
3 चादयोऽनुदात्ताः (फिट्सूत्र-84)
4 उपसर्गाश्चाभिवर्जम् (फिट्सूत्र-81)
5 समासस्य (6-1-223)
6 परिप्रत्युपापा वर्ज्यमानाऽहोरात्रावयवेषु (6-2-33)
7 कूलतीरतूनमूलशानाऽक्षसममव्ययीभावे (6-2-121)
8 लिति (6-1-193)

बहुतः। उरूदात्तः। त्रल् कुत्र, बहुत्र। उकार उदात्तः। र्हिल् एतर्हि। कर्हि। रेफात्पूर्वोऽकार उदातः। रिष्टातिल्। उपरिष्टात्। प उदात्तः। यथा। तथा। प्रत्नथा। पूर्वथा। थात्। पूर्वोऽकार उदातः। णमुल्। कारम्।

5. तकारानुबन्धिप्रत्ययः स्वरितः[1]/2/ क्व परूदित्यत्र तूत्प्रत्यय तकारः प्रत्ययरूपं नानुबन्धः। तेन सोऽन्तोदात्तः। ब्राह्मणवत्।

6. चकारानुबन्धि प्रत्ययान्तस्यान्त उदातः[2]/3/ अत सुच्। दक्षिणत्। उत्तरतः। अवरतः। परतः। आच्। दक्षिणा। उत्तरा। पुरा। आहिच्। दक्षिणाहि। उत्तराहि। एधाच्। द्वेधा। त्रेधा। डाच्। पटपटाकरोति। दमदमा करोति। कृत्वसुच् पंचकृत्वः। सुच्। द्विः। त्रिः।

7. पकारानुबन्धि प्रत्ययोऽनुदात्तः[3]/4/ एनप्। दक्षिणेन। उत्तरेण। चिरेण। प्रायेणादयो विभक्त्यन्तप्रतिरूपकाः अप्यनुदात्ता इत्याहः। ल्यप्। प्रकृत्य। आगत्य। योऽनुदात्तः।

8. अकारानुबन्धिप्रत्ययान्ता नकारानुबन्धिप्रत्ययान्ताश्चाद्युदात्ताः[4]।/5/ ध्यमु। ऐकध्यम्। धमु। द्वैधम्। त्रैधम्। नकारान्ताः। तुमुन् कर्त्तुम्। गन्तुम्। तोसुन्। उदेतोः कसुनः। आ तृदः।

9. तवैप्रत्ययान्तस्याद्यन्तौ युगपदुदात्तौ भवः[5]/6/ एतवै। गन्तवै।

10. असे, तवे, अध्यै प्रत्ययान्ता आद्युदात्ताश्चपर्यायेण/7/ जीवसे इत्यत्र जीकारो वकारो वा पर्यायेणोदात्तः आहुवध्ये। आकारो वकारो वोदात्तः। एवं दानवे। कर्त्तवे इत्यत्र दकारनकारो वोदात्तः।

11. से प्रत्ययान्तः आद्युदात्तः स्यादन्तोदात्तो वा पर्यायेण/8/एषे। आद्युदात्तः। वक्षे। अन्तोदात्तः।

12. शेषाः प्रत्याआद्युदात्ताः स्युः/9/ ह । इह। हकार उदात्तः। दा। कदा दाकार उदात्तः। दानीम्। इदानीम्। दाकार उदात्तः। धुना। अधुना। धुकार उदात्तः। एषमः। मध्योदात्तः। परेद्यवि। एकार उदात्तः। अद्य अन्तोदात्तः। एवं सर्वत्रोह्यम्। इति दिक्।

**समाप्तोऽयमव्ययपरिच्छेदः**



[1] तित्स्वरितम् (6-1-185)
[2] चितः (6-1-163)
[3] अनुदात्तौ सुप्पितौ (3-1-4)
[4] ञ्नित्यदिर्नित्यं (6-1-197)
[5] अन्तश्च तवै युगपत् (6-1-200)

# 'परिशिष्टम्'

## विद्यावाचस्पति–पण्डितमधुसूदन–ओझा–विरचितस्य प्रकाशितस्य वैदिक–वाङ्मयस्य सूची –

1. यज्ञसरस्वती (संस्कृतभाषायाम्)
2. यज्ञमधुसूदनः (यज्ञोपकरण यज्ञविटपकर्म्मानुक्रमणिकाध्यायः) (संस्कृतभाषायाम्)।
3. यज्ञमधुसूदनः (स्मार्तकुण्डसमीक्षाध्यायः) (संस्कृतभाषायाम्)
4. छन्दोऽभ्यस्ता (संस्कृतभाषायाम्)
5. आशौचपंजिका (सम्पादनम्-श्री सूर्यनारायण शर्मा)
6. आशौचपंजिका (सम्पादनम् - स्वामी सुरजनदास जी)
7. शारीरिकविमर्शः (संस्कृतभाषायाम्)
8. शारीरकविज्ञानम् - प्रथमो भागः (संस्कृत भाषायाम्)
9. शारीरकविज्ञानम् - प्रथामो भागः (हिन्दी अनुवादः - डॉ. शिवदत्त चतुर्वेदी)
10. शारीरकविज्ञानम् - द्वितीयो भागः (संस्कृतभाषायाम्)
11. शारीरकविज्ञानम्-द्वितीयो भागः (हिन्दी अनुवाद-डॉ. शिवदत्त चतुर्वेदी)
12. महर्षिकुलवैभवम् (संस्कृत टीका - पं. गिरधर शर्मा चतुर्वेदी, हिन्दी टीका - पं. देवीदत्त चतुर्वेदी)
13. महर्षिकुलवैभवम् (सम्पादकः - पं. प्रद्युम्न शर्मा ओझा)
14. इन्द्रविजयः (सम्पादकः - श्री आद्यादत्त ठाकुर)
15. इन्द्रविजयः (सम्पादकः श्री प्रद्युम्न शर्मा ओझा)
16. जगद्गुरुवैभवम् -(संस्कृतभाषायाम्-हिन्दीभूमिकोपेता)

17. जगद्गुरुवैभवम् - (हिन्दी अनुवादः पं. देवीदत्त चतुर्वेदी
18. व्योमवाद-अपरवाद-आवरणवाद-अम्भोवाद- (ग्रन्थचतुष्टयम् हिन्दी भूमिका सहिताः)
19. रजोवादः (संस्कृतभाषायाम्)
20. दशवादरहस्यम् ( संस्कृतभाषायाम्)
21. आधिदैविकाध्यायः (हिन्दी भूमिका सहितः)
22. (1) वैज्ञानिकोपाख्यानम् (2) वैदिकोपाख्यानम् (संस्कृतभाषायाम्)
23. उपाख्यानसंग्रहः (संस्कृतरत्नाकरेण संकलितः)
24. पुराणोत्पत्तिप्रसंगः (हिन्दीभूमिका सहितः)
25. पुराणनिर्माणवाधिकरणम् (संस्कृतभाषायाम् हिन्दी भूमिका सहितम्)
26. पितृसमीक्षा (संस्कृतभाषायाम्)
27. वस्तुसमीक्षा (संस्कृतभाषायाम्)
28. पंचभूतसमीक्षा (संस्कृते, हिन्दीभूमिकायुक्तः)
29. वर्गसमीक्षा (अपूर्णा) संस्कृत रत्नाकरे संकलितः
30. छन्दःसमीक्षा
31. माधवख्यातिः (संस्कृतभाषायाम्)
32. देवासुरख्यातिः (हिन्दीभूमिकासहितम्)
33. अत्रिख्यातिः (संस्कृतभाषायाम्)
34. वेदधर्मव्याख्यानम् (प्रथमं, द्वितीयं एवं तृतीयं व्याख्यानम्)
35. वेदधर्मव्याख्यानम् (पंचमव्याख्यानम्)
36. देवतानिवित् (संक्षिप्तहिन्दीव्यक्तव्यसहितम्)
37. प्रत्यन्तप्रस्थानमीमांसा (संस्कृतभाषायाम्)
38. पदनिरुक्तम् (संक्षिप्तहिन्दी भूमिका सहितम्)
39. ब्रह्मविज्ञानप्रवेशिका (हिन्द्याम्)

40. ब्रह्मविज्ञान (हिन्द्याम्)

41. ब्रह्मविनयः (हिन्द्याम् विस्तृत परिचयात्मकभूमिकासहितम्)

42. ब्रह्मसिद्धान्तः (हिन्द्याम् भूमिका एवं सारांशसहितम्)

43. ब्रह्मसिद्धान्तः (हिन्दी अनुवाद - पं० देवीदत्त चतुर्वेदी)

44. ब्रह्मचतुष्पदी (संस्कृतभाषायाम्, हिन्दी भूमिका सहितम्)

45. ब्रह्मसमन्वयः (संस्कृत भाषायाम् ओझा महोदयस्य परिचयसहितम्)

46. विज्ञानविद्युत् (संस्कृतभाषायाम्)

47. विज्ञानविद्युत् (हिन्दी अनुवाद - डॉ. शिवदत्त चतुर्वेदी)

48. संशयतदुच्छेदवादः (संस्कृत भाषायाम्)

49. अहोरात्रवादः (संस्कृतभाषायाम्)

50. सदसद्वादः (संस्कृतभाषायाम्)

51. निरूढपशुबन्धः (संस्कृतभाषायाम्)

52. स्वर्गसन्देशः (संस्कृतभाषायाम् हिन्दी भूमिकासहितम्)

53. कादम्बिनी (हिन्दीभूमिकासहितम्)

54. श्रीमद्भगवद्गीतायाः प्रथमं रहस्यकाण्डम् (संस्कृतभाषायाम्)

55. श्रीमद्भगवद्गीतायाः द्वितीयशीर्षककाण्डापरपर्यायम् (संस्कृतिभाषायाम्)

56. श्रीमद्भगवद्गीतायाः तृतीयं आचार्यकाण्डम् (संस्कृते, हिन्दी भूमिका सहितम्)

57. सन्ध्योपासनरहस्यम् (हिन्दी टीका सहितम्)

58. मन्वन्तरनिर्धारः (संस्कृते, हिन्दीप्रस्तावनासहितम्)

59. कृष्णत्रैविध्यनिरुक्तिः (संस्कृतभाषायाम्)

60. वैदिककोषः

61. वेदांक (संस्कृतरत्नाकरः) श्री ओझा महानुभावस्याभिनन्दनग्रन्थः

62. श्री पिंगलाचार्यविरचित 'छन्दःशास्त्रम् (श्रीमधुसूदनओझा - रचित छन्दोनिरुक्तिसनाथम्)

63. श्रीमधुसूदन-ओझा-चरितामृत (म.म. गिरधरशर्म्मा चतुर्वेदी कृत)

64. धर्मपरीक्षापंजिका

65. पथ्यास्वस्ति (संस्कृतभाषायाम्)

66. अर्धानामनुक्रमणिका

67. कौषीतकोपनिषत् - (अत्र वैज्ञानिकभागः संकलय्य दर्शितः)

68. ऐतरेयोपनिषत् (अत्रापि वैज्ञानिकोऽंशः संकलितः।)

अत्र अधिकं जिज्ञासुभिः राजस्थानवैदिकतत्त्वशोधसंस्थानेन 2049 विक्रमाब्दे प्रकाशितम् सूचिपत्रमवलोकनीयम्।



